*Mithila Institute Series* *Ancient Texts No. 21*

# SĀMĀNYANIRUKTI

OF

GAṄGEŚOPĀDHYĀYA

with the Commentaries

*DĪDHITI*, *GĀDĀDHARĪ*, *BALADEVĪ*,

And *VIMALAPRABHĀ*

Edited with an Introduction and Supplementary Notes

by

Pandit Sri Rupanatha Jha, the author of the *VIMALAPRABHĀ*

Published by

Dr S. Bagchi, Director, Mithila Institute of Post-Graduate Studies and Research in Sanskrit Learning, (Darbhanga)

1970

मिथिलाविद्यापीठग्रन्थमाला प्राचीनग्रन्थावली एकविंशतितमं पुष्पम्

टीकाचतुष्टयसनाथीकृता
श्रीमद्गङ्गेशोपाध्यायप्रणीता

# सामान्यनिरुक्तिः

श्रीमद्रघुनाथशिरोमणिविरचितदीधित्युद्भासित-
श्रीमद्गदाधरभट्टाचार्यविरचितगादाधर्य्युपबृंहित-
श्रीमद्बलदेवभट्टाचार्यविरचितबलदेवीव्याख्यायुत-
झोपाह्वश्रीमद्रूपनाथदेवशर्मविरचितविमलप्रभाविलसिता

भूमिकापरिशिष्टादिभिः समलङ्कृत्य
विमलप्रभाकारेण झोपाह्वेन श्रीमता पण्डितश्रीरूपनाथशर्म्मणा
सम्पादिता

मिथिलाविद्यापीठप्रधानेन वागचीत्युपाह्वेन
डि० लिट् इत्युपाधिभाजा श्रीमता शीतांशुशेखरदेवशर्मणा प्रकाशिता

शकाब्दः १८९२ संवत् २०२६ ऐशवीयाब्दः १९७०

*Mithila Institute Series* *Ancient Text No. 21*

# SĀMĀNYANIRUKTI

OF

GAṄGEŚOPĀDHYĀYA

With the Commentaries

*DĪDHITI, GĀDĀDHARĪ, BALADEVĪ,*

And *VIMALAPRABHĀ*

Edited with an Introduction And Supplementary Notes by Pandit Sri Rupnath Jha, the author of the *VIMALAPRABHĀ*

Published by

Dr S. Bagchi, Director, Mithila Institute of Post-Graduate Studies and Research in Sanskrit Learning, (Darbhanga)

1970

The Government of Bihar established the *Mithila Institute* of post-Graduate Studies and Research in Sanskrit Learning at Darbhanga in 1951 with the object, *inter alia*, to promote advanced studies and research in Sanskrit learning, to bring together the traditional Pandits with their profound learning and the modern scholars with their technique of research and investigations, and to publish works of permanent value to scholars. This Institute is one of the five others planned by this Government as a token of their homage to the tradition of learning and scholarship for which ancient Bihar was noted. Apart from the Mithila Institute, four others have been established and have been doing useful work during the last eighteen or nineteen years-Nalanda Institute of Research and Post-Graduate Studies in Buddhist learning and Pali at Nalanda, K.P. Jaisawal Research Institute at Patna, the Bihar Rashtra Bhasha Parishad for research and advanced studies in Hindi at Patna, and the Vaisali Institute for Post-Graduate studies in Prakrit and Jainology at Vaisali. In the establishment of the Mithila Institute the State Government received a generous donation from Maharajadhiraja of Darbhanga for construction of the building on a plot of land also donated by him.

2. As part of this programme of rehabilitating and reorientating ancient learning and scholarship, the editing and publication of this volume have been undertaken with the co-operation of scholars in Bihar and outside. The Government of Bihar hope to continue to sponsor such projects and trust that this humble service to the world of scholarship and learning would bear fruit in the fulness of time.



श्रीश्यामाशरणम्

# अनुमानगादाधर्यां सामान्यनिरुक्तेः विषयानुक्रमणिका

सत्यशिवं सुदरम् ।

# भूमिका

अथेदं प्रकाश्यते विमलप्रभावलदेवीनामटीकाद्वयसम्वलितं चिन्तामणिदीधिति-विशिष्टम् महामहोपाध्यायतार्किकचूडामणिचक्रवर्त्तिश्रीगदाधरभट्टाचार्यविरचितं न-व्यन्यायसामान्यनिरुक्तिप्रकरणम् ।

नव्यन्यायशास्त्रं चाक्षपादप्रतिपाद्यपदार्थप्रतिपादकतया सर्वशास्त्रोपकारक तया च सकलजनसमादृतम् श्रीमद्भिः गङ्गेशोपाध्यायैर्नव्यन्यायप्रपञ्चप्रजापतिभिर-स्मत्पूज्यपूर्वपुरुषैर्विरचितम् ।

नव्यन्यायशास्त्रस्य सकलोपकारकत्वम् :—

मोहं रुणद्धि विमलीकुरुते च बुद्धिम् ।
सूते च संस्कृतपदव्यवहारशक्तिम् ॥
शास्त्रान्तराभ्यसनयोग्यतया युनक्ति
तर्कश्रमो न तनुते कमिहोपकारम् ॥

इत्यादिना सर्वैरेवाचार्यैरङ्गीकृतम् । तथा च न्यायभाष्यकारो वात्स्यायनः—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता ॥ इति

तत्र च नव्यन्यायावयभूतवादिविजयाद्यानुषङ्गिकफलसहिततत्त्वनिर्णायक-स्यास्य सामान्यनिरुक्तिग्रन्थस्य सारभूतं विवरणं तावन्निम्ननिर्दिष्टन्निर्दिश्यते तत्र प्रथमतो मूलकृता गङ्गेशोपाध्यायेन हेतुवदाभासन्ते ये ते हेत्वाभासा इति व्युत्पत्ति-बलेन हेत्वाभासशब्दस्य दुष्टहेत्वर्थकतामङ्गीकृत्य हेत्वाभासाः के इति अन्तेवासि-जिज्ञासानिवृत्तिफलकं प्रकृतसाध्यज्ञाने प्रमात्वनिश्चयरूपतत्त्वनिर्णयप्रयोजकत्वेन प्रति-वादिहेतौ दुष्टत्वप्रदर्शनेन वादिनः स्वस्य विजयो भवतीति विजयप्रयोजकतया च हेत्वाभासनिरूपणं प्रतिज्ञातम्, तदनन्तरं दोषलक्षणं विना दुष्टलक्षणासम्भवाद् दो-

षाणां लक्षणत्रयं प्रतिपादितम्। ततः प्राचीनतार्किकसम्मतं हेतौ सत्प्रतिपक्षत्वादिव्यवहारविषयत्वं दशाविशेषेत्यादिमूलेन प्रतिपाद्य हेत्वाभासानां नचेत्यादिग्रन्थेन विभागः कृत इति।

रघुनाथशिरोमणिना दीधितिकारेण च हेत्वाभासनिरूपणप्रयोजननिर्देशपूर्वकं दोषलक्षणाभिधानहेतुप्रदर्शनपूर्वकञ्च प्रथमम् लक्षणघटकप्रतिपदव्यावृत्तीः प्रतिपाद्य प्रथमलक्षणपरित्यागकारणमभिहितम्। तदनन्तरं मेयत्वविशिष्टव्यभिचारेऽतिप्रसंगवारणाय द्वितीयलक्षणघटकयद्रूपे विशिष्टान्तराऽघटितत्वविशेषणन्दत्तम्। ततः सम्पूर्णलक्षणे दोषाभिधानपूर्वकम् हेत्वाभाससामान्यलक्षणमत्रवदन्तीत्यादिग्रन्थेनाभिहितम्। तदनन्तरम् मिश्रादिसम्मतहेत्वाभासलक्षणे दोषम्प्रदर्श्य दशाविशेषेत्यादिग्रन्थः नवीनरीत्या व्याख्यातः। भट्टाचार्यास्तु दीधितिकारग्रन्थं सुस्पष्टं व्याख्याय रघुनाथोक्तलक्षणेऽसम्भवं वह्न्यभाववज्जलवद्वृत्तिजलवद्वृत्तेरतिप्रसङ्गं च प्रदर्श्याव्यापकीभूतविषयताशून्यत्वम् विशिष्टद्वयाघटितत्वञ्च लक्षणशरीरे निवेशितवन्तः ततो न च चतुष्टयम्, स्वसजातीयविशिष्टाऽन्तराघटितत्वानिवेशकल्पेऽभिनवकल्पनया दोषमभिहितवन्तः। ततः अत्र वदन्तिकल्पे दोषम्प्रदर्श्य परे तु ग्रन्थेन तन्निराकृतवन्तः। तदनन्तरं यादृशपक्षसाध्यकेत्यादिलक्षणस्य समीचीनव्याख्यां प्रदर्श्य दशाविशेषेत्यादिग्रन्थस्य साधुव्याख्यानपूर्वकं सामान्यनिरुक्तेः पूर्णताङ्कृतवन्तः।

अनुमानस्थले यः खलु न प्रकृते हेतुः किन्तु हेतुसदृशतया प्रतीयमानः स हेत्वाभासः हेत्वाभासशब्दस्तु हेतुवदाभासन्ते ये ते हेत्वाभासा इति व्युत्पत्तिबलेन दुष्टहेतुपरः, हेतोराभासा हेत्वाभासा इति षष्ठीसमासबलेन च हेत्वधिकरणकदोषवाचकः हेत्वाभासस्य विशेषज्ञानं विना त्रिविधकथायां न कस्याप्यधिकारः। अत एव महर्षिर्गौतमः हेत्वाभासपदार्थस्योल्लेखपूर्वकं सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासा [ १।२।३ ] विभागं कृतवान्, अर्थात् सव्यभिचार-विरुद्ध-प्रकरणसम-साध्यसम-कालातीतभेदेन हेत्वाभासः पञ्चविधः। उक्तविभागसूत्रस्थहेत्वाभासशब्दद्वारा हेत्वाभासस्य सामान्यलक्षणमपि संसूचितम्। हेतुवदाभासन्तेऽर्थात् यः समस्तपदार्थः न खलु हेतुलक्षणाक्रान्तः किन्तु हेतुसदृशतया प्रतीयमानो भवति स हेत्वाभास इति हेत्वाभासस्य लक्षणं सुबोध्यं भवति, अत एव न्यायभाष्यकारो

भगवान् वात्स्यायनः प्रथमं कथयामास 'हेतुलक्षणाभावादहेतवो हेतुसामान्यात् हेतुवदाभासमाना" इति। अर्थात् हेतुपदार्थस्य सकललक्षणासत्त्वे यः सकलपदार्थः यत्र स्थलेऽहेतुः किन्तु हेतोः सादृश्यवशात् हेतुवत्प्रतीयमानः सः सर्वोऽपि पदार्थस्तत्र हेत्वाभासः। महर्षिगौतममते पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वासत्प्रतिपक्षत्वाबाधितत्वरूपपञ्चधर्म एव हेतुपदार्थस्य सामान्यलक्षणम्। तत्रोक्तपञ्चधर्माणां मध्ये एकैकधर्मस्याभावे पञ्चविधहेत्वाभासो भवति, यथा विपक्षेऽसत्त्वराहित्ये सव्यभिचारनामा हेत्वाभासः, सपक्षसत्त्वाभावे विरुद्धनामको हेत्वाभासः असत्प्रतिपक्षत्वाभावे प्रकरणसमः, पक्षसत्त्वाभावे साध्यसमः, अबाधितत्वाभावे कालातीतनामको हेत्वाभासः। तथा चोक्त तार्किकरक्षायां वरदराजेन :—

हेतोः केनापि रूपेण रहिताः कैश्चिदन्विताः।
हेत्वाभासाः पञ्चधा ते गौतमेन प्रकीर्त्तिताः॥

इति पूर्वसूत्रोक्तप्रथमप्रकारहेत्वाभासस्य नाम सव्यभिचारः, तत्सामान्यलक्षणञ्चकार गौतमः, "अनैकान्तिकः सव्यभिचारः" १। २। ५। अर्थात् यः अनैकान्तिकः स सव्यभिचारनामा हेत्वाभासः, स एवानैकान्तनाम्नापि प्रसिद्धः। प्राचीनकाले परस्परविरुद्धधर्मरूपार्थेऽपि अन्तशब्दस्य प्रयोगः। अनुमानस्थले यः साध्यधर्मः यश्च तद्विरोधी धर्मस्स एव परस्परविरुद्धान्तद्वयम्।

"एकस्मिन् अन्ते विद्यते" एतादृशव्युत्पत्यनुसारेणैकान्तिकशब्दद्वारा ज्ञायते यत् एकस्मिन्नन्ते नियतः ऐकान्तिकः तस्य विरुद्ध, अर्थात् यो हेतुः एकस्मिन् पक्षे न नियतः स अनैकान्तिकः। तथा चानुमानस्थले यो हेतुः साध्यधर्मयुक्ते सपक्षे विद्यते एवं साध्यधर्मशून्ये विपक्षेऽपि वर्त्तते स सव्यभिचारः। यथा कश्चित् वादी वदति —शब्दो नित्यः स्पर्शशून्यत्वादात्मवत् अत्र स्पर्शशून्यत्वरूपहेतुः यथा आत्मादिनित्यपदार्थे विद्यते तथैव रूपाद्यनेकानित्यपदार्थेऽपि विद्यमान इति स्पर्शशून्यत्वरूपहेतुः नित्यत्वरूपसाध्यस्य व्यभिचारीति स हेतुः सव्यभिचारः। तार्किकरक्षायां वरदराजः सव्यभिचारनामकहेत्वाभासस्य साधारणासाधारणभेदेन द्वैविध्यमुक्तवान्। तत्त्वचिन्तामणिकृत्गङ्गेशमतेऽनुपसंहारिभेदेन स त्रिविधः। तथा च साधारणाद्यन्यतमत्वमनैकान्तिकसव्यभिचारत्वम्।

यः खलु हेतुः पक्षे सपक्षे विपक्षे च वर्त्तमानः स एवानैकान्तिकः साधारणनामा सव्यभिचारः, यथा पर्वतो धूमवान् वह्नेरित्यत्र वह्निरूपहेतुः पक्षे पर्वते सपक्षे महानसे विपक्षे चायोगोलके विद्यमान इति स साधारणनामकः सव्यभिचारः।

यश्च हेतुः सपक्षे विपक्षे चावर्त्तमानः सन् केवलं पक्षमात्रे वर्त्तते स असाधारणः यथा शब्दो नित्यः शब्दत्वादित्यत्र शब्दत्वरूपहेतुः नित्यत्ववत्तया निश्चिते आत्मनि नित्यत्वाभाववत्तया निश्चितेषु रूपादिष्ववर्त्तमानः सन् केवलपक्षभूतशब्दे वर्त्तत इति भवत्यसाधारणः सव्यभिचारः।

व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावो यत्र स हेत्वभिमतोऽनुपसंहारी। तथा च केवलान्वयिसाध्यको हेतुरनुपसंहारिनामकः सव्यभिचारः। यथा सर्वं प्रमेयं वाच्यत्वादित्यत्र वाच्यत्वरूपहेतुरनुपसंहारिहेत्वाभासः। विरुद्धनामकः द्वितीयो हेत्वाभासः तल्लक्षणञ्चकार गौतमः "सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः" [ १।२।६ ] अर्थात् यस्य कस्यचित् पदार्थस्य स्वीकृतिं विधाय तद्विरोधिभूतपदार्थस्य हेतुतया ग्रहणे विरुद्धनामकः हेत्वाभासो भवति। एवञ्च साध्याभावसाध्यको हेतुर्विरुद्धः, साध्यासमानाधिकरणसाध्याभावव्याप्यः साध्यवदन्योन्याभावव्याप्यो वा विरुद्ध इति फलितार्थः। हेतुनिष्ठसाध्यासामानाधिकरण्यं विरोध इति केचित्। यथा शब्दो नित्यः उत्पत्तिमत्त्वादित्यत्रोत्पत्तिमत्त्वरूपहेतुर्नित्यत्वरूपसाध्याभावसाधकतया विरुद्धनामकः हेत्वाभासः। तदुक्तं तार्किकरक्षायां वरदराजेन "विरुद्धः स्यात् वर्त्तमानो हेतुः पक्षविपक्षयोरि"ति। अर्थात् केवलपक्षे विपक्षे च वर्त्तमानो हेतुर्विरुद्ध इति। प्रकरणसमनामकतृतीयहेत्वाभासस्य लक्षणमारचयाञ्चकार गौतमः यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः [ १।२।७ ] अर्थात् यत्प्रयुक्तः प्रकरणविषये चिन्ता भवति अर्थात् कस्यापि पक्षस्य निश्चयाभावे संशयविषयीभूतपक्षप्रतिपक्षविषयिण्याः जिज्ञासाया उत्पत्तिस्तन्निर्णयार्थमपदिष्टः हेतुरूपेण कथितः प्रकरणसमनामको हेत्वाभासः। यथा कश्चित् वादी कथयति शब्दोऽनित्यः नित्यधर्मानुपलब्धेः, तदनन्तरं प्रतिवादी वदति शब्दो नित्यः अनित्यधर्मानुपलब्धेः, अत्र स्थले शब्देऽनित्यत्वनित्यत्वपक्षप्रतिपक्षरूपप्रकरणद्वयम्। उक्तस्थले वादिनाप्रतिवादिना वा अपरस्य हेतोः कस्यापि दोषस्य दुर्बलत्वस्य वा समर्थनाभावे तत्रत्यहेतुः तुल्यबलशाली भवति,

अनिश्चितबलाबलत्वमेवोक्तस्थले हेतुद्वयोस्तुल्यबलवत्त्वम्। अत एवोक्तस्थले केनापि हेतुना मध्यस्थस्य कस्यापि पक्षस्यानुमितिरूपनिश्चयाभावे शब्देऽनित्यत्वनित्यत्वविषयकसंशयनिवृत्तिर्न भवतीत्यतः सुतरां तद्विषयिणी जिज्ञासा भवति उक्तहेतुद्वयमेव तादृशजिज्ञासाप्रयोजको भूत्वा तत्र प्रकरणसमनामको हेत्वाभासो भवति। प्रकरणसम एव सत्प्रतिपक्षनाम्नापि प्रसिद्धः तदुक्तं दीधितिकृता सन् प्रतिपक्षो विरोधिपरामर्शो यस्य स तथा।

साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यकलिङ्गत्वं सत्प्रतिपक्षत्वमिति मान्याः।

भट्टजयन्तमते तु सत्प्रतिपक्षस्थलीयहेतुद्वयमेव विरुद्धव्यभिचारिनाम्ना प्रथितो भवतीति।

चतुर्थो हेत्वाभासः साध्यसमः तल्लक्षणसूत्रं रचयाञ्चकार गौतमः "सध्याविशिष्टः साध्यत्वात् साध्यसमः" [ १।२।८ ] साध्यत्वप्रयुक्तः यः पदार्थः साध्यधर्मसदृशः स साध्यसमनामको हेत्वाभासः। अयमर्थः। सिद्धपदार्थ एवानुमाने हेतुर्भवितुमर्हति किन्तु वादिना प्रतिवादिना वा अनुमानात् पूर्वं यथा साध्यधर्मः असिद्धः तथैव यदि तदुदीरितहेतुपदार्थोऽपि असिद्धः इति प्रतिपाद्यते स हेतुस्तदा साध्यतुल्य एव। अत एव तत्र साध्यसमनामको हेत्वाभासः। साध्यसम एवासिद्धस्तथा चाश्रयासिद्ध्याद्यन्यतमत्वमसिद्धसामान्यलक्षणम्। द्रव्यं छायागतिमत्त्वादित्यत्र गतिमत्त्वहेतुः साध्यसमः। न्यायवार्तिककृन्मते साध्यसमहेत्वाभासः स्वरूपासिद्धाश्रयासिद्धान्यथासिद्धभेदात् त्रिविधः। प्राचीनवैशेषिकाचार्यप्रशस्तपादमते अन्यतरासिद्धोभयासिद्धभागासिद्धसन्दिग्धासिद्धविशेष्यासिद्धविशेषणासिद्धभेदात् विविधः खल्वसिद्धः। चिन्तामणिकृन्मते तु आश्रयासिद्धस्वरूपासिद्धव्याप्यत्वासिद्धभेदात् त्रिविध एवासिद्ध इति।

पञ्चमो हेत्वाभासः, कालातीतः, तल्लक्षणन्तु कालात्ययापदिष्टः कालातीतः। [ १।२।९ ] अर्थात् यो हेतुः अनुमानस्य कालात्यये अपदिष्टः अर्थात् प्रयुक्तः स सर्वोऽपि हेतुः कालातीतः। कालातीत एव हेतुः बाधितनाम्नापि प्रसिद्ध इति।

यथा वह्निरनुष्णः कृतकत्वादित्यादौ कृतकत्वहेतुः कालातीतः। तदुक्तं तार्किकरक्षायां वरदराजेन "कालातीतो बलवता प्रमाणेन विवर्जित" इति।

हेत्वाभासप्रकारभेदे आचार्याणां परस्परं मतभेदः। तत्र वैशेषिकसम्प्रदायप्रसिद्धमतेऽनुमानस्य लिङ्गं न हि पञ्चलक्षणं किन्तु पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वरूपत्रिलक्षणमेव। उक्तधर्मत्रयाणाम्मध्ये यस्य कस्यैकधर्मस्य धर्मद्वयस्य वाऽभावे स हेत्वाभासो भवति। तथा च सूत्रम्—अप्रसिद्धोऽनपदेशोऽसन् असन्दिग्धश्चाऽनपदेश इति सूत्रानुसारेणासिद्धविरुद्धव्यभिचारभेदात् हेत्वाभासः त्रिविधः। अत एवोक्तं "विपरीतमतो यत् स्यात् एकेन द्वितयेन वा विरुद्धाऽसिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत् इति।

बौद्धनैयायिकसम्प्रदायमतेऽपि हेत्वाभासस्य त्रैविध्यमेव। तदुक्तं धर्मकीर्त्तिना असिद्धविरुद्धानैकान्तिकाः त्रयो हेत्वाभासाः। आलङ्कारिकमतेऽपि हेत्वाभासस्त्रिविध एव। तदुक्तं काव्यालङ्कारे भामहेन" हेतुस्त्रिलक्षणो ज्ञेयो हेत्वाभासो विपर्ययाद् इति।

जैनसम्प्रदायनयेऽपि असिद्धविरुद्धानैकान्तिकास्त्रयो हेत्वाभासाः।

प्रभाकरगुरुमते प्रकरणसमकालातीतयोः हेत्वाभासत्वन्नास्तीति त्रित्वमेव हेत्वाभासानामिति।

शास्त्रदीपिकायां मीमांसकप्रवरेण पार्थसारथिमिश्रेणापि "असिद्धिः अनैकान्तिकत्वं बाधश्चेति त्रयो हेतुदोषाः" इत्यादिना हेत्वाभासत्रैविध्यमेव प्रतिपादितम् इति।

तत्र दोषसामान्यलक्षणम् प्रथमद्वितीयतृतीयभेदेन त्रिविधमुक्तं मूलकृता तथा च प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताशालि एवं प्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यनिरूपितव्याप्तिविशिष्टप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुप्रकारताशाल्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वमनुमितिकारणी-

भूताभावप्रतियोगियथार्थज्ञानविषयत्वरूपप्रथमलक्षणस्य पर्यवसितार्थः। इत्थञ्च ह्रद-पक्षकवह्निसाध्यकजलहेतुकह्रदो वह्निमाञ्जलादित्यादिस्थले वह्न्यभाववद्ध्रदादिरूप-बाधादौ लक्षणसङ्गतिः, तथा हि ह्रदत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसम्ब-न्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताशालिवह्नित्वावच्छिन्नवह्निनिरूपितव्याप्तिविशि-ष्टजलत्वावच्छिन्नप्रकारताशालिह्रदो वह्निमान् वह्निव्याप्यजलवांश्चेत्याकारकानुमि-तित्वव्यापकप्रतिबध्यतानिरूपितस्वरूपसम्बन्धावच्छिन्नवह्न्यभावत्वावच्छिन्नप्रकारता-निरूपितह्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकताशालिवह्न्य-भाववान् ह्रद इत्याकारकयथार्थज्ञानविषयत्वस्य वह्न्यभाववद्ध्रदे सत्त्वात्।

अत्र लक्षणे यथार्थपदस्य वैयर्थ्यम्प्रतिपाद्य यथार्थपदाऽघटितद्वितीयलक्षणमा-विष्कृतं चिन्तामणिकृता तदर्थश्चानाहार्याप्रम्माण्यज्ञानानास्कन्दितयद्रूपावच्छिन्नवि-षयताशालि निश्चयत्वव्यापिका भवति प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रति-बन्धकता तद्रूपावच्छिन्नत्वम् हेत्वाभासत्वमिति। अत्र जातित्वेन ह्रदत्वावगाहि-जातिमान् वह्न्यभाववानित्यादिज्ञानमादायासम्भववारणायाव्यापकीभूतविषयताशू-न्यत्वम् वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिप्रसङ्गभङ्गाय विशिष्टद्वयाघटितत्वञ्च लक्षणशरीरे विशेषणन्दत्तं गदाधरभट्टाचार्यैः। एवं ज्ञायमानदोषाणां प्रतिबन्धक-तामते यद्रूपावच्छिन्नविषयतासामान्यमनुमितिप्रतिबन्धकतावच्छेदकं तद्रूपविशिष्टप्र-कारकप्रमाविशेष्यत्वम् लक्षणार्थः कृत इति।

ग्रन्थस्यास्य प्रकाशने स्वर्गीयास्मत्पितामहमहामहोपाध्याय पं० लोकनाथझा-महोदयैः लिखितं नितान्तशुद्धमेकं पुस्तकमादर्शरूपेण गृहीतम् अन्यच्च वङ्गीय एसि-आटिकसोसायटीसभातः प्रकाशितम् शुद्धम्।

बलदेवीटीकायास्तु एकमेव पुस्तकं अस्मत्पितृचरणसर्वतन्त्रापरतन्त्र पं० श्री-नीलाम्बरझामहोदयैः लिखितं शुद्धं तत्पौत्रेण बी०एससी० इत्युपाधिधारिणा श्री-श्यामानन्दनाथझाशुभोदयेन संरक्षितमादर्शरूपतया संगृहीतम्। महामहोपाध्यायब-लदेवभट्टाचार्यस्तु वङ्गदेशावयवसुप्रसिद्धनवद्वीपग्रामवास्तव्यः अमितप्रतिभासम्पन्नः न-व्यन्याये वृहस्पतिरेवासीदिति न्यायशास्त्रीयचर्चाप्रसङ्गे यदा कदा पूज्यपितृचरणानां

मुखाच्छ्रुतमस्माभिः। तस्य वंशपरिचयादिकन्तु बहुधा कृतप्रयत्नेऽपि न परिज्ञातमिति तद्विषये न किमपि वक्तुं पारयामः। विमलप्रभा तु सामान्यनिरुक्तिगादाधर्याः काठिन्यमभिलक्ष्य सम्प्रत्यपि प्राचीनपठनप्रणालीसंरक्षणायेदानीन्तनानामन्तेवासिनामुपकाराय च ग्रन्थाशयप्रकाशनाय मया विरच्यात्र सन्निवेशिता। अनया यदिच्छात्राणामणुमात्रमप्युपकारः स्यात्तदा मदीयः श्रमः सफलतां गमिष्यतीति।

मिथिलाविद्यापीठस्थनिदेशकानां श्रीमतां डा० श्रीशीतांशुशेखरबागचीमहाभागानां प्राच्यप्रतीच्योभयविधविद्यावनकेशरिणामभिनवप्रतिभाशालिनामसीमकृपयैवास्य प्रकाशनं सञ्जातमतस्तेभ्यः कृतज्ञताज्ञापनपुरस्सरं साञ्जलि शतशः धन्यवादं वितरामो वयम्।

ग्रन्थप्रकाशनपूर्वरूप—[प्रूफ] संशोधनप्रकाशनगतानेकविधकार्यसञ्चालनविधायिनां मिथिलाविद्यापीठस्थप्राध्यापक डा० श्रीयुत् पं० महाप्रभुलालगोस्वामिन्यायव्याकरणमीमांसावेदान्ताचार्यमहोदयानामनेकप्रकारमुपकारं शिरसा वहामः तत्प्रतिशोधने सर्वथाऽसमर्थाः केवलं धन्यवादमेव तेभ्यो वितरामः।

मिथिलाविद्यापीठस्थप्रकाशनविभागकार्यसञ्चालकस्य बाबू श्रीशशिनाथमिश्रस्यापि प्रकाशनोपकारं न विस्मरामः। अस्य सुचारुप्रयासमन्तरा सामान्यनिरुक्तेः त्वरितप्रकाशनमसम्भावितमेव स्यादतस्तेऽपि धन्यवादार्हाः। एवं कृतेऽपि परिश्रमे पुरुषमात्रसाधारणा भ्रमप्रमादादिजनिताः दोषाः अत्रावश्यं भवेयुरेव, तथापि येऽत्र गुणलवास्ते गुरूणां,ये च दोषास्ते मदीया इति गुणैकपक्षपातिनो विद्वांसः क्षाम्यन्तु ममापराधं प्रीयतामनेन व्यापारेण कृतज्ञः सर्वान्तर्यामी श्रीजगदीश्वर इति समभ्यर्थये।

मिथिलाविद्यापीठः, दरभङ्गा
महेशनगर
अषाढ़ीगुरुपूर्णिमा।
१-८-७०

विदुषामनुचरः
झोपाह्वः श्रीरूपनाथः

॥॥ श्रीश्यामाशरणम् ॥॥

## चिन्तामणिः

॥ अथ हेत्वाभासास्तत्त्वनिर्णयविजयप्रयोजकत्वान्निरूप्यन्ते ॥

## दीधितिः

एतावता प्रबन्धेन सपरिकरं हेतुन्निरूप्य तत्प्रसङ्गात् तत्त्वनिर्णयादिरूपतत्कार्यकारित्वाच्च तदाभासनिरूपणं प्रतिजानीते—अथेति ।

## गादाधरी

हेत्वाभासनिरूपणे प्रसङ्गस्यापि सङ्गतित्वं सम्भवति, व्याप्तिपक्षधर्मताविशिष्टहेतुनिरूपणे सति व्याप्तिपक्षधर्मताविरोधितद्विरवहेतो दुष्टहेतोः स्मरणात् अतस्तदप्रदर्शकमूलस्य न्यूनतां परिजिहीर्षुः प्रसङ्गस्यापितन्निरूपणप्रयोजकत्वमाह—एतावतेति ।

## बलदेवी

अथ हेत्वाभासास्तत्वनिर्णयविजयप्रयोजकत्वान्निरूप्यन्त इति मूलम् । अस्यार्थः तत्वनिर्णयविजयप्रयोजकत्वादिति पञ्चम्यर्थस्तज्ज्ञानजन्यजिज्ञासाधीनत्वं, निरूप्यन्त इत्यत्र नीपूर्वकरूपधातोः प्रतियत्यनुकूलव्यापारोऽर्थः तत्रोक्तपञ्चम्यर्थस्यान्वयः । प्राचीनमते कर्माख्यातार्थस्थले व्यापारो धात्वर्थः कर्मप्रत्ययार्थः फलमिति द्वितीयाव्युत्पत्तिवादे भट्टाचार्येणोक्तम् । तथा चाख्यातार्थः प्रतिपत्तिः वर्त्तमानसामीप्ये लट् तस्य वर्त्तमानकालोत्तरकालवर्त्तित्वमर्थः तस्य मणिकारसमवेतकृतावन्वयः,

कृतेस्तु जन्यतासम्बन्धेन व्यापारेऽन्वयः, व्यापारस्य जन्यतासम्बन्धेन प्रतिपत्तावन्वयः, तस्याः विषयतया हेत्वाभासेऽन्वयः, तथा च सद्धेतुनिरूपणोत्तरकालीनतत्त्वनिर्णय-विजयप्रयोजकत्वज्ञानजन्यजिज्ञासाधीनमणिकारसमवेतवर्त्तमानकालोत्तरकालवृत्तिकृ-तिजन्यव्यापारजन्यप्रतिपत्तिविषयतावन्तो हेत्वाभासा इत्यन्वयबोधः। लडर्थस्य वर्त्त-मानकालोत्तरकालवृत्तित्वस्यतृतीयार्थकृतावन्वयो न सम्भवति प्रत्ययानां प्रकृत्यर्थान्वि-तस्वार्थबोधजनकत्वस्य नियमात्, एवम् प्रत्ययार्थे न समन्नान्वेति, अन्वयश्च तिङर्थेन समं न तु तिङर्थं स्यसुवर्थेन सममन्वयः। न च लडर्थस्य वर्त्तमानकालोत्तरकालवृत्ति-त्वस्य धात्वर्थ व्यापारेऽन्वय इति वाच्यम् पाकजनक चरमकृतेर्नाशदशायाँ व्यापारसत्वात् पचतीत्यापत्तेः। अस्मन्मते पाकजनककृतेरसत्त्वेनापत्तिविरहात्। न च व्यापारविशेष्यकवर्त्तमानकालवृत्तित्वप्रकारकशाव्दबुद्धिम्प्रति पचतीति ज्ञानस्य न कारणत्वमपि तु तादृशकृतिविशेष्यकबुद्धिम्प्रत्येव, तथा च तादृशबोधकारणत्व-विरहेणापत्तिविरहादिति वाच्यम्, अथेत्यादिनिरूप्यन्त इति ग्रन्थस्य प्रतिज्ञा-परदीधितिकार सम्मतत्वेन तदसङ्गतेः। प्रतिज्ञा च स्वोत्तरकालीनकृतिजन्यत्वप्र-कारकबोधानुकूलो व्यापारस्तत्र कृतावेव वर्त्तमानकालोत्तरकालवृत्तित्वस्यान्वयः। न चैवम् प्रागुक्तव्युत्पत्तिविरोध इति वाच्यम्, तादृशव्युतपत्तिवैचित्र्यस्वीकारात्। अन्य-था तस्मात् पचतीति प्रयोगो न स्यात् इति, यथा पञ्चम्यर्थस्य ज्ञानज्ञाप्यत्वस्य पाका-नुकूलकृतावन्वयः स्वीकार्यः, तथा तिङर्थस्य सुबर्थेन सममन्वयस्य स्वीकार इति भावः।

एतावता प्रबन्धेन, इत्यादि। अवयवान्ताभिन्नग्रन्थाभिन्नव्याप्तिपक्षधर्म-ताविशिष्टहेतुविषयकप्रतिपत्त्यनुकूलीभूतव्यापारोत्तरकालीनव्याप्तिपक्षधर्मताविशिष्टहेतु-निरूपितप्रसङ्गसङ्गतिज्ञानजन्यजिज्ञासाधीनतत्त्वनिर्णयादिरूपसपरिकरहेतुप्रयोज्यका-र्यकारित्वज्ञानजन्यजिज्ञासाधीनहेत्वाभासविषयकप्रतिपत्यनुकूलव्यापारविशेष्यकस्वो-त्तरकालीनकृतिजन्यत्वप्रकारताशालिशाब्दबोधानुकूलकृतिमान् मणिकार इति शाब्द-बोधः।

## विमलप्रभा

मातामहमहाशैलं महस्तदपितामहम्।
कारणञ्जगतां वन्दे कण्ठादुपरिवारणम् ॥१॥

ताराध्यानपरायणं श्रुतिवनीसञ्चारपञ्चाननम् ।
शिष्यध्वान्तनिवारणेषु कुशलं शान्तं सदा सस्मितम् ।
स्वर्गङ्गाप्रतिमप्रसन्नवचनं वन्दे गुरुं सादरम् ।
श्रीनीलाम्बरपूज्यताततचरणं भक्त्यार्हितपोभ्यर्हितम् ॥२॥

अपरः किमु गौतमस्मृतोऽप्यथ वा नूतन एव शङ्करः ।
यमपेक्ष्य विवादिनां वचोऽवतुनीलाम्बरनामकः पिता मे ॥३॥

येनाहमात्मेव परेण प्रेम्णा विलोकितो बन्धुवरेण चासम् ।
रसाधिनाथेन, नतोऽस्मि तेषां तेजस्विनामङ्घ्रिसरोरुहेषु ॥४॥

याभ्यां तमो मे मनसोऽपहृत्य दिव्यं महो ज्ञानमयं प्रदत्तम् ।
गुरू मदीयौ फणिभूषणाख्यो योगेन्द्रनाथश्च नुतावजस्रम् ॥५॥

तारिणीचरणद्वन्द्वसेवानिर्मलचेतसा ।
क्रियते रूपनाथेन टीका सुविमलप्रभा ॥६॥

"अथैवमनुमाने निरूपिते तस्माज्जगन्निर्मातृपुरुषधौरेयसिद्धिः, परमप्रयोजनमनुमानस्यापवर्ग" इत्यादिना सदनुमानस्येश्वरसाधकत्वं परमप्रयोजनमुक्तिकारणत्वञ्च समर्थितमीश्वरानुमाने । तत्रसदनुमाननिरूपणम् हेत्वाभासनिरूपणमन्तराऽसम्भवमेवेति, तथा युक्तिवादपरमास्त्रकृतबहुतरपरिश्रमस्य कस्य नाम तर्ककर्कशधीधनस्य पुनः शतशो विनिकृत्तमर्मा स्थातुमपि पारयतिप्रति पक्षिवीरः, किम्पुनरिषदपिदुरुक्तिसाहसमासादयितुम् । सुतरां युक्तिबलपरार्थानुमानपरिशीलनेन दृढ़ीकर्त्तव्य आत्मवादो दुर्वारवीरवदनदसदनमुद्रणायेति च स्वान्ते निधाय शरीरेन्द्रियप्राणान्तःकरणात्मवादिनां लोकायतिकानां शून्याद्यात्मवादिनान्तथागतानां, सप्तभङ्गीनयवादिनामार्हतानां, तथेश्वर अभिन्ननिमित्तोपादाननिदानमितिवादिनां वैष्णवानां, जीवेश्वरयोरभेद इति वादिनां वेदान्तिनां, प्रधानस्यैव जगत्कारणत्वमिति वदतां सांख्यानां, कर्माङ्गमात्मज्ञानमिति वदताञ्च मीमांसकानां स्वं स्वसमयरिकल्पितसिद्धान्तमर्थादेवापसिद्धान्तयिष्यन् आत्मज्ञानम्मोक्षदायकमिति तदर्थमात्मानात्मनोर्भेदापगमकप्रयोजकतयेवानात्मप्रमाणविषयविचारास्पदीभूतसाङ्गमनात्मप्रमाणं विचारयन् आत्मतत्वज्ञानोप-

यिकश्रुतेः समन्वयादिकम्परित्यज्य निजेच्छयाकल्पितार्थानामपार्थत्वप्रतिपादनद्वारास्वसिद्धान्तप्रतिपादनाय तात्कालिकापसिद्धान्तप्रचारप्राबल्येन भ्रान्तानामात्मतत्वज्ञानविधुराणामनात्मानमात्मेति मन्यमानानां जीवानान्दुर्दशां पर्यालोच्य तेषां हितकाम्ययाऽनुजिघृक्षया वा परमकारुणिको भगवान् तार्किककुलकुमुदिनीकुमुदिनीनाथः कल्पनाकामिनीकमनीयकान्तः श्रीगङ्गेश इवापरगङ्गेशपाद अवयवान्तग्रन्थजातेन पञ्चावयवोपेतसद्धेतुन्निरूप्य वादिविजयाद्यानुषङ्गिकफलसहिततत्त्वनिर्णयद्वारकपरमपुरुषार्थापरपर्यायनिःश्रेयसरूपफलप्रतिपादकं मोक्षाङ्गदर्शनभूतं हेत्वाभाससामान्यलक्षणं प्राह— अथेत्यादिना । अथ = अनन्तरम्, सद्धेतुनिरूपणोत्तरमिति यावत् । हेत्वाभासाः = हेतुनिष्ठदोषाः, दुष्टहेतवो वा । तत्त्वनिर्णयविजयप्रयोजकत्वात् = तत्त्वनिर्णयप्रयोजकत्वहेतुना, पराहङ्कारखण्डनरूपविजयप्रयोजकत्वेन च । निरूप्यन्ते = प्रतिपाद्यन्ते । अयमर्थः अथशब्दार्थ आनन्तर्यम्, पञ्चम्याः ज्ञानजन्याजिज्ञासाधीनत्वमर्थः निरूपणञ्च शिष्यसमवेतज्ञानानुकूलीभूतो व्यापारः, आख्यातार्थो विषयत्वं, तृतीयायाः मयेत्याध्याहृतायाः कृतिजन्यत्वमर्थः । तथा च सद्धेतुनिरूपणोत्तरकालीनमत्समवेतकृतिजन्यतत्त्वनिर्णयविजयप्रयोजकत्वज्ञानजन्यजिज्ञासाधीनो यो ज्ञानानुकूलीभूतो व्यापारस्तद्विषयाः हेत्वाभासा इत्यन्वयबोधः ।

अथेत्यादिमूलग्रन्थं प्रतिज्ञापरतया विवृणोति एतावतेत्यादिना दीधितिकारः । एतावता = अवयवान्तेन । प्रबन्धेन = ग्रन्थेन । तृतीयार्थोऽभेद तत्र प्रथमाभेदस्य ग्रन्थे, द्वितीयस्य च निरूपणेऽन्वयः । सपरिकरम् = परिकरो व्याप्तिपक्षधर्मते ताभ्यां सहितम्, व्याप्तिपक्षधर्मताविशिष्टम् सद्धेतुमिति यावत् । निरूप्य = निरूपणं कृत्वा । निरूप्येत्यत्र नीपूर्वकरूपधातोः ज्ञानानुकूलीभूतव्यापारोऽर्थः । तत्प्रसङ्गात् = तस्य प्रसङ्गः तत्प्रसङ्गः तस्मात् सपरिकरहेतुनिरूपितप्रसङ्गसङ्गतिवसतः । तत्त्वनिर्णयादिरूपतत्कार्यकारित्वात् = सद्धेतुप्रयोज्ययथार्थनिश्चयविजयोभयरूपकार्यप्रयोजकज्ञानजन्यजिज्ञासाधीनत्वात् । तदाभासनिरूपणं = हेत्वाभासनिरूपणं । प्रतिजानीते = उत्तरकालकर्त्तव्यत्वेन बोधानुकूलव्यापारपरत्वेन च प्रतिज्ञापरतया निर्दिशति । अयमर्थः, प्रतिजानीत इत्यत्र प्रतिपूर्वकात् ज्ञा अवबोधने धातोः कर्त्तरि लकारे प्रतिज्ञानीत इति रू-

पंभवति तदर्थश्चोत्तरकालकर्त्तव्यत्वप्रकारकबोधानुकूलो व्यापारः। आख्यातार्थः कृतिः, वर्त्तमानकालोत्तरकालवृत्तित्वं लडर्थः कृतेः समवायसम्बन्धेन मूलकारेऽन्वयः। एवञ्चा-वयवान्ताभिन्नग्रन्थाभिन्नसपरिकराभिन्नहेतुविषयकज्ञानानुकूलीभूतव्यापारोत्तरकाली-नसपरिकर ( व्याप्तिपक्षधर्मताविशिष्ट ) हेतुनिरूपितप्रसङ्गसङ्गतिज्ञानजन्यजिज्ञासाधी-नतत्त्वनिर्णयादिरूपसपरिकरहेतुप्रयोज्यकार्यप्रयोजकत्वज्ञानजन्यजिज्ञासाधीनो यो हे-त्वाभासविषयकज्ञानानुकूलीभूतो व्यापारस्तद्विषयकोत्तरकालकर्त्तव्यत्वप्रकारकबोधा-नुकूलीभूतव्यापारप्रतियोगिनिष्ठा या वर्त्तमानकालोत्तरकालवृत्तिकृतिस्तद्वान् मूलकार इत्यन्वयबोधः।

## बलदेवी

तत्वनिर्णयविजयप्रयोजकत्वादितिवाक्यात्—तत्वनिर्णयविजयप्रयोजकत्व ज्ञानजन्यजिज्ञासाधीनत्वं यथाहेत्वाभासनिरूपणेबोध्यते तथातुल्यवित्तिवेद्यतया तत्व-निर्णयविजयप्रयोजकत्वरूपैककार्यकारित्वे हेत्वाभासनिरूपणप्रयोजक जिज्ञासाजनक-ज्ञानविषयत्वंबोध्यते, तथा च प्रसङ्गस्यापि सङ्गतित्वसम्भवे तदप्रदर्शनेन न्यूनतास्या-दिति तदेवाहगदाधरः। हेत्वाभासनिरूपण इत्यादिना। हेत्वाभासनिरूपणे इत्यत्रप्रयोजकत्वंसप्तम्यर्थः तस्यस्वरूपेणसङ्गतित्वैकदेशेजिज्ञासायामन्वयः। तथा च हेत्वाभासनिरूपणप्रयोजक जिज्ञासाजनक ज्ञानविषयत्वरूप सङ्गतित्वं प्रसङ्गनिरूपिता-धेयतावदित्यर्थः। आधेयत्वंसम्भवपदार्थः निरूपितत्वंषष्ठ्यर्थःहेत्वाभासपदार्थत्वं प्रसङ्ग-पदार्थः। तथा च तादृशसङ्गतित्वं प्रसङ्गनिरूपिताधेयतावत् दुष्टहेतोस्स्मरणात् स्मर-णञ्च प्रकारतासम्बन्धेनहेतुः। अथवा अनन्तराभिधान प्रयोजक जिज्ञासाजनक स्मर-णप्रयोजक निरूप्यनिष्ठ सङ्गतिः, तथा च प्रकृतेव्याप्तिपक्षधर्मत्वाभाव एव सङ्गतिः, स एव प्रसङ्गपदार्थः। प्रसङ्गत्वञ्चोपोद्घातादिपञ्चकभिन्नत्वेसति अनन्तराभिधानप्रयोजक जिज्ञासाजनक स्मरणप्रयोजक सम्बन्धत्वमिति, तादृशसङ्गत्याहेत्वाभास निरूपणम् सुसङ्गतमितिभावः। ननुसप्तम्यन्तार्थ हेत्वाभास निरूपणप्रयोजकत्वस्य सङ्गतित्वैक-देशे ऽनन्तराभिधानप्रयोजकजिज्ञासायामन्वयेऽनन्तराभिधान प्रयोजकइत्यनेन हेत्वा-भास निरूपणप्रयोजकत्वस्यद्विधाभानप्रसङ्ग इति चेन्न, विशिष्टवाचकपदानां सतिपृथ-क्विशेषणवाचकपदसभिधाने विशेष्यमात्रपरत्वनियमेनदोषाभावात्।

## गादाधरी

परिकरो व्याप्तिपक्षधर्मते। निरूप्यैत्यन्त मुक्तक्रमेण दुष्टहेतोः स्मृतत्वस्य प्रसङ्गनिर्वाहकस्य लाभाय। तत्प्रसङ्गादिति, सपरिकर हेतुनिरूपितप्रसङ्गसङ्गते-रित्यर्थः। तज्ज्ञानजन्यंजिज्ञासाधीनत्वं पञ्चम्यर्थः। अन्वयश्चास्य निरूपणमित्य-नेन।

## बलदेवी

परिकरो व्याप्तिपक्षधर्मते इति। अथात्र परिकरपदेन व्याप्तिमात्रोपादाने ऽवच्छेदकावच्छेदन निरूपणम्प्रत्यवच्छेदकावच्छेन सङ्गतिसत्वमावश्यकम्। एवञ्च यन्निरूपणानन्तरं योनिरूपणीयो भवतिं स तन्निरूपित सङ्गतिमानिति नियमात्, तथा चतदभाववतो दुष्टहेतो स्मरणादित्यत्र तत्पदेन व्याप्तिमात्रपरामर्शात्, ह्रदोवह्निमान् जलादित्यादौ हेतौ पक्षधर्मत्वाभावविरहेण व्यभिचारोदुर्वार इति व्याप्तिपक्षधर्मत्वो भयोपादानम्। ननू भयोपादानोऽपि उत्पत्तिकालावच्छिन्नो घटः गन्धवान् पृथ्वीत्वा-दित्यादौ पृथ्वीत्वे व्याप्तिपक्षधर्मत्वोभय सत्वेन व्यभिचारोदुर्वारइतिचेन्न, योयन्निरू-पितसङ्गतिमान् सतन्निरूपणाव्यवहितोन्तर निरूपणविषय इति नियमस्यैवस्वीकारा-त्। एवञ्चावच्छेदकावच्छेदेन निरूपणम्प्रत्यवच्छेदकावच्छेदेन सङ्गतेः कारणत्व मितिनियमोनाङ्गीकर्त्तव्य इति। नचैवं व्याप्तिपक्षधर्मत्वोपादानमनर्थकमितिवाच्य-म्, परिकरपदस्य व्याप्तिपक्षधर्मत्वोभयत्वावच्छिन्ने शक्तिः, प्रत्येकेचलक्षणा, तथा च शक्त्यानिर्वाहे लक्षणाऽदरोनकरणीय इति। केचितु असङ्कीर्णवाधस्याऽस्वीकारात् प्रागुक्तनियमएव सम्यगित्यपिवदन्ति। अपरेतु असङ्कीर्णवाधस्थले नोक्तव्यभिचार-सम्भावना, यद्देशकालावच्छेदेन साध्यसिद्धेरुद्देश्यत्वं तादृशदेशकालाद्यवच्छेदेन सा-ध्यंसाधनञ्चेत्याकारक व्याप्तेरेवकारणत्वमिति सत्प्रतिपक्षग्रन्थे भट्टाचार्येणोक्तत्वात्। तथा चोक्तस्थले व्यभिचारस्यैव सत्वेनोक्तव्याप्त्यभावरूपसङ्गते रक्षतत्वात् जगदी-शेनतु व्याप्तिपक्षधर्मत्वादिरित्यत्रादिपदेना वाधितत्वासत्प्रतिपक्षितत्वयोः परि-ग्रहःकृतः, तस्याभिप्रायस्तु अवच्छेदकावच्छेदेन निरूपणप्रत्यवच्छेदकावच्छेदेन सङ्गतेः कारणत्व मेवञ्च योयन्निरूपणानन्तरनिरूपणीय स्सतन्निरूपित सङ्गतिमानित्येवनि-

यमः स्वीकार्य इति । तथा च तन्मते यद्देशकालावच्छेदेने त्यादिव्याप्तेरस्वीकारा-त् सङ्गतिसम्पादनायादि पदमुपान्तम् । तथा चोक्तस्थलेऽप्यवाधितत्वाभावरूप सङ्ग-तिरस्त्येवातो नोक्तव्यभिचार इति भावः ।

## विमलप्रभा

हेत्वाभासनिरूपणे—दुष्टहेतुहेतुनिष्ठदोषस्यवाप्रतिपादने । सप्तम्या—निरूपि-तत्वमर्थः । प्रसङ्गस्यापि = प्रसङ्गसङ्गतेरपि । सङ्गतित्वं = सङ्गतित्वरूपधर्मवत्वम् । सङ्गतित्वमित्यत्र सङ्गतित्वपदस्य प्रयोजकत्वे लक्षणा । व्याप्तिपक्षधर्मता–विशिष्ट हेतुनिरूपणे = सद्धेतुनिरूपणे । तद्विरहवतो-दुष्टहेतोः = व्याप्तिपक्षधर्मताविरहविशि-ष्टस्य हेत्वाभासस्य । स्मरणात् = स्मृतिसम्भवात् । अतः = अस्माद्धेतोः । तदप्रद-र्शकमूलस्य = प्रसङ्गसङ्गत्यप्रतिपादकमूलस्य । न्यूनतां = प्रसङ्गसङ्गत्यकथन ज्ञान-ज्ञाप्य प्रसङ्गसङ्गत्यज्ञानवत्पुरुषोच्चरितत्व रूपन्यूनत्वम् । परिजिहीर्षुः = परिहर्त्तुमि-च्छुः । (अज्ञानाभावसम्पादकव्यापाररूपपरिहारकर्त्ता) प्रसङ्गसङ्गतेरपि तन्नि-रूपणप्रयोजकत्वं = हेत्वाभासप्रतिपादनप्रयोजकत्वं । अयमर्थः हेत्वाभासनिरूपणनि रूपितप्रयोजकतायाः प्रसङ्गस्यापि सम्भवे अर्थात् व्याप्तिपक्षधर्मताविशिष्ट हेतुनि-रूपणे व्याप्तिपक्षधर्मताविरोधि व्याप्तिपक्षधर्मत्वाभवविशिष्ट हेतोरपिस्मरणसम्भवे । (एकसम्वन्धिज्ञानमपरसम्वन्धिस्मारकमितिन्यायेन) स्मृतिविषयतावच्छेदकत्वंहेत्वा-भासपदार्थत्वे अथ च हेत्वाभासनिरूपणंमाभवत्विति द्वेषासत्वेन द्वेषविषयतानवच्छे-दकत्वमपीति स्मृतिविषयतावच्छेदकत्वेसति द्वेषविषयतानवच्छेदकत्वरूप प्रसङ्गसङ्ग-तेरपि हेत्वाभासनिरूपणनिरूपित प्रयोजकत्वसम्भवे तदकथनेन मूलकारस्ययत्न्यूनत्वं-सञ्जातं तत्परिहाराय हेत्वाभासनिरूपणे प्रसङ्गस्यापि सङ्गतित्वप्रतिपादनाय च शि-रोमणिः प्राह–एतावतेत्यादि ।

परिकरः = सपरिकरघटक परिकरपदार्थः । इत्यन्तम् = एतावतेत्यारभ्यनिरू-प्येतत्पर्यन्तम् । उक्तक्रमेण = व्याप्तिपक्षधर्मताविरोधि तद्विरहविशिष्टहेतुस्मरण रू-पोक्तप्रकारेण । दुष्टहेतोः स्मृतत्वस्य = दुष्टहेतुनिष्ठस्मृतत्वस्य । प्रसङ्गनिर्वाहकस्य = प्रसङ्गसङ्गतिप्रयोजकस्य । लाभाय = लाभार्थं । तज्ज्ञानं = हेत्वाभासपदार्थत्वरूपप्रस-

ङ्गसंगतिज्ञानं । पञ्चम्यर्थः = तत्प्रसङ्गादितिपद घटकपञ्चमीविभक्तेरर्थः । अस्य = पञ्चमीविभक्त्यर्थस्य । अयमर्थः । सपरिकरहेतुनिरूपित प्रसङ्गसङ्गति ( हेत्वाभासपदार्थत्वरूपप्रसङ्गसङ्गति ) ज्ञान जन्यजिज्ञासाधीनं यतोहेत्वाभासनिरूपणमतः प्रसङ्गेऽपि सङ्गतित्वलाभः, साचसङ्गतिः मूलस्थाथशब्देन ज्ञापितेतिन मूलकारस्यन्यूनतेति । अनन्तराभिधानप्रयोजक जिज्ञासाजनक स्मरणप्रयोक निरूप्यनिष्ठसम्बन्ध स्सङ्गतिः । प्रकृतेचानन्तराभिधानम् सद्धेतुनिरूपणेन्तर हेत्वाभासनिरूपणाभिधानं तत्प्रयोजिकायाजिज्ञासा साचके हेत्वाभासा इत्याकारिका हेत्वाभासत्वावान्तर धर्मप्रकारकज्ञानंभवत्वित्याकारिकावा जिज्ञासा तज्जनकस्मरणं–हेत्वाभासपदार्थत्वरूपेण हेत्वाभासपदार्थस्मरणं तत्प्रयोजक निरूप्यनिष्ठसम्बन्धः व्याप्तिपक्षधर्मताविरोधि तद्विरहवत्वादिरूपएवेति संगतिसामान्यलक्षणसंगतिः । वयन्त्वत्र सद्धेतुनिरूपणस्यासद्धेतुनिरूपणे प्रसङ्गसङ्गतिनिर्वाहक मसद्धेतुस्मारकं सद्धेतुविरुद्धत्वम् व्याप्तिपक्षधर्मताविरहवत्वरूप एवसम्बन्धः, सम्बन्धिविधयाएकसम्बन्धिज्ञान मपरसम्बन्धिस्मारकमितिन्यायेनस्वविरुद्धत्वरूप सम्बन्धवतोस्सदसद्धेत्वोर्मध्ये एकस्यसद्धेतोः निरूपणे तत्प्रतिपत्तावपरसम्बन्धिनोऽसद्धेतोः स्मरणंभवतिततोऽसद्धेतवः के इति शिष्यस्यजिज्ञासाभवति सैवासद्धेतूनांनिरूपणप्रयोजिका, एवञ्चसद्धेतुनिरूपणानन्तरमसद्धेत्वभिधानप्रयोजिकायाजिज्ञासा च केऽसद्धेतवइत्याकारिका तज्जनकज्ञानं सम्बन्धिविधयाऽसद्धेतुस्मरणरूपम् तद्विषयत्वं यदसद्धेतुषु तदेवसङ्गतिः । प्रसङ्गत्वञ्च तत्वनिर्णयविजयप्रयोजकत्वरूप प्रयोजनवत्वेनोपेक्षानर्हत्वात् उक्तप्रकारेणस्मृतिविषयत्वाच्चतदाश्रयाणामिति लक्षणसङ्गतिरनयारीत्येतिमन्यामहे ।

## गादाधरी

तत्वनिर्णय विजयप्रयोजकत्वादिति मूलं, यद्यपिहेत्वाभासनिष्ठतत्वनिर्णयादिजनकज्ञानविषयत्वार्थकतया शिष्यप्रवृत्युपयोगिनिरूपण घटकज्ञानप्रदर्शनपरम्, तथापि तन्मात्रपरत्वेसङ्गत्यप्रदर्शनेनन्यूनतास्यादिति तस्यैककार्यकारित्वरूप सङ्गतिप्रदर्शन परत्वमपीति स्फुटीकर्तुमाह तत्वनिर्णयादिति, आदिपदात् विजयपरिग्रहः । तत्कार्यकारित्वात् = सपरिकरहेतुप्रयोज्य कार्यप्रयोजकत्वात्, प्रयोजकत्वञ्च जनकजनकतावच्छेदक साधारणमिति स्वविषयकज्ञानकार्यम्प्रति स्वस्यतथात्व मक्षतमेव ।

# विमलप्रभा

शङ्कते यद्यपीत्यादिना, यद्यपीत्यस्य तथापीत्यनेनान्वयः। शिष्यप्रवृत्युपयोगि निरूपण घटक ज्ञानप्रदर्शनपरम् यद्यपि तत्वनिर्णय विजय प्रयोजकत्वादिति मूलमिति योजना कार्या। तत्वनिर्णयः = यथार्थनिश्चः, विजयः = पराहङ्कारखण्डनम्। मूलम् = चिन्तामणिग्रन्थम्। अस्य प्रदर्शनपरमित्यनेनान्वयः। हेत्वाभास निष्ठतत्वनिर्णयादि जनकज्ञान विषयत्वार्थकतया = हेत्वाभासनिष्ठं यत् तत्वनिर्णय विजयादि जनकज्ञान विषयत्वं तदर्थकत्वेन शिष्यप्रवृत्युपयोगि निरूपण घटकज्ञान प्रयोजन प्रदर्शनपरम् = शिष्याणा मन्तेवासिना मध्ययनादौ याप्रवृत्तिः साशिष्यप्रवृत्तिः, तदुपयोगियत् हेत्वाभास ज्ञानानुकूल व्यापाररूप निरूपणं तत्घटकं यत् हेत्वाभासज्ञानं तत्प्रयोजनं तत्वनिर्णयादि स्तत्प्रदर्शन परत्वं मूलस्य। तन्मात्रपरत्वे = तादृश प्रयोजन प्रदर्शन मात्रपरत्वे, हेत्वाभास ज्ञाननिष्ठेष्ट साधनत्व मात्रप्रदर्शनपरत्वे। एतावता सङ्गति प्रदर्शनाभावः सूचितः। न्यूनता = अप्रवर्त्तकता, अनवगत तात्पर्यविषयतेति यावत्। तस्य = तत्वनिर्णय विजयप्रयोजकत्वादिति मूलस्य। एककार्यकारित्वं = तत्वनिर्णय विजय रूपात्मकैक कार्यजनकत्वम्। आदिपदात् = तत्वनिर्णयादित्यत्रादिपदेन। सपरिकर हेतुप्रयोज्य कार्यप्रयोजकत्वात् = व्याप्तिपक्षधर्मताविशिष्ट हेतुप्रयोज्यं यत् तत्वनिर्णयादिरूपं कार्यं तादृशकार्यंप्रति प्रयोजकत्वेन। प्रयोजकत्वञ्च = कार्यप्रयोजकत्वघटक प्रयोजकत्वपदार्थश्च। साधारणम् = जनक जनकतावच्छेदकोभयानुगतम्। स्वविषयक ज्ञानकार्यम्प्रति = स्वं हेत्वाभासः, तद्विषयकज्ञानं हेत्वाभासज्ञानं, तत्कार्यं तत्वनिर्णयादिः, तादृश कार्यंप्रति। स्वस्य = हेत्वाभासस्य। तथात्वं = प्रयोजत्वं। अक्षतमेव = वरीवर्त्येव। अयमर्थः। हेत्वाभासज्ञानेसति तत्वनिर्णय विजय प्रयोजकत्व ज्ञानात् तादृशज्ञानस्येष्टसाधनत्वरूपतया तत्वनिश्चयः विजयश्च ममभवत्वित्याकारिका याफलेच्छा तत्सहित तादृशेष्टसाधनताज्ञानादेवा न्तेवासिना मध्ययनादौ प्रवृत्तिसम्भवेना न्तेवासि प्रवृत्तिफलकत्वेन तत्प्रसङ्गादित्यादिना सङ्गतिप्रदर्शन परत्वेन न्यूनता निवारणं शिरोमणेः निरर्थकमेवेति चेन्नैतत् सारम् यतः इष्टसाधनताज्ञानात् प्रवृत्तिसम्भवेऽपि सङ्गत्यप्रदर्शनेऽसङ्गतत्वज्ञानेनोन्मत्त प्रलपितत्व शङ्कया तादृशेष्टसाधनत्वज्ञाने ऽप्रामाण्यनिश्चयो दयेन निर्दिष्टमपीष्ट साधनत्वं प्रवृत्यनु-

पयोग्येवस्यादतः प्रवृत्युपयोगीष्टसाधनताज्ञानेऽप्रामाण्यनिश्चयसम्पादका सङ्गतत्वज्ञान-विनाशकत्वेन सङ्गतिप्रदर्शनमावश्यकमेव दीधितिकारस्येति । तथा च तत्वनिर्णयवि-जयप्रयोजकत्वादितिमूलम् यथा तादृशप्रयोजनप्रदर्शनपरम् तथैवैककार्यकारित्वादि ( एककार्यानुकूलत्वादि ) रूप सङ्गतिप्रदर्शनपरमपीत्यतोन कोपिदोषः। एककार्यानु-कूलत्वञ्च एककार्यप्रयोजकत्वं, तदर्थश्च स्वाभिन्नत्वेसति स्वप्रयोज्यकार्यप्रयोजकत्वम् । प्रकृते स्वं व्याप्तिपक्षधर्मताविशिष्टहेतुः, तद्भिन्नत्वं हेत्वाभासे एवं व्याप्तिपक्षधर्मता-विशिष्टहेतुप्रयोज्यं यत् तत्वनिर्णयविजयरूपकार्यं तत्प्रयोजकत्वमपि हेत्वाभास इति तत्रैककार्यानुकूलत्वरूप संगतिलक्षणसङ्गतिः । न च हेत्वाभासज्ञानकार्यम्प्रति हेत्वाभासस्य जनकताविरहेणप्रयोजकत्वाभावात् कुतोलक्षणसङ्गतिरिति वाच्यम्, प्रयोजकत्वं जनक जनकतावच्छेदक साधारण कारणता वच्छेदका-वृत्यन्यथासिद्धिशून्यत्वेसति कार्यनियतपूर्ववृत्तित्वरूपम् । तथा च हेत्वाभासे जनक-त्वरूपप्रयोजकताविरहेऽपि हेत्वाभासज्ञाननिष्ठा यातत्वनिर्णयादिजनकता विषयतया-तदवच्छेदकतायाः, हेत्वाभासे वर्त्तमानतयोभयसाधारण, प्रयोजकतायाः, हेत्वाभासे-प्यक्षतत्वान्न कोपिदोष इति ।

## गादाधरी

तत्वनिर्णयः प्रमितिकोटिनिश्चयः । तत्र व्याप्तिपक्षधर्मता विशिष्टप्रकृतहेतुज्ञा-नमिव तद्विपरीतकोटि साधकस्य हेत्वाभासत्वज्ञान मप्युपपुज्यते, प्रतिबन्धकीभूत वि-परीतकोटिव्याप्यवत्ताज्ञाने ऽप्रामाण्य ग्राहकत्वादित्युभयो स्तत्वनिर्णयप्रयोजकत्वम् ।

## विमलप्रभाः

तत्वनिर्णय पदस्यार्थं विधायोभयो स्सदसद्धेतो स्तत्वनिर्णय प्रयोजकतान्दर्श-यति तत्वनिर्णये त्यादिना । प्रमितिकोटिकनिश्चयः=प्रभाविषयीभूतायाकोटिः सा प्रमि-तिकोटिः तादृशकोटिकनिर्णयः । साध्यवत्पक्षविषयता निरूपितसाध्यविषयताशालि निश्चय इति यावत् । तत्र=तादृशनिश्चये । प्रकृतहेतुज्ञानमिव=सद्धेतुज्ञानमिव, परामर्शइवेतियावत् । तद्विपरीतकोटिसाधकहेतौ=साध्यविपरीत साध्याभावसाधक-हेतौ । प्रतिबन्धकीभूतकोटिः—साध्यप्रतिबन्धक साध्याभावकोटिः । ग्राहकत्वात्

—ग्रह ज्ञान) जनकत्वात्। उभयोः = सदसद्धेतोः। अयमर्थः। तत्वनिर्णयपदस्य साध्यवत्पक्ष विषयतानिरूपित साध्यविषयता शालिनिश्चयार्थकतया सद्धेतु दुष्टहेतूभयो स्तत्वनिर्णयप्रयोजकत्वं, तथाहि पर्वतोवह्निमान्धूमात् पर्वतोवह्न्यभाववान्-जलादित्यादिरीत्या वादिप्रतिवादिनोर्विवादे यत्र वह्न्यभावव्याप्यजलवान् पर्वत इति परामर्शः ततस्सन्निकर्षवशात् पर्वतनिरूपितवृत्तित्वाभाववत्जल मित्याकारकसिद्धिज्ञानेन जलेपर्वतनिरूपितवृत्तित्वाभावज्ञानेजातेसति जलाभाववति पर्वतेजलं परामृशामीत्याकारका नुव्यवसायेन जलाभाववद्विशेष्यकत्वेसति जलप्रकारकत्वरूप मप्रामाण्यंविषयीक्रियत इति, दोषज्ञानस्य विरोधिकोटिव्याप्यवत्ताज्ञाने ऽप्रामाण्यग्राहकत्वम्। तथा चा प्रामाण्यज्ञानाभावविशिष्ट विरोधिपरामर्शस्यैव प्रतिबन्धकतया तत्र प्रतिबन्धकाभावरूप कारणसम्पादनेन दोषस्योपयोगित्वम्। इत्थञ्च पर्वतोवह्निमानित्याद्यनुमितौ वह्निव्याप्यधूमवान् पर्वत इत्यादिपरामर्शस्य हेतुता, परामर्शे च व्याप्तिपक्षधर्मताविशिष्ट हेतुविषयकत्वेन मानसप्रमात्वज्ञानंकारणम् ततो वह्निमत्ताज्ञानं प्रमा स्वविषयसाध्यनिरूपित व्याप्तिपक्षधर्मताविशिष्ट हेतुज्ञानजन्यत्वा दित्यादिरीत्या सद्धेतुज्ञानस्य प्रमात्वानुमितावुपयोगः। एवंवह्न्यभावव्याप्यजलवान् पर्वत इदञ्ज्ञानमप्रमा स्वविषयसाध्यव्याप्तिपक्षधर्मत्वाभावविशिष्ट हेतुविषयकत्वेसति स्वीयसाध्यविषयतानिरूपित व्याप्तिविषयत्वादिनिरूपित प्रकृतहेतुविषयकत्वादिरीत्याऽप्रामाण्यग्राहकत्वमित्युभयो स्तत्वनिर्णयप्रयोजकत्वम्।

तर्करत्नमहोदयास्तु इयमनुमितिः प्रमा स्वविषयीभूतसाध्यव्याप्तिपक्ष धर्मताविशिष्ट हेतुज्ञानजन्यत्वात्, इदं ज्ञानमप्रमा स्वविषयीभूतसाध्यव्याप्तिपक्षधर्मत्वाभावविशिष्ट प्रकृतहेतुविषयकत्वेसति स्वीयसाध्यविषयतानिरूपित व्याप्तिविषयत्वादिनिरूपित प्रकृतहेतुविषयकत्वात्। प्रमितिकोटिकनिश्चयकल्पे च, इदं ज्ञानमप्रमा स्वविरोध्यनुमिनिजनकहेत्वदुष्टत्वकालीनत्वा दित्यादिरीत्या उपयोगिनोऽप्रामाण्यग्रहे विपरीतहेत्वदुष्टत्वग्रहस्य प्रतिवन्धकोदुष्टत्वग्रह इति तस्यप्रामाण्यग्रहे परम्परयाप्रयोजकतया सद्धेतुदुष्टहेतूभयो स्तत्वनिर्णयप्रयोजकत्वमिति प्राहुः।

## वलदेवी

तत्वनिर्णयादिति। नन्वत्र दुष्टत्वज्ञानं कथम् तत्वनिर्णयप्रयोजक मिति, चेन्न, अनुमानवलादेव तस्य प्रयोजकत्वलाभः, तथाहि इदं ज्ञानमप्रभा दुष्टहेतुविषयकत्वात्, इत्यनुमामेन ऽप्रमात्वव्याप्यदुष्टहेतुविषयकत्ववत् वह्न्यभावव्याप्यजलवत् इदं ज्ञानमिति परामर्शाव्यवहितोत्तर जायमानाया ऽप्रभात्ववत्ताहशज्ञानमित्यनुमिति स्ताहशानुमितिम्प्रति परामर्शद्वारा विशेषणज्ञानस्य ( दुष्टहेतुविषयकत्ववान् इति ज्ञानस्य) प्रयोजकत्वात्। तथा च ताहशज्ञाने ऽप्रमात्वनिश्चयानन्तरं तत्वनिर्णयविजयी भवतः सुतरां परम्परया दुष्टत्वज्ञानस्य तत्वनिर्णय विजयप्रयोजकत्वमिति, बोध्यम्।

## गादाधरी

अथवा तत्वनिर्णय स्साध्यवत्ताज्ञाने प्रमात्वनिश्चयः। तत्रानुमापकहेतौ व्याप्त्यादिविशिष्टत्वरूप सद्धेतुत्वज्ञानमिव विपरीतकोटिसाधकहेतो दुष्टत्वज्ञान मप्युपपुज्यते, प्रकृतसाध्यग्रहाऽप्रामाण्यग्राहक विपरीतकोटि साधक हेत्वदुष्टत्वग्रह विघटकत्वात्।

## विमलप्रभाः

तत्वपदस्य तत्वंब्रह्मणियाथार्थे इति कोशात् यथार्थरूपार्थेशक्तिः न तु प्रमितिकोटिकनिश्चयरूपार्थे, तथा च हशार्थस्वोकारे लक्षणा पत्तिस्स्यादतः कल्यान्तर माह अथवेत्यादिना। साध्यवत्ताज्ञाने प्रमात्वनिश्चयः = साध्यवत्ताज्ञानधर्मिक साध्यवन्निष्ठविशेष्यता निरूपित साध्यनिष्ठप्रकारता कत्वप्रकारकनिश्चयः। तत्र—उक्त प्रमात्वनिश्चये। अनुमापकहेतोः = अनुमापकत्व मनुमितिप्रयोजकत्वं तच्च जनकजनकतावच्छेदक साधारणमित्थश्चानुमापकहेतो रित्यस्या नुमितिप्रयोजकधूमादिहेतो रित्यर्थः। सद्धेतुत्वज्ञानमिव = वह्निव्याप्यधूमवान् पर्वतइत्यादिज्ञानमिव। विपरितकोटिसाधकहेतोः = वह्न्यभावादिकोटिसाधक जलादिहेतोः। दुष्टत्वज्ञानमपि = जलादेः पर्वतादयवृत्तित्वरूप स्वरूपासिद्धिज्ञानमपि। प्रकृतसाध्यग्रहे = पर्वतोवह्निमानित्यादिज्ञाने। अप्रमाण्यग्रहः—प्रमात्वाभावज्ञानं। विपरीतकोटिसाधकहेतौ—वह्न्यभावादिकोटिसाधकजलादिहेंतौ। अदुष्टत्वग्रहः = अदुष्टत्वज्ञानं। तद्विघटकत्वात्—तद्विघटकतयादुष्टत्वज्ञानस्योपयोगित्वात्।

अयमर्थः। यथा साध्यवानिदं ज्ञानं प्रमा व्याप्तिपक्षधर्मताविशिष्टहेतुज्ञानजन्यत्वादित्यनुमानेन प्रमात्वनिर्णयो जायते, तथैव साध्याभाववान् इदं ज्ञानमप्रभा दुष्टविषयकपरामर्शरूपज्ञानजन्यत्वादित्यनुमानेन प्रतिहेतौ दुष्टत्वज्ञानाधीनसाध्यवत्ताज्ञाने प्रमात्वनिर्णयो भविष्यतीति भावः।

## बलदेवी

अथ वेति। तत्र—तादृशप्रमात्वनिश्चय इत्यर्थः। अनुमापकत्वमनुमितिप्रयोजकत्वमित्यर्थः। जनकतावच्छेदकसाधारणमिति यावत्। हेतोरित्यत्र निष्ठत्वं षष्ठ्यर्थः, तस्य व्याप्त्यादिविशिष्टत्वरूपसद्धेतुत्वेऽन्वयः। एनेन तद्विषयकज्ञानस्य तत्त्वनिर्णयादिप्रयोजकत्वं दर्शितं तथा च पक्षः साध्यवानिदं ज्ञानं प्रमा व्याप्तिपक्षधर्मताविशिष्टहेतुज्ञानजन्यत्वादित्यनुमानेन व्याप्तिपक्षधर्मताविशिष्टत्वरूपसद्धेतुत्वज्ञानस्य प्रमात्वनिश्चयं प्रति परामर्शद्वाराविशेषणतावच्छेदकविधया प्रयोजकत्वं सिद्ध्यतीति ध्येयम्। नन्वत्र तादृशहेतुज्ञानजन्यत्वस्य वह्नित्वेन घटाद्यवगाह्यनुमितिसाधारणतया तत्र प्रमात्वविरहेण व्यभिचार इति चेन्न, प्रमात्वमत्र तद्धर्मावच्छिन्नवति तद्धर्मावच्छिन्नप्रकारकत्वमेव, तच्च वह्नित्वेन घटाद्यवगाह्यनुमितावप्यस्तीति न व्यभिचारः। न च प्रकृतसाध्यज्ञाने कथमप्रमात्वसिद्धिरिति वाच्यं, पक्षस्साध्यवान् इदं ज्ञानमप्रमा दुष्टहेतुविषयकज्ञानजन्यज्ञानविरोधित्वादित्यनुमानेन तत्सिद्धिरिति विभावनीयम्।

## गादाधरी

विजयप्रयोजकत्वञ्च हेत्वाभासस्य स्वज्ञानाधीनपरोक्तहेतुदोषोद्भावनद्वारा, व्याप्त्यादिविशिष्टहेतोश्च स्वज्ञानाधीनसन्यायप्रयोगद्वाराबोध्यम्।

## विमलप्रभा

विजयप्रयोजकत्वं = पराहङ्कारखण्डनप्रयोजकता। स्वज्ञानाधीनम् = स्वपदं हेत्वाभासपरम्। एवञ्च हेत्वाभासज्ञानाधीनं = हेत्वाभासज्ञानजन्यं। परोक्तहेतुः = प्रतिवादिहेतुः दोषोद्भावनद्वारा = दोषाभिधानद्वारा। व्याप्तिपक्षधर्मताविशिष्टहेतोः = सद्धेतोः। स्वज्ञानाधीनं = व्याप्तिपक्षधर्मताविशिष्टहेतुज्ञानाधीनं। सन्यायप्रयोगद्वारा = पञ्चा-

यवघटितसन्यायप्रयोगवसतः। अयमर्थः—मम हेतुः सन् समीचीनः व्याप्तिपक्षधर्मताविशिष्टत्वात्, तव हेतुर्दुष्टः बाधितत्वात् व्यभिचरितत्वादित्यादिरीत्या हेत्वाभासज्ञानात् परकीयहेतौ दोषाभिधानद्वारा हेत्वाभासज्ञाननिष्ठजनकतावच्छेदकविधया विजयप्रयोजकता हेत्वाभासे वरीवर्त्ति। सद्धेतौ च व्याप्तिपक्षधर्मताविशिष्टसद्धेतुज्ञानाधीनपञ्चावयवघटितसन्यायप्रयोगद्वारा सद्धेतुज्ञाननिष्ठाया विजयकारणता तदवच्छेदकतयैव विजयप्रयोजकत्वमिति।

## चिन्तामणिः

तत्रानुमितिकारणीभूताभावप्रतियोगि यथार्थज्ञानविषयत्वम्।

## विमलप्रभा

तत्र = हेत्वाभासनिरूपणे। अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम् = अनुमितेः पक्षसाध्यवान् साध्यव्याप्यहेतुमान् इत्याकारकानुमितेः अर्थात् समूहालम्बनानुमितेः, अनुमितितत्कारणपरामर्शान्यतररूपानुमितेर्वा कारणस्वरूपो योऽभावस्तत्प्रतियोगियत्यथार्थज्ञानं तद्विषयत्वं हेत्वाभासत्वम्। अयमर्थः—निरूपणविषयोभूतहेत्वाभासत्वञ्च—नुमितिनिष्ठकार्यतानिरूपितकारणताश्रयीभूतोयोऽभावः तत्प्रतियोगि यत् यथार्थज्ञानं तद्विषयत्वरूपम्। पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकानुमितितत्कारणपरामर्शान्यतररूपानुमितेः, अथ वा प्रकृतपक्षविशेष्यकप्रकृतसाध्यप्रकारकप्रकृतसाध्यनिरूपितव्याप्तिविशिष्टप्रकृतहेतुप्रकारकसमूहालम्बनानुमितेर्वा, कारणस्वरूपो योऽभावस्तत्प्रतियोगि यत् यथार्थज्ञानं तद्विषयत्वं हेत्वाभासत्वमिति पर्यवसितलक्ष्यार्थः।

भवति चात्र ह्रदपक्षकवह्निसाध्यकपटत्वहेतुकह्रदो वह्निमान् पटत्वादित्यादौ वह्न्यभाववद्ध्रदात्मकबाधे, वह्न्यभावव्याप्यवद्ध्रदरूपसत्प्रतिपक्षे, वह्न्यभाववद्वृत्तित्वविशिष्टपटत्वरूपव्यभिचारे, वह्न्यसमानाधिकरणपटत्वरूपविरोधे, पटत्वाभाववत् ह्रदरूपस्वरूपासिद्धौ च लक्षणसङ्गतिः, तथा हि ह्रदो वह्निमानित्यनुमितिम्प्रति वह्न्यभाववान् ह्रद इति बाधनिश्चयस्य वह्न्यभावव्याप्यवान् ह्रद इति सत्प्रतिप-

क्षनिश्चयस्य च प्रतिबन्धकतया तदभावस्य (प्रतिबन्धकाभावस्य कारणत्वमिति मतेन) तादृशानुमिति प्रतिकारणतया ह्रदो वह्निमानित्यनुमितेः कारणीभूतो यः वह्न्यभाववान् ह्रद इति बाधनिश्चयाभावः वह्न्यभावव्याप्यवान् ह्रद इति सत्प्रतिपक्षनिश्चयाभावश्च तत्प्रतियोगि यत् वह्न्यभाववात्ह्रदः इत्याकारकं बाधनिश्चयात्मकयथार्थज्ञानं वह्न्यभावव्याप्यवान् ह्रदइत्याकारकसत्प्रतिपक्षनिश्चयात्मकं ज्ञानं तद्विषयत्वस्योक्तबाधे सत्प्रतिपक्षे च सत्वेन, एवं ह्रदविशेष्यकवह्न्यनुमितिजनकीभूतवह्निव्याप्यपटत्ववान् ह्रद इत्याकारकपरामर्शं प्रति वह्न्यभाववद्वृत्तित्वविशिष्टपटत्वरूपव्यभिचारनिश्चयस्य, वह्न्यसमानाधिकरणपटत्वरूपविरोधनिश्चयस्य पटत्वाभाववदधूदरूपस्वरूपासिद्धिनिश्चयस्य च प्रतिबन्धकतया तदभावस्य प्रतिबन्धकाभावत्वेन निरुक्तपरामर्शं प्रति कारणत्वेन तादृशानुमितेः कारणीभूतो यः पूर्वोक्तव्यभिचारनिश्चयाभावः विरोधनिश्चयाभावः स्वरूपासिद्धिनिश्चयाभावः तत्प्रतियोगि यत् व्यभिचारनिश्चयात्मकं विरोधनिश्चयात्मकं स्वरूपासिद्धिनिश्चयात्मकं यथार्थज्ञानं तद्विषयत्वस्य चोक्तव्यभिचारे विरोधे स्वरूपासिद्धौ च सत्वेन च तेपु लक्षणगमनात्। अनयैव रीत्या असाधारण्ये, अनुपसंहारित्वे साधनाऽप्रसिद्धिसाध्याऽप्रसिद्ध्यादावपि लक्षणसमन्वयः कार्यः। पर्वतो वह्निमान् धूमादित्यादिसद्धेतौ हेत्वाभासलक्षणस्यालक्ष्ये वह्न्यभाववत्पर्वतादिरूपबाधादिज्ञानस्य यथार्थस्यैवाऽप्रसिद्धतयाऽनुमितिकारणतादृशाभावस्यापि सुतरामप्रसिद्धत्वेन तत्प्रतियोगियथार्थज्ञानविषयत्वस्य नितरामप्रसिद्धत्वान्नातिप्रसङ्ग इति।

## बलदेवी

अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वमिति चिन्तामणिः। अत्रानुमितिप्रयोजकीभूताभावेत्यादिरीत्योक्तावेव सामञ्जस्येऽन्यथासिद्धिशून्यत्वादिघटितकारणत्वप्रवेशो व्यर्थ इति चेन्न, अप्रमाण्यज्ञानाभावविशिष्टपरामर्शस्यानुमितिम्प्रति कारणतयाऽप्रामाण्यज्ञानाभावस्यापि प्रयोजकत्वेन तत्प्रतियोग्यप्रामाण्यज्ञानविषयत्वस्योक्तपरामर्शे सत्वात् तत्रातिव्याप्तिः स्यादतस्तदुपात्तम्। केचित्तु अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वमित्येव लक्षणम्, तत्र प्रतिबन्धकत्वं द्विविधमेकं प्रयोजकीभूताभावप्रतियोगित्वरूपमपरञ्च कारणीभूताभावप्रतियोगित्वरूपम् तथा चात्र

कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वं प्रविष्टमित्येतत्सूचनाय कारणीभूतेत्यादयुक्तमिति ।

ननु भूतपदोपादानमनर्थकमितिचेन्न, तदनुपादाने कारणस्याभावः कारणाभाव इत्यपि षष्ठीसमासः कर्त्तुं शक्यते, तथा चानुमितिकारणपरामर्शस्याभावप्रतियोगियथार्थज्ञानविषयत्वस्य सद्धेतावपि सत्वात् तत्रापत्तिरतो भूतपदोपादानम् । एवञ्च परामर्शभावस्य कारणत्वाभावान्नापत्तिरिति भावः ।

ननु तथापि अनुमितिकारणीभूतो यस्तत्प्रतियोगियथार्थेत्यादिनिवेशस्यैव सम्यक्त्वेऽभावपदोपादानमनर्थकमिति चेन्न, अयमात्मा आत्मत्वप्रकारकज्ञानप्रतियोगिकसमवायादित्यादावात्मत्वे ऽतिव्यप्त्यापत्तेः, ज्ञायमानलिङ्गस्य कारणत्वेनोक्तहेतोः कारणत्वाद्धेत्वन्तर्गततत्प्रतियोगिज्ञानविषयस्यात्मत्वे सत्त्वात् । न चानुमितिकारणीभूतो यस्तन्निरूपितप्रतियोगितायां यत्किञ्चित्सम्बन्धावच्छिन्नत्वन्निवेश्यम्, तथा च सांसर्गिकप्रतियोगितायां संसर्गावच्छिन्नत्वविरहेणातिव्याप्तिविरहात् । एतेनानुमितिकारणीभूतो यस्तन्निरूपितत्वरूपप्रतियोगित्ववद्व्याप्तिज्ञानविषयत्वस्य व्याप्त्यादौ सत्त्वात् तत्रातिव्याप्तिः परामर्शनिष्ठजन्यताव्याप्तिज्ञाननिष्ठजनकतयोर्निरूप्यनिरूपकभाव इव तदाश्रययोरपि निरूप्यनिरूपकभावात् परामर्शनिरूपितत्वस्य व्याप्तिज्ञाननिष्ठप्रतियोगित्वरूपत्वादित्यपि परास्तम्, सांसर्गिकप्रतियोगितायां संसर्गावच्छिन्नत्वविरहेऽपि तत्सम्बन्धावच्छिन्नाधेयतातन्निरूपितप्रतियोगितयोरैक्यात्, तथा च ज्ञानप्रतियोगिकसमवायनिरूपितप्रतियोगितायां समवायसम्बन्धावच्छिन्नत्वमक्षतमेव । न चाभावपदोपादानेऽपि आत्मत्वप्रकारकज्ञानाभावहेतुकस्थलेऽतिव्याप्तिरस्त्येवेति वाच्यम्, ज्ञायमानलिङ्गस्य कारणत्वानङ्गीकारात् । न चैवमभावपदमनर्थकमिति वाच्यम्, य एव बाधनिश्चयाभावस एव बाधनिश्चयाभाववद्भिन्नभेदः तत्प्रतियोगिपरामर्शविषयत्वस्य व्याप्त्यदौ सत्त्वे नातिव्याप्तिस्स्यादतस्तदुपादानम् । तथा चानुमितिकारणतावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगित्वाश्रययथार्थज्ञानविषयत्वरूपार्थलाभार्थत्वादितिभावः ।

न चानुमितिकारणीभूतो योऽभावस्तत्प्रतियोगि यो यथार्थस्तद्विषयत्वस्यैव, सम्यक्त्वे ज्ञानपदं व्यर्थमिति वाच्यम्, कामिनीज्ञानान्यज्ञानत्वावच्छिन्नं प्रति कामिनीजिज्ञासायाः प्रतिबन्धकतया तदभावस्य कार्यमात्रम्प्रति कारणत्वेन पर्वतो वह्निमान् धूमादित्यादौ अनुमितिकारणीभूताभावप्रतियोगिकामिनीजिज्ञासाविषयत्वमादाय कामिनीज्ञानेऽतिव्याप्तिस्स्यादतस्तदुपात्तम् ।

## गादाधरी

मूलोक्तलक्षणानां दुष्टहेतुलक्षणत्वे दोषेष्वतिव्याप्तिः, यथार्थज्ञाननिष्ठाऽनुमितिप्रतिबन्धकतावच्छेदकविषयताश्रयत्वपर्यन्तस्य समूहालम्बनविषयताश्रयोदासीनपदार्थवारणाय प्रथमलक्षणे विवक्षणीयतया बाधादिज्ञाननिष्ठप्रतिबन्धकतायां प्रायशो हेतुविषयताया अनवच्छेदकत्वात्तत्रत्यहेतावव्याप्तिश्च ।

## विमलप्रभा

मूलोक्तलक्षणत्रयं दोषस्य दुष्टहेतोर्वेति विविच्य दोषस्यैव लक्षणं न तु दुष्टहेतोरिति प्रतिपादयति, यथाश्रुतमिदमिति दीधितिग्रन्थमवतारयति —मूलोक्तेति । मूलोक्तलक्षणानां = अनुमितिकारणीभूतेत्यादिचिन्तामणिप्रतिपादितलक्षणत्रयाणां । दुष्टहेतुलक्षणत्वे = दोषविशिष्टहेतूनां लक्षणत्वे । दोषेषु = लक्ष्यभिन्नबाधादिदोषेषु । अतिव्याप्तिः = लक्षणागमनप्रसङ्गः । समूहालम्बनविषयताश्रयोदासीनपदार्थः = ह्रदो-वह्न्यभाववान् घटश्चेत्याकारकसमूहालम्बनविषयताश्रयघटादिरूपोदासीनपदार्थः । प्रथमलक्षणे = अनुमितिकारणीभूतेत्यादिलक्षणे । विवक्षणीयतयेत्यस्य यथार्थज्ञाननिष्ठानुमितिप्रतिबन्धकतावच्छेदकविषयताश्रयत्वपर्यन्तस्येत्यनेनान्वयः । बाधादिज्ञानप्रतिबन्धकतायां = बाधादिज्ञाननिष्ठायानुमितिप्रतिबन्धकतायां तादृशप्रतिबन्धकतायां । तत्र = तादृशस्थले । अयमर्थः । मूलकारोक्तलक्षणत्रयम् यदि दुष्टहेतोरेव स्यात्तदा ह्रदो वह्निमान् धूमादित्यादौ धूमरूपहेतोरेव लक्ष्यतया ह्रदो वह्निमान् इत्याकारकानुमितेः कारणीभूतो य अभावस्स च ह्रदो वह्न्यभाववान् धूमश्चेत्याकारकसमूहालम्बनात्मकबाधनिश्चयाभावस्तत्प्रतियोगि यत् यथार्थज्ञानं तच्च ह्रदो वह्न्यभाववान् धूमश्चेत्याकारकंज्ञानं तद्विषयत्वं धूमे सत्त्वेन लक्षणसमन्वयसम्भवेऽपि लक्ष्यभिन्ने वह्न्यभाववद्ध्रदादि-

रूपबाधादिदोषेष्वतिव्याप्तिः ह्रदो वह्निमानित्यनुमितिकारणीभूतो यः ह्रदो वह्न्यभाववानित्याकारकबाधनिश्चयाभावस्तत्प्रतियोगिवह्न्यभाववान् ह्रद इत्याकारकयथार्थज्ञानविषयतायाः बाधादौ सत्त्वात् ।

एवम् यथाश्रुतप्रथमलक्षणे ह्रदो वह्निमाञ्जलादित्यादौ घटादिरूपोदासीनेऽतिव्याप्तिस्तत्रापि ह्रदो वह्निमानित्यनुमितिकारणीभूताभावः ह्रदो वह्न्यभाववान् घटश्चेत्याकारकसमूहालम्बनात्मकबाधनिश्चयाभावः तत्प्रतियोगि यत् ह्रदोवह्न्यभाववान्-घटश्चेत्याकारकं समूहालम्बनात्मकं ज्ञानं तद्विषयत्वस्योक्तोदासीने घटेऽपि सत्त्वात् । तद्वारणाय यदि यथार्थज्ञाननिष्ठा या प्रकृतानुमितिप्रतिबन्धकता (प्रकृतानुमितिकारणीभूताभावप्रतियोगितास्वरूपा ) तन्निरूपितावच्छेदकतावद्विषयताश्रयत्वरूपलक्षणार्थो विधीयते तदा ह्रदो वह्निमानित्यनुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतायाः ह्रदो वह्न्यभाववान् घटश्चेत्याकारकबाधज्ञाने सत्त्वेऽपि न घटादिविषयताप्रतिबन्धकतावच्छेदिका (यन्निष्ठविषयताकं ज्ञानं प्रकृतानुमितिप्रतिबन्धकं तन्निष्ठविषयताया एव तादृगानुमितिप्रतिबन्धकतावच्छेदकत्वम् प्रकृते ह्रदो वह्न्यभाववान् घटश्चेत्याकारकसमूहालम्बनात्मकबाधनिर्णयात्मकयथार्थज्ञाननिष्ठह्रदो वह्निमानित्याकारकानुमितिप्रतिबन्धकतावच्छेदकविषयता वह्निवह्नित्वाभावाभावत्वह्रदह्रदत्वादिनिष्ठा विषयता न तु घटाद्युदासीनविषयता)अतो न घटादावतिप्रसङ्गः । न चैवं ह्रदो वह्निमान् धूमादित्यत्र ह्रदो वह्न्यभाववान् धूमश्चेत्याकारकसमूहालम्बनज्ञाननिष्ठा या ह्रदो वह्निमानित्याकारकानुमितिप्रतिबन्धकता तदवच्छेदकीभूता या विषयता सा च वह्निवह्नित्वाभावाभावत्वह्रदह्रदत्वादिनिष्ठैव विषयता न तु धूमादिरूपहेतुविषयतेति तादृशविषयताश्रयत्वस्य धूमेऽभावेन बाधितहेतावव्याप्तिर्दुर्वारैव ।

जलं वह्निमत् जलादित्यादौ पक्षाद्यभिन्नहेतुकस्थलीयबाधितजलादिहेतौ वह्न्यभाववज्जलमित्याकारकनिश्चयनिष्ठप्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वस्य जलविषयतायां सत्त्वेन पक्षाभिन्नजलरूपहेतुविषयतायामपि तत्सत्त्वतया दुष्टहेतौ लक्षणसमन्वयसम्भवादित्याशयेनोक्तम्–प्रायश इति । तथा च यत्र यत्र बाधसत्प्रतिपक्षादिज्ञाननिष्ठानुमितिप्रतिबन्धकतावच्छेदिका हेतुविषयता न भवति तत्र सर्वत्र बाधसत्प्रतिप-

पक्षादावव्याप्तिः। इत्थञ्च दोषेष्वतिव्याप्तिदुष्टहेतावव्याप्तिरूपदोषभयान्न प्रथमलक्षणं दुष्टहेतोरिति शङ्काशयः।

## बलदेवी

मूलोक्तलक्षणानां दुष्टहेतुलक्षणत्वे दोषेष्वतिव्याप्तिः, अग्रे बाधादिप्रतिबन्धकतायां प्रायशो हेतुविषयताया अनवच्छेदकत्वात् तत्रत्यहेतावव्याप्तिश्चेति भट्टाचार्येणोक्तम्। नन्वत्र स्वरूपासिद्धिप्रतिबन्धकतामादाय ह्रदो वह्निमान् धूमादित्यादौ धूमे दुष्टत्वसम्भवेऽव्याप्तिदानमसङ्गतमिति चेन्न, वह्न्यभाववद्ध्रदैकदेशे वह्न्यभावे चातिव्याप्तिवारणाय प्रतिबन्धकतावच्छेदकमुख्यविशेष्यताश्रयत्वनिवेशस्यावश्यकतया स्वरूपासिद्धिप्रतिबन्धकमुख्यविशेष्यतायाः धूमादावभावेनोक्तहेतोर्दुष्टत्वानुपपत्तिरिति। न च मुख्यविशेष्यतानिवेशेऽपि वह्न्यभाववद्ध्रदस्य ह्रदानतिरेकेण ह्रदेऽतिव्याप्तिर्दुर्वारैवेति वाच्यम्, दोषेष्वतिव्याप्तिरित्यादिना तद्दोषस्योक्तत्वात्। न च ह्रदवृत्तिर्वह्न्यभावः, ह्रदनिष्ठाभावप्रतियोगिवह्निरित्यादिज्ञाननिष्ठप्रतिबन्धकतावच्छेदकमुख्यविशेष्यताश्रयत्वस्याभावे वह्नौ सत्त्वादतिव्याप्तेस्तादवस्थ्यमिति वाच्यम्, असमानप्रकारकज्ञानस्याप्रतिबन्धकतामत एवैतत्लक्षणाकरणात्। न च तथापि व्यभिचारप्रतिबन्धकतामादाय मुख्यविशेष्यत्वसत्त्वादव्याप्तिविरह इति वाच्यम्, ह्रदो वह्निमान् धूमादित्यादिप्रसिद्धस्थले व्यभिचारस्याऽप्रसिद्धतया तत्रैव दोषदानादिति भावः केचित्तु हेतुनिष्ठसाध्याभाववद्वृत्तित्वस्यैव व्यभिचारत्वं न तु तद्विशिष्टसाधनस्येति दीधितिकृन्मतमवलम्ब्य हेतौ मुख्यविशेष्यताया असत्त्वात् ग्रन्थसङ्गतिरिति वदन्ति। अन्ये तु बाधादिप्रतिबन्धकतायां प्रायशो हेतुविषयताया अनवच्छेदकत्वादित्यस्य बाधेनाश्रयासिद्ध्या च हेतुर्दुष्ट इति तु व्यवहारानुपपत्तिरित्यर्थ इत्याहुः। अपरे बाधादिप्रतिबन्धकताया = असङ्कीर्णबाधादिप्रतिबन्धकताया इत्यर्थः, तथा चोत्पत्तिकालावच्छिन्नघटो गन्धवान् पृथवीत्वादित्यादौ दोषान्तरविरहेण हेतौ प्रतिबन्धकतावच्छेदकविषयताश्रयत्वाभावादव्याप्तिरिति। आदिना महानसीयत्ववत् पर्वतो वह्निमान् धूमादित्यादावसङ्कीर्णाश्रयासिद्ध्यादावव्याप्तिश्च तत्प्रतिबन्धकतायां हेतुविषयताया अनवच्छेदकत्वात्। न च पृथवीत्वव्यापकगन्धाभावसमानाधिकरणपृथिवीत्ववदुत्पत्ति-

कालावच्छिन्नो घट इत्याकरकसत्प्रतिपक्षस्यापि दोषतया तन्निश्चयस्यापि निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकतया तत्प्रतिबन्धकतायां हेतुविषयताया अवच्छेदकतयाऽव्याप्तिविरह इति वाच्यम्, देशकालोद्देश्यतावच्छेदकस्थले "स्वरूपसम्बन्धरूपावच्छेद्यत्वं विधेयप्रतियोगिकसंसर्गांशे भासते" इति नियमेन पृथिवीत्वप्रतियोगिकसमवायस्य व्याप्यवृत्तितया तत्रोत्पत्तिकालावच्छेद्यत्वभाने भ्रमत्वापातात् तस्य दोषत्वमेव न सम्भवतीति भावः। केचित्तु प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षस्य सत्प्रतिपक्षत्वमेव न स्वक्रियते, किन्तु प्रकृतसाध्याभावव्याप्यवत्पक्षस्यैवेत्यग्रे स्वयमेव लिखितमिति वदन्ति। वस्तुतः ह्रदो वह्निमान् धूमादित्यादौ स्वरूपासिद्धिप्रतिबन्धकतामादाय हेतुविषयताया अवच्छेदकत्वात् अव्याप्तिविरहो न सम्भवति, तथा हि ह्रदो वह्निव्याप्यधूमवांश्चेत्यनुमितिम्प्रति स्वरूपासिद्धिज्ञानस्यावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नधूमत्वनिष्ठप्रकारतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितह्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वेन प्रतिबन्धकत्वं, तथा च हेतुविषयताया अवच्छेदकत्वाभावादव्याप्तिस्तदवस्थैवेति। न च धूमवानित्यनुमितिं प्रति अवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन धूमत्ववदभाववान् ह्रद इति ज्ञानस्य प्रतिबन्धकत्वापत्तिरिति वाच्यम्, निरवच्छिन्नधूमत्वनिष्ठप्रकारतानिरूपितेत्यादिक्रमेण प्रतिबन्धकताया वक्तव्यत्वात्। न च समवायसम्बन्धेनोल्लिख्यमानजातेरपि स्वरूपतो भानादुक्तरूपेण प्रतिबन्धकत्वस्याप्यक्षततयोक्तदोषस्य जागरुकत्वात्। अन्यथा अयं गौरिति ज्ञानोत्तरं गोत्वेनेमं जानामीत्यनुव्यवसायो न स्यात्, अनुव्यवसाये गोत्वस्य गोत्वत्वेनैव भवन्मते भानम्, तथा च तम्प्रति गोत्वत्वाच्छिन्नप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यताशालिज्ञानस्यैव कारणत्वं, तद्विरहेणानुव्यवसायानुपपत्तिरिति वाच्यं, धूमत्वनिष्ठावच्छेदकत्वावच्छिन्नधूमत्वनिष्ठप्रकारत्वानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितह्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वेनैव प्रतिबन्धकत्वस्य वक्तव्यत्वात्। अभावे धूमस्य स्वातन्त्र्येण भानं धूमत्वस्य पारतन्त्र्येण भानम्भवतीति स्वातन्त्रीयधूमत्वनिष्ठावच्छेदकतायाः पारतन्त्रीयधूमत्वनिष्ठावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नप्रकारतायाः चावच्छेद्यावच्छेदकभावस्स्वीक्रियते, तथा च धूमत्ववदभाववान् ह्रद इति ज्ञानस्योक्तप्रतिबन्धकत्वन्नास्तीति भावः।

### दीधितिः

यथाश्रुतमिदं हेतुदोषाणां लक्षणम् ।

यद्विषयकत्वेनेत्यादिलक्षणे च तृतीयाया अवच्छेदकत्वार्थकतया सुतरां तथेत्यत आह—यथाश्रुतमिति । इदम्—एतल्लक्षणत्रयम् ।

### विमलप्रभा

यथाश्रुतम् = उभयवादिसिद्धाधुनिकलक्षणाम्बिना निरुक्तशब्दलभ्यम् । लक्षणज्ञानाजन्यशक्तिभ्रमाजन्यशाब्दबोधेच्छयोच्चरितत्वमिति यावत् । इदं = अनुमितिकारणीभूतेत्यादिलक्षणत्रयं । हेतुदोषाणां = हेतुदोषाणामेव । यद्विषयकत्वेनेत्यादिद्वितीयतृतीयलक्षणस्यापि दुष्टहेतुलक्षणत्वे दोषमाह—यद्विषयकत्वेनेत्यादिना । इत्यादिलक्षणे = द्वितीयतृतीयलक्षणे । तृतीयायाः = यद्विषयकत्वेनेत्यत्र तृतीयाविभक्तेः । सुतरां तथा = सुतरां बाधितहेतावव्याप्तिः दोषेऽतिव्याप्तिश्च । अतः = अव्याप्त्यतिव्याप्तिरूपदोषतः । आह = शिरोमणिः प्राह । लक्षणत्रयम् = मूलकारोक्तप्रथमद्वितीयतृतीयलक्षणम् । अयमर्थः । मूलोक्तद्वितीयतृतीयलक्षणे यद्विषयकत्वेनेत्यत्र तृतीयाया अवच्छेदकत्वार्थकता यद्विषयित्वम्प्रकृतानुमितिप्रतिबन्धकतावच्छेदकं तत्त्वस्यैवलक्षणार्थतया ह्रदो वह्निमान् धूमादित्यादौ ह्रदो वह्निमानित्याकारकानुमितिप्रतिबन्धकतावच्छेदकत्वस्य वह्न्यभाववद्ध्रदरूपबाधविषयतायां सत्त्वेन बाधेऽतिव्याप्तिः, धूमादिविषयतायाश्चानुमितिप्रतिबन्धकतावच्छेदकत्वाभावेन धूमादिदुष्टहेतावव्याप्तिश्च स्यादतः लक्षणत्रयम् न दुष्टहेतोरिति पूर्वपक्षस्याशयः ।

### दीधितिः

तद्वत्त्वञ्च दुष्टहेतुनाम्, तदभिप्रायेणैव उपधेयशङ्करेऽपीत्यादि वक्ष्यति ।

### गादाधरी

ननु हेतुवदाभासन्त इति व्युत्पत्त्या हेत्वाभासपदस्य दुष्टहेतुपरत्वाद् दुष्टहेतुनिरूपणस्यैव प्रतिज्ञातत्वात् तल्लक्षणमेवाकाङ्क्षितम् अतस्तदनुक्तौ मूलस्य

न्यूनता, अन्यविधिव्युत्पत्त्या हेत्वाभासपदस्य हेतुदोषपरत्वसम्भवेऽपि "ते च" त्यादिना दुष्टहेतूनामेव विभजनात् दुष्टहेतुनिरूपणस्याप्रतिज्ञातत्वे तदसङ्गतेः, एवं दुष्टहेतुनिरूपणस्याऽप्रकृतत्वे दुष्टहेतूनां विभागानर्हतया तेषां सङ्करेण विभागव्याघातशङ्काया अनवतारात्, उपधेयसङ्करेऽपीत्यादिग्रन्थस्य उपाध्यसङ्करेण विभागोपादानपरस्याऽसङ्गतिरित्यत आह—"तद्वत्त्वञ्चेति"। तादृशदोषवत्त्वञ्चेत्यर्थः। दुष्टहेतूनां लक्षणमित्यनुषज्यते। स्फुटमिति शेषः। तथा च दुष्टहेतुनिरूपणस्य प्रकृतत्वेऽपि दोषलक्षणे कृते तद्वत्त्वरूपदुष्टहेतुलक्षणस्य स्फुटतया लाभेन दोषलक्षणाभिधानस्य तत्र तात्पर्यान्नोक्तानुपपत्तिरिति भावः। तदभिप्रायेणैवेति। दुष्टहेतुलक्षणाभिप्रायेणैवेत्यर्थः।

## विमलप्रभा

"तद्वत्त्वञ्चेत्यादि"। तद्वत्त्वञ्च = दोषवत्त्वञ्च। तदभिप्रायेणैव = दुष्टहेतुलक्षणाभिप्रायेणैव। उपधेयसङ्करेऽपीत्यादि वक्ष्यति = उपधेयसङ्करेऽप्युपाधेरसङ्करादित्यादिकं कथयिष्यति मूलकारः असिद्धिप्रकरणे। अक्षरार्थस्तु, उपधेयः = उपाधेयदोषात्मकोपाधिरूपधर्मविशिष्टो धर्मी, दुष्टहेतुरिति यावत्। तस्य सङ्करेऽपि = तस्याभेदेऽपि। उपाध्यसङ्करात् = दोषासङ्करात्, दोषाणां परस्परं विभिन्नत्वादिति यावत्। तद्वत्त्वञ्चेत्यादिग्रन्थमवतारयति "नन्वित्यादिना"। हेतुवदाभासन्ते = व्याप्तिपक्षधर्मताविशिष्टहेतुवत् आभासन्ते = प्रतिभासन्ते। व्युत्पत्त्या = नियमेन विग्रहेणेति यावत्। तल्लक्षणं = दुष्टहेतुलक्षणं। आकांक्षितम् = जिज्ञासितम्। अतः = आकांक्षितत्वात् हेतोः। तदनुक्तौ = दुष्टहेतुलक्षणानुक्तौ। अन्यविधव्युत्पत्त्या = हेतोरभासाः हेत्वाभासाः इति व्युत्पत्त्या। न चेत्यादिना = "ते च सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धिबाधिताः पञ्चेति मूलग्रन्थेन"। अप्रतिज्ञातत्वे = प्रतिज्ञाया अविषयत्वे, अव्यवहितोत्तरकालकर्त्तव्यत्वप्रकारकशिष्यसमवेतबोधानुकूलव्यापाराविषयत्वे। तदसङ्गतेः = दुष्टहेतुविभागाऽसङ्गतेः। अप्रकृतत्वे = प्रतिज्ञाया अविषयत्वे। विभागानर्हतया = विभागाविषयतया। तेषां = दुष्टहेतूनां। सङ्करेण = अभिन्नत्वेन, ऐक्येनेति यावत्, तन्निष्ठदोषवत्त्वे सति तन्निष्ठदोषभिन्नदोषवत्त्वरूपसाङ्कर्यप्रसङ्गेनेति फलितार्थः। विभागव्याघातश-

ङ्कायाः = सामान्यधर्मावच्छिन्नानां दुष्टहेतूनां परस्परविरुद्धे व्याप्यधर्मेण धर्मिप्रतिपत्त्यनुकूलरूपविभागस्य यः प्रतिघातः (असम्भवः) तच्छङ्कायाः । अनवतारात् = अनुदयात् । उपधेयसङ्करेऽपीत्यादिग्रन्थस्य = उपधेयसङ्करेऽप्युपाधेरसङ्करादित्यसिद्धिप्रकरणीयग्रन्थस्य । उपाध्यसङ्करेण = व्यभिचारविरोधादिदोषाणां विभिन्नत्वेन । विभागोपादानपरस्य = विभागोपादानबोधेच्छयोच्चरितस्य । ... आह = शिरोमणिरिति शेषः । स्फुटम् = तद्विषयकजिज्ञासानधीनज्ञानविषयम् । तादृशदोषवत्त्वं = यथार्थज्ञाननिष्ठानुमितिप्रतिबन्धकतावच्छेदकताश्रयीभूतदोषवत्त्वम् । तत्र = मूले नोक्तानुपपत्तिः = प्रतिज्ञातत्वापत्तिः, न वा विभागाद्यनुपपत्तिः, नवोपधेयसङ्करेऽपीत्यादिग्रन्थासङ्गतिः । अयमर्थः मूलोक्तलक्षणत्रय यदि दुष्टहेतोस्स्यात्तदा दोषेष्वतिव्याप्तिः, दुष्टहेतावव्याप्तिश्च स्यादतो न मूलोक्तलक्षणत्रयं दुष्टहेतोस्तथा च नोक्तदोषः । परन्तु मूलोक्तलक्षणस्य दोषलक्षणपरत्वे हेतुवदाभासन्त इति व्युत्पत्त्या हेत्वाभासपदस्य दुष्टहेतुपरत्वेन दुष्टहेतोरेव प्रस्तुततया तन्निरूपणस्यैव प्रतिज्ञाविषयत्वेन आकांक्षिततया दुष्टहेतुनिरूपणाकरणे न्यूनता स्यान्मूलकारस्यातो दुष्टहेतोरेव लक्षणम् वाच्यं, तथा च पूर्वोक्तदोषो दुर्वारः । न च हेतोरभासाः हेत्वाभासा इति व्युत्पत्त्या हेत्वाभासपदेन हेतुदोषस्यैव लाभसम्भवेन तावतैव हेतुदोषलक्षणस्यापि प्रस्तुततया दोषलक्षणकरणेनैव पूर्वोक्तदोषवारणसम्भवादिति वाच्यम्, तथा सति दोषलक्षणस्यैव प्रस्तुतत्वात् "ते चे" त्यादिना तद्विभागतन्निरूपणमेवोचितम्, न तु दुष्टहेतोः, ते चेत्यादिना च दुष्टहेतूनामेव विभागकरणात्, तच्च विभजनं दुष्टहेतुनिरूपणस्याऽप्रतिज्ञातत्वेऽसङ्गतमेव स्यात् । यदि च 'तेचे' त्यादिमूलघटकसव्यभिचारविरोधादिपदस्य भावप्रधाननिर्देशेन दोषविभाजकत्वपरतास्वीकृते तथापि दोषनिरूपणस्यैव प्रतिज्ञातत्वेन प्रस्तुततया तस्य प्रतिज्ञातस्यैव निरूपणं तस्यैव च विभाग इति नियमेन दुष्टहेतूनां विभागस्यावश्यकताविरहप्रयुक्तदुष्टहेतूनां सङ्करेण ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभाववद्धूदरूपबाधः, धूमाभाववद्धूदरूपस्वरूपासिद्धिः, वह्न्यभावव्याप्यवद्धूदरूपसत्प्रतिपक्षः, एवञ्च बाधरूपदोषाभाववत्यसिद्धिरूपदोषवद्धेतावसिद्धरूपदोषवत्त्वं, एवमसिद्धरूपदोषाभाववति बाधितहेतौ बाधरूपदोषवत्त्वम्, प्रकृते च धूमरूपहेतावुभयविधदोषवत्त्वमिति परस्परात्यन्ताभावसमानाधिकरणत्वे सत्येका-

धिकरणवृत्तित्वरूपसाङ्कर्यभयेन बाधरूपासिद्धरूपदोषस्यैकहेतौ सत्त्वे बाधितत्वादिना विभागस्य मिथो व्यावर्त्तकधर्मविरहप्रयुक्तव्याघातप्रसङ्गशङ्काया अनुदयेनैतादृशशङ्का-समाधानपरस्योपधेयसङ्करेऽपीत्यादिग्रन्थस्योपाध्यसङ्करेण विभागपरत्वोपवर्णनमसङ्ग-तमेव स्यात्, अतः दुष्टहेतुलक्षणमेव मूलकारस्येति मन्तव्यं नातः साङ्कर्यसम्भावना, न वा विभागव्याघातशङ्काया अनवतार इति। तथा चाविभागव्याघातशङ्कायाः प्रादुर्भावे सत्येवोपधेयसङ्करेऽपीत्यादिग्रन्थस्य सामञ्जस्यसम्भावना तदर्थमपि दुष्टहेतुल-क्षणमेव चिन्तामणिकारस्येति स्वीकरणीयम्। तथा च पूर्वोक्तापत्त्यनुपपत्तिस्तद-वस्थैवेति चेन्नैतत्सारं प्रथमं दोषलक्षणे कृते स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वरूप-सम्बन्धेन दोषवत्त्वस्य हेतौ सत्त्वेन दुष्टहेतुनिरूपणस्यापि प्रस्तुततया न पूर्वोक्तो दोषः, विभागव्याघातशङ्काकलङ्कापनोदकोपधेयसङ्करेऽपीत्यादिग्रन्थस्यासङ्गतिसम्भावनेति भावः।

## गादाधरी

अनुमितिपदस्याऽनुमितिसामान्यपरत्वेऽसम्भवात्, यत्किञ्चिदनुमितिपरत्वेऽति-प्रसङ्गात्, प्रकृतपक्षसाध्यहेतुकानुमितिपरत्वमावश्यकम्।

## विमलप्रभा

"अनुमितिकारणीभूते" त्यादि लक्षणघटकाऽनुमितिपदस्यानुमितिसामान्य-परत्वे, यत्किञ्चिदनुमितिपरत्वे च दोषमुपपाद्य निष्कृष्टार्थमाह—अनुमितीत्यादिना। अनुमितिपदस्य = अनुमितिकारणीभूतेत्यादिलक्षणघटकानुमितिपदस्य। सामान्यपर-त्वे = सामान्यत अनुमितिपरतायामनुमितित्वव्यापकत्वार्थकत्व इति यावत्। असम्भ-वात् = लक्ष्यमात्रावर्त्तनप्रसङ्गात्, घटाद्यनुमितिघटितयावदनुमितौ कस्यापि निश्चय-स्याप्रतिबन्धकत्वेनानुमितित्वव्यापकप्रतिबध्यताया अप्रसिद्धत्वात् इति यावत्। य-त्किञ्चिदनुमितिपरत्वे = अनुमितित्वाश्रयपरत्वे। अतिप्रसङ्गात् = अलक्ष्ये लक्षणगम-नात्। आवश्यकम् = प्रकृतपक्षतावच्छिन्नपक्षकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्य-कप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकानुमितिपरत्वमावश्यकम्। अयमर्थः। अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वरूपलक्षणघटकानुमितिपदं यद्य-

नुमितिसामान्यपरं स्यात् तदा सामान्यपदस्य व्यापकतावाचितया अनुमितित्वव्यापक-प्रतिबध्यतानिरूपिता या यथार्थज्ञाननिष्ठा प्रतिबन्धकता तदवच्छेदकविषयताश्रयत्व-म् अनुमितित्वव्यापककार्यतानिरूपितकारणताश्रयीभूतोऽभावस्तत्प्रतियोगियथार्थ-ज्ञानविषयत्वं वा हेत्वाभासत्वमित्यस्यैव पर्यवसितलक्षणत्वे असम्भवापत्तिः। तथा हि ह्रदो वह्निमान् जलादित्यादौ वह्न्यभाववद्ध्रदादिरूपबाधादिज्ञानी-यप्रतिबन्धकतानिरूपिता या प्रतिबध्यता सा च संयोगसम्बन्धा-वच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्ना प्रतिबध्यता तत्रानुमितित्वव्यापकता नास्ति, घटवद्भूतलमित्याकारकानुमितावप्यनुमिति-त्वं तत्र निरुक्तप्रतिबध्यताविरहात् (अनुमितित्वाधिकरणे घटवद्भूतलमित्याकार-कानुमितौ वह्न्यभाववान् ह्रद इत्याकारकज्ञानीयप्रतिबन्धकतानिरूपितप्रतिबध्यतावा-न्नेत्याकारकाभावसत्त्वेन तदीयप्रतियोगितावच्छेदकमेव प्रतिबध्यत्वमित्यनवच्छेदकत्वा-भावात्) व्यापकताभङ्ग इत्यनुमितित्वव्यापकप्रतिबध्यत्वाऽप्रसिद्ध्या लक्षणागमनात् अनयैव दिशा सर्वत्रैव लक्ष्ये लक्षणागमनप्रयुक्तानुमितित्वव्यापकप्रतिबध्यताघटितल-क्षणन्न युक्तमित्युक्तम्। यद्यनुमितिपदं यत्किञ्चिदनुमितिपरं तदा यत्किञ्चिदनुमिति-व्यक्तिनिष्ठप्रतिबध्यतानिरूपिता या यथार्थज्ञाननिष्ठा प्रतिबन्धकता तदवच्छेदकविषय-ताश्रयत्वस्यैव लक्षणार्थत्वेन ह्रदो वह्निमान् इत्याकारकानुमितेः यत्किञ्चिदनुमितिपदेन धर्तुं शक्यतया तादृशानुमितिनिष्ठा या संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकार-तानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्ना प्रतिबध्यता तन्निरूपिता या स्वरूपसम्बन्धावच्छिन्नवह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नवि-शेष्यताशालिनिश्चयत्वावच्छिन्ना प्रतिबन्धकता तच्छालियथार्थज्ञानविषयत्वस्य वह्न्य-भाववद्ध्रदरूपबाधे सत्त्वेन स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन तद्वत्त्वस्य जलादिहेतौ सत्त्वात् लक्षणसङ्गमनेनासम्भवाभावेऽपि पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदस्य दोषत्वापत्तिः, तथा हि यत्किञ्चिदनुमितिपदेन ह्रदो वह्नि-मानित्यनुमितिमादाय तादृशानुमितिनिष्ठप्रतिबध्यतानिरूपिता या वह्न्यभाववान् ह्रद इत्याकारकनिश्चयनिष्ठा प्रतिबन्धकता तच्छालियथार्थज्ञानविषयत्वस्य वह्न्यभाव-वद्ध्रदादौ सत्त्वात्। अतः अनुमितिपदं नानुमितिसामान्यपरं, न वा यत्किञ्चिदनु-मितिपरम्, किन्तु प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यकप्रकृतसाध्यतावच्छेदकावच्छि-

न्नप्रकारकप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकानुमितिपरमेव वाच्यम्, तथा चैतादृशानुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वस्यैव लक्षणार्थतया पर्वतो वह्निमान् धूमादित्यादौ पर्वतत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकधूमत्वावच्छिन्नहेतुकानुमितिनिष्ठप्रतिबन्धकतायाः वह्न्यभावविशिष्टह्रदविषयकनिश्चये विरहेण न तत्र वह्न्यभावविशिष्टह्रदेऽतिव्याप्तिः। ह्रदो वह्निमान् जलादित्यत्र ह्रदत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकह्रदो वह्निमानित्यनुमितौ वह्न्यभावविशिष्टह्रदादिविषयकबाधनिश्चयस्य प्रतिबन्धकतया तादृशप्रतिबन्धकतामादाय तत्रत्यबाधे लक्षणगमनान्नासम्भवः। इत्थञ्चानुमितिपदस्य तादृशानुमितिपरत्वे नासम्भवः न वातिप्रसङ्ग इति भावः।

## बलदेवी

"अनुमितिपदस्यानुमितिसामान्यपरत्वेऽसम्भवः यत्किञ्चिदनुमितिपरत्वेऽतिप्रसङ्गः प्रकृतपक्षप्रकृतसाध्यप्रकृतहेतुकानुमितिपरत्वमावश्यकमित्युक्तं" भट्टाचार्येण क्वचित् पुस्तकेऽनुमितिपदस्यानुमितिसामान्यपरत्वेऽतिप्रसङ्ग इति पाठः, तन्मते सामान्यपदम् न व्यापकत्वार्थकम्, अपि तु प्रकृतत्वाघटितपक्षसाध्यकानुमितिपरमनुमित्वाश्रयपरमिति यावत्। अत्रेयमाशङ्का प्रकृतपक्षसाध्यकानुमितिपरत्वकथनेनैव सामञ्जस्येऽलं प्रकृतहेतुकत्वनिवेशेनेति चेन्न, हेतुकत्वं हेतुप्रकारकत्वं तदनुपादाने स्वरूपासिद्धावव्याप्तिः धूमाभाववान् ह्रद इति ज्ञानस्य प्रकृतपक्षसाध्यकानुमित्यप्रतिबन्धकत्वात्। न च व्यभिचारादावव्याप्तिरित्यत्रादिपदमनर्थकमिति वाच्यम्, आदिना विरोधादावव्याप्तिसम्भवादिति दर्शितम्। केचित्तु हेतुकत्वं हेतुमत्तापरामर्शोत्तरजायमानत्वं, तदनुपादाने व्यभिचारादावव्याप्तिः, निरुक्तानुमितिम्प्रति तस्याप्रतिबन्धकत्वात्, तदुपादाने तु तल्लिङ्गकपरामर्शाव्यवहितोत्तरजायमानत्वावच्छिन्नं प्रति तल्लिङ्गकव्यभिचारज्ञानस्य प्राचीनमते प्रतिबन्धकत्वान्नाव्याप्तिः। न चैवं ग्रन्थे व्यभिचारादावव्याप्तिदानमनुचितमिति वाच्यं नव्यैरस्वीकारात् तन्मतमवलम्ब्याव्याप्तिदानस्यानुभवसिद्धित्वात् इति वदन्ति। परे तु लाघवादेव हेतुकत्वनिवेशः, अन्यथाऽग्रेऽनुमितिपदस्य लक्षणया तत्कारणपरतया व्यभिचारादावव्याप्तिवारणेऽपि बाधदावव्याप्तिर्दत्ता, तत्र तत्कारणपरतया 'इत्यत्र तत्पदेन तद्धेतुकत्वाघटितानुमितेरेव ग्रहणं, तत्कारणं सकललिङ्गकपरामर्शः तत्व्यापकत्वस्य प्रकृतहेतुधर्मिकव्यभिचारज्ञानप्रतिबध्यतायामसत्त्वेन व्य-

भिचारादावव्याप्तितादवस्थ्याद् तस्यैव सम्यकत्वे बाधादावव्याप्तिदानं सन्दर्भविरुद्धमित्यतोनुमितिपदस्य प्रकृतहेतुकपरामर्शरूपानुमितिकारणपरत्वम् व्याख्येयं, तथा च गौरवं अतो लाघवात्तन्निवेशः। न च भवन्मतेऽपि प्रकृतत्रयोपादानेन गौरवमितिवाच्यं, सकृदेव प्रकृतस्योपादानात्, अन्वयस्तु त्रिष्वेव" द्वन्द्वादौ द्वन्द्वान्ते च श्रूयमाणं पदं प्रत्येकमपि सम्बध्यत इति नियमादिति वदन्ति। नव्यास्तु प्रकृतहेतुकत्वं प्रकृतहेतुमत्तापरामर्शोत्तरजायमानत्वं, तदनुक्तौ पर्वतो वह्निमान् महानसीयवह्नीतरवह्न्यभाववत्पर्वतकालीनधूमादित्यादौ महानसीयवह्न्यभाववत्पर्वतरूपबाधेऽव्याप्तिः, पर्वतो वह्निमान् इत्यनुमितित्वव्यापकत्वस्योक्तबाधज्ञानीयप्रतिबध्यतायामसत्त्वात्, तदुक्तौ च प्रकृतहेतुमत्तापरामर्शोत्तरजायमानपर्वतो वह्निमानित्यनुमितिः, तथा चोक्तपरामर्शोत्तरजायमानमहानसीयवह्निमानित्यनुमितित्वव्यापकत्वस्य तादृशप्रतिबध्यतायामक्षतत्वादिति।

न च तस्य बाधत्वे पर्वतो वह्निव्याप्यतादृशधूमवानित्यनुमितित्वव्यापकप्रतिबध्यत्वस्याऽप्रसिद्ध्या सिद्धान्तलक्षणेऽपि तत्राव्याप्तिर्दुर्वारैवेति वाच्यम्, सिद्धान्तलक्षणेऽपि समूहालम्बनानुमितौ महानसीयवह्नीतरबाधघटितहेतुमत्तापरामर्शस्य भानमिति कार्यकालविधयोक्तपरामर्शस्येतरवह्निमत्ताबुद्धिम्प्रति प्रतिबन्धकत्वात्, अविशेषात् महानसीयवह्निमान् वह्निव्याप्यतादृशधूमवांश्च पर्वत इत्यनुमितिस्तादृशानुमितित्वव्यापकत्वस्योक्तबाधज्ञानीयप्रतिबध्यतायां सत्त्वात् लक्षणसमन्वयः। न च साध्यतावच्छेदकगतरूपवृत्तिविधेयताशाल्यनुमितिनिवेशस्यावश्यकतया उक्तानुमितौ साध्यतावच्छेदकगतरूपवृत्तिविधेयताशालित्वविरहेण महानसीयवह्निमानित्यनुमितेः बाधनिश्चयसत्त्वेन वह्निमानित्यनुमितेश्चाऽप्रसिद्ध्याऽव्याप्तेस्तादवस्थ्य दुर्वारमिति वाच्यं, यद्धर्मावच्छिन्नव्याप्यवत्तापरामर्शोत्तरानुमितिस्तद्धर्मे विधेयतावच्छेदकत्वमथ चेतरबाधसहकारेण याऽनुमितिस्तदीयविधेयतावच्छेदकापरधर्मे प्रकारतावच्छेदकत्वमेवेति मते साध्यतावच्छेदकवह्नित्वगतैकत्ववृत्तिविधेयताशालित्वस्य महानसीयवह्निमान् पर्वत इत्यनुमितावक्षतत्वेन लक्षणसमन्वयसम्भवात् महानसीयवह्निनिष्ठविधेयतावच्छेदकताया वह्नित्वमात्रे सत्त्वात्। न च महानसीयवह्न्यभाववान् पर्वत इतिनिश्चयकालीनोक्तपरामर्शोत्तरं पुनः वह्निमानित्येवामितिर्न तु महानसीयवह्निमानित्यपि विशेषबाधसत्त्वात्, तथा च तादृशानुमितित्वव्यापकप्रतिबध्यत्वाऽसिद्ध्या प्र-

कृतहेतुकत्वनिवेशेऽप्यव्याप्तितादवस्थ्यमिति वाच्यम् । पर्वतपक्षकवह्निसाध्यकमहानसीयवह्नीतरवह्न्यभाववत्पर्वतकालीनधूमहेतुकस्थले निरुक्तपरामर्शोत्तरं महानसीयवह्न्यभाववान् पर्वत इति बाधनिश्चय एव न सम्भवति परामर्शस्यैव प्रतिबन्धकत्वात् तथा चोक्तयुक्त्याऽव्याप्तिरतः प्रकृतहेतुकत्वनिवेशः ।

न च प्रकृतपरामर्शोत्तरं सामान्यतः महानसीयवह्न्यभाववान् इति बाधनिश्चयासम्भवेऽपि तदुत्तरमेव लौकिकसन्निकर्षजन्यदोषविशेषजन्यस्योक्तबाधनिश्चयस्य महानसीयवह्निमानित्यनुमितिप्रतिबन्धकतयाऽगत्या वह्निमानित्येवानुमितिस्तादृशानुमितित्वावच्छिन्नत्वस्य पर्वतो महानसीयवह्न्यभाववानिति बाधनिश्चयप्रतिबध्यतायामसत्त्वात् पुनरव्याप्तिस्स्यादेवेति वाच्यम्, वह्न्यभाववन्महानसीयवह्न्यभाववन्महानसीयवह्नीतरवह्न्यभाववत्पर्वतकालीनधूमहेतुकस्थले परामर्शकाले महानसीयवह्न्यभाववान् इति बाधनिश्चयसत्त्वे वह्निमानित्येवानुमितिः तां प्रति बाधनिश्चयकालीनपरार्शस्य महानसीयवह्न्यभाववान् वह्न्यभाववान् महानसीयवह्नन्यभाव पर्वत इति ज्ञानघटितत्वेन निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वात् तथा च यादृशकाले परामर्शो न बाधनिश्चयसहितस्तत्काले तदुत्तरं महानसीयवह्निमानित्यनुमितिमादाय महानसीयवह्न्यभाववत्पर्वतरूपबाधे लक्षणसमन्वयः ।

न च तथापि परामर्शांशे यत्र महानसीयवह्न्यभाववति वह्न्यभावोऽव्याप्यवृत्तिरित्यव्याप्यवृत्तित्वज्ञानं तत्र परामर्शोत्तरबाधनिश्चयेऽपि वह्निमानित्येवानुमितिस्तां प्रत्युक्तबधानिश्चयकालीनपरामर्शस्य प्रतिबन्धकत्वं न प्रतिबन्धकतायामव्याप्यवृत्तित्वज्ञानस्योत्तेजकत्वात्. तथा च प्रकृतहेतुकत्वनिवेशोऽपि प्रकृताव्याप्तेर्वैयर्थ्यमिति वाच्यम्, निरवच्छिन्नस्वरूपेण वह्न्यभाववन्महानसीयवह्न्याभाववत्कालीनमहानसीयवह्नीतर वह्न्यभाववत्पर्वतकालीनधूमादित्यादौ पूर्वोक्तयुक्त्या बाधेऽव्याप्तिवारणाय प्रकृतहेतुकत्वनिवेशः । तन्निवेशे प्रकृतपरामर्शे महानसीयवह्न्यभाववति निरवच्छिन्नस्वरूपेण वह्न्यभावोऽव्याप्यवृत्तिरित्यस्याहार्यतयाऽव्याप्यवृत्तित्वज्ञानस्य धर्त्तुमशक्यतया वह्निमानित्यनुमित्यसम्भवः, तत्काले बाधनिश्चयसत्त्वेऽपि बाधनिश्चयाकालीनपरामर्शोत्तरजायमानां महानसीयवह्निमानित्यनुमितिमादायोक्तबाधे लक्षणसमन्वयः । न च अभावस्याव्याप्यवृत्तित्वज्ञानं, तथापि अप्रामाण्यज्ञानमादाय पूर्वोक्तदोष इति वाच्यं,

परामर्शांशेऽप्रामाण्यज्ञाने काप्यनुमितिर्न भवति अप्रामाण्यज्ञानाभावविशिष्टपरामर्शस्यैव कारणत्वात्। न च हेतुकत्वनिवेशोऽपि प्रकृतपरामर्शोत्तरं महानसीयवह्न्यभावव्याप्यवान् पर्वत इति सत्प्रतिपक्षनिश्चयोत्तरं वह्निमानित्येवानुमितिस्तादृशानुमितित्वव्यापकप्रतिबध्यत्वाऽप्रसिद्ध्याऽव्याप्तिरिति वाच्यं, पर्वतपक्षकवह्निसाध्यकवह्न्यभाववन्महानसीयवह्न्यभाववत्कालीनत्वे सति वह्न्यभाववन्महानसीयवह्न्यभावव्याप्यवत्कालीनत्वे सति महानसीयवह्नीतरवह्न्यभाववत्पर्वतकालीनधूमहेतुकस्थले परामर्शोत्तरं सत्प्रतिपक्षज्ञानस्य धारणे वह्निमानित्यनुमितिर्न भवितुमर्हति तां प्रतिनिश्चयविशिष्टनिश्चयत्वेन सत्प्रतिपक्षघटितलिङ्गपरामर्शस्य प्रतिबन्धकत्वात्, तथा हेतुकत्वानिवेशेऽव्याप्तिरतस्तन्निवेश इति।

वस्तुतस्तु ज्ञानपक्षकविषयितया वह्निसाध्यकवह्न्यभाववद्धूमाभाववत्कालीनमहानसीयवह्नीतरवह्न्यभाववज्ज्ञानकालीनधूमहेतुकस्थले, महानसीयवह्न्यभाववज्ज्ञानरूपबाधेऽव्याप्तिः, ज्ञानं वह्निमदित्याकारकानुमितेरपि प्रकृतपक्षसाध्यकानुमितितया बाधनिश्चयप्रतिबध्यत्वाभावात्, अतः प्रकृतहेतुकत्वनिवेशः, तथा च वह्निमदित्यनुमितिम्प्रति तादृशपरामर्शस्य धूमावच्छेदेन वह्न्यभावावगाहिनिश्चयविशिष्टतादृशधूमविषयकनिश्चयत्वेन प्रतिबन्धकत्वात्, किन्तु महानसीयवह्निप्रकारकानुमितिरेव तत्र जायते तत्र चोक्तबाधनिश्चयप्रतिबध्यतासत्त्वात्। न च विषयितासम्बन्धेन वह्नेः साध्यत्वानुसरणं व्यर्थमिति वाच्यं, संयोगादिसम्बन्धेन वह्नेः साध्यत्वे धूमावच्छेदेन संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावावगाहिनिश्चयविशिष्टपक्षे तादृशधूमवत्तावगाहिपरामर्शकाले संयोगादिसम्बन्धेन वह्निसामान्यानुमितेरिव महानसीयवह्निमानित्याकारकवह्निविशेषानुमितेरप्यसम्भवात्, अतः विषयितयेत्युक्तं, तथा च तादृशपरामर्शस्य विषयितया वह्निसामान्यानुमितिं प्रत्येव प्रतिबन्धकतया महानसीयवह्निविषयकानुमित्युत्पत्तौ बाधकाभावादिति।

## गादाधरी

तथा च व्यभिचारादावव्याप्तिः वह्निर्धूमव्यभिचारीतिज्ञानाभावस्य पर्वतो धूमवानित्यनुमित्यजनकत्वात्, लक्षणया तस्य तादृशानुमितिजनकज्ञानमात्रपरत्वे

बाधादिज्ञानस्य 'परामर्शाऽप्रतिबन्धकत्वात्, अतः अनुमितिपदमजहत्स्वार्थलक्षणया तदुभयपरतयाचष्टे "तत्रेति" ।

## विमलप्रभा

तथा च = अनुमितिपदस्य प्रकृतपक्षसाध्यहेतुकानुमितिपरत्वस्यावश्यकत्वे च । व्यभिचारादौ = व्यभिचारस्थले, आदिपदात्—व्याप्तिज्ञानप्रतिबन्धकविरोधादिसंग्रहः । वह्निर्धूमव्यभिचारीति ज्ञानाभावस्य = धूमाभावाधिकरणनिरूपितवृत्तिताविशिष्टः वह्निर्नरित्यादिनिश्चयाभावस्य । अनुमित्यजनकत्वात् = अनुमितिं प्रत्यकारणत्वात् । लक्षणया = जहत्स्वार्थलक्षणाद्वारा । तस्य = अनुमितिपदस्य । तादृशानुमितिजनकज्ञानमात्रपरत्वे = प्रकृतपक्षसाध्यहेतुकानुमितिकारणव्याप्तिज्ञानपरामर्शमात्रबोधकत्वे । मात्रपदेन पक्षः साध्यवानित्यनुमितिपरत्वव्यवच्छेदः । बाधादौ = बाधादिदोषे । आदिना सत्प्रतिपक्षपरिग्रहः । परामर्शाऽप्रतिबन्धत्वात्—अनुमितिकारणपरामर्शादिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतारहितत्वात् । अतः—अव्याप्तिरूपाद्धेतोः अनुमितिपदं—लक्षणाघटकानुमितिपदम् । अजहत्स्वार्थलक्षणया—स्वार्थसहितपरामर्शगमकलक्षणया । तदुभयपरतया—अनुमितितत्कारणेतदुभयपरत्वेन । व्याचष्टे—प्रतिपादयति । अयमर्थः । अनुमितिपदस्य तत्पक्षसाध्यहेतुकानुमितिपरत्वेऽपि पर्वतो धूमवान् वह्नेरित्यादौ धूमाववद्वृत्तिवह्निरूपव्यभिचारादावव्याप्तिः, व्यभिचारनिर्णयस्य व्याप्तिज्ञानं प्रत्येव विरोधितयाऽनुमितिजनकव्याप्तिज्ञानं प्रत्येव व्यभिचारनिश्चयाभावस्य जनकत्वेन पर्वतो धूमवानित्याकारकानुमितिं प्रति धूमाभावद्वृत्तिर्वह्निरूपव्यभिचारनिर्णयस्याऽप्रतिबन्धकतया व्यभिचारनिर्णयाभावस्यानुमितिकारणीभूताभावपदेन ग्रहीतुमशक्यतया तत्प्रतियोगियथार्थज्ञानविषयत्वस्य व्यभिचारादावभावात् ।

अथ यद्यनुमितिपदं जहत्स्वार्थलक्षणया प्रकृतानुमितिजनकज्ञानपरं तदा पर्वतो धूमवानित्यनुमितिजनकीभूतं यत् धूमव्याप्यवह्निमान् पर्वत इत्याकारकपरामर्शात्मकं ज्ञानं तत्कारणीभूतो यः धूमाभाववद्वृत्तित्वविशिष्टवह्निरूपव्यभिचारनिश्चयाभावः तत्प्रतियोगियथार्थज्ञानं तन्नोक्तव्यभिचारनिर्णयात्मकं ज्ञानं तद्विषयत्वस्य

धूमाभाववद्वृत्तित्वविशिष्टवह्निरूपव्यभिचारे सत्त्वात् लक्षणसमन्वयः। न च तथापि ह्रदो वह्निमान् जलादित्यादौ बाधसत्प्रतिपक्षादावव्याप्तिः, तत्र ह्रदो वह्निमानित्याद्याकारकानुमितिजनकीभूतं यत् वह्निव्याप्यजलवान् ह्रद इत्याकारकपरामर्शाद्यात्मकं-ज्ञानं तादृशज्ञानं प्रति वह्न्यभाववद्धृदरूपबाधनिश्चयस्य वह्न्यभावव्याप्यवद्धृदरूपसत्प्रतिपक्षनिर्णयस्य चाप्रतिबन्धकतया अनुमितिकारणीभूताभावपदेनोक्तबाधसत्प्रतिपक्षनिश्चयाभावस्य ग्रहीतुमशक्यतया तादृशाभावप्रतियोगियथार्थज्ञानविषयत्वस्य बाधादावभावात्। तथा चानुमितिकारणीभूतेत्यादिलक्षणघटकानुमितिपदं न पक्षः साध्यवानित्याकारकानुमितिमात्रपरं, न वा तज्जतकज्ञानमात्रज्ञापकमिति भावः।

## दीधितिः

तत्रानुमितिपदमनुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वेनानुमितितत्कारणज्ञानपरम्।

## गादाधरी

"तत्रेति"। तादृशलक्षणवाक्य इत्यर्थः। लक्षणघटकतावच्छेदकमुभयसाधारणमनुगतरूपमाह "अनुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वेनेति। अनुमितिपदस्य प्रकृतपक्षतावच्छेदकविशिष्टे प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारकप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकानुमितिपरत्वं स्वयमेव दर्शयिष्यति, अतो न वक्ष्यमाणातिप्रसङ्गः।

## विमलप्रभा

तत्र—तादृशलक्षणे। अनुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वेन—व्याप्तिज्ञानपरामर्शादिनिष्ठकारणतानिरूपिता याऽनुमितिनिष्ठकार्यता तन्निरूपको यः अनुयोगित्वप्रतियोगित्वादिरूपस्सम्बन्धः तत्सम्बन्धिताव्याप्तिज्ञानानुमित्यादाविति तादृशसम्बन्धित्वेन। ज्ञानपरं—ज्ञानबोधकं लक्षणस्थानुमितिपदमित्यन्वयः। लक्षणवाक्ये—अनुमितिकारणीभूतेत्यादिलक्षणबोधकवाक्ये। लक्षणघटकतावदच्छेदकं—येन धर्मेण भवति लक्षणा स धर्मः लक्षणघटकतावच्छेदकः। उभयसाधारणम्—अनुमिति-

तत्कारणपरमर्शोभयानुगतम् अनुगतरूपम्—उभयानुगतो धर्मः। आह—शिरोमणिरिति शेषः। अनुमितिपदस्य—लक्षणघटकस्यानुमितिपदस्य। स्वयमेव—दीधितिकार एव। अत,—तादृशानुमितिपरत्वाद्धेतोः। न वक्ष्यमाणातिप्रसङ्गः—नातिव्याप्तिरूपदोषः। अयमर्थः। प्रथमलक्षणघटकानुमितिपदं यदि प्रकृतपक्षसाध्यहेतुकानुमितिमात्रबोधकं तदा तदप्रतिबन्धकव्यभिचारविरोधादावव्याप्तिः, तत्कारणज्ञानपरत्वे च बाक्षसत्प्रतिपक्षादावव्याप्तिसम्भावना स्यात्, परन्तु प्रकृते अनुमितिपदं नानुमितिमात्रबोधकं न वा तत्कारणज्ञानमात्रपरम्, किन्तु प्रकृतपक्षसाध्यानुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वरूपेणानुमितितत्कारणपरामर्शोभयत्र लाक्षणिकमेवानुमितिपदं। तथा चानुमितिमादाय बाधादौ,अनुमितिकारणपरामर्शमादाय व्यभिचारादौ लक्षणसङ्गतिर्भवत्येव। मिश्रास्तु—अनुमितिनिष्ठकार्यनिरूपकत्वं तादृशकार्यतासम्बन्धित्वं च द्वयमनुगमकं, तत्र प्रथमे अनुमितिनिष्ठकार्यतानिरूपकग्रहनिष्ठप्रतिवध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं लक्षणार्थः, तथा च ह्रदो वह्निमान् जलादित्यादौ ह्रदो वह्निमानित्याकारिका यानुमितिस्तन्निष्ठा या वह्निव्याप्यजलवान् ह्रद इत्याकारकपरामर्शनिरूपिता कार्यता तादृशकार्यतानिरूपकत्वमनुमितौ परामर्शे च वर्त्तत इति तादृशकार्यतानिरूपको ग्रहः अनुमित्यात्मकः परामर्शात्मकश्च ग्रह इति तन्निष्ठप्रतिवध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य वह्न्यभाववद्वृत्तिजलरूपव्यभिचारे च सत्त्वात् लक्षणसङ्गतिरिति प्राहुः।

दीधितिकारेणाग्रेऽनुमितिपदस्य प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकानुमितिपरत्वस्यप्रतिपादनीयतया न पर्वतादिपक्षकवह्न्यादिसाधकधूमादिहेतुकसद्धेतौ वह्न्यभावविशिष्टह्रदे वक्ष्यमाणातिव्याप्तिसम्भावना।

## गादाधरी

निरूपकत्वञ्चात्र यदि प्रतियोगित्वं तदा कार्यस्य कार्यताप्रतियोगित्वाभावादनुमित्यसंग्रहः, अतः सम्बन्धिद्वयसाधारणस्य तत्साक्षात्कारजनकसाक्षात्कारविषयतात्मकनिरूपत्वस्य लाभाय।

## विमलप्रभा

अनुमितिनिष्ठकार्यतासम्बन्धित्वरूपानुगमकधर्मेऽवतरणिकामाह-"निरूपकत्वञ्चेति।" अत्र = लक्षणे, अनुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वेनेत्यत्रेति यावत्। कार्यस्य = अनुमितेः। अतः = अनुमित्यसङ्ग्रहाद्धेतोः। सम्बन्धिपदम् = अनुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वेनेत्यत्र सम्बन्धिपदम्। अस्य लाभायेत्यनेनान्वयः। सम्बन्धिद्वयसाधारणस्य = प्रतियोग्यनुयोग्युभयात्मकं यत् कार्यतारूपसम्बन्धस्य सम्बन्धि तत्र वर्त्तमानस्य। अनुमितिपरामर्शोभयत्र वर्त्तमानस्येति यावत्। तत्साक्षात्कारः = प्रकृतानुमितिनिष्ठकार्यतासाक्षात्कारः = [प्रत्यक्षम्]। साक्षात्कारविषयतात्मकनिरूपकत्वस्य = अनुमितितत्कारणपरामर्शोभयप्रत्यक्षविषयतास्वरूपनिरूपकत्वस्य। अयमर्थः। प्रकृतपक्षसाध्यहेतुकानुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वेनेत्यत्र निरूपकत्वं यदि प्रतियोगित्वरूपं तदा परामर्शनिरूपिता या अनुमितिनिष्ठकार्यता ताहशकार्यताप्रतियोगित्वरूपनिरूपकत्वस्य परामर्श एव वर्त्तमानतया प्रकृतानुमितौ ताहशनिरूपकत्वाभावेनानुमित्यसंग्रहेणानुमितिप्रतिबन्धके बाधसत्प्रतिपक्षादावव्याप्तिः। निरूपकत्वं यद्यनुयोगित्वरूपं तदा परामर्शनिरूपिता या अनुमितिनिष्ठकार्यता ताहशकार्यताया अनुयोगित्वरूपनिरूपकत्वस्यानुमितावेव वर्त्तमानतया, परामर्शासंग्रहेण परामर्शप्रतिबन्धकव्यभिचारविरोधादावव्याप्तिः स्यादतः अनुमितिनिष्ठकार्यतासम्बन्धित्वेनानुमितितत्कारणपरामर्शोभयोरनुगमे प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकप्रकृतसाध्यतावच्छेदकाच्छिन्नसाध्यकप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकानुमितिनिष्ठकार्यताप्रत्यक्षजनकप्रत्यक्षविषयताश्रयग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वमेव लक्षणार्थः। इत्थञ्च किञ्चित्प्रतियोगिककिञ्चिदनुयोगिकसम्बन्धप्रत्यक्षं प्रति प्रतियोग्यनुयोग्युभयप्रत्यक्षस्य कारणत्वमिति नियमेन परामर्शस्यापि कार्यतासम्बन्धेनानुमितौ वर्त्तमानतया कार्यतासम्बन्धस्य प्रतियोगी परामर्शः अनुमितिश्चानुयोगीति अनुमितिनिष्ठकार्यताप्रत्यक्षं प्रति अनुमितिप्रत्यक्षस्य परामर्शप्रत्यक्षस्य च कारणत्वम्, एवञ्च ह्रदो वह्निमान् जलादित्यादौ ह्रदपक्षकवह्निसाध्यकज-

हेतुका या ह्रदो वह्निमानित्यनुमितिस्तादृशानुमितिनिष्ठा या [वह्निव्याप्यजलवानित्याकारकपरामर्शनिष्ठकारणतानिरूपितानुमितिनिष्ठा] कार्यता तादृशकार्यतासाक्षात्कारः ह्रदो वह्निमानित्यनुमितिः वह्निव्याप्यजलवान् ह्रद इति परामर्शकार्येत्याकारकः तादृशसाक्षात्कारजनको यः साक्षात्कारः स च ह्रदो वह्निमानित्यनुमितिवानहमित्यनुमितिसाक्षात्कारः वह्निव्याप्यजलवान् ह्रद इतिपरामर्शवानहमिति परामर्शसाक्षात्कारश्चेति तदीया विषयता अनुमितौ परामर्शे च तादृशविषयताश्रयः अनुमित्यात्मको ग्रहः परामर्शात्मकश्च ग्रहस्तत्रानुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं वह्न्यभाववद्ध्रदरूपबाधे एवं परामर्शनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वम्। वह्न्यभाववद्वृत्तिजलरूपव्यभिचारे च सत्त्वात् लक्षणसंगतिरिति न पूर्वोक्तदोषः। अन्ये तु प्रकृते सम्बन्धिपदमनुमितितत्कारणोभयसाधारणानुमितिनिष्ठकार्यतासाक्षात्कारजनकानुमितितत्कारणपरामर्शोभयसाक्षात्कारविषयतास्वरूपनिरूपकत्वलाभार्थकं. एवञ्चानुमितिनिष्ठकार्यतासाक्षात्कारम्प्रति (अनुमितिः परामर्शस्य कार्येति प्रत्यक्षं प्रति) अनुमितितित्कारणपरामर्शोभयप्रत्यक्षस्योभयानुव्यवसायरूपस्य हेतुतया (अर्थात ह्रदो वह्निमानित्याद्यानुमितिः वह्निव्याप्यधूमवान् ह्रद इत्यादिपरामर्शस्य कार्येत्यादिप्रत्यक्षं प्रति वह्न्यादिमत्तया ह्रदादिकमहमनुमिनोमीत्यनुव्यवसायरूपप्रत्यक्षस्य, वह्निव्याप्यधूमवत्तया ह्रदादिकमहञ्जानामीत्यनुव्यवसायरूपप्रत्यक्षस्य च हेतुतया) तादृशप्रत्यक्षविषयतास्वरूपनिरूकत्वस्योभयानुगततया तेन रूपेणानुमितिपरामर्शोभयोरसंग्रहसम्भवान्न बाधव्यभिचारादावव्याप्तिसम्भावनेति प्राहुः।

## बलदेवी

सम्बन्धिपदं सम्बन्धिद्वयसाधारणतत्साक्षात्कारजनकसाक्षात्कारविषयतात्मकनिरूपकत्वस्यलाभायेति भट्टाचार्यः। तथा च प्रकृतपक्षसाध्यहेतुकानुमितिनिष्ठकार्यतासाक्षात्कारजनकसाक्षात्कारीयविषयताश्रयग्रहनिष्ठप्रतिध्यता - निरूपितप्रतवन्धकताशालियथार्थज्ञानविषयत्वमिति प्रथमलक्षणं पर्यवसितम्।

अथात्र कल्पे प्रकृतहेतुकत्वनिवेशो व्यर्थ इति चेन्न, पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभाववद्वृत्तिद्रव्येऽतिव्याप्त्यापत्तेः। वह्निव्याप्यद्रव्यवान् पर्वत इति परामर्शोत्तरजायमाना या प्रकृतपक्षसाध्यकानुमितिः सा च पर्वतो वह्निमानित्यनुमितिस्तन्निष्ठकार्यतासाक्षात्कारजनकसाक्षात्कारीयविषयताश्रयत्वस्योक्तपरामर्शेऽपि वर्त्तमानतया तन्निष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियाथार्थज्ञानविषयत्वस्य वह्न्यभाववद्वृत्तिद्रव्यरूपव्यभिचारे सत्वात्।

न च प्रकृतहेतुकत्वनिवेशेऽपि वह्निव्याप्यधूमवान् पर्वतः वह्निव्याप्यद्रव्यवांश्चेत्याकारकसमूहालम्बनपरामर्शोत्तरानुमितिनिष्ठकार्यतासाक्षात्कारजनकसाक्षात्कारविषयताश्रयत्वस्य द्रव्यलिङ्गकपरामर्शेऽपि वर्त्तमानतया तादृशपरामर्शमादायोक्तस्थले वह्न्यभाववद्वृत्तिद्रव्येऽतिव्याप्तिर्दुर्वारैवेति वाच्यम्, प्रकृतहेतुकत्वावच्छिन्नत्वस्य कार्यतायां निवेशात्,तथा च प्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारतानिष्ठनिरूपकत्वसम्बन्धावच्छिन्ना यावच्छेदकता तन्निरूपिता याऽव्यवहितोत्तरत्वसम्बन्धावच्छिन्नपरामर्शनिष्ठावच्छेदकता तन्निरूपकत्वं तदर्थः। एवञ्च धूमत्वावच्छिन्नप्रकारतानिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतानिरूपितकार्यतासाक्षात्कारजनकसाक्षात्कारविषयः धूमलिङ्गकपरामर्श एव भवति न तु द्रव्यलिङ्गकपरामर्श इति नातिव्याप्तिः।

न च पर्वतो वह्निमान् धूमादित्यादौ काञ्चनमयत्वाभाववद्धूमेऽतिव्याप्तिः, वह्निव्याप्यकाञ्चनमयधूमवान् पर्वत इति परामर्शोत्तरजायमानानुमितिनिष्ठकार्यतायां हेतुतावच्छेदकीभूतधूमत्वावच्छिन्नप्रकारतानिष्ठावच्छेदकतानिरूपितत्वस्य निश्चयनिष्ठावच्छेदकतानिरूपितत्वस्य च सत्त्वेन तादृशकार्यतासाक्षात्कारजनकसाक्षात्कारनिरूपितविषयताया उक्तपरामर्शेऽपि सत्त्वेन तादृशपरामर्शं प्रति काञ्चनमयत्वाभाववान् धूम इति ज्ञानस्य प्रतिबन्धकत्वात्। न च प्रकृतहेतुतावच्छेदकपर्याप्तावच्छेदकताकप्रकारतानिष्ठावच्छेदकत्वानिरूपितेत्यादिक्रमेण निवेशे नायं दोष इति वाच्यं, सर्वत्र परामर्शघटकहेतुनिष्ठप्रकारतायां हेतुतावच्छेदकव्याप्त्युभयपर्याप्तावच्छेदकताकत्वं, न तु धूमत्वादिपर्याप्तावच्छेदकताकत्वमिति सर्वत्रासम्भवापत्तेः।

न च हेतुतावच्छेदकताभिन्ना सती व्याप्तिनिष्ठावच्छेदकताभिन्ना सती प्रकारतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता या प्रकारतानिष्ठावच्छेदकता तन्निरूपितनिश्चयनिष्ठावच्छेदकतानिरूपितत्वस्य कार्यतायां निवेशनीयतया नोदक्तोष इति वाच्यं, अन्वयव्याप्तिव्यतिरेकव्याप्त्यन्यतरनिवेशे च साधारणानुपसंहारित्वादावव्याप्तेः। सकलविधव्याप्तिनिष्ठावच्छेदकताभेदनिवेशे च पर्वतो वह्निमान् गगनादित्यादौ वह्न्यसमानाधिकरणवह्न्यभावव्यापकीभूताभावप्रतियोगिगगनेऽतिव्याप्तिः, गगनव्यापकवह्निसमानाधिकरणवह्न्यभावव्यापकीभूताभावप्रतियोगिगगनवानिति परामर्शस्य पर्वतो वह्निमानित्यनुमितिम्प्रति कारणतया एतादृशपरामर्शोत्तरानुमितिनिष्ठकार्यतायाम् अन्वयव्यतिरेकव्याप्तिनिष्ठावच्छेदकताभिन्ना सती हेतुतावच्छेदकनिष्ठावच्छेदकताभिन्ना सती प्रकारतात्वनिष्ठावच्छेदकताभिन्ना यावच्छेदकता तादृशावच्छेदकत्वानिरूपितप्रकारतानिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतानिरूपितत्वस्य तत्तन्निष्ठावच्छेदकतानिरूपितत्वस्य च सत्त्वात्, तथा च तादृशकार्यताविषयकसाक्षात्कारजनकसाक्षात्कारविषयकरामर्शनिष्ठवह्निसासामानाधिकरण्यप्रकारकवह्न्यभावव्यापकाभावप्रतियोगिगगनत्वावच्छिन्नगगननिष्ठविशेष्यताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य तादृशगगने सत्त्वादिति चेन्न, प्रकृतहेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिविशेष्यत्वावच्छिन्नप्रकारतानिष्ठावच्छेदकतानिरूपकनिश्चयनिष्ठावच्छेदकतानिरूपकत्वस्य कार्यतायां निवेशनीयत्वात्। रूपवृत्तित्वञ्च विशेष्यतायां स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, एवञ्च प्रकृतपरामर्शे हेतुनिष्ठविशेष्यतायां व्यतिरेकव्याप्तिगगनत्वोभयगतद्वित्ववृत्तित्वसत्त्वेऽपि गगनरूपहेतुतावच्छेदकीभूतगगनत्वगतैकत्ववृत्तित्वविरहेण तादृशपरामर्शस्य धर्त्तुमशक्यत्वान्न पूर्वोक्तदोषः। न च तथापि गगनव्यापकवह्निसमानाधिकरणवह्न्यभावव्यापकीभूताभावप्रतियोगिगगनवान् पर्वत इति परामर्शनिरूपितकार्यतायां गगनत्वं धर्मितावच्छेदकीकृत्य व्यतिरेकव्याप्तिस्तादृशपरामर्शांशे भासत इति गगनत्वावच्छिन्नविशेष्यतामादाय पूर्वोक्तदोषस्तदवस्थ इति चेन्न, तद्वारणाय तादृशविशेष्यतायां प्रकारताविशिष्टान्वयव्याप्तिप्रकारतानि-

रूपितत्वस्य निवेशात् वैशिष्ट्यञ्च स्वनिरूपितधर्मितावच्छेदकत्वावच्छेद्यत्वसम्बन्धेन, तथा चोभयधर्मावच्छिन्नविशेष्यतायाः रूपवृत्तित्वाभावेनातिव्याप्तिविरहात् ।

एवमेकत्र द्वयमिति रीत्या उभयविधव्याप्तिप्रकारकपरामर्शमादाय व्याप्त्यभाववत्गगनेऽतिव्याप्तिवारणाय स्वावच्छिन्नकिञ्चित्प्रकारतानवच्छेदकविषयत्वा निरूपितत्वमपि प्रकारताविशिष्टान्यप्रकारतानिरूपितविशेष्यतायां विशेषणन्देयम्, तथा चोभयवद्गगनवानिति परामर्शे उभयप्रकारतानिरूपितैकाविशेष्यता भवतु परामर्शस्य कारणता तु हेतुतावच्छेदकावच्छिन्नविशेष्यतानिरूपितैकव्याप्तिनिष्ठप्रकारताशालिनिश्चयत्वेनैव, एवञ्च काञ्चनमयधूमलिङ्गकपूर्वोक्तपरामर्शमादाय काञ्चनमयत्वाभाववद्धूमे, एकत्र द्वयमिति रीत्या उभयाभाववद्गगने, उभयव्याप्तिप्रकारकपरामर्शमादाय गगनव्यापकवह्निसमाधिकरणवह्न्यभावव्यापकीभूताभावप्रतियोगिगगने च नातिप्रसंगः धूमत्वगतैकत्ववृत्तिविशेष्यतात्वावच्छिन्नप्रकारतानवच्छेदकं यत् काञ्चनमयत्वविषयत्वं तादृशविषयतानिरूपितत्वस्यैव विशेष्यतायां सत्त्वादिति ।

ननु, परामर्शजन्यानुमितौ परस्परव्यभिचारवारणाय कार्यतावच्छेदककोटौ परामर्शाव्यवहितोत्तरत्वनिवेशस्यावश्यकत्वेन प्रकृतपक्षसाध्यविषयकानुमितित्वस्य कार्यतावच्छेदकतायां प्रयोजनविरहेणानिवेश्यतया तदवच्छिन्नकार्यताघटितलक्षणासम्भवः, न च परामर्शाव्यवहितोत्तरत्वावच्छिन्नं प्रति परामर्शस्य समवायसम्बन्धेन हेतुत्वे यत्र परामर्शाव्यवहितोत्तरमनुमितिक्षणे घटात्मगतद्वित्वमुत्पन्नं तत्र तादृशद्वित्वस्य समवायसम्बन्धेन घटेऽपि सत्त्वात् । तत्र समवायेन परामर्शाभावात् व्यभिचार इति वाच्यम्, उक्तदोषवारणाय ज्ञानत्वस्यानुमितित्वस्य वा कार्यतावच्छेदककोटौ निवेशनीयतया किं पक्षसाध्यविषयताया निवेशेनेति वाच्यम्, अप्रामाण्यज्ञानव्यक्तीनां कारणतावच्छेदककार्यतावच्छेदककुक्षौ निवेशस्यावश्यकतयाऽप्रामाण्यज्ञानव्यक्तीनां तत्तद्व्यक्तित्वेनोत्तेजकतामते कार्यतावच्छेदककुक्षौ तत्तदप्रामाण्यज्ञानाभावकूटमनिवेश्य लाघवेन पक्षसाध्यकत्वनिवेशः । यत्र प्रथमं भाविज्ञानं धूमाभाववति धूमप्रकारकमित्यप्रामाण्यज्ञानं ततः वह्निव्याप्यधूमवान् घटव्याप्य-

पटवांश्चेति समूहालम्बनपरामर्शस्ततो घटवानित्यनुमितिस्ततो वह्निमानित्यनुमितिस्तत्र घटानुमितिक्षणे वह्न्यनुमितिवारणाय कारणतावच्छेदककोटौऽप्रामाण्यज्ञानस्योत्तेजकत्वं वाच्यं, तत्रैव घटानुमित्यनुपपत्तिवारणाय कार्यतावच्छेदककुक्षावप्रामाण्यज्ञानस्योत्तेजकत्वम्, अन्यथा तस्यापि धूमपरामर्शाव्यवहितोत्तरत्वेन तत्राप्रामाण्यज्ञानाभावविशिष्टधूमलिङ्गकपरामर्शाभावात्, तत्क्षणे 'घटानुमितिर्न स्यात् यद्यपि 'तादृशाप्रामाण्यज्ञानास्कन्दितधूमालोकलिङ्गकसमूहालम्बनपरामर्शोत्तरं पर्वते वह्न्यनुमितौ व्यभिचारवारणायाप्रामाण्यज्ञानव्यक्त्यभावानां कार्यतावच्छेदककुक्षावन्तर्भावस्य साध्यपक्षकत्वादिनिवेशेऽपि आवश्यकत्वं, तथापि उत्तेजकस्थले तादृशाप्रामाण्यज्ञानव्यक्तेरुत्तेजकत्वापेक्षया साध्यपक्षकत्वनिवेशस्यैवोचितत्वात्। किञ्च साध्यपक्षकानुमितिनिष्ठेत्यादिरीत्या निवेशे समूहालम्बनकार्यतावारणाय कार्यतायां कारणतानिरूपितकार्यतावत्त्वस्वभिन्नकारणतानिरूपितकार्यतावत्त्वोभयसम्बन्धेन कारणतावदन्यत्वरूपविशेषणान्तरं देयमेवेत्यग्रे व्यक्तीभविष्यति। नन्वेवमपि तादृशकार्यताविषयकत्वावच्छिन्नजन्यतानिरूपितजनकतानिवेशेनैव सामञ्जस्ये साक्षात्कारद्वयङ्किमर्थं, किमर्थञ्च द्वितीयकल्पानुधावनमिति चेन्न प्रथमसाक्षात्कारपदानुपादाने पर्वतो वह्निमान् धूमादित्यादौ घटाभाववद्भूतलेऽतिव्याप्तिः स्यात्। तत्र पर्वतो वह्निव्याप्यधूमघटवानित्येकत्रं द्वयमिति रीत्या भासमानज्ञानीयघटत्वावच्छिन्नकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतायाः वह्निव्याप्यधूमत्वावच्छिन्नप्रकारतानिरूपितत्वेन कार्यतावच्छेदकतया तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्प्रमाविषयत्वात्। न च तादृशकार्यतावच्छेदकप्रकारत्वावच्छिन्नत्वस्यैव प्रतिबध्यतायां निवेश इति तज्ज्ञाने प्रकारताद्वयोपगमेन तादृशप्रतिबध्यताया असाधारणतया नोक्तदोष इति वाच्यम् एवमपि वह्निव्याप्यधूमवन्तौ पर्वतघटाविति द्वयोरेकमिति रीत्या ज्ञानीयधूमत्वावच्छिन्नप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्प्रमाविषयत्वस्य धूमाभाववद्घटे सत्त्वादतिव्याप्त्यापत्तेः। न च कार्यतानवच्छेदकविषयत्वानवच्छिन्नत्वस्य प्रतिबध्यतायां निवेशेनैव तद्दोषवारणं सम्भवति (तत्र तादृशकार्यतानवच्छेदकघटत्वावच्छिन्नविषयित्वावच्छिन्नत्वान्न तत्प्रतिबध्यतामादाय दोष) इति वाच्यं, ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभाववद्ध्रदाव्याप्त्यापत्तेः तज्ज्ञानी-

यप्रतिबध्यतावच्छेदकत्वस्य महानसीयवह्निमानित्याकारकज्ञानीयह्रदत्वावच्छिन्नविशेष्यतानिरूपितमहानसीयवह्नित्वावच्छिन्नप्रकारताव्यक्तौ सत्त्वात्, सामान्याभावप्रतिवध्यत्वस्यानुगतरूपेण वह्नित्वपर्याप्त्यनिवेशेन ज्ञानद्वयसाधारणत्वात् तस्याश्च कार्यतानवच्छेदकत्वात् ।

एवं घटो गगनवानित्यादाववृत्तिगगनादावव्याप्याप्तिः, तादृशदोषविषयकनिश्चयप्रतिबध्यत्वस्य कार्यतानवच्छेदकनिर्द्धर्मितावच्छेदककगगनवानितिज्ञानीयगगनत्वावच्छिन्नप्रकारत्वावच्छिन्नत्वात् बाधज्ञानीयप्रतिबध्यतायाः गगनवान् घटो गगनवानित्यादिज्ञानसाधारणत्वात् । न च तादृशकार्यतानवच्छेदकविषयताशून्यज्ञानीयविषयित्वावच्छिन्नत्वेन प्रतिबध्यता 'निवेश्या, तथा च तादृशकार्यतानवच्छेदकमहानसीयवह्नित्वावच्छिन्नविषयताशून्यह्रदो वह्निमानित्यनुमितिमादाय, तादृशनिर्द्धर्मितावच्छेदकज्ञानीयविषयताशून्यघटो गगनवानिति ज्ञानमादाय लक्षणसमन्वयसम्भवान्न पूर्वोक्तदोषावकाश इति वाच्यं, तादृशकार्यतानवच्छेदकनिरवच्छिन्नविषयताशून्यत्वस्य क्वापि प्रतिबध्यज्ञानेऽसत्त्वेनासम्भवापत्तेः । न च कार्यतानवच्छेदकविषयताशून्यत्वपदेन तादृशकार्यतावच्छेदकविषयताविशिष्टान्यविषयताशून्यत्वस्य विवक्षणान्न दोषः वैशिष्ट्यञ्च स्वातादात्म्यस्वावच्छिन्नत्वस्वनिरूपितत्वस्वनिरूपितावच्छेदकत्वस्वावच्छेद्यनिरूपितावच्छेद्यस्वावच्छेद्यनिरूपितत्वैतदन्यतमसम्बन्धेन । अत्र प्रथमद्वितीयसम्बन्धनिवेशश्च ह्रदो वह्निमानित्यत्र ह्रदत्वावच्छिन्नविषयताया ह्रदत्वप्रकारतानिरूपितनिरवच्छिन्नविशेष्यतायाश्च संग्रहाय । तृतीयचतुर्थसम्बन्धनिवेशश्च धूमाभाववद्वृत्तिवह्निरूपव्यभिचारेऽव्याप्तिवारणाय, अन्यथा धूमाभाववद्वृत्तिवह्निमान् तादृशालोकवान् धूमाभाववद्वृत्तिमान् इत्यादिनानाहेतुतावच्छेदकावगाहिहेतुतावच्छेदकानवगाहिनानाविधपरामर्शानां व्याप्त्यवच्छिन्नप्रकारताशालिनिश्चयत्वेनैकरूपेणैककारणतया कार्यतावच्छेदककोटौ एकधर्मावच्छिन्नं प्रति व्यापकसामाधिकरण्यादिनानाविधव्याप्त्यवगाहिपरामर्शस्य कारणतायां व्यभिचारवारणायनिवेशनीयाव्यवहितोत्तरत्वशरीरे पूर्वोक्तपरामर्शानामेकरूपेणैव प्रवेशात्, हेतुतावच्छेदकवह्नित्वादिनिष्ठनिरवच्छिन्नप्रकारतानिरूपितविशेष्यतायाः व्याप्त्यादिप्रकारतानि-

रूपितधर्मविषयतायाश्च ताद्दशानुमितिनिष्ठकार्यतानवच्छेदकतया तच्छून्यत्वस्य-व्यभिचारज्ञानप्रतिबध्यज्ञानेऽसत्त्वादिति पञ्चमषष्ठसम्बन्धनिवेशश्च पर्वतो वह्न्य-भाववानित्यादौ वह्निमत्पर्वतरूपबाधसंग्रहाय अन्यथा वह्न्यभावव्याप्यहेतुमत्ताप-रामर्शस्य लाघवादवच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नवह्नित्वनिष्ठप्रकारतानि-रूपिताभावत्वावच्छिन्नविशेष्यत्वावच्छिन्नविधेयतात्वेन वह्न्यभावत्वावच्छिन्न-विधेयताशाल्यनुमितित्वावच्छिन्नं प्रति कारणतया वह्निनिष्ठवह्नित्वप्रकार-तानिरूपिता या निरवच्छिन्नविशेष्यतात्वाभाववनिष्ठविशेष्यत्वादीनां कार्यतानवच्छे-दकतया तच्छून्यत्वस्य बाधज्ञानप्रतिबध्यज्ञानेऽसत्त्वादव्याप्त्यापत्तेरिति वाच्यं। पर्वतो धूमवान् गगनादित्यादौ आधेयत्वप्रतियोगित्वोभयाभाववत्गगनेऽतिव्याप्त्या-पत्तेः ताद्दशकार्यतानवच्छेदकविषयताशून्यत्वस्य गगनव्यापकधूमसामानाधिकरण्य-धूमाधिकरणनिरूपिताधेयत्वधूमाभावव्यापकीभूताभावप्रतियोगित्ववद्गगनवान् पर्वत इति व्याप्तिद्वयस्यैकत्र द्वयमिति रीत्यावगाहिपरामर्शे सत्त्वात्। न च तथापि यत्किञ्चित्-कार्यतावच्छेदकीभूतविषयताविशिष्टान्यविषयताशून्यत्वस्य ज्ञाने विशेषणादेव तद्वार-णम् तथा हि ताद्दशपरामर्शात्मकज्ञानस्यापि प्रतिस्विकरूपेण एकामेकां व्याप्तिमादा-यैव कारणत्वात्, यत्किञ्चित्कार्यतावच्छेदकविषयतापदेनान्वयव्याप्तिघटितताद्दश-पक्षतावच्छेदकावच्छिन्नविशेष्यतामुपादाय तद्विशिष्टान्यत्वस्य व्यतिरेकव्याप्तिघटित-ताद्दशपक्षतावच्छेदकावच्छिन्नविशेष्यतायां सत्त्वेन तच्छून्यत्वस्योक्तपरामर्शे विरहात्। न च यत्किञ्चित्त्वनिवेशेऽननुगमः,तत्पक्षकतत्साध्यकतद्धेतकानुमितिनिष्ठकार्यताविशि-ष्टप्रतिबध्यतायाः विवक्षणात्,वैशिष्ट्यञ्च स्वावच्छेदकविषयताविशिष्टान्यविषयताशून्य-ज्ञानीयविषयत्वावच्छिन्नत्वसम्बन्धेन सम्बन्धघटकविषयतावैशिष्ट्यं प्रागुक्तान्यतम-सम्बन्धेन निवेशनीयमिति चेन्न, ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभाववदवृत्ति-धूमवह्न्यभाववदवृत्त्यालोकोभयाभाववद्धूदेऽतिव्याप्तिः, एकत्र द्वयमिति रीत्या वह्न्यभाववदवृत्तिधूमालोकोभयवानिति ज्ञाने उभयसाधारणसाध्याभाववदवृत्ति-त्वावच्छिन्नप्रकारताशालिनिश्चयाव्यहितोत्तरत्वघटितधर्मावच्छिन्नयत्किञ्चित्कार्य-तानवच्छेदकविषयताशून्यत्वस्याक्षतत्वात्। एवमव्यवहितोत्तरत्वस्य कार्यतावच्छे-दककोटौ निवेशनीयतया अप्रामाण्यज्ञानानामनुगतरूपेणोत्तेजकतामते पक्षसाध्य-

विषयतायाः प्रयोजनविरहेण कार्यतावच्छेदककुक्षावनिवेशनीयतया तादृशकार्यत्वाऽप्रसिद्ध्याऽसम्भवापत्तेर्दुर्वारत्वात् गौरवाच्चेति दिक्।

ननु अनुमितिनिष्ठकार्यतासाक्षात्कारजनकसाक्षात्कारीयविषयताश्रयग्रहनिष्ठप्रतिबध्यतानिवेशे प्रकृतानुमितिनिष्ठकार्यताद्वयविषयकसमूहालम्बनसाक्षात्कारजनकसाक्षात्कारीयविषयतां तादृशकार्यतासाक्षात्कारत्वावच्छिन्नजन्यतानिरूपितजनकताश्रयसमूहालम्बनसाक्षात्कारीयविषयताश्चादाय पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभाववद्ध्रदादावतिव्याप्तिः, अतस्तादृशकार्यताविषयकत्वसाक्षात्कारत्वैतद्धर्मद्वयावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतसाक्षात्कारविषयताश्रयग्रहनिष्ठप्रतिबध्यतानिवेशे च प्रथमसाक्षात्कारप्रवेशस्य किं प्रयोजनमिति चेन्न, तादृशानुमितिनिष्ठकार्यताविषयकत्वावच्छिन्नजन्यताऽनिवेशे च तादृशानुमितिस्तादृशपरामर्शकार्यतावती घटवद्भूतलविषयकज्ञानादित्यनुमितिनिष्ठतादृशकार्यताविषयकानुमितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदिका या प्रकृतपक्षधर्मिकपरामर्शीयहेतुविषयता तदाश्रयहेतुभूतघटवद्भूतलज्ञाननिष्ठप्रतिबध्यतामादाय पर्वतो वह्निमान् धूमादित्यादौ घटाभाववद्भूतलेऽतिव्याप्तिः। तन्निवेशे च तादृशकार्यताविषयकत्वावच्छिन्नत्वस्यानुमितित्वावच्छिन्नत्वस्य च सत्त्वेऽपि साक्षात्कारत्वावच्छिन्नत्वविरहान्नातिप्रसङ्गः। अत्र द्वितीयसाक्षात्कारत्वनिवेशेऽपि तादृशकार्यतासाक्षात्कारत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूता या प्रकृतपक्षसाध्यविषयकानुमितित्वेन घटवद्भूतलमितिज्ञानावगाहिसाक्षात्कारीयविषयतातदाश्रयग्रहनिष्ठप्रतिबध्यतामादाय पुनः घटाभाववद्भूतलेऽतिव्याप्तिः, तद्वारणाय यद्धर्मावच्छिन्नविषयता तादृशजनकतावच्छेदिका तद्धर्मावच्छिन्नग्रहनिष्ठप्रतिबध्यतानिवेशे च परामर्शघटकज्ञानत्वादिकमादाय स एव दोष इति।

यद्धर्मावच्छिन्नग्रहत्वव्यापकत्वं, यद्धर्मावच्छिन्नविषयताव्यापकत्वं वा तादृशजनकतायां निवेशनीयम्। तथा च तादृशानुमितित्वावच्छिन्नग्रहत्वाश्रयीभूतशाब्दादौ तादृशजनकताविरहेणासम्भवः स्यादतो द्वितीयसाक्षात्कारनिवेशः, एवं च

तादृशसाक्षात्कारीययद्रूपावच्छिन्नविषयताव्यापकत्वमित्यादिरीत्या निवेशे न कश्चिद्दोषः। ननु साक्षात्कारस्थले वास्तविकतत्तव्यक्तिसाक्षात्कारत्वावच्छिन्नं प्रति प्रतियोग्यनुयोगिव्यक्तिसाक्षात्कारत्वेनैव कारणता न तु तत्तद्धर्मघटिता, तथा च तादृशानुमितित्वावच्छिन्नकार्यतानिष्ठावविषयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकजन्यतानिरूपितजनकतानिरूपितविषयत्वनिष्ठावच्छेदकतानिरूपिताधेयत्वसम्बन्धावच्छिन्ना याऽवच्छेदकता तद्वद्ग्रहनिष्ठप्रतिबध्यतानिवशे तादृशकार्यताविषयकानुमितित्वावच्छिन्नजन्यतानिरूपितसाध्यनिष्ठविषयतानिष्ठावच्छेदकतायां साध्यतावच्छेदकतादृशकार्यतात्वावच्छिन्नत्वस्यावच्छेदकतया साध्यस्याधेयतासम्बन्धेनावच्छेदकत्वात्, भ्रमसाधारणसाध्यतावच्छेदकावच्छिन्नविधेयताशाल्यनुमितित्वस्यैव परामर्शजन्यतावच्छेदकत्वात्. एवञ्च प्रथमसाक्षात्कारत्वाऽनिवेशे वह्निमान धूमादित्यादौ घटाभाववद्भूतले प्रागुक्तयुक्त्या नातिव्याप्तिः। एवं तादृशसाक्षात्कारं प्रति तादृशानुमितित्वादिनाऽन्यावगाहिज्ञानस्य कारणत्वाभावेन द्वितीयसाक्षात्कारस्यापि वैयर्थ्यमिति चेत्, अत्र केचित् तद्व्यक्तेः स्वरूपतो भानमते प्रथमसाक्षात्कारत्वानिवेशे प्रगुक्तैवातिव्याप्तिः, स्वरूपतस्तद्व्यक्तिनिष्ठविधेयताकानुमितिनिष्ठजनकतायां साध्यतावच्छेदकावच्छिन्नत्वेनावच्छेदकत्वासम्भवेन साध्यनिष्ठविधेयतात्वेनैवावच्छेदात् तादृशजन्यतानिरूपितप्रकृतहेतुभूतघटवद्भूतलमितिज्ञाननिष्ठविषयताशालिपरामर्शनिष्ठजनकतामादाय निष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतायाः हेतुभूततादृशज्ञाने सत्त्वात्।

द्वितीयसाक्षात्कारत्वानिवेशे तादृशकार्यतासाक्षात्कारत्वावच्छिन्नं प्रति तदाश्रयव्यक्तिसाक्षात्कारत्वेन कारणत्वेऽपि तादृशानुमितिव्यक्तेः घटवद्भूतलमिति ज्ञानस्य चानुमितित्वेन यः साक्षात्कारस्तस्यापि हेतुतया तन्निरूपितानुमितित्वनिष्ठप्रकारतानिरूपितविशेष्यतायाः ऐक्येन तादृशजनकतावच्छेदकताश्रयघटवद्भूतलमिति ज्ञानमादाय पूर्वोक्तातिव्याप्तिवारणाय यद्विषयतायाः साक्षात्कारत्वव्यापिका जनकता तद्विषयताश्रयग्रहनिष्ठप्रतिबध्यतेत्यादिना लक्षणं वक्तव्यं, तत्र साक्षात्कारत्वानिवेशे शाब्दादिकमादायासम्भव इत्याहुस्तच्चिन्त्यं। ननु तद्व्यक्तेः

स्वरूपतो भाने तादृशकार्यतावारणेऽपि परामर्शनिष्ठानुमितिकारणतायां हेतुभूतविषयतायाः व्याप्त्यादिधर्मावच्छिन्नत्वेनैवावच्छेदात्, तादृशविषयतानिष्ठावच्छेदकतायां हेतोराधेयतासम्बन्धेनावच्छेदकत्वाभावात्, अन्यथा ताद्रूप्येणान्यावगाहिपरामर्शस्यानुमितिजनकतानुपपत्तेः। तथा च तादृशनुमितिष्ठकार्यताविधेयकानुमितिनिष्ठावच्छेदकतानिरूपितजनकतात्वेनैव जनकतावच्छेदकतया तत्र घटवद्भूतलमिति ज्ञानस्याधेयतासम्बन्धेन हेतुभूतघटवद्भूतलमिति ज्ञाननिष्ठाएवं तादृशानुमितिघटवद्भूतलत्वमितिज्ञानयोरनुमितित्वेन यः साक्षात्कारः तस्य कार्यताविषयकसाक्षात्कारम्प्रति कारणत्वेऽपि तादीयविषयताया अनुमितिनिष्ठत्वेनैव जनकतावच्छेदकतया तत्र घटवद्भूतलमिति ज्ञानस्य विषयतासम्बन्धेनानवच्छेदकतया च पूर्वोक्तदोषाभावात्। परन्तु साक्षात्कारत्वं विषयताविशेष एव नातिरिक्त इति मताभिप्रायेणैव तन्निवेशः।

किञ्च व्याप्यधर्मपुरस्कारेण निवेशासम्भवे व्यापकधर्मपुरस्कारेण निवेशस्यानुमितिग्रन्थे भट्टाचार्येणानङ्गीकृतत्वात् तन्निवेशः। अथ वैतादृशार्थलाभायैव तन्निवेश इति ध्येयम्।

ननु तथापि साक्षात्कारद्वयमनिवेश्य तादृशकार्यताविशिष्टग्रहनिष्ठप्रतिबध्यत्वमेव निवेश्यतां, वैशिष्ट्यञ्च स्वाश्रयत्व-स्वनिरूपितकारणताश्रयत्वान्यतरसम्बन्धेन। तथा च पक्षः साध्यवान् साध्यव्याप्यहेतुमाँश्चेति समूहालम्बनग्रहमादाय सर्वत्र लक्षणसमन्वय इति। अन्यतरत्वेन संसर्गताऽस्वीकारे तादृशान्यतरवत्ग्रहनिष्ठप्रतिबध्यत्वेत्येव निवेश्यतामिति, नचैकत्र द्वयमिति रीत्या पर्वतो वह्निमान् घटवानिति ज्ञानमादाय घटाभाववत्पर्वतेऽतिव्याप्तिरिति वाच्यं, समूहालम्बनरीत्याऽतिव्याप्तेः ग्रन्थकृतैवाभिधानादिति चेन्न, प्रकारमुद्रया तस्य निवेशासम्भवात् व्यापकत्वस्य प्रतिबध्यतायां निवेशपक्षे तन्निवेशसम्भव इत्यनुपदमेव विवेचयिष्यतीति।

अथ तादृशकार्यताविशिष्टग्रहत्वव्यापकत्वं प्रतिबध्यतायां निवेशेनैव सामञ्जस्ये समूहालम्बनानुमितिपरमिति कल्पान्तरानुसरणस्य कुतो न वैयर्थ्यम्, वैशिष्ट्यं च

स्वनिरूपिताश्रयत्वस्वनिरूपितकारणताश्रयत्वोभयसम्बन्धेन तथा च पक्षः साध्यवान् साध्यव्याप्यहेतुमाँश्चेति समूहालम्बनग्रहमादाय सर्वत्र लक्षणसमन्वय इति चेन्न, साधारण्यानुपसंहारित्वयोरव्याप्तेः, चालनीन्यायेन परस्परमन्वयपरामर्शाव्यवहितोत्तरतादृशानुमितित्वावच्छिन्नयत्किञ्चित्कार्यताविशिष्टान्वयव्याप्तिविशिष्टहेतुमान् पक्षःसाध्यवानिति ज्ञानेऽनुपसंहारित्वनिश्चयप्रतिबध्यत्वस्य एवं व्यतिरेकपरामर्शाव्यवहितोत्तरानुमितित्वावच्छिन्नयत्किञ्चित्कार्यताविशिष्टहेतुमान् पक्षः साध्यवानिति ज्ञाने साधारण्यविषयकनिश्चयप्रतिबध्यत्वस्याभावात् । न च कार्यतावैशिष्ट्यं ज्ञानेऽनिवेश्य तादृशप्रतिबध्यतायां निवेश्यतां, प्रतिवध्यतायां कार्यतावैशिष्ट्यं स्वविशिष्टग्रहत्वव्यापकतासम्बन्धेन, ग्रहे कार्यतावैशिष्ट्यं पूर्वोक्तोभयसम्बन्धेन, तथा च प्रत्येकं यत्किञ्चित्कार्यताविशिष्टत्वस्य तत्र प्रतिबध्यतायां सत्त्वान्न व्यापकताभङ्गः, सत्त्वस्याननुगततया स्वपदेन यत्किञ्चित् कार्यताया एव ग्रहणसम्भवात् । ईदृशपरम्परायाः संसर्गत्वास्वीकारे तादृशसम्बन्धस्य प्रकारमुद्रया निवेशः कार्यः, तथा हि प्रकृतहेतुमत्तानिश्चयोत्तरप्रकृतसाध्यहेतुकानुमितित्वावच्छिन्नकार्यतात्वसमानाधिकरणोभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपिततादृशोभयधर्मावच्छिन्नकार्यताव्यक्तिनिष्ठनिरूपितत्व-सम्बन्धावच्छिन्नावच्छेदकतानिरूपिताश्रयत्वनिष्ठावच्छेदकतानिरूपितग्रहनिष्ठावच्छेदकतानिरूपकाश्रयत्वनिष्ठावच्छेदकतानिरूपककार्यत्वनिष्ठावच्छेदकतानिरूपितकारणत्वनिष्ठावच्छेदकतानिरूपितग्रहनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतनिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतात्वावच्छिन्नदप्रतियोगिताकाभाववत्प्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वमिति । तादृशाभावप्रतीतिश्च, तादृशकार्यतामुपादाय तद्व्यक्तिनिरूपिताश्रयत्वकारणत्वग्रहनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति तत्तद्व्यक्तिनिरूपितत्वसम्बन्धेन, आश्रयत्वे कारणत्वे च द्वयोरेकमिति रीत्या पुनः स्वरूपेणाश्रयत्वकारणत्वयोर्ग्रहे एकत्र द्वयमिति रीत्यावगाहिप्रतीतिनिरूपितकारणत्वस्यैव संसर्गत्वमिति मते कारणतात्वेनाश्रयत्वेन संसर्गत्वे निरूपितकारणत्वं निरूपिताश्रयत्वञ्च नियामकमिति तादृशतद्व्यक्तिनिष्ठाश्रयत्वकारणत्वोभयसम्बन्धावच्छिन्नावच्छेदकतानिरूपितग्रहनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरू-

पितेत्यादिक्रमेणैव निवेशो बोध्यः। तद्वयक्तेरुक्तोभयसम्बन्धेन ग्रहांशेऽवगाहिप्रतीतिसिद्धः, परम्परायाः संसर्गत्वाऽस्वीकारे प्रकारमुद्रया निवेशश्च वक्ष्यमाणरीत्या बोध्यः। तथा चेह स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टान्यत्वं नोभयावृत्तित्वं, किन्त्वेकत्ववदन्यावृत्तित्वं, तच्च यद्यप्यप्रसिद्धं एकत्ववदन्याप्रसिद्धेः, एकत्वस्य केवलान्वयित्वात्। तथापि एकत्वादिव्यक्तेः स्वरूपतो भानमवलम्ब्य यत्किञ्चिदेकत्वव्यक्तिमुपादाय तद्वयक्तिनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितवृत्तितात्वावच्छिन्नवृत्तितानिष्ठप्रतियोगिताकाभाववत्त्वमिति न पूर्वोक्तदोष इति वाच्यं, तथापि धूमव्याप्यवान् धूमव्याप्यवह्निमान् धूमव्याप्यालोकवान् इत्यादि हेतुतावच्छेदकावगाहितदनवगाहिनानाविधज्ञानानां (परामर्शानां) धूमाभाववदवृत्तित्वावच्छिन्नप्रकारतानिरूपितविशेष्यताशालिनिश्चयत्वेनैकरूपेणैव कारणतया यत्किञ्चित्कार्यताविशिष्टत्वस्य सकलपरमर्शात्मकज्ञाने सत्त्वेन तद्वयापकत्वस्य धूमाभाववद्वृत्तिर्वह्निरिति व्यभिचारज्ञानप्रतिबध्यताया असत्त्वात् उक्तव्यभिचारादावव्याप्तेरिति, अधिकन्तु प्रकारतात्वेनानुगमय्य निवेशनन्तु न सम्भवतीत्यत्र प्रपञ्चयिष्याम इति ध्येयम्।

## गादाधरी

अत्र पर्वतो वह्निमान् ह्रदश्च तथेत्यादिसमूहालम्बनानुमित्यादिविरोधिह्रदनिष्ठवह्न्यभावादिरूपबाधादेः पर्वतादौ धूमादिना वह्न्यादिसाधने दोषताप्रसङ्गः।

## विमलप्रभा

अनुमितिनिष्ठकार्यतासाक्षात्कारजनकेत्यादि प्रथमकल्पपरित्यागे हेतुमाह "अत्रेत्यादिना"। अत्र—अस्मिन् कल्पे, साक्षात्कारजनकेत्यादिकल्पे इति यावत्। तथा—वह्निमान्। दोषताप्रसङ्गः—दोषत्वापत्तिः, अतिव्याप्तिरिति यावत्। अयमर्थः। कार्यतासाक्षात्कारेत्यादिकल्पे पर्वतो वह्निमान् धूमादित्यत्र, वह्न्यभाववद्ध्रदरूपोदासीनेऽतिव्याप्तिः, पर्वतो वह्निमान् ह्रदश्च वह्निमानित्याकारकस-

मूहालम्बनानुमितिनिष्ठा या वह्निव्याप्यधूमवान् पर्वतः वह्निव्याप्यधूमवान् ह्रद इत्याकारकपरामर्शनिरूपिता कार्यता तादृशकार्यतासाक्षात्कारः निरुक्तपरामर्शकार्येयमनुमितिरित्याकारकः, तज्जनकसाक्षात्कारः पर्वतो वह्निमान् ह्रदश्च वह्निमानित्यनुमितिसाक्षात्कारः तत्कारणवह्निव्याप्यधूमवान् पर्वतः वह्निव्याप्यधूमवान् ह्रद इति परामर्शसाक्षात्कारश्चेति तादृशसाक्षात्कारीयविषयताश्रयग्रह – ( चतुष्टय ) निष्ठवह्नित्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपिता या वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकता तच्छालियथार्थज्ञानविषयत्वस्य वह्न्यभाववद्धृदे सत्त्वात् ।

## गादाधरी

प्रकृतानुमितिनिष्ठकार्यतासम्बन्धिग्रहत्वस्य कस्यापि प्रतिबध्यतानवच्छेदकतया तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानिवेशासम्भवात् तथाविधग्रहत्वव्यापकप्रतिबध्यतानिवेशे चानुमित्यविरोधिनि व्यभिचारादौ परामर्शाविरोधिनि बाधादौ चाव्याप्तिः, उभयविरोधिपक्षाऽप्रसिद्ध्यादावेव तादृशप्रतिबध्यतानिरूपकज्ञानविषयत्वसत्त्वात् अतः कल्पान्तरमाह—साध्यव्याप्येति ।

## विमलप्रभा

कस्यापि—दोषनिश्चस्य । प्रतिबध्यतानवच्छेदकतया—पक्षविशेष्यकसाध्यप्रकारकग्रहत्वसाध्यव्याप्यहेतुप्रकारकग्रहत्वापेक्षया तादृशकार्यतासाक्षात्कारजनकसाक्षात्कारीयविषयताश्रयग्रहत्वस्य गुरुत्वेनानवच्छेदकतया । तदवच्छिन्नप्रतिबध्यता—तादृशसाक्षात्कारीयविषयताश्रयग्रहत्वावच्छिन्ना प्रतिबध्यता । तथाविधग्रहत्वं—अनुमितिनिष्ठकार्यतासाक्षात्कारजनकसाक्षात्कारविषयताश्रयज्ञानत्वं । अनुमित्यविरोधिनि—पक्षधर्मिकसाध्यप्रकारकानुमितिप्रतिबन्धकयथार्थज्ञानाविषये । परामर्शाविरोधिनि—परामर्शप्रतिबन्धकयथार्थज्ञानाविषये । अव्याप्तिः—लक्षणागमनप्रसङ्गः. उभयविरोधिपक्षाऽप्रसिद्ध्यादौ—अनुमितिपरामर्शोभ-

यप्रतिबन्धकयथार्थज्ञानविषये पक्षाऽप्रसिद्धिसाध्याऽप्रसिद्ध्यादौ । तादृशप्रतिबध्यता—निरुक्तसाक्षात्कारजनकविषयताश्रयग्रहत्वव्यापकप्रतिबध्यता । अतः—अव्याप्तिरूपदोषतः । कल्पान्तरं—द्वितीयकल्पम् । आह—शिरोमणिरिति शेषः । अयमर्थः । पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभाववद्धूदरूपोदासीनेऽतिव्याप्तिवारणाय यदि अनुमितिनिष्ठकार्यतासाक्षात्कारजनकसाक्षात्कारविषयताश्रयग्रहत्वावच्छिन्नप्रतिबध्यतानिरुपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं हेत्वाभासत्वमिति लक्षणार्थः क्रियते तदा ह्रदो वह्न्यभाववानिति बाधज्ञाननिष्ठप्रतिबन्धकतानिरूपितह्रदो वह्निमानित्याकारकानुमितिनिष्ठप्रतिबध्यतायां पर्वतो वह्निमानित्यनुमितिनिष्ठा या कार्यता तादृशकार्यतानिरुपकसम्बन्धिग्रहत्वावच्छिन्नत्वाभावेन ( प्रतिबध्यतातिरिक्तज्ञानेऽपि तादृशग्रहत्वस्य वर्त्तमानतया न तदवच्छिन्नत्वं प्रतिबध्यतायां ) तादृशप्रतिबध्यतायाः निरुक्तप्रतिबध्यतापदेन धर्त्तुमशक्यतया न पर्वतो वह्निमान् धूमादित्यत्र वह्न्यभाववद्धूदरूपोदासीनेऽतिव्याप्तिरित्युच्यते तदा सर्वत्रासम्भवप्रसङ्गः, पक्षविशेष्यकसाध्यप्रकारकबुद्धित्वसाध्यव्याप्यहेतुप्रकारकबुद्धित्वरूपलघुधर्मापेक्षया निरुक्तानुमितिनिष्ठकार्यताप्रत्यक्षजनकप्रत्यक्षविषयताश्रयग्रहत्वस्य गुरुधर्मतया तादृशगुरुधर्मावच्छिन्नप्रतिबध्यत्वाऽप्रसिद्ध्या तादृशप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य सुतरामप्रसिद्धत्वात् । न च प्रकृतानुमितित्वावच्छिन्नकार्यताप्रत्यक्षजनकप्रत्यक्षविषयताश्रयग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानयिषयत्वस्य लक्षणार्थत्वे, पर्वतो वह्निमान् धूमादित्यादौ न वह्न्यभाववद्धूदेऽतिव्याप्तिः समूहालम्बनानात्मककेवलपर्वतो वह्निमानित्यनुमितावपि तादृशग्रहत्वस्य वर्त्तमानतया तत्र वह्न्यभाववद्धूदविषयकनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यत्वाभावेन निरुक्तप्रतिबध्यतायास्तादृशग्रहत्वव्यापकप्रतिबध्यतापदेन धर्त्तुमशक्यत्वान्न तत्र वह्न्यभाववद्धूदेऽतिप्रसङ्गः ।

काञ्चनमयह्रदो वह्निमान् जलादित्यादौ काञ्चनमयत्वाभाववद्धूदरूपपक्षाऽप्रसिद्धिविषयकनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतायाः काञ्चनमयह्रदो वह्निमानित्यनुमितौ काञ्चनमयह्रदो वह्निव्याप्यजलवानितिपरामर्शे च वर्त्तमानतया ( प-

क्षाऽप्रसिद्ध्यादेरुभयप्रतिबन्धकतेति सिद्धान्तेनेदं ) तादृशाग्रहत्वव्यापकप्रतिबध्यतानिरूपितकाञ्चनमयत्वाभाववद्धूदविषयकनिश्चयनिष्ठप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य काञ्चनमयत्वाभाववद्धूदरूपपक्षाऽप्रसिद्ध्यादौ सत्वान्नासम्भव इति वाच्यं, प्रोक्तरीत्याऽतिप्रसङ्गासम्भवादेः निवारणसम्भवेऽपि बाधव्यभिचारादावव्याप्तिर्दुर्वारैव स्यात्, तथा हि ह्रदो वह्निमान् जलादित्यादौ वह्न्यभाववद्धूदरूपबाधे वह्न्यभाववद्वृत्तिजलरूपव्यभिचारे च, ह्रदो वह्निमानित्यनुमितौ वह्निव्याप्यजलवान् इति परामर्शे चानुमितिनिष्ठकार्यताप्रत्यक्षजनकप्रत्यक्षविषयताश्रयग्रहत्वस्य वर्त्तमानतया तत्रानुमितौ व्यभिचारनिश्चयप्रतिबध्यतायाः, परामर्शे च बाधनिश्चयप्रतिबध्यताया अभावेन निरुक्तग्रहत्वव्यापकप्रतिबध्यतापदेनैतादृशप्रतिबध्यतायाः धर्त्तुमशक्यतया तन्निरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वाभावादतः कल्पान्तरमाह—साध्यव्याप्ये-दिना ।

## बलदेवी

न चानुमितित्वावच्छिन्नकार्यतासाक्षात्कारजनकसाक्षात्कारीयविषयतावत्त्वे सति मुख्यविशेष्यताद्वयशून्यग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतेत्यादिरीत्या निवेशेनैव, पर्वतो वह्निमान् ह्रदश्च तथेत्याकारकज्ञाने मुख्यविशेष्यताद्वयशून्यत्वाभावेन मुख्यविशेष्यताशून्यतादृशज्ञानपदेन तादृशज्ञानस्य वारणासम्भवान्नोदासीनेऽतिप्रसङ्ग इति कल्पान्तरानुसरणं व्यर्थमिति वाच्यं, पर्वतो वह्निमान् धूमादित्यादौ पर्वतो वह्निव्याप्यधूमघटवानित्येकत्र द्वयमितिन्यायेन तादृशज्ञाने मुख्यविशेष्यताद्वयशून्यत्वं वर्त्तते, तथा तादृशसाक्षात्कारीयविषयतापि वर्त्तत इति तादृशज्ञानमादाय घटाभाववत्पर्वतेऽतिव्याप्तिः । न च प्रकारताविशिष्टविशेष्यताशून्यत्वस्य तदर्थत्वे नैवातिप्रसङ्गभङ्गः, वैस्वनिरूपितत्वस्वेतरप्रकारतानिरूपितत्वोभयसम्बन्धेन तथा चैकत्र द्वयमिति रीत्या तादृशज्ञानीयविशेष्यतायां स्वनिरूपितत्वस्वेतरघटनिष्ठप्रकारतानिरूपितत्वोभयसम्बन्धेन वह्नित्वावच्छिन्नप्रकारताविशिष्टत्वसत्त्वेन प्रकारताविशिष्टविशेष्यताशून्यग्रहपदेन तादृगज्ञानस्य धारणासम्भवात् इति वाच्यं, निरुक्तसाक्षात्कारीयविषयताश्रयीभूतप्रकारताविशिष्टविशेष्यताद्वयशून्यग्रहपदेन वह्निमत् पर्वतकालीनघटाभाववत् [illegible]मित्याकारकज्ञानमादाय तादृशज्ञाननिष्ठप्रतिबध्यतानिरूपितप्रतिब-

न्धकताशालियथार्थज्ञानविषयत्वस्य घटवद्भूतलरूपोदासीने सत्त्वेन तत्रातिप्रसङ्गात्। न च तादृशज्ञाने स्वनिरूपितत्वस्वेतरनिरवच्छिन्नभूतलत्वप्रकारतानिरूपितत्वोभयसम्बन्धेन घटाभावप्रकारताविशिष्टविशेष्यताशून्यत्वाभावेन न तादृशज्ञानमादायातिव्याप्तिरिति वाच्यम्, सावच्छिन्नभूतलत्वावच्छिन्नविशेष्यतायां निरवच्छिन्नप्रकारतानिरूपितत्वास्वीकारात्, तथा चातिव्याप्तिस्तदवस्थैवेति।

अथ वा यादृशस्थलविशेषे ह्रदो वह्निमानित्यनुमितिः घटवद्भूतलमितिज्ञानसहकारेणैव संजाता तादृशस्थलीयदोषाणां संग्रहाभावात्, तत्र समूहालम्बनज्ञाने निरुक्तविशेष्यताद्वयशून्यत्वविरहेण तादृशज्ञानस्य धारणासम्भवादतः कल्पान्तरानुसरणं कृतमिति।

## दीधितिः

साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारकानुमितिपरं वा।

## गादाधरी

प्रकृतपक्षतावच्छेदकविशिष्टपक्षे प्रकृतसाध्यतावच्छेदकावच्छिन्नतद्व्याप्तिविशिष्टप्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारकानुमितिसामान्यपरमित्यर्थः। एवञ्च समूहालम्बनानुमितेर्व्याप्त्यादिविषयकतया व्यभिचारादिज्ञानप्रतिबध्यत्वान्न व्यभिचाराद्यसंग्रहः।

## विमलप्रभा

तद्व्याप्तिः = प्रकृतसाध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तिः। एवञ्च = अनुमितिपदस्यैतादृशानुमितिपरामर्शोभयपरत्वप्रतिपादाने च। समूहालम्बनानुमितेः = साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्यनुमितेः। व्याप्त्यादिविषयकतया = व्याप्तित्वावच्छिन्नप्रकारतानिरूपितहेतुसाध्यप्रकारकतया। व्यभिचारादिज्ञानप्रतिबध्यत्वात् = व्यभिचारादिज्ञाननिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यताशालित्वात्। न व्यभिचाराद्यसङ्ग्रहः = न व्यभिचारस्थलादावव्याप्तिः। अयमर्थः। प्रथमलक्षणघटकानुमि-

तिपदं = साध्यव्याप्यहेतुमान् पक्षस्साध्यवान् इत्याकारकसमूहालम्बनाऽनुमितिपरम्, तथा च प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यनिरूपितव्याप्तिविशिष्टप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुप्रकारताकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं हेत्वाभासत्वमिति लक्षणार्थः। एवञ्च ह्रदपक्षकवह्निसाध्यकजलहेतुकस्थले ह्रदो वह्निमान् जलादित्यत्र ह्रदत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसम्बन्धावच्छिन्नप्रकारताक एवं वह्नित्वावच्छिन्नवह्निनिरूपितव्याप्तिविशिष्टजलत्वावच्छिन्नप्रकारताक ह्रदो वह्निमान् वह्निव्याप्यजलवानित्याकारकानुमितित्वव्यापकप्रतिबध्यतानिरूपितवह्न्यभाववद्वृत्तिजलत्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य वह्न्यभाववद्वृत्तिजलरूपव्यभिचारे, एवं तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितवह्न्यभाववद्ह्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य वह्न्यभाववद्ह्रदरूपबाधे च सत्त्वात् बाधे व्यभिचारे च सर्वत्र लक्षणसंगतिः।

## गादाधरी

दर्शितसमूहालम्बनानुमितिप्रतिबन्धकतामादाय दर्शितातिप्रसङ्गवारणाय सामान्यपदं। तथा च तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं पर्यवसितोऽर्थः। एवञ्च साध्यतावच्छेदकावच्छिन्नादिप्रकारकानुमितिसामान्यान्तर्गतायां पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याद्यनुमितौ ह्रदो न वह्निमानित्यादिनिश्चयस्याप्रतिबन्धकत्वान्नातिप्रसङ्गः।

## विमलप्रभा

सामान्यपदस्य फलमुपपादयन्नुक्तातिव्याप्तिमपाकरोति—दर्शितेति। दर्शितसमूहालम्बनानुमितिः = पर्वतो वह्निमान् ह्रदश्च वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकसमूहालम्बनानुमितिः। दर्शितातिप्रसङ्गस्य = पर्वतो वह्निमान् धूमादित्यत्र वह्न्यभाववद्ध्रदेऽतिव्याप्तेः। वारणाय = निरासाय। सामान्यपदं = देयमिति शेषः।

तथा च = सामान्यपददाने च। तादृशानुमितिः = पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकसाध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकसाध्यतावच्छेदकावच्छिन्नसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नहेतुकसमूहालम्बनानुमितिः पर्यवसितार्थः प्रथमलक्षणस्येति शेषः। एवं च = व्यापकतानाचिसामान्यपददाने च। अयमर्थः। व्यापकत्वार्थकसामान्यपदस्यानुपादाने पर्वतो वह्निमान् ह्रदश्च वह्निव्याप्यधूमवान् इत्याकारकानुमितिनिष्ठप्रतिबन्धतानिरूपिता या वह्न्यभाववान् ह्रद इत्याकारकनिश्चयनिष्ठा प्रतिबन्धकता तच्छालियथार्थज्ञानविषयत्वस्य वह्न्यभाववद्ध्रदे सत्त्वात् पर्वतो वह्निमान् धूमादित्यत्र वह्न्यभाववद्ध्रदरूपोदासीनेऽतिव्याप्तिरतस्तदुपात्तं। तथा च पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकानुमितित्वस्य वह्निमद्ध्रदाविषयककेवलपर्वतो वह्निमान् वह्निव्याप्यधूमवानित्याकारकानुमितावपि वर्त्तमानतया तत्र वह्न्यभाववद्ध्रदरूपोदासीननिर्णयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यत्वाभावेन पर्वतो वह्निमान् वह्निव्याप्यधूमवानित्याकारकानुमितित्वव्यापकत्वस्यवह्न्यभाववद्ध्रदरूपोदासीनप्रतिबध्यतायामभावात् तादृशप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्योक्तोदासीने सुतरामसत्त्वान्नातिप्रसङ्ग इति भावः।

## गादाधरी

बाधसत्प्रतिपक्षस्वरूपासिद्ध्याश्रयासिद्धिषु अव्याप्तिवारणाय प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकत्वनिवेशः। द्रव्यत्वादिना ह्रदादिविशेष्यकानुमितौ तथाविधबाधनिश्चयस्याप्रतिबन्धकत्वात्तद्दोषतादवस्थ्यमतः पक्षतावच्छेदकावच्छिन्नत्वोपादानम्।

## विमलप्रभा

अव्याप्तिवारणाय = बाधदिरूपलक्ष्ये लक्षणागमननिरासाय। निवेशः = कृत इति शेषः। द्रव्यत्वादिना ह्रदादिविशेष्यकानुमितौ = द्रव्यत्वेन द्रव्यं वह्निमत् वह्निव्याप्यधूमवच्चेत्यनुमितौ। तथाविधबाधनिश्चयस्य-वह्न्यभाववान् ह्रद इति बाधनिश्चयस्य। अप्रतिबन्धकत्वात् = प्रतिबन्धकताविरहात्। तद्दोषतादवस्थ्यं = बाधादावव्याप्तिस्तदस्थैव। अतः = अव्याप्तितादवस्थ्यात्। उपादानं कृतमिति शेषः। अयमर्थः। प्रकृतपक्षता-

वच्छेदकावच्छिन्नपक्षविशेष्यकत्वानुपादाने केवलसाध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकनादृशसाध्यव्याप्यहेतुतावच्छेदकावच्छिन्नहेतुप्रकारकानुमितित्वव्यापकेत्यादिरीत्या लक्षणाकरणे काञ्चनमयह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टकाञ्चनमयह्रदरूपबाधे, वह्न्यभावव्याप्यविशिष्टकाञ्चनमयह्रदरूपसत्प्रतिपक्षे, धूमाभाववत्काञ्चनमयह्रदरूपस्वरूपासिद्धौ काञ्चनमयत्वाभाववद्ध्रदरूपाश्रयासिद्धौ चाव्याप्तिः, वह्नित्वावच्छिन्नप्रकारकवह्नित्वावच्छिन्ननिरूपितव्याप्तिविशिष्टधूमत्वावच्छिन्नप्रकारकानुमितित्वस्य भूतलं वह्निमत् वह्निव्याप्यधूमवच्चेत्यनुमितावपि वर्त्तमानतया तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतायाः निरुक्तबाधादिनिर्णये विरहेण तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्यबाधसत्प्रतिपक्षस्वरूपासिद्ध्याश्रयासिद्ध्यादिष्वभावात् ।

तदुपादाने च प्रकृते पक्षतावच्छेदकं यत् काञ्चनमयह्रदत्वं तदवच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकवह्नित्वावच्छिन्ननिरूपितव्याप्तिविशिष्टधूमत्वावच्छिन्नप्रकारकानुमितिः काञ्चनमयह्रदो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारिकैवानुमितिस्तादृशानुमितित्वव्यापकप्रतिबध्यतातिरूपितप्रतिबन्धकतायाः वह्न्यभाववान् काञ्चनमयह्रद इति बाधनिश्चये, वह्न्यभावव्याप्यवान् काञ्चनमयह्रद इति सत्प्रतिपक्षनिर्णये, धूमाभाववान् काञ्चनमयह्रद इति स्वरूपासिद्धिनिश्चये काञ्चनमयत्वाभाववान् ह्रद इत्याश्रयासिद्धिनिश्चये च वर्त्तमानतया तादृशप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य बाधादौ सर्वत्र सत्त्वात् नाव्याप्तिरिति ।

न च बाधादावव्याप्तिवारणाय पक्षविष्यताकत्वस्यैवानुमितौ निवेशे भूतल वह्निमदित्यनुमितेः पक्षविशेष्यकत्वाभावेन ( भूतलादेः पक्षतात्मकतया भूतलादिविशेष्यकानुमितौ पक्षविशेष्यकसाध्यप्रकारकानुमितित्वाभावेन ) काञ्चनमयह्रदविशेष्यकवह्निप्रकारकवह्निव्याप्यधूमप्रकारकानुमितेरेव पक्षविशेष्यकसाध्यादिप्रकारकानुमितितया तादृशानुमितिप्रतिवन्धकयथार्थज्ञानविषयत्वस्व बाधादौ सत्त्वात् लक्षणसमन्वयसम्भवे प्रकृतपक्षतावच्छेदकप्रवेशो व्यर्थ एवेति वाच्यं, तथा सति पक्षविशेष्यकसाध्यप्रकारकसाध्यव्याप्यहेतुप्रकारकानुमितिसामान्यान्तर्गता या द्रव्यं वह्निमद्

वह्निव्याप्यधूमवच्चेत्यनुमितिस्तादृशानुमितेरपि प्रकृतपक्षसाध्यहेतुकत्वेन तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतायाः वह्न्यभाववान् काञ्चनमयह्रद इति बाधनिश्चये वह्न्यभावव्याप्यवान् काञ्चनमयह्रद इति सत्प्रतिपक्षनिश्चये धूमाभाववत्काञ्चनमयह्रदरूपस्वरूपासिद्धिनिर्णये काञ्चनमयत्वाभावद्ध्रदरूपाश्रयासिद्धिश्चये चाभावेन ( अनुमितिमध्ये ह्रदरूपपक्षस्य द्रव्यत्वेन भानम्, बाधादिनिर्णये च ह्रदत्वादिनेति न तादृशानुमितिबाधादिज्ञानयोः समानाकारकत्वेन प्रतिबध्यप्रतिबन्धकभाव इति ) तादृशप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्योक्तबाधादावभावादव्याप्तिस्तदवस्थैव स्यादतः प्रकृतपक्षतावच्छेदकत्वावच्छिन्नत्वस्य निवेशः कार्यः, तथा च प्रकृते पक्षतावच्छेदकं यत् कञ्चनमयह्रदत्वं तादृशह्रदत्वावच्छिन्नपक्षकानुमितिर्न द्रव्यं वह्निमदित्यनुमितिः किन्तु काञ्चनमयह्रदो वह्निमान् वह्निव्याप्यधूमवानित्येवानुमितिस्तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रोक्तबाधादिनिर्णयनिष्ठप्रतिबन्धकताशालियथार्थज्ञानविषत्वस्य बाधसत्प्रतिपक्षादौ सत्वान्नाव्याप्तितादवस्थ्यसम्भावनेति भावः ।

## बलदेवी

बाधसत्प्रतिपक्षस्वरूपासिद्ध्याश्रयासिद्धिष्वव्याप्तिवारणायेति भट्टाचार्येणोक्तम् । नन्वत्र प्रकृतपक्षकत्वानिवेशेऽसाधारण्याऽसंग्रहात् तदप्रदर्शनेन ग्रन्थस्य न्यूनता, यदि यथाकाममेकमिति रीत्यैवाभिधानम् तदा बाधादिचतुष्टयेष्वव्याप्त्यभिधानमनुचितमिति चेन्न, प्रकृतपक्षत्वाऽनिवेशेऽपि नासाधारण्येऽव्याप्तिः, तथा हि प्रकृतानुमितित्वव्यापकत्वं प्रतिबध्यतायां न स्वरूपसम्बन्धेन विवक्षणीयं, येन ह्रदो वह्निमान् घटो वह्निमानित्यादिनानाविधसमूहालम्बनानुमितित्वव्यापकवह्निव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्यनिश्चयप्रतिबध्यत्वस्याऽप्रसिद्ध्याऽव्याप्तिः स्यात्, किन्तु स्वनिरूपितप्रतिबन्धकतावच्छेदकविषयतात्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वसम्बन्धेन वाच्यम् । तथा चासाधारणनिश्चयप्रतिबध्यतायाः स्वनिरूपितपक्षधर्मिकहेतुमत्ताज्ञानकालीनज्ञानीयासाधारण्यविषयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वसम्बन्धेन पर्वतघटपटादिधर्मिकवह्न्यनुमितिषु विद्यमानत्वात्, वह्न्यभाववद्ध्रदादिरूपबाधादिनिश्चयप्रतिबध्यतायाश्च घटादिधर्मिकवह्न्याद्यनुमितिषु

उक्तसम्बन्धेनासत्त्वेन बाधाद्यसंग्रहात् । न च पर्वतो वह्निमान् धूमादित्यत्र वह्निव्यापकीभूताभावप्रतियोगित्वेऽतिव्याप्तिः, वह्निव्यापकीभूताभावनिरूपिताभाववत्प्रतियोगित्वमित्यादिज्ञानत्वावच्छिन्ना या प्रतिबध्यता तन्निरूपितबन्धकतावच्छेदकीभूता या वह्निव्यापकीभूताभावप्रतियोगिधूम इति ज्ञानीयवह्निव्यापकीभूताभावप्रतियोगित्वविषयता तदवच्छिन्ना या घटो धूमवानिति ज्ञानकालीनवह्निव्यापकीभूताभावप्रतियोगिधूम इति निश्चयनिष्ठाप्रतिबन्धकता तन्निरूपितबध्यतायाः घटादिधर्मिकघटो वह्निमानित्यादिसमूहालम्बनानुमितौ सत्त्वेन निरुक्तप्रतिबध्यताया उक्तसम्बन्धेनोक्तसमूहालम्बनानुमितित्वव्यापकत्वादिति वाच्यं, स्वनिरूपितप्रतिबन्धकतावच्छेदकविषयितानिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभाववदवच्छेदकतानिरूपकप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वस्य संसर्गतास्वीकारात्, एवञ्च वह्निव्यापकीभूताभावनिरूपितत्वाभाववत्प्रतियोगित्वमिति . बुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूता या वह्निव्यापकीभूताभावनिरूपितत्ववत्प्रतियोगित्वमिति निश्चयीया तादृशप्रतियोगित्वविषयता तत्र वह्निमत्ताबुद्धिप्रतिबन्धकतावच्छेदककीभूतायाः वह्निव्यापकीभूताभावप्रतियोगिधूम इति निश्चयीयधूमत्वाववच्छिन्नविशेष्यतानिरूपितप्रकारतात्मकतादृशप्रतियोगित्वविषयतायाः भेदसत्त्वेन तादृशविषयतात्वव्यापकावच्छेदकताकप्रतिबन्धकतानिरूपितप्रतिबध्यतायाः पर्वतो वह्निमानित्यनुमितावसत्त्वेनातिव्याप्तिविरहात् । असाधारण्यनिश्चयप्रतिबन्धकतावच्छेदकविषयतासामान्यस्यैव घटपटादिपक्षकानुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकतया तत्संग्रहः ।

न च ह्रदो वह्निमान् जलादित्यादौ जलाभाववान् वह्निमान् ह्रदो वह्निमानित्यनुमितेरपि लक्षणघटकतया तत्र चासाधारण्यनिश्चयप्रतिबध्यत्वं नास्ति, तत्र पक्षतावच्छेदकावच्छिन्नत्वाऽनिवेशे जलाभावावच्छिन्ने हेतुमत्ताज्ञानस्याहार्यतया तत्कालीनासाधारण्यनिश्चयस्याप्रतिबन्धकतया कथमसाधारण्यसंग्रह इति वाच्यम् । पक्षतावच्छेदकावच्छिन्नत्वानिवेशे यत्किञ्चिद्धर्मविशिष्टानुमितित्वव्यापकत्वस्य प्रतिबध्यतायां निवेशनीयत्वात् । अनुमितौ वैशिष्ट्यञ्च स्वावच्छिन्नविशेष्यतानिरूपितसाध्यप्रकारताकत्व-

स्वावच्छिन्नविशेष्यतानिरूपितसाध्यव्याप्यहेतुप्रकारकत्वोभयसम्बन्धेन। तथा च जलाभाववान् वह्निमान् ह्रदो वह्निव्याप्यजलवानित्यनुमितिर्न जलाभावरूपधर्मविशिष्टा न वा ह्रदत्वविशिष्टा भवति, (प्रथमे द्वितीयसम्बन्धाभावात् द्वितीये प्रथमसम्बन्धाभावात्) भवति च ह्रदो वह्निमान् वह्निव्याप्यजलवानित्यनुमितिरेव ह्रदत्वविशिष्टेति, तादृशप्रतिबध्यतामादाय लक्षणसमन्वयः।

एतादृशपरम्परायाः संसर्गत्वाऽस्वीकारे तु प्रकारमुद्रया निवेशः करणीयः, तथा हि यत्किञ्चित्प्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयितासामान्यावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावान्नेति प्रतीतिसिद्धो यः प्रकृतानुमितिनिष्ठो भेदः तन्निरूपिताऽधिकरणनिष्ठप्रतियोगितानिरूपितप्रतिबध्यत्वनिष्ठावच्छेदकतानिरूपित्वसम्बन्धावच्छिन्नप्रतिबन्धकत्वनिष्ठावच्छेदकतानिरूपितनिरूपकत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतानिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकत्वनिष्ठाच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितप्रतिबन्धकत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितप्रतिबध्यत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकत्वाभाववत्प्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वमिति समुदितलक्षणार्थः। अत्रेतरवारकपर्याप्तिनिवेशस्तु स्वयं रचनीयः।

अथ वा पक्षतावच्छेदकावच्छिन्नत्वाऽनिवेशे असाधारण्यादावव्याप्तिशङ्कैव नावतरति, यद्यद्रूपावच्छिन्नविषयताशालिनिश्चयसामान्ये प्रकृतानुमित्यप्रतिबन्धकत्वासाधारण्यविषयताशून्यत्वोभयाभावस्तद्रूपावच्छिन्नत्वमिति लक्षणस्य स्ववमेवाभिहितत्वात्।

परे तु ननु पक्षतावच्छेदकावच्छिन्नत्वानिवेशे यावन्तो दोषाः सम्भवन्ति तावद्दोषदानं कृतम्, अन्यथा एकदोषदानेनेव सार्थक्यसम्भवे दोषान्तरोद्भावनं व्यर्थमेव स्यात्, तथा चासाधारण्ये दोषाऽदानेन न्यूनतेति चेन्न, किञ्चिद्धर्मविशिष्टानुमितित्वव्यापकत्वं

प्रतिबन्धकतायां निवेश्यं, तादृशप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं लक्षणार्थः, वैशिष्ट्यं च स्वावच्छिन्नविशेष्यतानिरूपितसाध्यप्रकारताकत्वस्वावच्छिन्नविशेष्यतानिरूपितसाध्यव्याप्यहेतुप्रकारताकत्वोभयसम्बन्धेन । व्यापकताघटकसम्बन्धश्च स्वावच्छेदकविषयित्वावच्छिन्नप्रतिबन्धकतानिरूपिकप्रतिबध्यतावत्त्वरूप एव । एवञ्चासाधारण्यविषयकयथार्थज्ञानीयप्रतिबन्धकतायां वह्निव्यापकीभूताभावप्रतियोगिजलं जलवान् ह्रदः तादृशप्रतियोगिजलं जलवान् घट इत्यादिनानानिश्चयस्य प्रत्येकं ह्रदो वह्निमान् घटो वह्निमानित्यादिबुद्धिम्प्रति प्रतिबन्धकतया तत्र सकलप्रतिबन्धकतावच्छेदककुक्षौ वह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविषयितायाः निविष्टतया समानाकारकज्ञानीयविषयताया ऐक्येन तादृशासाधारण्ये लक्षणसंगतिः । धर्मविशिष्टानुमितित्वव्यापिका या जलवान ह्रदः घटः पटः इत्यादिनिश्चयकालीनवह्निव्यापकीभूताभावप्रतियोगिजलमिति निश्चयनिष्ठाप्रतिबन्धकता प्रत्येकं तन्निरूपितप्रतिबध्यतायाः सकलानुमितिषु सत्त्वात् ।

न च वह्न्यभाववान् वह्न्यभाववान् ह्रद इत्याकारकनिश्चयविशिष्टज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताया अपि तुल्ययुक्त्या निरुक्तसम्बन्धेन धर्मविशिष्टानुमितित्वव्यापकत्वात् तत्प्रतिबन्धकतामादायैव बाधादावपि लक्षणसमन्वयसम्भवेऽव्याप्तिदानमसङ्गतमिति वाच्यं, तादृशनिश्चये विशिष्टविषयकत्वेनैव प्रतिबन्धकतास्वीकारात् । अथ वा तादृशानुमितित्वव्यापकप्रतिबन्धकतायामसाधारण्यविषयत्वानवच्छिन्नत्वज्ञानवैशिष्ट्यानवच्छिन्नत्वोभयाभाववत्त्वस्य विवक्षणीयत्वात् । न च तथापि ज्ञानवैशिष्ट्यानवच्छिन्नैव या वह्न्यभाववान् ह्रद इति ज्ञानसाधारणह्रदो वह्निमानिज्ञानीयप्रतिबन्धकता तदवच्छेदकवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयत्वावच्छिन्ना वह्न्यभाववान् वह्न्यभाववान् वह्न्यभाववद्ध्रदवान् वह्न्यभाववान् वह्न्यभाववान् ह्रदः घटः पट इत्यादिनानानिश्चयनिष्ठप्रतिबन्धकता तन्निरूपितप्रतिबध्यतायाः सकलतादृशानुमितौ सत्त्वेन व्यापकत्वमक्षतमेवेति कुतो बाधादावव्याप्तिरिति बाध्यतुल्ययुक्त्या वह्न्यभाववद्घटादावतिव्याप्तिः, वह्न्यभाववद्घटत्वावच्छिन्नविषयत्वावच्छिन्ना या वह्न्यभाववद्घटवान् वह्न्यभाववान् घटः पट इत्यादिनानानिश्चयनिष्ठा प्रतिबन्धकता तन्निरूपितप्रतिबध्यतावत्त्वस्य तादृशानुमितिषु सत्त्वेन वह्न्यभाववान् घट इति ज्ञान-

प्रतिबध्यतायामपि व्यापकत्वसत्त्वात् तद्दोषवारणाय स्वावच्छेदकविषयित्वावच्छिन्नत्वेत्यस्य स्वानवच्छेदकीभूतविषयताशून्यज्ञानवृत्तिविषयित्वावच्छिन्नत्वार्थकत्वात् एवञ्च वह्न्यभाववान् वह्न्यभाववद्धूदवान् वह्न्यभाववानिति निश्चयनिष्ठप्रतिबन्धकतायां स्वानवच्छेदकवह्न्यभाववद्धूदनिष्ठप्रकारताख्यविषयताशून्यावृत्तिविषयित्वावच्छिन्नत्वविरहेण नापत्त्यनुपपत्तिलेशोऽपीति भावः ।

किञ्च ज्ञानवैशिष्ट्यावच्छिन्नत्वासाधारण्यविषयकत्वानवच्छिन्नत्वोभयाभाववत्प्रतिबन्धकतायामपि उक्तोभयाभावनिवेशेनैव न कोऽपि दोषः । ननु तथापि वह्निव्याप्याभाववद्ध्रदरूपव्याप्यत्वासिद्धावव्याप्तिसम्भवे तदप्रदर्शनेन न्यूनता पुनरस्त्येवेति चेन्न । असिद्धिपदेन व्याप्यत्वासिद्धेरपि संग्रहात् सर्वमतसिद्धत्वाभावेनाभिधानं न कृतमिति । किम्वा तस्य लक्ष्यत्वमेव न स्वीक्रियत इत्यतस्तदप्रदर्शनमिति । न च तादृशव्याप्यत्वासिद्धेरलक्ष्यत्वे तादृशपक्षकत्वनिवेशेऽपि तत्रातिव्याप्तिरिति वाच्यम्,अनुमितेः साध्यव्याप्यो हेतुः हेतुमान् पक्षः साध्यवानित्याकारकत्वादिति भावः ।

ननु तथापि समूहालम्बनानुमितौ पक्षकत्वस्य द्विधाभानमस्ति साध्यप्रकारतानिरूपितैका विशेष्यता अपरा च साध्यव्याप्यहेतुप्रकारतानिरूपिता विशेष्यता, तत्र प्रथमविशेष्यतायां पक्षतावच्छेदकावच्छिन्नत्वानुपादाने स्वरूपासिद्ध्याश्रयासिद्ध्योरव्याप्तिदानं न संगच्छते, द्वितीयदले पक्षतावच्छेदकावच्छिन्नान्तर्भावसत्त्वात् इति चेन्न, पक्षतावच्छेदकावच्छिन्नत्वस्य सकृन्निवेशाभिप्रायेणैव तत्राव्याप्त्यभिधानात् । तथा हि पक्षतावच्छेदकविशिष्टानुमितित्वव्यापकप्रतिबध्यतेत्यादि । वैशिष्ट्यं स्वावच्छिन्नविशेष्यतानिरूपितसाध्यप्रकारताकत्वस्वावच्छिन्नविशेष्यतानिरूपितसाध्यव्याप्यहेतुप्रकारताकत्वोभयसम्बन्धेन । अत्र व्याप्तीनां विशिष्य निवेशः कार्यः तत्पक्षे स्वावच्छिन्नविशेष्यतानिरूपितसाध्याभाववदवृत्तित्वरूपव्याप्तिविशिष्टहेतुप्रकारताकत्वव्याप्तिसमसंख्यकतत्तत्सम्बन्धकूटेन । एवञ्च पक्षतावच्छेदकस्यानिवेशे यत्किञ्चिद्धर्मविशिष्टानुमितित्वव्यापकत्वमेव तादृशसम्बन्धकूटेन निवेशनीयम् तथा च बाधाद्यसंग्रह इति तन्निवेश आवश्यक इति भावः । ननु धर्मविशिष्टत्वं प्रतिबध्यतायां निवेश्य तादृशप्रतिबध्यतानिरूपितेत्यादिरीत्या निवेशेनैव बाधादावव्याप्तिवारणसम्भवात् ह्रदत्वरूपधर्मविशिष्टत्वस्य प्रतिबध्यतायां सत्त्वात् वैशिष्ट्यं स्वविशि-

ष्टानुमितित्वव्यापकत्वसम्बन्धेन, सम्बन्धघटकवैशिष्ट्यं च निरुक्तसम्बन्धकूटेनेति, तथा च पक्षतावच्छेदकप्रवेशो व्यर्थ इति चेन्न, वह्न्यभाववद्घटेऽतिव्याप्तेः, वह्न्यभाववान् घट इति निर्णयप्रतिबध्यतायाः घटत्वरूपधर्मविशिष्टत्वात् तथा च तन्निवेश आवश्यक इति ।

ननु पक्षतावच्छेदकस्य सक्तन्निवेशो न सम्भवति एतादृशपरम्परायाः संसर्गत्वे मानाभावादिति वाच्यं, प्रकारमुद्रया निवेशसम्भवात्, तथा हि पक्षतावच्छेदकस्यावच्छिन्नत्वसम्बन्धेन नानाविशेष्यतासु "बहुष्वेक" मिति रीत्यावगाहितद्विशेष्यतायाः साध्यप्रकारतायां साध्यव्याप्यहेतुप्रकारतायां च निरूपितत्वसम्बधेन प्रत्येकतत्तद्विशेष्यत्वागाही, पुनस्तत्प्रकारतायाः "एकत्र बहुनि" इति रीत्याऽनुमित्यवगाही अनुमितेश्च प्रतिबध्यतायां व्यापकतारूपाभावावगाही योऽभावः( पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकत्वसाध्यनिरूपिततत्तद्व्याप्तिविशिष्टहेतुप्रकारकत्ववदनुमितिनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धः )तदीयप्रतियोगितानिरूपितपरम्परीयपक्षतावच्छेदकनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्ना सती विशेष्यतात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपितविशेष्यतानिष्ठावच्छेदकताभिन्ना सती साध्यतावच्छेदकनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्ना सती प्रकारतात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपितप्रकारतानिष्ठानिरूपकत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्ना सती साध्यनिरूपिततत्तद्व्याप्तिविशिष्टहेतुप्रकारतानिष्ठावच्छेदकताभिन्ना सती अनुमितित्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकानुमितिनिष्ठावच्छेदकताभिन्ना सती वृत्तितात्वनिष्ठावच्छेदकताभिन्ना यावच्छेदकता तदनिरूपकवृत्तित्वनिष्ठावच्छेदकताभिन्ना सती भेदत्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकभेदनिष्ठावच्छेदकताभिन्ना सती प्रतियोगितात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकप्रतियोगित्वनिष्ठावच्छेदकताभिन्ना सती अवच्छेदकतात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकावच्छेदकत्वनिष्ठप्रतियोगितेत्यादिरीत्या इतरवारकपर्याप्ति निवेशयन् अथ च तादृशावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितपरम्परीयपक्षतावच्छेदकनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकविशेष्यत्वनिष्ठा -

वच्छेदकतानिरूपकसाध्यतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदकतानिरूपिका, अथ च साध्यनिरूपितसाध्याभाववदवृत्तित्वरूपव्याप्तिनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्ना सती हेतुतावच्छेदकनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्ना सती प्रकारतात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपितप्रकारतानिष्ठावच्छेदकतानिरूपिता अनुमितित्वनिष्ठावच्छेदकता तन्निरूपकीभूता या परम्परया पक्षतावच्छेदकनिष्ठाऽवच्छिन्नत्वसम्बन्धावच्छिन्नाऽवच्छेदकता पुनः तद्भिन्ना सती विशेष्यतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकता तदनिरूपितविशेष्यतानिष्ठावच्छेदकताभिन्ना सती साध्यवदन्यावृत्तित्वरूपव्याप्तिनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्ना सती हेतुतावच्छेदकनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्ना सती प्रकारतात्वनिष्ठावच्छेदकताभिन्ना यावच्छेदकता तदनिरूपितप्रकारतानिष्ठावच्छेदकतानिरूपिताऽनुमितित्वनिष्ठावच्छेदकता तन्निरूपकीभूता या परम्परया पक्षतावच्छेदकनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकता तद्भिन्नेत्यादिक्रमेण सकलव्याप्तिमार्गेणानुमितिनिष्ठावच्छेदकतापर्यन्तमागत्य पुनः पक्षतावच्छेदकनिष्ठावच्छेदकतामागत्य चरमव्याप्तिमार्गे न्यूनवारकेतरवारकपर्याप्ति निवेश्यानुमितिनिष्ठावच्छेदकतामागत्य तद्भिन्ना सती वृत्तितात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिताऽनुमितिनिष्ठावच्छेदकतानिरूपिता वृत्तितात्वनिष्ठावच्छेदकतानिरूपिता एवं क्रमेणेतरवारकन्यूनवारकपर्याप्ति निवेश्य तादृशवृत्तित्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिता सती अवच्छेदकतात्वनिष्ठावच्छेदकतानिरूपिता याऽवच्छेदकतानिष्ठाप्रतियोगिता तन्निरूपकाभाववत्प्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं समुदितप्रथमलक्षणस्य प्रकारमुद्रया निवेश इति ।

## गादाधरी

अवच्छेदकत्वञ्च तत्पर्याप्त्यधिकरणत्वं, तेनाऽतेजस्वी पर्वतो वह्निमान् इत्यादौ विशिष्टपर्वतत्वादिमति वह्न्यभावरूपबाधस्य, काञ्चनमयपर्वतो वह्निमानित्यादौ चाश्रयासिद्धेः शुद्धपर्वतत्वावच्छिन्नपक्षकाऽनुमित्यविरोधित्वेऽपि नासंग्रहः एवमग्रेऽपि बोध्यम् ।

अवच्छेदकत्वं = पक्षतावच्छेदकाच्छिन्नघटकावच्छेदकत्वं। तत्पर्याप्त्यधिकरणत्वं = पक्षतावच्छेदकतायाः पर्याप्त्यधिकरणत्वं। तेन = अवच्छेदकतापर्याप्त्यधिकरणत्वनिवेशेन। अतेजस्वी पर्वतः = तेजः सामान्याभावविशिष्टः पर्वतः। विशिष्टपर्वतत्वादिमति = अतेजस्त्वविशिष्टपर्वतादौ। वह्न्यभावरूपबाधस्य = वह्न्यभाववविशिष्टातेजस्विपर्वतरूपबाधस्य। आश्रयासिद्धेः = काञ्चनमयत्वाभाववत्पर्वतरूपाश्रयासिद्धेः। शुद्धः = अतेजस्त्वाविशेषितः। अनुमितिः = पर्वतो वह्निमान् वह्निव्याप्यधूमवानित्याकारकानुमितिः। अविरोधित्वेऽपि = अप्रतिबन्धकत्वेऽपि। नासंग्रहः = नाव्याप्तिः। एवम् = अनयैव रीत्या अग्रेऽपि = अग्रिमलक्षणेऽपि। अयमर्थः। पक्षतावच्छेदकतापर्याप्त्यधिकरणत्वानिवेशे अर्थात् स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन पक्षतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिर्या विशेष्यता तादृशविशेष्यतानिरूपितेत्यादिरीत्या पक्षतावच्छेदकतायाः न्यूनवारकपर्याप्त्यनिवेशेऽतेजस्वी पर्वतो वह्निमान् धूमादित्यत्र वह्न्यभाववदतेजस्विपर्वतरूपबाधे, एवं काञ्चनमयपर्वतो वह्निमान् धूमादित्यत्र काञ्चनमयत्वाभाववत्पर्वतरूपाश्रयासिद्धौ चाव्याप्तिः। तथा हि वह्न्यभाववदतेजस्विपर्वतरूपबाधनिश्चये एवं काञ्चनमयत्वाभाववत्पर्वतरूपाश्रयासिद्धिनिश्चये च केवलपर्वतविशेष्यकवह्नित्वावच्छिन्नप्रकारकतया वह्नित्वावच्छिन्ननिरूपितव्याप्तिविशिष्टधूमत्वावच्छिन्नधूमहेतुकपर्वतो वह्निमान् वह्निव्याप्यधूमवानित्याकारकानुमितिप्रतिबन्धकताविरहेण तादृशप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्योक्तबाधे प्रोक्ताश्रयासिद्धौ चाभावात्। तदुपादाने च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन पक्षतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतातेजस्त्वपर्वतत्वगतद्वित्वरूपवृत्तिर्या विशेष्यता सा न केवलपर्वतनिष्ठाविशेष्यता, किन्तु अतेजस्विपर्वतनिष्ठैव विशेष्यता तादृशविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताकतादृशवह्निव्याप्यधूमप्रकारताकानुमितिः अतेजस्विपर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारिकैवेति तादृशानुमितिं प्रति निरुक्तबाधनिश्चयस्य प्रतिबन्धकत-

या तादृशप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य वह्न्यभाववदतेजस्विपर्वतरूपबाधे सत्त्वात् एवं काञ्चनमयत्वपर्वतत्वगतद्वित्वरूपवृत्तिर्या विशेष्यता सा न केवलपर्वतनिष्ठा किन्तु काञ्चनमयपर्वतनिष्ठैवेति तादृशविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारकतादृशवह्निव्याप्यधूमप्रकारकानुमितिम्प्रति काञ्चनमयत्वाभाववत्पर्वतरूपाश्रयासिद्धिनिर्णयस्य प्रतिबन्धकतया तादृशप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्योक्ताश्रयासिद्धौ सत्त्वात् लक्षणसङ्गतिः ।

अनयैव दिशा साध्यतावच्छेदकहेतुतावच्छेदकयोर्न्यूनतावारकपर्याप्तिर्निवेशनीया, अन्यथा साध्याऽप्रसिद्ध्यादावव्याप्तिप्रसङ्गः स्यादिति भावः ।

## बलदेवी

अवच्छेदकत्वञ्च तत्पर्याप्त्यधिकरणत्वमिति भट्टाचार्येणोक्तम् । नन्वत्रातेजस्विपर्वतो वह्निमान् धूमादित्यादौ वह्न्यभावव्याप्यवत्तादृशपर्वतरूपसत्प्रतिपक्षेऽव्याप्तिसम्भवे तदनुक्तौ न्यूनता, तत्प्रतिबध्यताया अपि अनुमितित्वाऽव्यापकत्वात् इति चेन्न, सत्प्रतिपक्षत्वावच्छेदेनाव्याप्तेरभावात् तत्राव्याप्तेरुपेक्षाकृतेति । अतेजस्विपर्वतनिष्ठतत्तद्व्यक्तित्वव्यापकवह्न्यभावसमानाधिकरणतद्व्यक्तित्ववत्पर्वत - रूपसत्प्रतिपक्षे लक्षणसङ्गमनात्, तादृशसत्प्रतिपक्षीयपर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यताया अतेजस्वी पर्वतो वह्निमान् पर्वतो वह्निमानिज्ञानद्वयसाधारणतया तत्र पर्वतत्वांशे इतरवारकपर्याप्त्यनिवेशेन तादृशानुमितित्वव्यापकत्वात् ।

न चाऽतेजस्विपर्वतो वह्निमान् पर्वतो वह्निमानित्यादिसामानाधिकरण्येनानुमितिं प्रति सामानाधिकरण्येन सत्प्रतिपक्षनिश्चयस्याप्रतिबन्धकत्वात्, अवच्छेदकावच्छेदेन तादृशसत्प्रतिपक्षस्याऽप्रसिद्ध्या क्वचिदपि सत्प्रतिपक्षे न लक्षणसमन्वय इति वाच्यं, जलावच्छेदेन वह्न्यभावनिश्चयोत्तरं ह्रदत्वसामानाधिकरण्ये जलस्य भानेऽपि ह्रदत्वसामानाधिकरण्येन वह्निमत्त्वनिश्चयप्रतिबन्धकत्वस्य तर्कग्रन्थे मथुरानाथेनोक्ततया सामानाधिकरण्येन सत्प्रतिपक्षनिश्चयस्यापि तत्सम्भवात् ।

न च तादृशानुमितित्वस्य केवलमतेजस्वी वह्निमानित्यनुमितावपि सत्त्वेन तादृशानुमितित्वव्यापकप्रतिबध्यत्वाऽप्रसिद्धयैव तादृशसत्प्रतिपक्षेऽव्याप्तिसम्भव इति वाच्यं, पक्षतावच्छेदकयत्किञ्चित्धर्मविशिष्टप्रतिबध्यतानिरूपितेत्यादिक्रमेण निवेशेनैव तत्र पर्वतत्वरूपयत्किञ्चित्धर्ममादाय लक्षणसमन्वयसम्भवात्। वैशिष्ट्यञ्च स्वविशिष्टानुमितित्वव्यापकतासम्बन्धेन, सम्बन्धघटकवैशिष्ट्यं प्रागुक्तसम्बन्धकूटेन। न चाऽतेजस्वित्वावच्छेदेन वह्न्यभाववदतेजस्वीत्यादिबाधेऽतेजस्वित्वरूपपक्षतावच्छेदकमादाय लक्षणसमन्वयात् बाधत्वावच्छेदेनाव्याप्तिविरह इति वाच्यं, पक्षतावच्छेदकविशिष्टानुमितित्वव्यापकत्वं प्रतिबध्यतायामनिवेश्य प्रतिबन्धकतायामेव निवेश्यते, व्यापकत्वञ्च स्वावच्छेदकविषयित्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वसम्बन्धेन, तथा च सत्प्रतिपक्षस्थले ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया तदवच्छेदकीभूता या तद्व्यक्तित्वव्यापिका वह्न्यभावत्वावच्छिन्नविषयता तदवच्छिन्ना प्रतिबन्धकता तद्व्यक्तित्वव्यापकवह्न्यभावसमानाधिकरणतद्व्यक्तित्ववान् पर्वतः अतेजस्वी घटः पटः तद्व्यक्तित्ववानित्यादिज्ञाननिष्ठा तन्निरूपितप्रतिबन्धकतायाः सर्वत्रैवसाध्यविषयकानुमितौ सत्त्वेन सत्प्रतिपक्षे लक्षणसमन्वयः।

न च बाधनिश्चयस्यापि वह्न्यभाववद्ध्रदवान् वह्न्यभाववान् वह्न्यभाववद्ध्रदवान् ह्रद इति ज्ञानवैशिष्टयावच्छिन्नप्रतिबन्धकतामादायाव्याप्तिविरह इति वाच्यम् उक्तरीत्या वह्न्यभाववद्घटादावव्याप्तिवारणाय ज्ञानवैशिष्ट्यावच्छिन्नत्वविरोध्यनुमितिजनकताविशिष्टान्यत्वासाधारण्यविषयित्वानवच्छिन्नत्वैतत्त्रितयाभावस्य प्रतिबन्धकतायां निवेशात्। जनकतावैशिष्ट्यञ्च स्वानवच्छेदकविषयताशून्यज्ञानीयत्वसम्बन्धेन, तथा च बाधे नाव्याप्तिविरहः। तादृशसत्प्रतिपक्षे चाव्याप्तिविरहेण न तदुल्लेखः कृत इति संक्षेपः। वस्तुतः बाधपदं सत्प्रतिपक्षादेरप्युपलक्षकम्। न च काञ्चनमयपर्वतो वह्निमानित्यत्रापि दोषदानेन यावन्तो दोषाः सम्भवन्ति तावतां समुद्भावनं कृतमिति ज्ञायते, अन्यथा बाधेऽव्याप्तिदानेनैव गतार्थत्वात् आश्रयासिद्धावव्याप्तिदानस्योन्मत्तप्रलपितत्वापत्तिरिति वाच्यं, विशेषणद्वयस्य सार्थक्याय स्थलद्वयस्यानुधावनं कृतम्। तथा हि अतेजस्विपर्वतो वह्निमानित्यत्राव्याप्तिदानेन पक्षतावच्छेदकस्य धर्मविधया न्यूनवृत्तित्वपर्याप्तिनिवेशः कृतः। काञ्चनमयपर्वतो वह्निमा-

नित्यत्राव्याप्तिदानेन पक्षतावच्छेदकताघटकसंसर्गस्य न्यूनवारकपर्याप्तिनिवेशः सूचितः, तत्र पर्वतत्वव्यापककाञ्चनमयत्वप्रतियोगिकस्वरूपस्यैव पक्षतावच्छेदकताघटकसंसर्गता, तस्य न्यूनवारकपर्याप्त्यनिवेशे शुद्धस्वरूपेण काञ्चनमयत्ववत्पर्वतो वह्निमानित्यनुमितेरपि प्राप्ततया तस्याश्चाप्रतिबध्यत्वात्, सामानाधिकरण्येनैवाश्रयासिद्धिसम्भवात् । एवञ्च स्थलद्वयानुधावनं विशेषणद्वयस्य प्रयोजनप्रदर्शनार्थमिति ।

पक्षतावच्छेदकस्येतरवारकपर्याप्तिनिवेशफलं तु विषयितया वह्निमत्पक्षकमहानसीयवह्निसाध्यके वह्निमत्महानसीयवह्निमत्महानसीयवह्निमन्महानसीयवह्निमदित्यनुमितिद्वयस्यैव तथात्वेन तादृशानुमितित्वव्यापकतायाः प्रतिबध्यतायामसत्त्वात् तत्र बाधेऽव्याप्तिवारणमिति ।

अथ तादृशपर्याप्तिनिवेशेऽपि काञ्चनमयपर्वतो वह्निमानित्यादौ काञ्चनमयत्वाभाववत्पर्वतरूपाश्रयासिद्धावव्याप्तिस्तदवस्थैव, तादृशानुमितित्वस्य पर्वतः काञ्चनमयो वह्निमानित्यनुमितावपि सत्त्वेन पक्षतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदककाञ्चनमयत्वपर्वतत्वगतद्वित्ववृत्तित्वस्य तज्ज्ञानीयविशेष्यतायामपि सत्त्वात् द्वित्वस्याविशेषात्, तथा च तादृशानुमितित्वव्यापकत्वस्य तत्प्रतिबध्यतायामसत्त्वात् । न च पक्षत्वं प्रकृतानुमितीयोद्देश्यत्वं तच्च प्रकृते काञ्चनमयत्वप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यत्वावच्छिन्नं यत् काञ्चनमयत्वपर्वतत्वोभयधर्मावच्छिन्नं विशेष्यत्वं तद्रूपं, पर्वतः काञ्चनमयो वह्निमानित्यनुमितौ तु पर्वत्वप्रकारतानिरूपितकाञ्चनमयत्वावच्छिन्नविशेष्यत्वावच्छिन्नं यत् पर्वत्वकाञ्चनमयत्वोभयधर्मावच्छिन्नविशेष्यत्वं तद्रूपमुद्देश्यत्वं, तथा च काञ्चनमयपर्वतत्वावच्छिन्नोद्देश्यतावच्छेदकगतसमुदायत्वस्य विभिन्नतया तादृशरूपवृत्तिविशेष्यतापदेन काञ्चनमयपर्वतो वह्निमानितिज्ञानीयविशेष्यताया एव धारणेननोक्ताव्याप्तिरिति वाच्यं, निरूप्यनिरूपकभावयोरिवाऽवच्छेद्यावच्छेदकभावयोरपि स्वरूपसम्बन्धरूपत्वात्, न तु तन्निष्ठावच्छेदकतानिरूपितत्वं, तथा चोद्देश्यतानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तादृशद्वित्वमेव न तु समुदायत्वं तयोश्चाविशेषादिति चेन्न, धीभेदेनैतादृशद्वित्वस्यापि भेदात्, अन्यथा धीविशेषविषत्वरूपस्य द्वित्वस्यैक्येन

काञ्चनमयपर्वतो वह्निमान् पर्वतः काञ्चनमयो वह्निमानितिज्ञानस्याभेदापत्तेः, घटो घट इत्यादाविव काञ्चनमयपर्वतः काञ्चनमय इत्यादावपि शाब्दबोधो न स्यादुद्देश्यतावच्छेदकगतरूपस्य विधेयतावच्छेदकगतरूपस्याऽभेदात्, अनुव्यवसायानुरोधेन च तादृशं रूपं भिन्नमेवेति कारणतावादे स्पष्टीकृतमिति भावः।

## गादाधरी

साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकत्वाऽनिवेशे परामर्शाविरोधितया बाधसत्प्रतिपक्षयोरव्याप्तिः, तत्र साध्यतावच्छेदकावच्छिन्नत्वस्यानुपादानेऽपि तद्दोषतादवस्थ्यं, वह्नित्वावच्छिन्नाभावादिनिश्चयस्य धूमजनकतेजस्वी वह्निव्याप्यधूमवांश्च ह्रद इत्याद्यनुमित्यप्रतिबन्धकत्वात्।

## विमलप्रभा

साध्यप्रकारकत्वाऽनिवेशे = अनुमितौ साध्यव्याप्यहेतुमान् पक्ष इत्याकारकपरामर्शमात्रप्रवेशे। परामर्शाऽविरोधितया = परामर्शप्रतिबन्धकयथार्थज्ञानाऽविषयतया। बाधसत्प्रतिपक्षयोः = बाधे सत्प्रतिपक्षे च। अव्याप्तिः = लक्षणागमनप्रसङ्गः। तत्र = अनुमितिघटकसाध्यतावच्छेदकावच्छिन्नप्रकारतायां। तद्दोषतादवस्थ्यं = बाधसत्प्रतिपक्षे चाव्याप्तिस्तदवस्थैव। अनुमित्यप्रतिबन्धकत्वात् = अनुमितिप्रतिबन्धकयथार्थज्ञानाविषयत्वात्। अयमर्थः। लक्षणघटकानुमितिपदेन यदि साध्यव्याप्यहेतुप्रकारकानुमितिमात्रमेव निवेश्यते अर्थात् साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकत्वमनुमितौ न निवेश्यते तदा ह्रदो वह्निमान् जलादित्यत्र वह्न्यभाववद्ध्रदरूपबाधे वह्न्यभावव्याप्यवद्ध्रदरूपसत्प्रतिपक्षे चाव्याप्तिः, बाधसत्प्रतिपक्षयोः ग्राह्याभावावगाहितया विरोध्यनुमितिसामग्रीत्वेन च यथायथम् पक्षः साध्यवानित्येवानुमितिं प्रति प्रतिबन्धकत्वेन। ( ह्रदो वह्निमानित्याकारकानुमितिं प्रत्येव प्रोक्तबाधनिश्चयस्य सत्प्रतिपक्षनिर्णयस्य च प्रतिबन्धकता ) वह्निव्याप्यजलवान् ह्रद इत्याकारकपरामर्शात्मकानुमितिप्रतिबन्धकताराहित्येन तादृशपरामर्शात्मकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य बाधसत्प्रतिपक्षयोरभावात्। तदुपा-

दाने च पक्षतावच्छेदकीभूतह्रदत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकह्रदो वह्निमानित्याकारकानुमितिं प्रति वह्न्यभाववान् ह्रद इति बाधनिश्चयस्य वह्न्यभावव्याप्यवान् ह्रद इतिसत्प्रतिपक्षनिश्चयस्य च प्रतिबन्धकतया तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य बाधादौ सत्त्वात् लक्षणसमन्वयः ।

एवं प्रकृतानुमितिघटकसाध्ये साध्यतावच्छेदकावच्छिन्नत्वानुपादाने केवलसाध्यनिष्ठप्रकारताकत्वमात्रनिवेशे ह्रदो वह्निमान् जलादित्यत्र वह्न्यभावविशिष्टह्रदरूपबाधे वह्न्यभावव्याप्यवद्धृदरूपसत्प्रतिपक्षे चाव्याप्तिस्तदवस्थैव स्यात् वह्निप्रकारकानुमितिसामान्यान्तर्गता या ह्रदो धूमजनकतेजस्वी वह्निव्याप्यजलवांश्चेत्याकारिकानुमितिस्तां प्रति वह्न्यभाववान् ह्रद इति बाधनिश्चयस्य वह्न्यभावव्याप्यवान् ह्रद इति सत्प्रतिपक्षनिश्चयस्य च प्रतिबन्धकताविरहेण तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य बाधादावभावात् । तदुपादाने च प्रकृते साध्यता वह्नित्वेन न तु धूमजनकतेजस्त्वादिनेति साध्यतावच्छेदकीभूतवह्नित्वावच्छिन्नप्रकारकानुमितिः ह्रदो वह्निमानितियाकारिकैवेति तादृशवह्नित्वावच्छिन्नवह्निरूपसाध्यप्रकारकवह्नित्वावच्छिन्नवह्निरूपसाध्यनिरूपित-व्याप्तिविशिष्टहेतुप्रकारकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयतायाः बाधसत्प्रतिपक्षे वर्त्तमानतया लक्षणसंगतिरिति भावः ।

## गादाधरी

यत्तु साध्याऽप्रसिद्धयव्याप्तिवारणप्रयोजनकत्वं तदुपादानस्येति न सत् वह्निर्न काञ्चनमय इति निर्णयस्य शुद्धवह्नित्वादिना वह्न्याद्यनुमित्यविरोधित्वेऽपि द्वितीयदले प्रकृतसाध्यतावच्छेदकावच्छिन्नान्तर्भावसत्त्वात् तस्य काञ्चनमयवह्निव्याप्यधूमवान् पर्वत इत्यनुमितिविरोधितया तत्र लक्षणगमनात् ।

## विमलप्रभा

यत्त्वित्यस्य न सदित्यनेनान्वयः । साध्यऽप्रसिद्धौ = काञ्चनमयत्वाभाववद्वह्नि-

रूपसाध्याऽप्रसिद्धौ ।-- :अव्याप्तिवारणप्रयोजनकत्वम् = अव्याप्तिनिरसनफलकत्वं । तदुपादानस्य = साध्यनिष्ठप्रकारतायां साध्यतावच्छेदकावच्छिन्नत्वनिवेशस्य । वह्नि न काञ्चनमय इति निर्णयस्य = काञ्चनमयत्वाभावविशिष्टो वह्निरिति निश्चयस्य । पक्षे = पर्वतादौ । वह्न्याद्यनुमितिं = पर्वतो वह्निमानित्यनुमितिम् । अविरोधित्वेऽपि = अप्रतिबन्धकत्वेऽपि । द्वितीयदले = साध्यव्याप्यहेतुमान् पक्ष इति दले । परामर्शदले इति यावत् । अन्तर्भावसत्त्वात् = प्रवेशसत्त्वात् । तस्य काञ्चनमयत्वाभाववद्वह्निरिति निश्चयस्य । इत्यनुमितिविरोधितया इत्याकारकसमूहालम्बनरूपानुमितिघटकद्वितीयदलप्रतिबन्धकतया । तत्र = काञ्चनमयत्वाभाववद्वह्निरूपसाध्याप्रसिद्धौ । लक्षणगमनात् = लक्षणसमन्वयात् । अयमर्थः—अनुमितिघटकप्रथमदलप्रविष्टसाध्ये साध्यतावच्छेदकावच्छिन्नत्वाऽप्रवेशे पर्वतः काञ्चनमयवह्निमान् धूमादित्यत्र काञ्चनमयत्वाभावविशिष्टवह्निरूपसाध्याप्रसिद्धावव्याप्तिः, तादृशसाध्याप्रसिद्धिविषयकनिश्चयस्य वह्निप्रकारकपर्वतविशेष्यकानुमितिसामान्यन्तर्गता या पर्वतो-वह्निमानित्यनुमितिस्तां प्रत्यप्रतिबन्धकतया तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य तत्राभावात् । तदुपदाने च, प्रकृते साध्यतावच्छेदकं यत्काञ्चनमयत्वविशिष्टवह्नित्वं तदवच्छिन्नप्रकारकपर्वतविशेष्यकपर्वतः काञ्चनमयवह्निमानित्यनुमितिं प्रति तादृशसाध्याऽप्रसिद्धिनिश्चयस्य प्रतिबन्धकतया तादृशप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य तादृशसाध्याप्रसिद्धौ सत्त्वादव्याप्तिवारणमिति, तथा च साध्यनिष्ठप्रकारतायां साध्यतावच्छेदकावच्छिन्नत्वनिवेशनं साध्याप्रसिद्धावव्याप्तिवारणार्थमेव न तु बाधादावव्याप्तिवारणार्थमिति केषांचिन्मतं, तन्न युक्तियुक्तं, यतः काञ्चनमयत्वाभाववद्वह्निरिति साध्याऽप्रसिद्धिनिश्चयेऽनुमितिपरामर्शोभयप्रतिबन्धकतासत्त्वेन प्रथमदले साध्यप्रकारकत्वमात्रनिवेशेऽपि द्वितीयदलघटकसाध्यांशे साध्यतावच्छेदकावच्छिन्नत्वस्य प्रविष्टतया वह्निर्न काञ्चनमय इति निश्चयस्य काञ्चनमयवह्निव्याप्यधूमवान् पर्वत इत्यंशस्यापि प्रतिबन्धकत्वेन पर्वतो वह्निमान् काञ्चनमयवह्निव्याप्यधूमवानित्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य निरुक्ताश्रयासिद्धौ सत्त्वात् लक्षण-

संगत्या तदर्थं तदुपादानं निरर्थकमेवातः पूर्वोदीरितयुक्त्या बाधादावव्याप्तिवारणमेव तदुपादानप्रयोजनमिति भावः।

## बलदेवी

साध्याप्रसिद्ध्यादावव्याप्तिवारणप्रयोजनकत्वं तदुपादानस्येति तु न सदिति भट्टाचार्यः। नन्वत्र प्रत्येकदलव्यावृत्तिदानस्य ग्रन्थकारतात्पर्यविषयत्वे, पक्षतावच्छेदकव्यावृत्तिदानकाले स्वरूपासिद्ध्याश्रयासिद्ध्यदावव्याप्तिदानमसङ्गतं, द्वितीयदले पक्षतावच्छेदकावच्छिन्नान्तर्भावसत्त्वात्, एकदा दलद्वयखण्डनपरत्वे "इति तु न सदिति" खण्डनमयुक्तम्, द्वितीयदलेऽपि साध्तावच्छेदकावच्छिन्नान्तर्भावविरहादिति चेन्न, पक्षतावच्छेदकस्योक्तरीत्या सक्तन्निवेशे तात्पर्येणाश्रयासिद्धिस्वरूपासिद्ध्योरव्याप्तिदाने ग्रन्थकारस्याशय इति। अथ यथा पक्षतावच्छेदकस्य सक्तन्निवेशस्तथा साध्यतावच्छेदकस्यापि सक्तन्निवेशः सम्भवति, तथा हि साध्यतावच्छेदकविशिष्टानुमितित्वव्यापकप्रतिबध्यतेत्यादिरीत्या निवेशः, वैशिष्ट्यञ्च स्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वस्वावच्छिन्ननिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वहेतुव्यापकतावच्छेदकस्वावच्छिन्नसामानाधिकरण्यवद्धेतुप्रकारतानिरूपितपक्षविशेष्यताकत्वेत्यादिव्याप्तिसमसंख्यकसम्बन्धकूटेन।

यत्र चेदृशव्याप्त्यप्रसिद्धिस्तत्र येन रूपेण परामर्शस्य कारणता तेनैव रूपेण निवेशः कार्यः, तथा हि स्वावच्छिन्नविषयतानिरूपिताभावविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपिताभावविषयतानिरूपितहेतुविषयतानिरूपितपक्षविषयतावत्त्वहेतुविषयतानिरूपिताधिकरणविषयतानिरूपितप्रतियोगिवैयधिकरण्यविषयतानिरूपितवृत्तित्वविषयतानिरूपिताभावविषयतानिरूपितप्रतियोगित्वविषयतानिरूपितावच्छेदकत्वविषयतानिरूपिताभावविषयतानिरूपितत्ववद्विषयतावत्स्वावच्छिन्नविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानि-

रूपितहेतुविषयतानिरूपितपक्षविषयतावत्त्वेत्यादिव्याप्तिसमसंख्यकसम्वन्धकूटेनेति । ईदृशपरम्परायाः संसर्गत्वाऽस्वीकारे तु प्रकारमुद्रया निवेशः कार्यः—

तथा हि साध्यस्यान्वयव्याप्तौ व्यतिरेकव्याप्तौ च तद्घटकसाध्याभावीयप्रतियोगितावच्छेदकतायां हेतुव्यापकसाध्यसमानाधिकरण्येत्यत्र निरूपकतावच्छेदकतायां च साध्यतावच्छेदकस्य निष्ठत्वसम्बन्धेन पतितत्वात् साध्यतावच्छेदकनिष्ठावच्छेदकताकप्रतियोगिताकाभावीयप्रतियोगितानिरूपितपरम्परया निष्ठत्वसम्बन्धावच्छिन्नावच्छेदकता साध्यतावच्छेदके वर्त्तते एवम् अन्यव्याप्तिनिरूपितापि तादृशावच्छेदकता तत्रैव वर्तते तथा च नानाविधव्याप्तिप्रकारतानिरूपितपरम्परया साध्यतावच्छेदकतासु साध्यतावच्छेदकस्य निष्ठत्वसम्वन्धेन "वहुष्वेकमिति" रीत्या भानम्, एवञ्च साध्यतावच्छेदकनिष्ठनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपिता याऽवच्छेदकतानिष्ठावच्छेदकता तन्निरूपिता या प्रतियोगित्वनिष्ठावच्छेदकतानिष्ठावच्छेदकता तन्निरूपिता याऽभावनिष्ठावच्छेदकतानिष्ठावच्छेदकता तन्निरूपिता याऽधिकरणनिष्ठावच्छेदकतानिष्ठावच्छेदकता तन्निरूपिता या वृत्तितात्वावच्छिन्नप्रतियोगित्वनिष्ठावच्छेदकता तन्निरूपिता याऽभावनिष्ठावच्छेदकता तन्निरूपितहेतुतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदकता तन्निरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यतानिष्ठावच्छेदकता तन्निरूपिता याऽनुमितित्वनिष्ठावच्छेदकता परम्परया तन्निरूपकीभूता या निष्ठत्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकनिष्ठावच्छेदकता तन्निरूपितेत्यादिक्रमेण सकलव्याप्ति तत्पर्याप्तिञ्च निवेश्य अनुमितिपर्यन्तं गत्वा पुनर्न्यूनवारकपर्याप्ति निवेशयन् साध्यतावच्छेदके प्रत्यागत्य पुनरनुमितिपर्यन्तमागत्य तादृशानुमितिनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिता याऽवच्छेदकतात्वावच्छिन्ना प्रतियोगिता तन्निरूपकाभाववत्प्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं लक्षणार्थ इति चेन्न, साध्यतावच्छेदकनिष्ठनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकताकत्वस्य "वहुष्वेकमिति" रीत्या तादृशसकलावच्छेदकतायां भानेऽपि तादृशावच्छेदकताया एकत्र वहुरिति रीत्या एकधर्मिणि यज्ज्ञानं तादृशज्ञानस्याऽप्रसिद्धेः तादृशप्रतीतेराकारद्वासम्भवात् इति किं प्रतीतिसाक्षिकस्तादृशाभावस्य निवेश इति, पक्षतावच्छेदकस्य

सक्तन्निवेशे तत्प्रतीतेराकारः पूर्वमेवाभिहितः 'मौषकल्पनया द्विधाभानानुपगमेन कथञ्चिन्निवेशसम्भवेऽपि शिरोमणिग्रन्थे' साध्यव्याप्यहेतुमान् पक्षः साध्यवानिति लिखनक्रमेण पक्षतावच्छेदकस्य सक्तन्निवेशाभिप्रायेण साध्यतावच्छेदकस्य द्विधानिवेशाभिप्रायेण च भट्टाचार्येण तथोपवर्णितमिति ध्येयम् ।

## गादाधरी

द्वितीयदलप्रवेशात् व्यभिचारविरोधसाधनाऽप्रसिद्धिस्वरूपासिद्धिषु नाव्याप्तिः, तत्रापि साध्यतावच्छेदकावच्छिन्नसाध्यनिरूपितव्याप्तिविशिष्टत्वनिवेशात् व्यभिचारविरोधयोर्नाव्याप्तिः । वह्निर्धूमव्यभिचारीति ज्ञानदशायामपि द्रव्यत्वादिना धूमादिनिरूपितव्याप्तेर्भानसम्भवात्तद्दोषतादवस्थ्यमतो व्याप्तौ साध्यतावच्छेदकावच्छिन्नीयत्वनिवेशः ।

## विमलप्रभा

द्वितीयदलप्रवेशात् = साध्यव्याप्यहेतुमान् पक्ष इति परामर्शात्मकदलस्यानुमितौ निवेशात् । साध्यतावच्छेदकावच्छिन्नसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नहेतुकत्वनिवेशादिति यावत् । तत्रापि = परामर्शात्मकद्वितीयदलघटकीभूतहेतावपि । वह्निर्धूमव्यभिचारीतिज्ञानदशायां = धूमाभाववद्वृत्तित्वविशिष्टवह्निरिति व्यभिचारज्ञानकाले । ज्ञानसम्भवात् = द्रव्यत्वेन धूमनिरूपितव्याप्तिविशिष्टहेतुमत्ताज्ञानोदयात् । तद्दोषतादवस्थ्यं = व्यभिचारादावव्याप्तिस्तदवस्थैव । व्याप्तौ = अनुमितिघटकीभूतद्वितीयदलप्रविष्टव्याप्तौ ।

साध्यतावच्छेदकावच्छिन्नीयत्वनिवेशः = साध्यतावच्छेदकावच्छिन्नसाध्यनिरूपितत्वनिवेशः । अयमर्थः । पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकसाध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकानुमितिव्यापकप्रतिबध्यतेत्यादिरीत्या निवेशेनैवोपपत्तौ परामर्शात्मकद्वितीयदलप्रवेशो व्यर्थ इति चेत् तथा सति ह्रदो वह्निमान् काञ्चनमयजलादित्यत्रवह्न्यभाववद्वृत्तित्वविशिष्टकाञ्चनमयजलरूपव्यभिचारे, वह्न्यधिकरणवृत्ति-

त्वाभावविशिष्टकाञ्चनमयजलरूपविरोधे, काञ्चनमयत्वाभाववज्जलरूपसाधनाऽप्र-सिद्धौ, काञ्चनमयजलाभाववद्ध्रदरूपस्वरूपासिद्धौ, चाव्याप्तिः तत्र व्यभिचारविरोध-निश्चययोः व्याप्तिनिश्चयं प्रति साधनाऽप्रसिद्धिस्वरूपासिद्धिनिश्चययोः हेतुतावच्छेदका-वच्छिन्नहेतुमत्ताज्ञानं प्रत्येव प्रतिबन्धकतया केवलह्रदत्वावच्छिन्नविशेष्यकवह्नित्वा-वच्छिन्नप्रकारकारकह्रदो वह्निमानित्यनुमितेः व्याप्तिहेत्वघटितत्वेन तादृशानु-मितिं प्रति तेषां प्रतिबन्धकत्वाभावेन तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपित-प्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य व्यभिचारविरोधसाधनाऽप्रसिद्ध्यादाव-भावात्। अतस्तदुपादानं, तथा च पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यता-वच्छेदकावच्छिन्नप्रकारकानुमितिं प्रति व्यभिचारादिनिश्चयानां प्रतिबन्धकत्वाभावेऽपि-व्याप्तितादृशहेतुघटितपरामर्शात्मकह्रदो वह्निव्याप्यकाञ्चनमयजलवांश्चेति द्विता-यदलप्रतिबन्धकतायाः व्यभिचारादौ वर्त्तमानतया परामर्शात्मकद्वितीयदलघटित ह्रदो वह्निमान् वह्निव्याप्यकाञ्चनमयजलवांश्चेत्याकारकानुमितित्वव्यापकप्रतिबध्-यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य व्यभिचारादौ सत्त्वात् लक्षण-सङ्गतिः।

एवं द्वितीयदले व्याप्त्यंशे साध्यनिरूपितत्वानुपादाने धूमवान् वह्नेरित्यत्र धूमाभा-ववद्वृत्तित्वविशिष्टवह्निरूपव्यभिचारे एवमयं गौरश्वत्वात् इत्यत्र गोत्वासमानाधि-करणाश्वत्वरूपविरोधे चाव्याप्तिस्तथा हि पक्षस्साध्यवान् यत्किञ्चिन्निरूपित-व्याप्तिविशिष्टहेतुमानित्याकारकानुमितित्वेन पर्वतो धूमवान् पटव्याप्यवह्निमान् एवं गोत्ववान् मनुष्यत्वव्याप्याश्वत्ववांश्चायमित्याकारकानुमितेरपि धर्त्तुं शक्यतया तत्र तत्र व्यभिचारविरोधादिनिर्णयप्रतिबन्धकताविरहेण तादृशप्रतिबन्धकताशालि-यथार्थज्ञानविषयत्वस्य व्यभिचारादावभावात्। तदुपादाने च पर्वतो धूमवान् धूम-निरूपितव्याप्तिविशिष्टवह्निमांश्चेत्याकारकानुमितौ प्रोक्तव्यभिचारनिश्चयस्य, एवं गोत्वनिरूपितव्याप्तिविशिष्टाश्वत्ववांश्चायमित्याकारकानुमितौ निरुक्तविरोधनिर्णय-स्य प्रतिबन्धकतया तादृशप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य व्यभिचारविरो-धादौ सत्त्वात् लक्षणसंगतिः। निरुक्तपक्षविशेष्यकप्रकृतसाध्यप्रकारक एवं साध्य-

निरूपितव्याप्तिविशिष्टप्रकृतहेतुप्रकारकेत्यादिक्रमेण निवेश हेतुनिष्ठव्याप्तौ साध्यतावच्छेदकावच्छिन्ननिरूपितत्वनिवेशे पूर्वोक्तव्यभिचारविरोधयोरव्याप्तिस्तदवस्थैव, धूमाभाववद्वृत्तिवह्निनरिति व्यभिचारनिर्णयकाले द्रव्यत्वेन द्रव्यव्याप्यधूमवान् पर्वतो धूमवानित्नुमित्युत्पत्त्या, तादृशानुमितिं प्रति उक्तव्यभिचारनिश्चयस्य प्रतिबन्धकताविरहेण, एवं गोत्वासमानाधिकरणाश्वत्वरूपविरोधनिश्चयदशायां प्रमेयत्वे प्रमेयव्याप्याश्ववानयमश्वत्ववानित्याकारकानुमित्युत्पत्त्या तादृशानुमितिं प्रति प्रोक्तविरोधनिश्चयस्य प्रतिबन्धकताविरहेण ‖ तादृशप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य व्यभिचारविरोधादावभावात् । तदुपादाने च उक्तव्यभिचारनिश्चयकाले धूमत्वेन धूमनिरूपितव्याप्तिविशिष्टवह्निमत्तावगाहिपरामर्शात्मकानुमित्यनुत्पत्त्या तादृशानुमितिं प्रति तादृशव्यभिचारनिश्चयस्य प्रतिबन्धकत्वेन, एवं गोत्वासमानाधिकरणाश्वत्वरूपविरोधनिश्चयदशायां गोत्वत्वेन गोत्वनिरूपितव्याप्तिविशिष्टाश्वत्ववानयमित्यनुमितेरनुदये तां प्रति प्रोक्तविरोधनिश्चयस्य प्रतिबन्धकतया तादृशप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य व्यभिचारविरोधादौ सत्त्वात् लक्षणसंगतिः ।

## गादाधरी

अन्वयव्याप्तिरेकव्याप्ती विशेष्योपादाय तदुभयविशिष्टहेतुप्रकारकत्वमेव निवेश्यमेकमात्रव्याप्त्युपादाने साधारण्याऽनुपसंहारित्वयोरेकतरासंग्रहप्रसङ्गादित्यग्रे व्यक्तीभविष्यति ।

## विमलप्रभा

अन्वयव्याप्तिः = साध्याभाववद्वृत्तित्वादिरूपा, हेतुव्यापकसाध्यसमानाधिकरण्यरूपा वा व्याप्तिः । व्यतिरेकव्याप्तिः = साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपा व्याप्तिः । विशेष्योपादाय = प्रत्येकरूपेणादाय । तदुभयविशिष्टः = तत्तद्व्याप्तिप्रकारताविशिष्टः । निवेश्यं = लक्षणघटकानुमितिघटकत्वेन प्रवेशनीयम् ।

एकमात्रव्याप्त्युपादाने = अन्यवयव्याप्तेरुपादाने, व्यतिरेकव्याप्तेर्वा उपादाने। एक-तरासंग्रहप्रसंगात् = अन्वयव्याप्तिमात्रप्रवेशेऽनुपसंहारिणि व्यतिरेकव्याप्तिमात्रप्र-वेशे च, साधारणे, लक्षणागमनप्रसंगात्। अग्रे = अत्र वदन्ति कल्पव्याख्यानावसरे। व्यक्तीभविष्यति = "व्याप्तिश्चान्वयतो व्यतिरेकतश्च ग्राह्ये"त्यादिना स्फुटीभविष्यति। अयमर्थः। द्वितीयदलप्रविष्टहेतुनिष्ठसाध्यनिरूपिता व्याप्तिर्यदि साध्याभाववदवृत्ति-त्वादिरूपाऽन्वयव्याप्तिस्तदा सर्वमनित्यं प्रमेयत्वादित्यादौ प्रमेयत्वादिहेतुनिष्ठाभावाऽ-प्रतियोगित्वरूपानुपसंहारिण्यव्याप्तिः, तत्र अनुपसंहारिनिश्चयस्यान्वयव्याप्ति प्रत्य-प्रतिबन्धकतयाऽन्वयव्याप्तिघटितानुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वस्यानुपसंहारि-ण्यभावात्। व्यतिरेकव्याप्तिप्रवेशे च साध्याभावव्यापकीभूताभावप्रतियोगित्व-रूपव्यतिरेकव्याप्तिज्ञानं प्रति हेतुनिष्ठाभावाप्रतियोगित्वरूपानुपसंहारित्वज्ञानस्य प्रतिबन्धकतया तादृशव्यप्तिघटितानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धक-ताशालियथार्थज्ञानविषयत्वस्यानुपसंहारिणि वर्त्तमानतया लक्षणसमन्वयसम्भवेऽपि पर्वतो वह्निमान् प्रमेयत्वादित्यादौ वह्न्यभाववदवृत्तिप्रमेयत्वरूपव्यभिचारेऽव्याप्तिः, साधारण्यनिश्चयस्य व्यतिरेकव्याप्तिं प्रत्यप्रतिबन्धकतया व्यतिरेकव्यप्तिघटितानु-मितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य तत्रा-भावात्।

अतो नैकस्याः व्याप्तेः प्रवेशः किन्तु तत्तद्व्याप्तिप्रकारतानिरूपितहेतुप्रका-रताकत्वेनैवानुमितौ निवेशनीयम्, इत्थञ्च पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपि-तसाध्यतावच्छेदकावच्छिन्नप्रकारताशालि अथ च साध्यतावच्छेदकावच्छिन्नसाध्यनिरू-पितान्वयव्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नहेतुताव-च्छेदकावच्छिन्नप्रकारताशालि एवं तादृशव्यतिरेकव्याप्तिप्रकारतानिरूपितहेतुता-वच्छेदकावच्छिन्नविशेष्यत्वावाच्छिन्नप्रकारताशाल्यनुमितित्वव्यापकप्रतिबध्यतानि-रूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं हेत्वाभासत्वमिति लक्षणार्थः तथा-चान्वयव्याप्तिविशिष्टहेतुमत्ताज्ञानमादाय व्यभिचारे व्यतिरेकव्याप्तिविशिष्टहेतुमत्ता-ज्ञानमादायानुपसंहारिणि च लक्षणसमन्वयः कार्य इति।

## गादाधरी

ताद्दशव्याप्तिद्वयप्रकारतानिरूपितहेतुप्रकारतायाः तत्साध्यकतद्धेतुकानुमितिजनकतावच्छेदकप्रकारतात्वेनानुगमय्य निवेशनं च न सम्भवति साध्याभाववद्वृत्तित्वज्ञानदशायां केवलव्यतिरेकव्याप्तिप्रकारकहेतुमत्ताज्ञानोत्पत्त्या साधारण्यादेस्ताद्दशप्रकारताशाल्यनुमितिसामान्यविरोधित्वाभावात् ।

## विमलप्रभा

व्याप्तिद्वयप्रकारता = अन्वयव्याप्तिप्रकारता, व्यतिरेकव्याप्तिप्रकारता । हेतुप्रकारतायाः घटकत्वं षष्ठ्यर्थः प्रकारतात्वेन = तृतीयाया अवच्छिन्नत्वमर्थः । साध्याभाववद्वृत्तित्वज्ञानदशायां = साधारण्यनिश्चयकाले । हेतुमत्ताज्ञानोत्पत्त्या = साध्याभावव्यापकीभूताभावप्रतियोगिहेतुमानितिपरामर्शोत्पत्त्या । साधारण्यादेः = साधारणानुपसंहारित्वयोः । ताद्दशप्रकारताशाल्यनुमितिसामान्यविरोधित्वाभावात् = प्रकृतानुमितिजनकतावच्छेदकसाध्यविषयतानिरूपितव्याप्तिविषयतानिरूपितहेतुविषयताशाल्यनुमितिप्रतिबन्धकतावच्छेदकविषयताशून्यत्वात् । अयमर्थः । अन्वयव्यतिरेकोभयविधव्याप्तिप्रकारतायाः साध्यतावच्छेदकावच्छिन्नसाध्यकहेतुतावच्छेदकावच्छिन्नहेतुकानुमितिजनकतावच्छेदकसाध्यप्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नत्वेनानुगमं कृत्वा प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकप्रकृतसाध्यहेतुकानुमितिजनकतावच्छेदकसाध्यप्रकारतानिरूपितविशेष्यत्वावच्छिन्नव्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं हेत्वाभासत्वमिति प्रथमलक्षणार्थकरणे पर्वतो वह्निमान् प्रमेयत्वादित्यादौ वह्न्यभाववद्वृत्तिप्रमेयत्वरूपसाधारणे, सर्वमनित्यं प्रमेयत्वादित्यादावनुपसंहारिणि चाव्याप्तिः, ताद्दशानुमितित्वस्य प्रत्येकव्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञाने एव वर्त्तमानतया परस्परताद्दशप्रतिबध्यतायास्ताद्दशानुमितित्वाव्यापकत्वात् [अर्थात् अन्वयव्यभिचारनिश्चयकालेऽन्वयव्याप्तिप्रकारकहेतुमत्ताज्ञानानुदयेन व्यतिरेकव्याप्तिविशिष्टहेतुमत्ताज्ञानोदयेन च ताद्दशा-

नुमितिजनकतावच्छेदकीभूतप्रकारताशाल्यनुमितित्वस्य व्यतिरेकव्याप्तिघटितानुमिताववपि वर्त्तमानतया तत्र व्यभिचारनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यत्वाभावेन तादृशप्रतिबन्धकताशालियथार्थज्ञानविषयतायाः साधारण्येऽभावात्। अनयैव दिशा अन्वयव्याप्तिघटितानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयताया अनुपसंहारिण्यभावात्] अतस्तादृशप्रकारतात्वेनानुगमय्य लक्षणार्थः न करणीयः, किन्तु तत्तद्रूपेणैकैकामेकां व्याप्तिमादाय लक्षणार्थो वाच्यः। तथाचान्वयव्याप्तिघटितानुमितिप्रतिबन्धकतामादाय साधारणे व्यतिरेकव्याप्तिघटितानुमितिप्रतिबन्धकतामादायनुपसंहारिणि च लक्षणसमन्वय इति भावः।

## बलदेवी

तादृशव्याप्तिद्वयप्रकारतानिरूपितहेतुप्रकारतायास्तत्साध्यकतद्धेतुकानुमितिजनकतावच्छेदकप्रकारतात्वेनानुगमय्य निवेशनन्तु न सम्भवतीति भट्टाचार्यः। अस्यायमभिप्रायः, पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिप्रकृतहेतुकपरामर्शाव्यवहितोत्तरानुमितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारत्वावच्छिन्नविशेष्यतानिरूपितप्रकारतात्वेन सकलव्याप्तिप्रकारतानामनुगमय्य तादृशप्रकारतावच्छेदकीभूतधर्मावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नहेतुप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकानुमितित्वव्यापकत्वस्य प्रतिबध्यतायां निवेशनन्तु न सम्भवति साधारणानुपसंहारिद्वयोरसङ्ग्रहप्रसङ्गादिति, तादृशप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वस्य प्रत्येकव्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहिज्ञाने सत्त्वेन परस्य प्रतिबध्यतायाः तादृशानुमितित्वाव्यापकत्वाभावादिति। संसर्गविधयाप्रकृतहेतुमत्तानिश्चयोत्तरप्रकृतसाध्यकानुमितित्वावच्छिन्नकार्यताविशिष्टानुमितित्वव्या-

पक्षप्रतिबध्यतानिरूपितेत्यादिरीत्या निवेशः कार्यः। अनुमितौ कार्यतावैशिष्ट्यं स्वाश्रयत्वस्वनिरूपितकारणतावच्छेदकीभूतपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानिरूपितहेतुप्रकारत्वावच्छिन्नविशेष्यतानिरूपितप्रकारतावच्छेदकीभूतधर्मावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन।

अथैतादृशनिवेशे व्यभिचारदोषसम्भवेऽपि कार्यताविशिष्टत्वं प्रतिबध्यतायामेव निवेश्यतामिति न कोऽपि दोषः। वैशिष्ट्यं स्वविशिष्टानुमितित्वव्यापकतासम्बन्धेन। सम्बन्धघटकवैशिष्ट्यं स्वाश्रयेत्याद्युभयसम्बन्धेन। तथा चान्वयव्याप्त्यवगाहिपरामर्शाव्यवहितोत्तरानुमितित्वावच्छिन्नजन्यतामादाय साधारण्यप्रतिबध्यतायां तादृशानुमितित्वव्यापकत्वस्याक्षततया एकामेकां कार्यतामादाय साधारण्यानुपसंहारिद्वयोर्लक्षणसमन्वय इति।

अत्र सम्बन्धघटकवैशिष्ट्यघटकस्वनिरूपितकारणतावच्छेदकीभूतपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानिवेशात् यत्राभावस्य पक्षताप्रतियोगितासम्बन्धेन महानसीयवह्नेः साध्यता तत्सम्बन्धेन वह्नेः हेतुता तत्रत्यव्यभिचारे नाव्याप्तिः, अन्यथा स्वनिरूपितकारणतावच्छेदकीभूतहेतुतावच्छेदकधर्मावच्छिन्नप्रकारतापदेन महानसीयवह्न्यभाववदवृत्तिमानभाव इति परामर्शीयमहानसीयवह्नित्वावच्छिन्नप्रकारताया अपि वारणसम्भवेन तदवच्छेद्यवह्नित्वावच्छिन्नविशेष्यतानिरूपितप्रकारतावच्छेदकीभूतमहानसीयवह्नित्वावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकीभूतवह्नित्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकीभूताभावत्वावच्छिन्नविशेष्यताकत्वस्वाश्रयत्वोभयसम्बन्धेन कार्यताविशिष्टत्वस्य प्रतियोगितया महानसीयवह्निमानभाव इति ज्ञानेऽपि सत्त्वात्, तत्र साधारणप्रतिबध्यातााया असत्त्वात्।

एवं मुख्यविशेष्यत्वाऽनिवेशे तत्रैव परामर्शीयसाध्याभावनिष्ठविशेष्यत्वमादायानयैव रीत्या महानसीयवह्निमानभाव इति ज्ञानमादाय स एव दोषः स्यादतः तन्निवेशः।

न च तथापि कार्यतायाः प्रत्येकमनुगतत्वेन तादृशकार्यतापदेन धूमव्याप्यवह्निघटव्याप्यवह्निमान् पर्वत इत्येकत्र द्वयमिति रीत्या परामर्शाव्यवहितोत्तरत्वावच्छिन्नकार्यताविशिष्टत्वस्य घटव्याप्यवह्निमान् पर्वतो वह्निमान् धूमवानिति ज्ञानेऽपि सत्त्वात् तत्र व्यापकताहानिरिति धूमवान् वह्नेरित्यादौ व्यभिचारासंग्रहः। सम्बन्धघटकतादृशकार्यतावैशिष्ट्यस्य स्वाश्रयत्वस्वनिरूपितकारणतावच्छेदकीभूतपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यताया ऐक्येन तन्निरूपितवह्निप्रकारत्वावच्छिन्नविशेष्यतानिरूपितघटव्याप्तिप्रकारतावच्छेदकीभूतधर्मावच्छिन्नहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितवह्नित्वावच्छिन्नप्रकारतानिरूपितपक्षविशेष्यतावत्त्वोभयसम्बन्धेन तादृशग्रहेऽपि सत्त्वादिति वाच्यम्, स्वनिरूपितकारणतानिरूपितपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानिष्ठावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदकतानिरूपितविशेष्यत्वनिष्ठावच्छेद्यत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितप्रकारत्वनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतावत्प्रकारतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यत्वावच्छेद्यप्रकारतानिरूपितपक्षनिष्ठविशेष्यताकत्वघटितोभयस्यैव सम्बन्धत्वेनोपगमात् तादृशकेवलान्वयव्याप्तिविशिष्टहेतुप्रकारतायाः तादृशकार्यतानिरूपितकारणतानवच्छेदकत्वात्, एकत्र द्वयमिति रीत्या ज्ञानमादाय न कोऽपि दोषः इति।

न चानुगतरूपेण कार्यकारणभावानुरोधेन हेतुतावच्छेदकमनिवेश्य केवलव्याप्यवच्छिन्नप्रकारताशालिनिश्चयत्वेन कारणतामते स्वनिरूपितकारणतावच्छेदककोटौ हेतुप्रकारतानिवेशासम्भवेन तादृशसम्बन्धाप्रसिद्धिरिति वाच्यम्, प्रयोजनविरहेण हेतुतावच्छेदकावच्छिन्नत्वस्य प्रकारतायामनिवेशात्। तादृशव्याप्तित्वावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकोपलक्षितवृत्तिविशेष्यत्वावच्छेद्यप्रकारतानिरूपितपक्षविशेष्यताकत्वस्य सम्बन्धघटकत्वेन साध्यव्याप्यहेत्वन्तरवान् पक्षः साध्यवानिति ज्ञानस्य धारणासम्भवेन व्यभिचारादावव्याप्त्यभावादिति।

न चैवमपि साधारणग्रन्थे साध्याभाववदवृत्तित्वसाध्यसामानाधिकरण्योभयाभाववद्धेतोरपि व्यभिचारत्वाभिधाने न तत्राऽव्याप्तिः। तथा हि साध्याभाववदवृत्तित्वसाध्यसामानाधिकरण्यवद्धेतुमान् पक्षः..इत्येकत्र द्वयमिति रीत्या हेत्वंशे तदुभयावगाहिज्ञानस्य कारणतया तादृशव्यभिचारग्रहप्रतिबध्यपरामर्शनिरूपितकार्यतानिरूपितकारणतानिरूपितपक्षनिष्ठमुख्यविशेष्यत्वनिष्ठावच्छेदकतानिरूपितप्रकारत्वनिष्ठावच्छेदकतानिरूपितविशेष्यत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावत् यत् किञ्चित्प्रकारतावच्छेदकतापर्याप्त्यधिकरणत्वस्य साध्याभाववदवृत्तितात्वे साध्यसामानाधिकरण्यत्वेऽपि च सत्त्वात्, तत्प्रत्येकावच्छिन्नप्रकारतानिरूपितहेतुनिष्ठविशेष्यत्वावच्छेद्यप्रकारतानिरूपितपक्षविशेष्यताकत्वस्वाश्रयत्वोभयसम्बन्धेन तादृशकार्यतायाः साध्याभाववदवृत्तिहेतुमान् पक्षः साध्यवान् साध्यसामानाधिकरण्यवद्धेतुमान् पक्षः साध्यवान् साध्यवानिति विशृङ्खलज्ञानेऽपि सत्त्वात् व्यापकताभङ्गेन तादृशकार्यताविरहेणोक्तप्रतिबध्यतायाः धारणासम्भवादिति वाच्यम्, स्वनिरूपितकारणतानिरूपितपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यत्वनिष्ठावच्छेदकतानिरूपितप्रकारत्वनिष्ठावच्छेदकतानिरूपितविशेष्यत्वनिष्ठावच्छेदकतानिरूपितप्रकारत्वनिष्ठावच्छेदकतावत्प्रकारतानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्रूपं तद्रूपवृत्तिर्या हेतुतावच्छेदकावच्छिन्नविशेष्यता तदवच्छेद्यप्रकारतानिरूपितपक्षनिष्ठविशेष्यताकत्वं द्वितीयसम्बन्धः प्रथमरूपवृत्तित्वञ्च विशेष्यतायां स्वनिष्ठनिरूप्यतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन। द्वितीयरूपवृत्तित्वञ्च विशेष्यतायां स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति तादृशावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य साध्याभाववदवृत्तित्वसाध्यसामानाधिकरण्यत्वप्रकारतात्वगतसमुदायत्वे सत्त्वेन तद्वृत्तिविशेष्यता न केवलसाध्याभाववदवृत्तितात्वावच्छिन्नप्रकारतानिरूपितहेतुविशेष्यता किन्तु साध्याभाव-

वदवृत्तित्वसाध्यसामानाधिकरण्यत्वरूपप्रत्येकधर्मावच्छिन्नप्रकारताद्वयनिरूपितविशेष्यतैवेति तादृशकार्यताविशिष्टत्वं न विशृङ्खलपरामर्शानुमितौ अपि तु एकत्र द्वयमिति रीत्यैवेति नाव्याप्तिसम्भावनेति ।

एतादृशपरम्परायाः संसर्गत्वानभ्युपगमे तु प्रकारमुद्रया निवेशो यथा प्रकृतपक्षसाध्यहेतुकानुमितित्वावच्छिन्नकार्यतात्वसामानाधिकरण्योभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपककार्यतानिष्ठावच्छेदकतानिरूपककारणतानिष्ठावच्छेदकतानिरूपकपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकप्रकारत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकविशेष्यत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकप्रकारत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकप्रकारत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकनिरूपितत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकीभूता या अवच्छेदकतात्वनिष्ठावच्छेदकतानिरूपकीभूता या प्रतियोगिता तन्निरूपकपर्याप्त्यनुयोगितावच्छेदकधर्मनिष्ठावच्छेदकतानिरूपकानुयोगितानिरूपकपर्याप्तिनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगितानिरूपितनिरूपकत्वनिष्ठावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपितनिरूप्यतानिष्ठावच्छेदकतानिरूपिताऽधेयत्वसम्बन्धावच्छिन्नावच्छेदकताश्रयप्रकृतहेतुतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपिता या प्रकृतपक्षतावच्छेदकावच्छिन्नाविशेष्यता तच्छालिप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यताशाल्यनुमितिनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति सिद्धाभावः प्रतिबध्यतायां निवेशनीय इति ।

न चैवमपि स्वमते ह्रदो वह्निमान् धूमादित्यादौ व्याप्यत्वासिद्ध्यनात्मकवह्निव्याप्याभाववद्ध्रदेऽतिव्याप्तिः, वह्निव्याप्यधूमवान् ह्रदो वह्निमानित्यनुमितेरेव तत्र तथात्वेन तत्प्रतिबध्यतानिरूपितग्राह्याभावावगाहिवह्निव्याप्याभाववान् ह्रद इति निश्चयनिष्ठप्रतिबन्धकताया अपि तथात्वादिति वाच्यम्, साध्यव्याप्यो हेतुः हेतुमान्

पक्षः साध्यवानित्याकारकसमूहालम्बनानुमितेरेव लक्षणघटकतया निवेशात् तथा च तन्निवेशःतादृशजन्यतानिरूपितजनकताविशिष्टत्वं प्रतिवध्यतायां निवेशनीयम्, वैशिष्ट्यम् स्वविशिष्टाग्रहत्वव्यापकतासम्बन्धेन । ग्रहे वैशिष्ट्यं स्वावच्छेदकीभूतमुख्यविशेष्यतानिरूपितप्रकारित्वावच्छेद्यविशेष्यतानिरूपितप्रकारतावच्छेदकीभूतधर्मावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिविशेष्यताकत्वस्वावच्छेदकीभूतविशेष्यतावच्छेदकपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यप्रकारताकत्वस्वावच्छेदकविशेष्यतावच्छेदकपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितहेतुप्रकारताकत्वैतत्त्रितयसम्बन्धेन तथा चैतादृशानुमितित्वव्यापकताविरहेण न तादृशप्रतिबध्यतामादायातिव्याप्तिः । सर्वसम्बन्धव्यावृतिः पूर्ववत् ।

न च तथापि धूमवान् वह्नित्यादौ धूमाभाववद्वृत्तिवह्न्यादावव्याप्तिः, तथा हि हेतुतावच्छेदकसामानाधिकरण्येनैवात्र व्यभिचारस्य प्रसिद्धतया तस्य हेतुतावच्छेदकावच्छेदेनैव व्याप्तिज्ञानप्रतिबन्धकता, अनुमितिं प्रति जनकता च हेतुतावच्छेदकसामानाधिकरण्येन हेतुतावच्छेदकावच्छेदेन व्याप्तिग्रहयोरेव पर्याप्तिमनिवेश्य स्वरूपसम्बन्धावच्छिन्नव्याप्तिप्रकारतानिरूपितहेतुविशेष्यत्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वेनानुगतरूपेणैवेति कार्यताप्येका तन्निरूपितकारणताविशिष्टत्वस्य तत्सामानाधिकरण्येन व्याप्तिज्ञानसाधकतयाऽनुनितित्वव्यापकतायाः तादृशव्यभिचारनिरूपितप्रतिबध्यतायां तत्रासत्त्वादिति वाच्यम्, सम्बन्धघटकतादृशप्रकारतायां हेतुतावच्छेदकव्यापकस्वरूपसम्बन्धावच्छिन्नत्वस्य निवेशनीयतया तावतैवोक्तव्यभिचारसंग्रह इति चेन्मैवम् । नानाहेतुधर्मिकव्याप्तिज्ञानस्यैकरूपेण कारणतामतेऽनुगतरूपेणाप्रामाण्यज्ञानस्योत्तेजकतया पक्षसाध्यहेतुविषयतानां कार्यतानवच्छेदकत्वेन तादृशकार्यतानिवेशासम्भवेनासम्भवापत्तेरिति । अधिकन्तु केचित्तु यथाश्रुतार्थपरतानिर्वाह इति फक्किकावसरे विवेचयामः ।

## गादाधरी

व्याप्तिविशिष्टविषयकत्वमात्रस्य तद्विशिष्टहेतुतावच्छेदकावच्छिन्नविषयकत्व-

मात्रस्य वा निवेशे स्वरूपासिद्धावव्याप्तिः, अतः पक्षांशे तादृशव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारकत्वनिवेशः। पक्षांशे व्याप्तिविशिष्टप्रकारकत्वमात्रनिवेशेऽपि तद्दोषतादवस्थ्यम्, धूमाभाववान् ह्रद इति ज्ञानस्य द्रव्यत्वादिना हेतुमत्ताज्ञानाविरोधित्वात्, साधारण्याद्यव्याप्तिश्च, वह्नित्वावच्छिन्ने धूमाभाववद्वृत्तित्वग्रहस्य धूमादिव्याप्तिविशिष्टतद्व्यक्तित्वावच्छिन्नप्रकारकज्ञानाविरोधित्वादतो हेतुतावच्छेदकावच्छिन्नत्वनिवेशः। पक्षांशे साध्यादिप्रकारकस्य संस्कारादेः आहार्यज्ञानादेश्च व्याप्तिज्ञानाऽप्रतिबध्यत्वादसम्भव इत्यतस्तादृशानुमितित्वव्यापकतानिवेशः।

## विमलप्रभा

व्याप्तिविशिष्टेत्यादि। मात्रपदेन पक्षविशेष्यकत्वहेतुप्रकारकत्वयोर्व्यवच्छेदः। द्वितीयमात्रपदेन पक्षविशेष्यकत्वाभावः सूचितः। निवेशे = साध्यव्याप्यप्रकारकत्वस्य,साध्यव्याप्यहेतुप्रकारकत्वस्य वा अनुमितौ प्रवेशे। तद्विशिष्टः = साध्यनिरूपितान्वयव्यतिरेकव्याप्तिविशिष्टः। स्वरूपासिद्धौ = हेत्वभाववत्पक्षात्मकदोषे। अव्याप्तिः = लक्षणागमनप्रसंगः। अतः = अव्याप्तिरूपदोषतः। पक्षांशे = विशेष्यांशे,पक्षांशे इत्यत्र सप्तम्योर्निरूपित्वं, पक्षांशपदं पक्षनिष्ठविशेष्यतापरं, तस्य सप्तम्यर्थेऽन्वयः तथा च पक्षनिष्ठविशेष्यतानिरूपितत्वमित्यर्थः। मात्रनिवेशे = मात्रपदेन हेतुतावच्छेदकावच्छिन्नप्रकारताकत्वव्यवच्छेदः कृतः। तद्दोषतादवस्थ्यं = स्वरूपासिद्धावव्याप्तिः पुनः स्यादेव। ज्ञानस्य = निश्चयस्य। अविरोधित्वात् = अप्रतिबन्धकत्वात्। वह्नित्वावच्छिन्ने धूमाभाववद्वृत्तित्वग्रहस्य = धूमाभाववद्वृत्तित्वविशिष्टो वह्निरिति निश्चयस्य। अविरोधित्वात् = धूमव्याप्यतद्व्यक्तिमानिति ज्ञानाप्रतिबन्धकत्वात्। पक्षांशे = ह्रदादिरूपविशेष्यांशे। साध्यादिप्रकारकस्य = वह्न्यादिप्रकारकस्य। बाधादिज्ञानाप्रतिबन्धकत्वात् = बाधादिनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतारहितत्वात्। असम्भवः = लक्ष्यमात्रे लक्षणागमनप्रसङ्गः अतः = असम्भवदोषतः। तादृशानुमितित्वव्यापकता = प्रकृतानुमितित्वव्यापकता।

निवेशः शिरोमणिना कृत इति शेष। अयमर्थः। प्रकृतानुमितिघटकीभूतद्वितीयदले हेतुतावच्छेदकावच्छिन्नहेतुप्रकारकत्वपक्षविशेष्यकत्वयोरप्रवेशे केवलसाध्यनिरूपितान्वयव्यतिरेकव्याप्तिविषयकत्वतादृशव्याप्तिविशिष्टप्रकृतहेतुकत्वयोः प्रवेशे ह्रदो वह्निमान् धूमादित्यादौ धूमाभाववद्ह्रदरूपस्वरूपासिद्धावव्याप्तिः। तथा हि ह्रदो वह्निमान् [ वह्निव्याप्यधूमप्रकारकह्रदरूपपक्षविशेष्यक ] वह्निव्याप्यधूमवान् घट इत्यनुमितेरपि तादृशानुमितित्वेन, एवं धूमत्वेन धूमाप्रकारकवह्निमान् वह्निव्याप्यवान् ह्रद इत्यनुमितेरपि तादृशानुमितित्वेन ग्रहीतुं शक्यतया तादृशानुमितिद्वयं प्रति धूमाभाववान् ह्रद इति निश्चयस्य प्रतिबन्धकताविरहेण तादृशानुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वाभावात्।

तादृशविशेषणोपादाने च निरुक्तानुमितिपदेन वह्निमान् वह्निव्याप्यधूमवांश्च ह्रद इत्यनुमितेरेव ग्रहणमिति तादृशानुमितिं प्रति धूमाभाववान् ह्रद इति स्वरूपासिद्धिनिश्चयस्य प्रतिबन्धकतया तादृशप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य स्वरूपासिद्धौ सत्त्वात् लक्षणसंगतिः।

एवं हेतौ हेतुतावच्छेदकावच्छिन्नत्वविशेषानुपादाने तत्रैव ह्रदो वह्निमान् वह्निव्याप्यद्रव्यवांश्चेत्यनुमितेरपि तादृशानुमित्वेन ग्रहीतुं शक्यतया तां प्रति धूमाभाववान् ह्रद इति निश्चयस्य विरोधिताविरहेण तादृशप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य तादृशस्वरूपासिद्धावभावात् पुनरव्याप्तिस्तदवस्थैव। एवम् अयोगोलकं धूमवत् वह्नेरित्यादौ धूमवत् धूमव्याप्यतद्व्यक्तिमच्चायोगोलकमित्यनुमितिं प्रति धूमाभाववद्वृत्तिवह्निरिति व्यभिचारनिश्चयस्य प्रतिबन्धकताविरहेण तादृशप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्योक्तव्यभिचारे विरहात् अव्याप्तिश्च स्यात्। तदुपादाने च वह्निमान् वह्निनिरूपितव्याप्तिविशिष्टधूमत्वावच्छिन्नधूमवांश्च ह्रद इत्यनुमितिं प्रति धूमाभाववान् ह्रद इति निश्चयस्य प्रतिबन्धकतया तादृशप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य तादृशस्वरूपासिद्धौ सत्त्वात् लक्षणसंगतिः।

एव धूमवत् धूमनिरूपितव्याप्तिविशिष्टवह्नित्वावच्छिन्नवह्निमच्चायोगोलकमित्यनुमितिं प्रति धूमाभाववद्वृत्तिवह्निरूपव्यभिचारनिश्चयस्य प्रतिबन्ध-

कतया तादृशप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्योक्तव्यभिचारे सत्त्वात् लक्षण-संगतिः। अथ च प्रकृतपक्षविशेष्यकप्रकृतसाध्यप्रकारकप्रकृतसाध्यनिरूपितव्याप्ति-विशिष्टप्रकृतहेतुप्रकारकत्वव्यापिका या प्रतिबध्यता तादृशज्ञानत्वव्यापिका वा या प्रतिबध्यता तन्निरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्यैव लक्षणार्थत्वेऽनु-मितिपदोपादानं ग्रन्थकारस्य व्यर्थमेवेति चेन्नैतत्समीचीनं तथा सति सर्वत्रैव लक्ष-णागमनादसम्भवापत्तिः ह्रदत्वावच्छिन्नविशेष्यकवह्निनत्वावच्छिन्नप्रकारकवह्निनत्वाव-च्छिन्ननिरूपितव्याप्तिविशिष्टधूमत्वावच्छिन्नप्रकारकत्वस्य ह्रदो वह्निमान् वह्निव्याप्य-धूमवांश्चेत्याकारकसंस्कारे एवं तादृशज्ञानत्वस्य वह्न्यभाववान् ह्रदोवह्निमान् वह्नि-मान्वह्निव्याप्यधूमवानित्याकारकाहार्यज्ञाने च सत्त्वेन तत्र वह्न्यभाववान् ह्रद इति निश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यताविरहेण [आहार्यज्ञानं न कस्यापि प्रति-बध्यं, संस्कारं प्रति च तादृशनिश्चयस्य प्रतिबन्धकतैव नास्ति] तादृशप्रतिबन्धकता-शालियथार्थज्ञानविषयत्वस्य वह्न्यभाववद्ध्रदादावभावात्। अतः प्रकृतानुमिति-पदोपादानं कृतम् तथा च ह्रदत्वाद्यवच्छिन्नविशेष्यकवह्नित्वाद्यवच्छिन्नप्रकारक-तादृशवह्न्यादिव्याप्यधूमादिप्रकारकानुमितिर्न संस्काररूपा न वा आहार्यरूपा [परो-क्षरूपाया अनुमितेः। अनाहार्यत्वासंदिग्धत्वनियमात्] तथा च तादृशानुमितित्व-व्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य बाधादौ सर्वत्र सत्त्वात् लक्षणसमन्वयेन नासम्भवसम्भावनेति भावः।

## गादाधरी

साध्यव्याप्यहेतुधर्मितावच्छेदककसाध्यवत्ताज्ञानस्यैव साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारकतया तादृशाकारलिखनस्वरसात् तादृशहेतुविशिष्टपक्षता-वच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकावच्छिन्नप्रकारकानुमितित्वव्यापकप्रतिबध्य-त्वस्य लक्षणघटकत्वोपगमे पर्वतत्वाच्छेदेन वह्नेस्साध्यत्वे तत्सामानाधिकरण्येन वह्न्यभावादेरदोषत्वप्रसङ्गः। सामानाधिकरण्यमात्रादगाहिबाधज्ञानस्य शुद्धपर्वत-

त्वावच्छेदेन वह्न्यादिज्ञानं । प्रत्येव प्रतिबन्धकतया धूमविशिष्टपर्वतत्वावच्छिन्नधर्मिकवह्न्यादिज्ञानाऽप्रतिबन्धकत्वादिति तदुपेक्षितम् ।

## विमलप्रभा

साध्यव्याप्यहेतुधर्मितावच्छेदककसाध्यवत्ताज्ञानस्यैव = साध्यव्याप्यो यो हेतुः स एव धर्मितावच्छेदको यस्यैतादृशसाध्यवत्ताज्ञानस्य, साध्यव्याप्यहेतुनिष्ठावच्छेदकतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यप्रकारकज्ञानस्येति यावत् । तादृशाकारः = साध्यव्याप्यो हेतुः हेतुमान् पक्षः साध्यवानित्याकारः। तादृशहेतुः = साध्यव्याप्यो हेतुः । लक्षणघटकत्वोपगमे = सा यन्निरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यकप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य लक्षणार्थत्वस्वीकारे । पर्वतत्वावच्छेदेन = पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगसम्बन्धेन । तत्सामानाधिकरण्येन = पर्वतत्वसामानाधिकरण्येन । साध्याभावादेः = वह्न्यभावादेः । अदोषत्वप्रसंगः = अव्याप्तिप्रसंगः । सामानाधिकरण्यमात्रावगाहिबाधादिज्ञानस्य = केवलस्वरूपसम्बन्धेन पर्वतत्वावच्छिन्नविशेष्यकवह्न्यभावादिप्रकारकनिर्णयस्य, । शुद्धपर्वतत्वावच्छेदेन = पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगसम्बन्धेन । वह्न्यादिज्ञानं प्रत्येव = पर्वतादिविशेष्यकवह्न्यादिप्रकारकबुद्धिं प्रत्येव । अप्रतिबन्धकत्वात् = वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यकवह्निप्रकारकानुमित्यप्रतिबन्धकत्वात् । तदुपेक्षितं = विशिष्टवैशिष्ट्यावगाहिपरत्वमुपेक्षितमस्माभिरिति शेषः ।

अयमर्थः । साध्यव्याप्यहेतुमान् पक्षः साध्यवानिति शिरोमणिग्रन्थे । समूहालम्बनपरत्वबोधकचकारविरहेण ज्ञायते यत् साध्यव्याप्यहेतुविशिष्टपक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकावच्छिन्नप्रकारकानुमितित्वव्यापकप्रतिबध्यतेत्यादिरीत्या विशिष्टवैशिष्ट्यावगाहित्वबोधकतैव तादृशदीधितिग्रन्थस्येति चेन्मैवं वोचः, तथा सति पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगसम्बन्धेन पर्वतपक्षकवह्निसाध्यक-

स्थले शुद्धस्वरूपसम्बन्धेन वह्न्यभाववत्पर्वतरूपबाधेऽव्याप्तिः; वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकानुमितिप्रतिबन्धकतायाः पर्वतत्वसामानाधिकरण्येन वह्न्यभाववत्पर्वतरूपबाधनिश्चये विरहेण [वह्निव्याप्यधूमविशिष्टपर्वतो वह्निमानित्याकारकसामानाधिकरण्यावगाहिबुद्धिं प्रति सामानाधिकरण्यावगाहिबाधनिश्चयस्य प्रतिबन्धकतैव नास्ति, तस्य केवलपर्वत्वावच्छेदेन वह्न्यनुमितिं प्रत्येव प्रतिबन्धकता] तच्छालियथार्थज्ञानविषयत्वाभावात्। अतः साध्यव्याप्यहेतुविशिष्टपक्षतावच्छेदकावच्छिन्नविशेष्यकत्वेनास्माभिः विशिष्टवैशिष्ट्यवगाहिता परत्वमुपेक्षितमिति गदाधरस्याशयः समूहालम्बनानुमितिपरत्वे च पर्वतत्वावच्छेदेन वह्निमत्तावगाह्यनुमितिं प्रति सामानाधिकरण्येन बाधनिश्चयस्य प्रतिबन्धकतया तादृशप्रतिबन्धकतामादाय तादृगबाधे लक्षणसंगतिः।

## गादाधरी

न च विशेष्यतावच्छेदककोटौ धूमादेरधिकस्य भानेऽपि शुद्धपर्वतत्वावच्छिन्नसयोगादेर्यत्र संसर्गता तत्र पर्वतत्वसामानाधिकरण्येन वह्न्यभावादिज्ञानस्य प्रतिबन्धकत्वमावश्यकं,तादृशानुमितेरपि शुद्धपर्वतत्वावच्छेदेन वह्न्याद्यवगाहित्वादितिवाच्यं, धर्मितावच्छेदकावच्छेदेन विशिष्टबुद्धौ धर्मितावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नत्वमेव संसर्गांशे भासते। न तु तदेकदेशावच्छिन्नत्वमपि, तद्धर्मावच्छिन्नविशेष्यतानिरूपिततदेकदेशव्यापकत्वावच्छिन्नसंसर्गताया अप्रामाणिकत्वात्।

## विमलप्रभा

सामानाधिकरण्येनोक्तबाधेऽव्याप्तेराशङ्कैव नेत्याशयेनाशङ्कते-न चेति। न चेत्यस्य वाच्यमित्यनेनान्वयः, विशेष्यतावच्छेदककोटौ = अनुमितिघटकं यत्विशेष्यं तन्निष्ठा या विशेष्यता तादृशविशेष्यतावच्छेदककुक्षौ। धूमादेरधिकस्य भानेऽपि धूमादेः धर्मितावच्छेदकतया प्रवेशेऽपि। शुद्धपर्वतत्वावच्छिन्नसंयोगादेः केवलपर्वतत्वव्यापकवह्निप्रतियोगिकत्वसंसर्गेण पर्वतत्वविशिष्टसंयोगादेः। यत्र = वह्निव्याप्यधूमवान् पर्वतो

वह्निमानिति ज्ञाने । तत्र = तादृशस्थले । तादृशानुमितेरपि = साध्यव्याप्यहेतुविशिष्टपक्षतावच्छेदकावच्छिन्नविशेष्यकानुमितेरपि । वह्निव्याप्यधूमवान् पर्वतो वह्निमानित्यनुमितेरिति यावत् । शुद्धपर्वतत्वावच्छेदेन = पर्वतत्वमात्रव्यापकवह्निप्रतियोगिकसंयोगेन । वह्न्याद्यवगाहित्वात् = वह्न्यादिप्रकारकत्वात् । धर्मितावच्छेदकावच्छेदेन = धर्मितावच्छेदकीभूतं यत् वह्निव्याप्यधूमपर्वतत्वोभयं तदवच्छेदेन । विशिष्टबुद्धौ = विशिष्टानुमितौ । धर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वमेव = पर्वतादिनिष्ठा या धर्मिता तदवच्छेदकतापर्याप्त्यधिकरणीभूतं यत् वह्निव्याप्यधूमपर्वतत्वोभयं, तादृशधर्मद्वयापकवह्निप्रतियोगिकत्वावच्छिन्नत्वमेव । संसर्गांशे = वह्निप्रतियोगिकसंयोगाद्यंशे । भासते = विषयीभवति । तदेकदेशावच्छिन्नत्वं = पर्वतत्वादिरूपैकधर्मावच्छिन्नत्वं । अप्रमाणिकत्वात् = तादृशधूमपर्वतत्वरूपधर्मद्वयावच्छिन्नविशेष्यतानिरूपितधर्मद्वयैकदेशकेवलपर्वतत्वव्यापकवह्निप्रतियोगिकत्वावच्छिन्नसंसर्गतायां प्रमाणविरहात् । अयमर्थः । भवतु नाम पर्वतादिनिष्ठा या विशेष्यता तदवच्छेदककोटौ धूमादेरधिकस्य भानम् तथापि तदेकदेशव्यापकतामङ्गीकृत्य साध्यव्याप्यहेतुविशिष्टपक्षतावच्छेदकावच्छिन्नविशेष्यकानुमितेः पर्वतत्वव्यापकवह्निप्रतियोगिकसंसर्गावगाहित्वादेवञ्च विशेष्यतावच्छेदककुक्षौ धूमस्याधिकस्य भानेऽपि वह्निव्याप्यधूमविशिष्टपर्वतो वह्निमानित्यनुमितौ पर्वतत्वरूपपक्षतावच्छेदकैकदेशव्यापकवह्निप्रतियोगिकसंयोगावगाहित्वस्यानुभविकतया शुद्धपर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगेन वह्नेः साध्यतास्थले शुद्धस्वरूपसम्बन्धेन वह्न्यभाववत्ताज्ञानस्य वह्निव्याप्यधूमविशिष्टपर्वतत्वधर्मितावच्छेदककवह्निमत्ताबुद्धि प्रत्यपि प्रतिबन्धकत्वं सर्वानुभवसिद्धमिति न सामानाधिकरण्येन वह्न्यभाववत्पर्वतेऽव्याप्तिशङ्केतिचेन्न तन्मनोरमम्, यतः धर्मितावच्छेदकावच्छेदेन यत्विशिष्टबुद्धित्वव्द्भवति तद्धर्मितत्वच्छेदकतापर्याप्त्यधिकरणधर्मव्यापकविधेयप्रतियोगिकसंसर्गतानिरूपकत्ववद्भवतीति नियमेन, साध्यव्याप्य [वह्निव्याप्य] हेतु (धूम) विशिष्टपक्षतावच्छेदकावच्छिन्न [पर्वतत्वावच्छिन्न] विशेष्यतानिरूपितशुद्धपर्वतत्वाद्यवच्छिन्नसंसर्गतायाः अर्थात् पर्वतत्वाद्यवच्छिन्नविशेष्यतानिरूपितवह्निव्याप्यधूमपर्वतत्वैतदुभयघटककेवल-

पर्वतत्वव्यापकवह्निप्रतियोगिकसंसर्गतायाः स्वीकारे प्रमाणविरहेण सामानाधिकरण्येन वह्न्यभाववत्पर्वतरूपबाधनिश्चयस्य धूमविशिष्टपर्वतो वह्निमानित्यनुमितिम्प्रत्यप्रतिबन्धकतया पर्वतत्वावच्छेदेन वह्नेः साध्यतास्थले सामानाधिकरण्येन बाधेऽव्याप्तिस्तदवस्थैवेति हेतोः विशिष्टवैशिष्ट्यावगाहिपरत्वमनुमितेरुपेक्षितमिति भावः ।

## गादाधरी

अथ लिङ्गोपधानमते हेतोस्सर्वत्रैव धर्मितावच्छेदकतया भानात् तादृशसंसर्गताभ्युपगम आवश्यकः, अन्यथा शुद्धपर्वतत्वावच्छेदेन हेतुमत्ताज्ञानस्थले हेतुविशिष्टपर्वतत्वावच्छिन्नधर्मिकसंयोगादिसंसर्गकाऽनुमितेरेवोपगमे पर्वतत्वसामानाधिकरण्यमात्रावगामिबाधादिग्रहकालेऽपि तत्र साध्यनिश्चयवतोऽनुमित्यापत्तेः, न हि सामानाधिकरण्येन बाधसिद्ध्योः सत्योः कश्चित् अनुमितिमुपैति, तादृशबाधादिग्रहस्य क्वचितदप्यनुमितौ प्रतिबन्धकत्वासम्भवात्तेषां हेत्वाभासताविलोपापत्तिश्चेति चेद् एवमपि लिङ्गानुपधानमते तादृशविषयतायां मानाभाव एव, प्रकृतग्रन्थस्तु न लिङ्गोपधानमताभिप्रायकः, तन्मतेऽनुमितेः सर्वत्रैव तथाकारतया तादृशाकारत्वस्याऽव्यावर्त्तकतयाऽनुमितिपदस्य तादृशानुमितिपरत्वप्रदर्शनाऽसङ्गतेः ।

## विमलप्रभा

आशङ्कते—अथेति लिङ्गोपधानमते = साध्यव्याप्यहेतुविशिष्टपक्षविशेष्यकसाध्यप्रकारकानुमितिस्वीकर्त्तृन्यायाचार्योदयनमते । अनुमितौ सर्वत्रैव लिङ्गविषयकत्ववादिमते इति यावत् । सर्वत्रैव = अनुमितिमात्रे एव । धर्मितावच्छेदकतया = पर्वतादिनिष्ठविशेष्यतावच्छेदकत्वेन । भानात् = विषयीकरणात् । तादृशसंसर्गताभ्युपगमः = तदेकदेशव्यापकत्वावच्छिन्नसंसर्गतास्वीकारः, धर्मितावच्छेदकतापर्याप्त्यधिकरणकिञ्चिदेकधर्मव्यापकत्वावच्छिन्नसंसर्गतास्वीकार इति यावत् । अन्यथा उदयनमते तादृशैकदेशव्यापकत्वावच्छिन्न-

संसर्गताया अस्वीकारे । शुद्धपर्वतत्वावच्छेदेन = केवलपर्वतत्वव्यापकधूमप्रतियोगिकसंयोगसम्बन्धेन । हेतुमत्ताज्ञानस्थले = वह्निव्याप्यधूमप्रकारकनिश्चयस्थले । पर्वतत्वमात्रव्यापकवह्निव्याप्यधूमप्रतियोगिकसंयोगेन पर्वतो वह्निव्याप्यधूमवानिति निश्चयस्थल इति यावत् ।

हेतुविशिष्टपर्वतत्वावच्छिन्नधर्मिकसंयोगादिसंसर्गकानुमितेरेवोपगमे = वह्निनिरूपितव्याप्तिविशिष्टधूमपर्वतत्वैतत्धर्मद्वयव्यापकवह्निप्रतियोगिकसंयोगेन धूमवत्पर्वतो वह्निमानित्येवानुमितिर्भवतीत्यङ्गीकारे । पर्वतत्वसामानाधिकरण्यमात्रावगाहिबाधादिग्रहकालेऽपि = स्वरूपेण वह्न्यभाववान् पर्वत इति निश्चयकालेऽपि । तथाविधनिश्चयवतः = पर्वतत्वसामानाधिकरण्येन पर्वतो वह्निमानितिनिश्चयवतः पुरुषस्य अनुमित्यापत्तेः । वह्निव्याप्यधूमवत्पर्वतो वह्निमानित्यनुमित्यापत्तेः । सामानाधिकरण्येन = पर्वतत्वसामानाधिकरण्येन । बाधसिद्ध्योः = सामानाधिकरण्येन वह्न्यभाववान् पर्वत इति बाधः, सामानाधिकरण्येन वह्निमान् पर्वत इति सिद्धिस्तयोः । अनुमितिं न हि कश्चिदभ्युपैतीति योजना । उपैति स्वीकरोति । तादृशबाधादिग्रहस्य सामानाधिकरण्यमात्रावगाहिनो वह्न्यभाववान् पर्वत इति बाधनिश्चयस्य । क्वचिदप्यनुमितौ सामानाधिकरण्येनावच्छेदकदेन कुत्राप्यनुमितौ । तेषां वह्न्यभाववत्पर्वतादिरूपबाधादीनां । हेत्वाभासताविलोपापत्तिः = दोषत्वविलयापत्तिः, तत्रानुमितिप्रतिबन्धकताविरहेण = तद्घटितलक्षणागमनेन हेतुदोषत्वानुपपत्तिरिति यावत् । एवमपि = तथापि । लिङ्गोपधानमते तादृशविषयतायाः सप्रमाणत्वेऽपि । लिङ्गानुपधानमते = लिङ्गविशिष्टे = [हेतुविशिष्टे] पक्षे लैङ्गिकस्य [साध्यस्य] भानानङ्गीकारमते । तादृशविषयतायां = तादृशैकदेशव्यापकविधेयप्रतियोगिकसंसर्गतायां । मानाभाव एव प्रमाणाभाव एव । प्रकृतग्रन्थस्तु दीधितिकारोक्तसाध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारकानुमितिपरं वेति ग्रन्थस्तु । न लिङ्गोपधानमताभिप्रायकः = नोदयनमताभिप्रायकः । तन्मते = उदयनमते । सर्वत्रैव = अवच्छेदकावच्छेदेन, सामानाधिकरण्येन च साध्यतास्थले । तदा-

कारतया = साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारकत्वेन । तादृशाकारत्वस्य = समूहालम्बनाकारत्वस्य । अव्यावर्त्तकतया = व्यावृत्त्यप्रयोजकत्वेन । तादृशानुमितिपरत्वं = समूहालम्बनानुमितिप्रदर्शनपरत्वं । प्रदर्शनासङ्गतेः = दीधितिकारस्येति शेषः अयमर्थः । पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्निव्याप्यधूमपर्वतत्वोभयघटककेवलैकदेशपर्वतत्वमात्रव्यापकवह्निप्रतियोगिकसंसर्गताया अस्वीकारे पर्वतत्वसामानाधिकरण्येन वह्न्यभाववान् पर्वत इति बाधनिश्चयदशायां, सामानाधिकरण्येन वह्निमान् पर्वत इति साध्यनिश्चयकाले च कस्यापि पुंसः धूमपर्वतत्वोभयव्यापकवह्निप्रतियोगिकसंयोगेन वह्निव्याप्यधूमवत्पर्वतो वह्निमानित्याकारकानुमितिः स्यात् न चेष्टापत्तिः सर्वानुभवविरोधप्रसङ्गात्, अतस्तादृशसंसर्गतास्वीकार आवश्यकः । एवञ्च सामानाधिकरण्येन वह्न्यभाववत्पर्वतरूपबाधनिश्चयस्यैव केवलपर्वतत्वव्यापकवह्निप्रतियोगिकसंसर्गावगाहितया तादृशबाधनिश्चये निरुक्तानुमितिबन्धकतासत्त्वेन नानुमित्यापत्तिसम्भावनेति । सामानाधिकरण्येन बाधनिश्चयसामानाधिकरण्येन साध्यवत्तानिश्चययोःसमवधानकालेऽपि तादृशानुमितिस्वीकारे निरुक्तबाधे सामानाधिकरण्येनावच्छेदकावच्छेदेन वाऽनुमितिप्रतिबन्धकताविरहेणानुमितिप्रतिबन्धकताघटितलक्षणागमनात् हेत्वाभासत्वानुपपत्तिरतः सामानाधिकरण्येन बाधनिश्चयकालेऽपि नानुमितिः प्रामाणिकीति बाधादिसमवधानदशायामनुमित्यापत्तिवारणाय तदेकदेशव्यापकविधेयप्रतियोगिकसंसर्गतायास्स्वीकार आवश्यक एव ।

लिङ्गानुपधानमते पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्निव्याप्यधूमपर्वतत्वोभयव्यापकवह्निप्रतियोगिकसंसर्गतायां प्रमाणविरहेण पर्वतत्वादिसामानाधिकरण्येनवह्न्यभावावगाहिबाधज्ञानस्यापि पर्वतत्वावच्छेदेन वह्न्यनुमितिं प्रति प्रतिबन्धकतयाऽनुमितिप्रतिबन्धकताघटितलक्षणगमनान्न हेत्वाभासविलोपप्रसङ्ग इति । यद्युक्तग्रन्थः लिङ्गोपधानमताभिप्रायकः स्यात्तदा तन्मते सर्वत्रैवानुमितेः समूहालम्बपरतया पुनः समूहालम्बनपरत्वप्रदर्शनमसङ्गतमेव स्यादतः प्रोक्तदीधितिग्रन्थः लिङ्गानुपधानमताभिप्रायक एवेति भावः ।

## गादाधरी

केचित्तु लिङ्गानुपधानमतेऽनुमितिपदस्य तदुभयपरत्वं व्याख्याय यथाश्रुत-परतानिर्वाहाय लिङ्गोपधानमतमाश्रयते—साध्यव्याप्येत्यादिना, इत्याकारकानुमितिपरम् अनुमितेरित्याकारकतामताभिप्रायकम् इति व्याचक्षते ।

## विमलप्रभा

जगदीशतर्कालङ्कारमतमाह—केचित्त्वित्यादिना । केचिदित्यस्य व्याचक्षत इत्यनेनान्वयः । लिङ्गानुपधानमते गङ्गेशमते । अनुमितिपदस्य लक्षणघटकीभूतानुमितिपदस्य । तदुभयपरत्वं अनुमितितत्कारणोभयपरत्वं । व्याख्याय = अनुमितिपदमनुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वेनानुमितितत्कारणज्ञानपरमितिग्रन्थे नव्याख्यानं विधाय । यथाश्रुतपरतानिर्वाहाय अनुमितिपदस्य वाच्यार्थपरतालाभाय । इत्यादिना इत्यादिग्रन्थेन । लिङ्गोपधानमतम् उदयनमतम् । आश्रयते शिरोमणिरितिशेषः । अनुमितेः लक्षणघटकानुमितेः । इत्याकारकतामताभिप्रायकं साध्यव्याप्याप्यहेतुविशिष्टपक्षे साध्यप्रकारकत्वमताभिप्रायकं यन्मतेऽनुमितेरित्याकारकता तन्मताभिप्रायकमिति यावत् । अयमर्थः, लिङ्ग [हेतु] विशिष्टे लैङ्गिकस्य (साध्यस्य भानानङ्गीकर्तृ गङ्गेशादिमते लक्षणघटकीभूतानुमितिपदस्यानुमितितत्कारणोभयपरतां व्याख्यायानुमितिपदस्य वाच्यार्थपरत्वनिर्वाहस्याचार्योदयनमतमादृत्य व्याख्यामुपदर्शयतीति भावः

## बलदेवी

केचित्तु यथाश्रुतार्थपरतानिर्वाहाय लिङ्गोपधानमत एवाश्रयते-इति भट्टाचार्यः । नन्वत्र प्रथमकल्पपरित्यागेऽजहल्लक्षणायां गौरवमिति केचित्त्वित्यादिना लक्षणां विहाय निर्वाहः कृतः, तत्राव्याप्त्यतिव्याप्त्यसम्भवसम्भवे गौरवदानमसङ्गतमेव । तथा हि तादृशकार्यतानिरूपकसम्बन्धिग्रहनिष्ठप्रतिबध्यतानिवेशेऽतिव्याप्तिः तादृशग्रहत्वावच्छिन्नत्वनिवेशेऽसम्भवः तादृशग्रहत्वव्यापकतानिवेशेऽव्याप्तिरिति भट्टाचार्येणोक्तमिति तादृशग्रन्थावतरणकालीनदोषस्य जागरूकत्वादिति चेन्न, पक्षसाध्यहेतुकानुमितित्वावच्छिन्नकार्यताप्रतियोगिकाश्रयत्वकारणत्वायतरा-

त्मकयत्किञ्चित्सम्बन्धवद्ग्रहत्वव्यापकप्रतिबध्यताया एव लक्षणे निवेशनीयतया-व्यापकत्वपक्षे भट्टाचार्योक्तबाधव्यभिचारादावव्याप्त्यसम्भवादिति तादृशकार्यताप्रतियोगिकाश्रयत्वरूपसम्बन्धवद्ग्रहत्वव्यापकत्वस्यानुमितिविरोधिप्रतिबध्यतायां तादृशकार्यताप्रतियोगिकनिरूपकत्वरूपसम्बन्धवद्ग्रहत्वव्यापकत्वस्य परामर्शविरोधिव्यभिचारप्रतिबध्यतायाञ्च सर्वत्र प्रत्येकं सत्त्वात्। नचैवं भट्टाचार्यमते तादृशाभासग्रन्थः कथं सङ्गच्छत इति वाच्यं, साध्याभाववदवृत्तिहेतुमत्ताज्ञानस्यानुगतरूपेणान्यलिङ्गकसाधारण्यानुरोधेनैकरूपेण हेतुतावच्छेदकविषयतायामनिवेश्य कारणतामतमवलम्ब्य लक्षणकरणे तादृशकार्यतायाः निवेशासम्भवात्।

एवञ्च तादृशानुमितिनिष्ठकार्यताप्रतियोगिकनिरूपकत्वसम्बन्धस्य वह्नितृणरूपहेतुविषयकपरामर्शेषु सत्त्वेन तत्र सर्वत्र वह्निर्धूमव्यभिचारीति व्यभिचारनिश्चयप्रतिबध्यत्वाभावेन व्यभिचारेऽव्याप्तिरिति।

अत्र केचित्तु मते एतादृशव्याप्तिज्ञानानां पृथक् कारणतामतस्यैव हेतुत्वात्, तत्र च तादृशकार्यताप्रतियोगिकउक्तान्यतरात्मकयत्किञ्चित्सम्बन्धिविशिष्टग्रहत्वस्य-तादृशनानाविधव्याप्तिज्ञानेषु सत्त्वेन तथानिवेशेऽव्याप्तिविरहात्। न चैवमपि प्रकृतपक्षादिविषयकानुमितित्वावच्छिन्नकार्यताप्रवेशेऽप्रामाण्यज्ञानानात्मकरूपेणोत्तेजकतामतेऽसम्भवः, तादृशानुमितित्वव्यापकपरामर्शनिरूपितकार्यता तु अप्रसिद्धैवेति, अनुमितिनिष्ठकार्यतानिवेशे पर्वतो वह्निमान् ह्रदश्च तथेत्याकारकानुमितिनिष्ठह्रदधर्मिकपरामर्शकार्यतामादाय पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभाववदध्रदेऽतिव्याप्तिरिति वाच्यम्, प्रकृतपक्षसाध्यकानुमितिनिष्ठकार्यताया एव निवेशनीयत्वात्, उक्तातिव्याप्तिश्च तादृशानुमितौ विधेयताद्वयानिरूपकत्वनिवेशेनैव वारणीया।

न च वह्निव्याप्यधूमवान् घटव्याप्यपटवांश्च पर्वत इति समूहालम्बनपरामर्शानन्तर यत्किञ्चित् प्रतिबन्धकवशेन (घटवान् पर्वत इति सिद्धिवशेन) घटानुमितिर्न जाता किन्तु पर्वतो वह्निमानित्येवानुमितेरेव जातेति विधेयताद्वयाऽनिरूपकतादृशा-

नुमितिनिष्ठघटव्याप्यवत्ताविषयकपरामर्शोत्तरत्वावच्छिन्नकार्यताप्रतियोगिकनिरूपक - त्वरूपसम्बन्धविशिष्टघटव्याप्यपटविषयकपरामर्शनिष्ठप्रतिबध्यतामादाय पर्वतो वह्नि-मानित्यादौ घटाभाववद्वृत्तिपटेऽतिव्याप्तिरिति वाच्यम्, अव्यवहितोत्तरत्वावच्छि-न्नकार्यतानिरूपितज्ञाननिष्ठकारणतावदन्यत्वेनानुमितौ विशेषणीयत्वात् । अनुमितौ कारणतावैशिष्ट्यम् स्वनिरूपितकार्यतावत्त्वस्वाभाववज्ज्ञाननिष्ठकारणतानिरूपिता-ऽव्यवहितोत्तरत्वावच्छिन्नकार्यतावत्त्वोभयसम्बन्धेन । तथा च तादृशानुमितौ परामर्शद्व-यनिष्ठकारणतानिरूपितकार्यतावत्त्वसत्त्वात् तद्व्यावृत्तिः । कारणतायामव्यवहितो-त्तरत्वावच्छिन्नकार्यतानिरूपितत्वनिवेशात् ईश्वरीयज्ञाननिष्ठकारणतामादाय न तादृ-शानुमित्यप्रसिद्धिः । ज्ञाननिष्ठत्वविशेषणाच्च सिद्धिविशिष्टानुमितिं प्रति इच्छायाः कारणत्वमते इच्छानिष्ठकारणतामादाय नाऽप्रसिद्धिः । सम्बन्धघटकप्रथमसम्बन्ध-निवेशादुदासीनानुमितिनिरूपितोदासीनपरामर्शनिष्ठाकारणतामादाय नाप्रसिद्धिः । द्वितीयसम्बन्धनिवेशात् परामर्शकारणतामादाय नाऽप्रसिद्धिः । द्वितीयसम्बन्धघटक-कारणतायां ज्ञाननिष्ठत्वनिवेशात् प्रागुक्तरीत्या इच्छाकारणतामादाय पुनर्नाप्रसिद्धिः। कार्यतायामव्यवहतोत्तरत्वनिवेशात् विशेषणज्ञानकार्यतामादाय नाप्रसिद्धिः ।

एवं तादृशकारणतावदन्यप्रकृतपक्षसाध्यकानुमितिष्ठप्रकृतहेतुकपरामर्शाऽव्य-वहितोत्तरत्वावच्छिन्नकार्यताया एव निवेशो बोध्यः । तत्फलञ्च पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभाववद्वृत्तिद्रव्येऽतिव्याप्तिवारणमेव । तथा हि प्रकृतहेत्वंशे व्याप्त्य-नवगाहिप्रकृतहेतुविषयकवह्निव्याप्यद्रव्यवान् पर्वत इति परामर्शोत्तरानुमितौ तादृश-कारणतावदन्यत्वस्य सत्त्वात् तादृशकार्यताप्रतियोगिकनिरूपकत्ववत्तादृशपरामर्शत्व-व्यापकप्रतिबध्यत्वस्यापि ग्रहणासम्भादिति ।

इदमत्र चिन्तनीयम्, एवं रीत्या पूर्वोक्तदोषोद्धारेण प्रागुक्तरीत्या सकलव्याप्ति-प्रकारतात्वेनानुगमसम्भवेन प्रकृतपक्षसाध्यहेतुकानुमितित्वावच्छिन्नकार्यत्वाऽप्रसि-द्ध्याऽसम्भवाभिधानमनुचितमिति ।

परन्तु नानाविधव्याप्तिज्ञानानामेकरूपेण कारणतामते कारणतायां प्रकृत-हेतुकत्वावच्छिन्नत्वनिवेशासम्भदरूपदोषो बोध्य इति ।

ननु लिङ्गोपधानमते ह्रदो वह्निमान् जलादित्यादौ वह्न्यभाववज्जलवद्ध्र-देऽतिव्याप्तिः, लिङ्गधर्मितावच्छेदकसाध्यानुमितिनिष्ठजलसामानाधिकरण्येनावच्छे-दकावच्छेदेन वा वह्न्यवगाहितया तत्प्रतिवध्यतानिरूपिता या जलावच्छेदेन वह्न्यभावप्रकारताशालिज्ञाननिष्ठाप्रतिवन्धकता तच्छालियथार्थज्ञानविषयत्वादिति चेन्न, एतस्यापि व्यभिचारेऽन्तभार्वेण तत्र लक्षणागमनस्येष्टत्वादिति साधारणग्रन्थे हेतुमद्वृत्तिसाध्याभावस्यापि व्यभिचारतया स्वीकृतत्वात्। न च तथापि वह्न्यभाव-व्याप्यजलवद्ध्रदेऽतिव्याप्तिः, जलावच्छेदेन साध्याभावव्याप्यवत्तानिश्चयस्यापि तादृ-शानुमितिप्रतिबन्धकत्वादिति वाच्यम्, एतस्यापि सव्यभिचारेऽन्तर्भावात्, यो यत्र दोषः तत्व्याप्योऽपि तत्र स एव दोष इति मथुरानाथेन सिद्धान्तितत्वात्। वह्न्य-भावहेतुकस्थले वह्निव्याप्यवत्पर्वतस्य व्याप्यत्वासिद्धावन्तर्भावादिति ध्येयम्।

## दीधितिः

तेन एकत्र हेतौ व्यभिचारादिग्रहेऽपि अन्यस्य परामर्शादनुमित्युत्पादेन व्यभि-चारात्, व्याप्त्यादिज्ञानेनान्यथासिद्धत्वाच्च व्यभिचारादिग्रहाभावस्यानुमित्यजनकत्वेऽ-पि न क्षतिरिति वदन्ति।

## गादाधरी

व्याख्यायाः प्रयोजनं स्फुटयति–तेनेति। एकत्र वह्नित्वाद्येकधर्माव-च्छिन्ने। व्यभिचारादीत्यादिना स्वरूपासिद्धिपरिग्रहः। अन्यस्य परामर्शात् तत्त-द्वह्नित्वादिरूपाऽपरधर्मावच्छिन्ने व्याप्तिपक्षधर्मत्वावगाहिज्ञानात्। व्यभिचारादिति, व्यभिचारादिग्रहाभावस्यानुमित्यजनकत्वेऽपीत्यनेन सम्बन्धः। यत्र यद्रूपावच्छिन्ने व्यभिचारज्ञानोत्पत्तिद्वितीयक्षणे कथञ्चित् तद्रूपावच्छिन्नलिङ्गकपरामर्शस्तत्र क्षणे-कविलम्बेनाऽनुमित्युपगमान्न तत्र व्यभिचारो दर्शितः।

विमलप्रभा

तेन = अनुमितिपदस्य समूहालम्बनानुमितिपरत्वाभिधानेन । एकत्र हेतौ = वह्न्याद्येकस्मिन् हेतौ । व्यभिचारभ्रमेऽपि = धूमाद्यभावाधिकरणनिरूपितवृत्तित्वज्ञानेऽपि । अन्यस्य = तत्तद्वह्न्यादिरूपान्यहेतोः.....महानसीयादिवह्नेरिति यावत् । परामर्शात् = धूमव्याप्यतत्तद्वह्निमान् पर्वत इति निर्णयात् । अनुमित्युत्पादेन = धूमसाध्यकानुमितिजननेन । व्यभिचाराद् = व्यभिचाराभावरूपकारणाऽसत्त्वेऽपि अनुमित्यात्मककार्योत्पत्तिरूपव्यतिरेकव्यभिचारात् । अन्यथासिद्धत्वात् = अवश्यक्लृप्तव्याप्तिज्ञानादिरूपकारणकलापादेवानुमित्युदयसम्भवे व्यभिचारज्ञानाभावोऽन्यथासिद्धस्तस्मात् । व्यभिचारादिग्रहाभावस्य = व्यभिचारविरोधादिनिश्चयाभावस्य ।

अनुमित्यजनकत्वेऽपि = अनुमितिं प्रति कारणतारहित्येऽपि = न क्षतिः न व्यभिचारादावव्याप्तिः । टीकायां व्याख्याया इति । व्याख्यायाः = अनुमितिपदस्यानुमितितत्कारणपरत्वसमूहालम्बानानुमितिपरत्वरूपव्याख्यायाः । प्रयोजनं = व्यभिचारादावव्याप्तिवारणरूपफलम् । स्फुटयति = प्रकटयति । वह्नित्वाद्येकधर्मावच्छिन्ने = वह्नित्वप्रमेयत्वादिरूपं यद्धेतुतावच्छेदकं तदेकधर्मावच्छिन्ने = आदिना = शिरोमण्युक्तादिपदेन । तत्तद्वह्नित्वादिरूपाऽपरधर्मावच्छिन्ने = चत्वरीयवह्नित्वगोष्ठीयवह्नित्वादिरूपापरधर्मावच्छिन्ने । व्याप्तिपक्षधर्मत्वावगाहिज्ञानात् = धूमव्याप्यचत्वरीयवह्निमान् पर्वत इति ज्ञानात् ।

अनुमित्यजनकत्वेऽपि = साध्यविधेयकानुमितिजनकताविरहेऽपि । यत्र = यादृशस्थले । यद्रूपावच्छिन्ने = वह्नित्वादिरूपधर्मावच्छिन्ने । व्यभिचारज्ञानोत्पत्तिः = वह्निः धूमव्यभिचारीति ज्ञानोदयः । कथञ्चित् = लौकिकसन्निकर्षादिना । तत्र = तादृशस्थले । व्याजेन = बिलम्बेन । अनुमित्यभ्युपगमात् = धूमादिसाध्यकानुमितिस्वीकारात् । व्यभिचाराभावात् = कारणाऽसत्त्वे = कार्योत्पत्तिरूपव्यतिरेकव्यभिचारानुदयात् । तत्र तादृशस्थले । अयमर्थः । अनुमितिं प्रति व्यभिचारादिग्रहाभावस्य कारणत्वमङ्गीकृत्यैव व्यभिचारादावव्याप्तिवारणसम्भवे किमेतादृशव्या-

ख्यानेनेति केषांचित् शङ्कां समाधत्ते—तेनेत्यादिना। एवञ्च व्यभिचारादिग्रहाभावस्य कारणतास्वीकारे धूमाभाववद्वृत्तिवह्निरित्याकारकव्यभिचारज्ञानकालेऽपि धूमव्याप्यचत्वरीयवह्निमान् पर्वत इत्याकारपरामर्शेन पर्वतो धूमवानित्यनुमितिर्या भवति सा न स्यात् व्यभिचारज्ञानाभावरूपकारणविरहात्। न चेष्टापत्तिरनुभवविरोधात्, तस्मात् व्यभिचारज्ञानाभावरूपकारणासत्त्वेऽपि अनुमित्युत्पत्तिरूपकार्योत्पत्त्या व्यतिरेकव्यभिचारो दुर्वारः। एवं तत्पक्षसाध्यहेतुकानुमितिं प्रति अवश्यक्लृप्तकारणीभूतं यत् परामर्शव्याप्तिज्ञानादिकं तादृशकारणकलापादेव सर्वत्रानुमित्युत्पत्तिसम्भवे तद्भिन्नतया व्यभिचारज्ञानाभावोऽन्यथासिद्ध इति व्यभिचारज्ञानाभावमादायाव्याप्तिवारणासम्भवादव्याप्तिवारणमेव व्याख्यायाः प्रयोजनमिति। अन्यस्य परामर्शादित्युक्तेरयमाशयः। यत्र पर्वतो धूमवान् वह्निमत्त्वादित्यादौ वह्निधर्मिकधूमाभाववद्वृत्तित्वग्रहोत्पत्तिद्वितीयक्षणे दोषविशेषादिना धूमव्याप्यवह्निमान् पर्वत इति परामर्शस्तत्र परामर्शोत्पत्तितृतीयक्षणविलम्बेन पर्वतो धूमवानित्यनुमित्युदयेन तत्र व्यभिचारज्ञानाभावरूपकारणसत्त्वेन न तत्र व्यभिचारसम्भावनेति न तत्र व्यभिचारो दर्शितः। किन्तु अन्यस्य परामर्शादित्यादिना वह्न्यादिरूपैकहेतौ यत्र धूमव्यभिचारस्तत्तद्वह्न्यादिरूपापरहेतुनिष्ठधूमव्याप्यत्वगाहिपरामर्शस्तत्र तादृशपरामर्शादनुमितिर्भवति तत्रैव व्यभिचारग्रहाभावरूपकारणविरहात् शिरोमणिना व्यभिचारः प्रदर्शित इति।

## गादाधरी

ननु तद्धर्मावच्छिन्नलिङ्गकानुमितौ तद्धर्मावच्छिन्नधर्मिकव्यभिचारज्ञानाभावस्य हेतुत्वोपगमान्न व्यभिचारः, तद्धर्मावच्छिन्नलिङ्गकत्वञ्च, अव्यवहितोत्तरत्वसम्बन्धेन तद्रूपावच्छिन्नधर्मिकव्याप्त्यादिज्ञानविशिष्टत्वम्, तादृशसम्बन्धेन व्यभिचारज्ञानविशिष्टं यत् तदन्यत्वमेव वा जन्यतावच्छेदकं वाच्यम्। तेन धूमव्याप्यवह्निमाननर्यमित्यादिशाब्दादिपरामर्शोत्पत्तिद्वितीयक्षणे यत्र लौकिकसन्निकर्षजन्यो वह्निर्धूमव्यभिचारी धूमव्याप्येन्धनवानित्याकारकसमूहालम्बनग्रहः तज्जन्यानुमितेरुक्त -

सम्बन्धेन वह्नित्वावच्छिन्नधर्मिकव्याप्त्यादिज्ञानविशिष्टत्वेऽपि न क्षतिरत आह व्याप्त्यादिति । क्लृप्तकारणताकव्याप्त्यादिज्ञानसत्त्वे व्यभिचारज्ञानाद्यभावव्यतिरेकेणानुमितिव्यतिरेकस्याऽसद्धत्वादिति भावः । व्याप्तिज्ञानादेर्व्यभिचारज्ञानाभावादिना अन्यथासिद्धत्वशङ्कातु द्रागेव निराकृता । न क्षतिः नव्यभिचारादावव्याप्तिः । यत्राऽसद्धेतु विशेषे तादृशानुमितेरप्रसिद्धिः तत्रत्यदोषेष्वव्याप्तेर्वक्ष्यमाणतया ईदृशव्याख्यायामनिर्भरसूचनाय वदन्तीत्युक्तम् ।

## विमलप्रभा

तद्धर्मावच्छिन्नलिङ्गकानुमितौ = तत्तद्वह्नित्वावच्छिन्नतत्तद्वह्निहेतुकानुमितौ । तद्धर्मावच्छिन्नधर्मिकव्यभिचारज्ञानाभावस्य = तत्तद्वह्नित्वावच्छिन्नतत्तद्वह्निधर्मिकव्यभिचारज्ञानाभावस्य । हेतुत्वोपगमात् = कारणत्वस्वीकारात् । न व्यभिचारः = कारणासत्त्वेकार्योत्पत्तिरूपव्यतिरेकव्यभिचारो नेति । तद्धर्मावच्छिन्नलिङ्गकत्वमित्यस्यार्थमाह अव्यवहितोत्तरत्वेत्यदिना । तद्धर्मपदेन वह्नित्वादेः परामर्शः । तादृशसम्बन्धेन = अव्यवहितोत्तरत्वसम्बन्धेन । तदन्यत्वं = तद्भिन्नत्वं । तेन = निरुक्तव्यभिचारज्ञानविशिष्टान्यत्वस्य कार्यतावच्छेदककोटौ निवेशेन । यत्र = यादृशस्थले । वह्निर्धूमव्यभिचारी = धूमाभाववद्वृत्तिताविशिष्टो वह्निः । समूहालम्बनग्रहः - समूहालम्बनात्मकज्ञानं । तत्र = तादृशस्थले । तज्जन्यानुमितेः = इन्धनादिहेतुकसमूहालम्बनपरामर्शजन्यानुमितेः । उक्तसम्बन्धेन = अव्यवहितोत्तरत्वसम्बन्धेन । न क्षतिः = न व्यभिचारूपदोष । अतः = हेतोः । आह = व्यभिचारज्ञानाभावस्याऽन्यथासिद्धत्वमाशिरोमणिरिति शेषः । व्यतिरेकेण = अभावेन । अनुमितिव्यतिरेकस्य = अनुमित्यनुत्पादस्य । असिद्धत्वात् = अप्रयोजकत्वात् । कार्याभावप्रयोजकीभूताभावप्रतियोगित्वरूपकारणतायाः व्यभिचारज्ञानाभावेऽसत्त्वादिति यावत् ।

अन्यथासिद्धत्वशङ्का = व्यभिचारज्ञानाभावः कारणं व्याप्तिज्ञानं त्वन्यथासिद्धमिति शङ्का । द्रागेव = सुतरामेव । निराकृता निरस्ता । यत्र = यादृशस्थले । असद्धेतुविशेषे निर्वह्निः पर्वतोवह्निमान् धूमादित्यादौ । तादृशानुमितेरप्रसिद्धिः = साध्या व्याप्या-

हेतुमान् पक्षः साध्यवानित्यनुमित्यप्रसिद्धिः=अनुमितेरनाहार्यापरोक्षज्ञानत्वनियमेन यत्राहार्यरूपत्वेनाप्रसिद्धिः। तत्रत्यदोषेषु=तादृशस्थलीयदोषेषु। आश्रयासिद्ध्यादिषु इतियावत्। अव्याप्तेर्वक्ष्यमाणतया=तथाचेत्यादि न कोऽपि हेत्वाभासः स्यादत्यन्तग्रन्थेन दीधितिकारेणाग्रे प्रतिपाद्यतया। निर्वह्निः पर्वतोवह्निमान् धूमादित्यादौ वह्निमत्पर्वतरूपाश्रयासिद्ध्यादिष्वव्याप्तेः प्रतिपादनीयत्वेनेति यावत् ईदृशव्याख्यायां =लक्षणघटकीभूतानुमितिपदस्यानुमितितत्कारणपरत्वरूपव्याख्यायां समूहालम्बनानुमितिपरत्वव्याख्यायाञ्च। अनिर्भरसूचनाय=अस्वारस्यसूचनाय। उक्तम्=दीधितिकृतेति शेषः। अयमर्थः। अव्यवहितोत्तरत्वसम्बन्धेन तद्रूपावच्छिन्नधर्मिकव्याप्तिज्ञानविशिष्टानुमितौ तद्रूपावच्छिन्नधर्मिकव्यभिचारज्ञानाभावः कारणम् अव्यवहितोत्तरत्वसम्बन्धेन तद्धर्मावच्छिन्नधर्मिकव्यभिचारज्ञानविशिष्टं यत्तद्भिन्नत्वं व्यभिचारज्ञानाभावनिष्ठजनकतानिरूपितानुमितिनिष्ठजन्यतावच्छेदके निवेश्यम्। तथा च वह्नित्वावच्छिन्नलिङ्गकानुमितौ वह्नित्वाद्यवच्छिन्नधर्मिकव्यभिचारज्ञानाभावः कारणमिति कार्यकारणभावस्वीकारे वह्निधर्मिकधूमाभाववदवृत्तित्वप्रकारकव्यभिचारज्ञानकाले वह्निधर्मिकव्यभिचारज्ञानाभावरूपकारणविरहादेवानुमित्यनुत्पादेन व्यभिचारसम्भावनेति। न च यादृशस्थलविशेषे प्रथमं धूमव्याप्यवह्निमान् पर्वत इति शाब्दपरामर्शोत्पत्तिः द्वितीयक्षणे लौकिकसन्निकर्षादिजन्यः धूमाभाववद्वृत्तिर्वह्निर्धूमव्याप्येन्धनवांश्चेत्याकारकव्यभिचारग्रहात्मकपरामर्शः ततः निरुक्तेन्धनलिङ्गकसमूहालम्बनपरामर्शजन्यधूमानुमितिस्तादृशानुमितेरपि तृतीयक्षणसाधारणाव्यहितोत्तरत्वसम्बन्धेन वह्नित्वावच्छिन्नधर्मिकधूमव्याप्तिज्ञानविशिष्टतया तादृशानुमितिहेतुभूतवह्नित्वावच्छिन्नधर्मिकधूमाभाववदवृत्तित्वरूपव्यभिचारज्ञानाभावस्यानुमित्यव्यवहितपूर्वक्षणेऽविद्यमानतया पुनः कारणासत्त्वे कार्योत्पत्तिरूपव्यभिचारस्तदवस्थ एवेति वाच्यम्।

तादृशसमूहालम्बनपरामर्शोत्तरानुमितिं प्रति कारणीभूतव्यभिचारग्रहाभावस्य तत्राभावेऽप्यनुमित्युत्पादे निरुक्तानुमितेस्तादृशसम्बन्धेन व्यभिचारविशिष्टतया तदन्यत्वविरहेणोक्तानुमितेस्तादृशजन्यतावच्छेदकानाक्रान्ततया न तत्र व्यभिचार इति।

यदि व्याप्तिपक्षधर्मताज्ञानादिरूपकारणकलापसमवधानेऽपि व्यभिचारग्रहाभावविरहप्रयुक्तानुमित्यनुत्पादोऽनुभवसिद्धः स्यात्तदाऽन्वयव्यतिरेकतया व्यभिचारज्ञानाभावः कारणं स्यात्, किन्तु तदेव न पश्यामः, किन्तु व्यभिचारज्ञानाभावविरहदशायामपि क्लृप्तकारणताकं यत् व्याप्तिज्ञानं तत्सत्त्वेऽनुमितिर्भवत्येवातोऽवश्यक्लृप्तकारणताकं यत् व्याप्तिपरामर्शादिज्ञानं तद्भिन्नतया व्यभिचारज्ञानाभावोऽन्यथासिद्ध इति। न च व्यभिचारज्ञानाभावस्यैव कारणत्वं व्याप्त्यादिज्ञानमेवान्यथासिद्धमिति चेन्मैवं वाच्यम्। यत्र साध्याभाववद्वृत्तिर्हेतुरिति भ्रमात्मकमपि व्यभिचारज्ञानं नास्ति, तदभाव एवास्ति, परन्तु व्याप्तिज्ञानं नास्ति तत्र व्यभिचारज्ञानाभावरूपकारणसत्त्वेनानुमितिः स्यात्, एवं यत्र व्याप्तिज्ञानमस्ति परन्तु व्यभिचारग्रहाभावो नास्ति किन्तु भ्रमात्मकव्यभिचारज्ञानमेवास्ति तत्रानुमित्यनुत्पादः स्यादतो व्यभिचारग्रहाभावादिना व्याप्तिज्ञानादेर्नान्यथासिद्धत्वम्। एवञ्च यत्र व्यभिचारज्ञानव्याप्तिज्ञानोभयविरहस्तत्र व्याप्तिज्ञानरूपकारणाभावादेव नानुमितिः। यत्र च व्याप्तिज्ञानमस्ति व्यभिचारज्ञानाभावो नास्ति तत्र व्याप्तिज्ञानरूपकारणवशादेवानुमितिः। तस्मात् न व्याप्तिज्ञानस्यान्यथासिद्धत्वकल्पनेति भावः। यादृशस्थलविशेषे (निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ)साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्यनुमितिरप्रसिद्धा तादृशस्थलीयदोषेऽव्याप्तेः स्वयं दीधितिकारेणैव प्रतिपादनीयतया प्रकृतव्याख्यायां न ग्रन्थकृतः निर्भरत्वमिति वदन्तीत्यनेन सूचितम्।

## बलदेवी

तादृशसम्बन्धेनव्यभिचारज्ञानाविशिष्टं यद्यत्तदन्यत्वमेव वा जन्यतावच्छेदकं वाच्यम् इति भट्टाचार्यः।—

नन्वत्र कीदृशं लक्षणशरीरं ? यदि तावत् प्रकृतपक्षसाध्यहेतुकानुमितित्वव्यापकत्वघटितमेव,प्रकृतहेतुकत्वञ्च प्रकृतहेतुतावच्छेदकावच्छिन्नधर्मिकव्यभिचारग्रहविशिष्टान्यत्वम्,तथा च तादृशव्यभिचारग्रहविशिष्टान्यप्रकृतपक्षसाध्यकानुमितित्वव्यापकप्रतिबध्यतेत्यादिलक्षणं पर्यवसितम्, तदा व्यभिचारेऽव्याप्तिविरहेऽपि स्वरूपासिद्ध्यसंग्रहः, एकरूपेण स्वरूपासिद्धिज्ञानेऽपि अपररूपेण पक्षधर्मताज्ञानादनुमित्युत्पत्त्या स्वरूपासिद्धिनिश्चयप्रतिबध्यतायास्तादृशानुमितित्वाऽव्यापकत्वात्। यदि च स्वरूपासिद्धिज्ञानविशिष्टान्य-

त्वमपि निवेश्यते तदा साधनाप्रसिद्धिविरोधानुपसंहारित्वादिज्ञानविशिष्टान्यत्वस्यापि निवेशनीयतया महागौरवमिति चेन्न।

प्रकृतपक्षविशेष्यकप्रकृतसाध्याव्याप्यहेतुप्रकारकानुमितित्वव्यापकप्रतिबध्यता-निरूपितप्रतिबन्धकताशालिनिश्चयविशिष्टान्यप्रकृतपक्षसाध्यकानुमितित्वव्यापकप्रति - बध्यताघटितलक्षणस्य निवेशनीयत्वात्। तेन न स्वरूपासिद्ध्यादावव्याप्तिसम्भावने-ति दिक्।

## दीधितिः

पर्वतो निर्वह्निः धूमो वह्नेरभिधेयत्वं प्रमेयत्वस्य व्यभिचारीत्यादिभ्रमादनु-मितिप्रतिबन्धादाह—यथार्थेति।

## गादाधरी

पर्वतो वह्निमानित्यादिसद्धेतुस्थले बाधादिभ्रमविषयेऽवतिव्याप्तिवारकतया यथार्थपदं सार्थकयति—पर्वतो निर्वह्निरिति। अत्र इति पदस्य त्रितयस्थले सम्बन्धात् भ्रमत्रयलाभः। प्रत्येकभ्रममादायातिप्रसङ्गसम्भवात् समूहालम्बनभ्रमपर्यन्तानुधावन-वैफल्यात् तत्परत्वाऽसङ्गतिरिति ध्येयम्। प्रथमभ्रमोऽनुमितौ विरोधी, अन्त्यौ च तज्जनकज्ञाने तथा, तयोरपि प्रथमे अन्यत्र प्रसिद्धस्य साध्याभाववद्वृत्तित्वस्य धूमाद्यंशे भ्रमत्वं, अन्त्ये च प्रमेयत्वाभाववद्वृत्तित्वस्याऽप्रसिद्ध्या न तद्भ्रमत्वं किन्तु अभावांशेऽनुयोगिताविशेषसम्बन्धेन साध्यस्य भ्रमत्वमित्येतादृशविशेषमादृत्य शिष्यव्युत्पाद-नायाऽनेकविधभ्रमकथनम्।

## विमलप्रभा

बाधादिभ्रमविषये=पर्वतो वह्न्यभाववानिति भ्रमविषये वह्न्यभावादौ। इति पदस्य="इत्यादिभ्रमादिति" शिरोमणिघटकीभूतेतिपदस्य। त्रितयस्थले= पर्वतो निर्वह्निरित्यादिस्थले। सम्बन्धात्=इति शब्दयोगात्। भ्रमत्रयलाभः= वह्न्यभाववान् पर्वत इति भ्रमस्य, वह्न्यभाववद्वृत्तिर्धूमोयमिति भ्रमस्य, अ-

भिधेयत्वं प्रमेयत्वस्य व्यभिचारीति भ्रमस्य च लाभः। प्रत्येकभ्रममादाय=पर्वतो निर्वह्निरित्यादिप्रत्येकायथार्थज्ञानमादाय। तत्परत्वाऽसंगतिः=समूहालम्बनपरत्वाऽसंगतिः, प्रथमभ्रमः=पर्वतो वह्न्यभाववानित्याकारकायथार्थज्ञानम्। अनुमितौ=पर्वतधर्मिकवह्निविधेयकपर्वतो वह्निमानित्यनुमितौ। विरोधी=प्रतिबन्धकः। अन्त्यौ=धूमो वह्नेर्व्यभिचारी। अभिधेयत्वं प्रमेयत्वस्य व्यभिचारीतिभ्रमः। तज्जनकज्ञाने=अनुमितिजनकज्ञाने। तथा=विरोधिनौ। तयोः=अन्त्यभ्रमयोः। प्रथम इति शेषः। अन्यत्र=शैवालादौ। साध्याभाववद्वृत्तित्वस्य=वह्न्यभाववद्वृत्तित्वस्य। धूमाद्यंशे=धूमादिरूपविशेष्यांशे। भ्रमत्वं=वह्न्यभाववद्वृत्तित्वाभाववद्धूमेवह्न्यभाववद्वृत्तित्वप्रकारताशालिज्ञानत्वम्। अन्त्ये=अभिधेयत्वं प्रमेयत्वस्य यभिचारीत्याकारकभ्रमे। अप्रसिद्ध्या=प्रमेयत्वस्य केवलान्वयितया तदभाववद्वृत्तित्वस्याऽप्रसिद्धतया। न तत् भ्रमत्वं=न प्रमेयत्वाभाववद्वृत्तित्वाभाववद्विशेष्यकप्रमेयत्वाभाववद्वृत्तित्वप्रकारकायथार्थज्ञानत्वम्। अभावांशे=पटाभावांशे। पटाभावादिरूपविशेष्ये-इति यावत्। अनुयोगिताविशेषसम्बन्धेन=स्वरूपसम्बन्धावच्छिन्नस्ववृत्तिप्रमेयत्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितावत्त्वसम्बन्धेन। साध्यस्य=प्रमेयत्वस्य। भ्रमत्वं=तादृशानुयोगितासम्बन्धेन प्रमेयत्वाभाववत्पटाभावविशेष्यकतादृशसम्बन्धेन प्रमेयत्वप्रकारकायथार्थज्ञानत्वम्। एतादृशविशेषमाहत्य=पूर्वोक्तविभिन्नसम्बन्धं स्वीकृत्य। शिष्यव्युत्पादनाय=अन्तेवासिनां विविधज्ञानसम्पत्तये। अनेकविधभ्रमकथनम्=भ्रमत्रयोपादानं, शिरोमणिना कृतमिति शेषः। अयमर्थः। अनुमितिकारणीभूताभावप्रतियोगिज्ञानविषयत्वमात्रस्य लक्षणार्थत्वे यथार्थपदानुपादाने पर्वतो वह्निमान् धूमादित्यादिसद्धेतावतिव्याप्तिः, तथा हि पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकानुमितिकारणीभूतो यः अभावः स च वह्न्यभाववान् पर्वत इत्याकारकभ्रमात्मकबाधनिश्चयाभावः तत्प्रतियोगिज्ञानं वह्न्यभाववान् पर्वत इति भ्रमात्मकज्ञानं तद्विषयत्वस्य वह्न्यभाववत् पर्वतादौ सत्त्वात्।

एवं तत्रैव पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकानुमितिकारणीभूताभावः वह्न्यभाववद्वृत्तिर्धूम इति भ्रमात्मकव्यभिचारनिश्चयाभावः तत्प्रतियोगिज्ञा-

नं वह्न्यभाववद्वृत्तिर्धूम इति भ्रमात्मकज्ञानं तद्विषयत्वस्य वह्न्यभावे धूमादौ च सत्त्वात् व्यभिचारेऽतिव्याप्तिः ।

तथैव सर्वं प्रमेयमभिधेयत्वादित्यत्र सर्वं प्रमेयं प्रमेयत्वव्याप्याभिधेयत्ववच्चेत्याकारकानुमितिकारणीभूताभावः तादृशप्रतियोगितासम्बन्धेन पटाद्यभावे प्रमेयत्वभ्रमात्मकप्रमेयत्वभ्रमात्मकप्रमेयत्वाभाववद्वृत्त्यभिधेयत्वमित्याकारकव्यभिचारनिश्चयाभावः तत्प्रतियोगिज्ञानं तादृशप्रतियोगितासम्बन्धेन प्रमेयत्वविशिष्टाभाववद्वृत्त्यभिधेयत्वमित्याकारकं ज्ञानं तद्विषयत्वस्य प्रमेयत्वादौ सत्त्वात् व्यभिचारेऽतिव्याप्तिः। यथार्थपदोपादाने च=पर्वतो वह्न्यभाववान्, वह्न्यभाववद्वृत्तिर्धूमः तादृशप्रतियोगितासम्बन्धेन प्रमेयत्वविशिष्टाभाववद्वृत्त्यभिधेयत्वमित्यादिभ्रमात्मकज्ञानमयथार्थतया यथार्थज्ञानपदेन तेषां धारणासम्भवान्न तान्ययथार्थज्ञानान्यादायातिव्याप्तिसम्भावनेति भावः। अत्र वह्न्यभाववान् पर्वत इति प्रथमभ्रमः पर्वतो वह्निमानित्यनुमिति प्रतिबध्नाति । अन्त्यौ चायथार्थज्ञानेऽनुमितिजनकव्याप्तिज्ञानपरामर्शादिकं प्रति विरोधिनौ । तत्राप्याद्ये वह्न्यभाववद्वृत्तितायाः शैवालादिनिष्ठतया प्रसिद्धायाः धूमे भ्रमः, अन्त्ये च प्रमेयत्वस्य केवलान्वयितयातदभाववद्वृत्तित्वस्याप्रसिद्ध्या स्वरूपसम्बन्धावच्छिन्नतादृशप्रतियोगिताविशेषसम्बन्धेन प्रमेयत्वस्याभावांशे भ्रम इति विशेषमवलम्ब्यान्तेवासिनां विशेषबोधजननायविभिन्नभ्रमाभिधानं दीधितिकृता कृतम् । तेनैवाऽतिप्रसङ्गाभिधानमभिहितमिति भावः ।

## गादाधरी

इदन्त्ववधेयम्, अभिधेयत्वं प्रमेयत्वस्य व्यभिचारीत्यत्र स्वरूपसम्बन्धावच्छिन्नप्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रमेयत्वभ्रमो वाच्यः, प्रतियोगितांशे साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकावच्छिन्नत्वयोः साध्याभाववद्वृत्तित्वरूपव्याप्तिघटकतया तदंशे तदुभयावगाहिव्यभिचारज्ञानस्यैव व्याप्तिज्ञानविरोधित्वात् ।

## विमलप्रभा

अभिधेयत्वं प्रमेयत्वस्यव्यभिचारीत्यत्र=अभिधेयत्वं प्रमेयत्वाभाववद्वृत्तीत्यत्र ।

प्रमेयत्वभ्रमः=अभावांशे प्रमेयत्वभ्रमः । तदंशे=प्रतियोगित्वांशे । तदुभयावगाहिव्यभिचारज्ञानस्यैव=साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकरूपावच्छिन्नत्वोभयावगाहिव्यभिचारज्ञानस्यैव । व्याप्तिज्ञानविरोधित्वात्=व्याप्तिज्ञानप्रतिबन्धकत्वात् । एवञ्च=साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनसाध्यविशिष्टाभाववदवृत्तित्वरूपव्याप्तिज्ञानं प्रति साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यविशिष्टाभाववद्वृत्तित्वरूपसमानाकारकव्यभिचारज्ञानस्यैव प्रतिबन्धकत्वे च । भेदादौ=अन्योन्याभावादौ । प्रसिद्धावपि=प्रमेयत्वं नेत्याकारकाभावस्य प्रसिद्धिसम्भवेऽपि । तादृशसम्बन्धेन=साध्यतावच्छेदकस्वरूपसम्बन्धावच्छिन्नप्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन । भ्रमत्वानुपपत्तिः=भ्रमात्मकज्ञानाऽप्रसिद्धिः । अयमर्थः । अभिधेयत्वप्रमेयत्वादीनां केवलान्वयितया कुत्रापि प्रमेयत्वाऽभिधेयत्वादीनामभावाऽप्रसिद्धयाऽभिधेयत्वं प्रमेयत्वस्य व्यभिचारीत्यत्र तदभाववति तत्प्रकारकज्ञानरूपभ्रमाऽप्रसिद्धया कथं न तत्रातिप्रसंग इति, अर्थात् साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यविशिष्टाभाववदवृत्तित्वरूपव्याप्तिज्ञानं प्रति एतादृशसम्बन्धेन साध्यविशिष्टाभाववद्वृत्तित्वरूपव्यभिचारज्ञानस्यैव प्रतिबन्धकत्वं न तु केवलप्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रमेयत्वत्वविशिष्टाभाववद्वृत्तित्वरूपव्यभिचारज्ञानस्येति प्रमेयत्वादावतिव्याप्तिदानमसङ्गतमिति । एवं स्वरूपेण प्रमेयत्वं नास्तीत्याकारकाभावस्यालीकतया साध्यतावच्छेदकीभूतस्वरूपसम्बन्धावच्छिन्नप्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन कुत्रापि घटपटाभावादौ प्रमेयत्वस्य भ्रमानुपपत्तिरिति भावः ।

## बलदेवी

इदन्त्ववधेयम् अभिधेयत्वं प्रमेयत्वस्य व्यभिचारीत्यत्र, इत्यादिभट्टाचार्यः ।

ननु साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपिताऽभावत्वावच्छिन्नविशेष्यतानिरूपिताऽधिकरणविषयतानिरू-

पितवृत्तित्वविषयतानिरूपिताऽभावविषयतानिरूपितहेतुतावच्छेदकावच्छिन्नविषयता-निरूपितपक्षतावच्छेदकावच्छिन्नविषयताशालिनिश्चयत्वेनैव कारणत्वमस्तु, एवञ्च स्वरूपसम्बन्धावच्छिन्नप्रमेयत्वत्वावच्छिन्नप्रतियोगित्वाऽप्रसिद्धावपि तादृशव्याप्तिग्रहप्रतिबन्धकीभूतस्य स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रमेयत्वस्याभावांशे भ्रमसम्भवेन न भ्रमानुपपत्तिरिति चेन्न,महानसीयवह्न्यभाववद्वृत्तिधूमवान् पर्वत इति परामर्शस्य तादृशरूपाक्रान्ततया ततः पर्वतो वह्निमानित्यनुमित्यापत्तेः। न च साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकपर्याप्त्यवच्छेदकताकप्रकारताघटितनिश्चयत्वेन कारणत्वस्य वक्तव्यत्वात्तादृशज्ञाने च महानसीयत्ववह्नित्वगतद्वित्ववृत्तिप्रकारतानिरूपिताभावविषयताकत्वान्नोक्तापत्तिरिति वाच्यं, महानसीयत्वमुपलक्षणविधयाऽवगाहमानात्तादृशपरामर्शात् पर्वतो वह्निमानित्यनुमित्यनुपपत्तेः, तादृशपरामर्शस्याऽभावांशे महानसीयत्ववह्नित्वधर्मद्वयावच्छिन्नप्रकारताकतया तादृशप्रकारतावच्छेदकतायाः धर्मद्वय एव पर्याप्तत्वात्, साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताघटितधर्मस्य कारणतावच्छेदकत्वे तु महानसीयवह्निव्याप्यधूमवान् पर्वत इति परामर्शात् पर्वतो वह्निमानित्यनुमितिवारणाय साध्यतावच्छेदकसंसर्गतावच्छेदकतापर्याप्तिर्निवेश्या, तथा च महानसीयत्वमुपलक्षणविधयाऽवगाहमानतादृशपरामर्शीयाऽभावविशेष्यतानिरूपितसाध्यनिष्ठप्रकारतावच्छेदकसम्बन्धीभूतप्रतियोगितानिरूपितावच्छेदकतापर्याप्तिः शुद्धवह्नि-त्व एव, अभावप्रतियोगितावच्छेदककुक्षौ उपलक्षणविधया प्रविष्टस्यावच्छेदकत्वाभावादिति न तादृशपरामर्शादनुमित्यनुपपत्तिरिति दिक्।

## गादाधरी

एवञ्च भेदादौ प्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वस्य प्रसिद्धावपि स्वरूपसम्बन्धावच्छिन्नतादृशप्रतियोगिताकत्वाऽप्रसिद्ध्या तादृशसम्बन्धेन भ्रमत्वानुपपत्तिः। प्रतियोगितांशे सम्बन्धविशेषावच्छिन्नत्वस्य भ्रम इत्यपि न युक्तम्। तस्य सम्बन्धघटकतया-तत्प्रकारकत्वघटिततद्भ्रमत्वानुपपत्तेः।

## विमलप्रभा

प्रसिद्धावपि = भेदे प्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वस्य प्रसिद्धिसम्भवेऽपि । अप्रसिद्ध्या = भेदयिप्रतियोगितायां तादात्म्यसम्बन्धावच्छिन्नत्वस्यैव वर्त्तमानतया तादृश स्वरूपसम्बन्धावच्छिन्नत्वस्याऽप्रसिद्धतया । तादृशसम्बन्धेन = स्वरूपसम्बन्धावच्छिन्नस्ववृत्तिप्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन । भ्रमत्वानुपपत्तेः = भ्रमत्वोपपादनासम्भवः । प्रतियोगित्वांशे = स्ववृत्तिप्रमेयत्वत्वावच्छिन्नप्रतियोगितायाम् । सम्बन्धविशेषावच्छिन्नत्वस्य = स्वरूपसम्बन्धावच्छिन्नत्वस्य । न युक्तम् = न समीचीनम् । तस्य = सम्बन्धविशेषावच्छिन्नत्वस्य । सम्बन्धघटकतया = स्वरूपसम्बन्धावच्छिन्नप्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वरूपसम्बन्धघटकत्वेन । तत्प्रकारकत्वघटितस्य = सम्बन्धविशेषावच्छिन्नत्वप्रकारकत्वघटितस्य । तत्भ्रमत्वानुपपत्तेः = सम्बन्धविशेषावच्छिन्नत्वप्रकारकत्वघटित भ्रमत्वानुपपत्तेः । अयमर्थः । निरुक्तरीत्या प्रमेयत्वत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रमेत्वप्रकारको भ्रमस्तदा स्यात् यदा भेदे स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वं प्रसिद्ध्येत् तदेव त्वसिद्धम्, भेदीयप्रतियोगितायास्तादात्म्यसम्बन्धावच्छिन्नतया सम्बन्धान्तरानवच्छिन्नत्वात्, तस्मात् तादृशसम्बन्धेन प्रमेयत्वप्रकारकभ्रमस्तु दुर्घट एव । न च तथापि भेदीयप्रतियोगित्वांशे स्वरूपसम्बन्धावच्छिन्नत्वस्यैव भ्रम इति वाच्यं, सम्बन्धघटकपदार्थे विशेष्यविशेषणभावसत्त्वेऽपि प्रकारविशेष्यभावानङ्गीकारेण तादृशप्रतियोगिताकत्वरूपसम्बन्धघटकस्वरूपसम्बन्धावच्छिन्नत्वस्य प्रकारत्वाभावेन स्वरूपसम्बन्धावच्छिन्नत्वाभाववन्निष्ठविशेष्यतानिरूपितस्वरूपसम्बन्धावच्छिन्नत्वनिष्ठप्रकारताकत्वघटित भ्रमत्वस्यानुपपत्त्या न सम्बन्धविशेषावच्छिन्नत्वस्य प्रतियोगित्वांशे भ्रम इति भावः ।

## गादाधरी

न च तेन रूपेण प्रतियोगिताप्रकारक एवात्र भ्रमो विवक्षितः, न तु तदवच्छिन्नप्रतियोगितासंसर्गक इति वाच्यं, लाघवात् प्रतियोगितासंसर्गकज्ञानस्यैवानुमितिहेतुतया तत्प्रकारकव्यभिचारज्ञानस्याकिञ्चित्करत्वात् ।

शंकते न चेति। न चेत्यस्यवाच्यमित्यनेनान्वयः। तेन रूपेण=साध्यताव-च्छेदकसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकरूपावच्छिन्नत्वरूपेण प्रतियोगिताप्रकार-क एवेत्यत्र एवकारेण प्रतियोगितासंसर्गकस्य व्यच्छेदः। अत्र=अभिधेयत्वं प्रमेयत्वस्य-व्यभिचारीत्यत्र। तदवच्छिन्नप्रतियोगिता=साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्य-तावच्छेदकावच्छिन्नप्रतियोगिता। लाघवात्=प्रतियोगिताप्रकारकज्ञानस्य कारणत्वे प्रतियोगितानिष्ठप्रकारतावच्छेदकसम्बन्धविषयतायाः हेतुत्वे गौरवम्,प्रतियोगितासंसर्ग-कज्ञानस्य कारणत्वे तु संसर्गसम्बन्धभानस्य विशिष्टबुद्धावनभ्युपगमेन प्रतियोगित्वसंसर्गवि-षयतायाः कारणतावच्छेदककोटावनिवेशेन लाघवसम्भवात्। प्रतियोगितासंसर्गकज्ञान-स्यैव=साध्यतावच्छेनकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वस-म्बन्धेन साध्यविशिष्टाभाववद्वृत्तित्वरूपव्याप्तिज्ञानस्यैव। अनुमितिहेतुतया=अनुमि-तिजनकतया। तत्प्रकारकव्यभिचारज्ञानस्य=साध्यतावच्छेदकसम्बन्धावच्छिन्नसा-ध्यतावच्छेदकावच्छिन्नप्रतियोगिताप्रकारकव्यभिचारनिश्चयस्य, तादृशप्रतियोगितावद-भाववद्वृत्तित्वरूपव्यभिचारनिश्चयस्येति यावत्। अकिञ्चित्करत्वात्=असमानाकार-कत्वेनाप्रतिबन्धकत्वात्। अयमर्थः। साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यताव-च्छेदकावच्छिन्नप्रतियोगितावदभाववद्वृत्तित्वमेव व्यभिचारः न तु तादृशप्रतियोगि-ताकत्वसंसर्गकः तथा चाभिधेयत्वं प्रमेयत्वस्य व्यभिचारीत्यत्र तादृशप्रतियोगितायाःनि-रूपकत्वसंसर्गेणाभावांशे प्रकारतया तद्घटकपदार्थेऽपि प्रकारविधया भानसम्भावात् प्रमे-यत्वत्वावच्छिन्नकालिकादिसम्बन्धावच्छिन्नप्रतियोगितायां साध्यतावच्छेदकीभूतस्वरू-पसम्बन्धावच्छिन्नत्वस्य भ्रमः अवश्यस्वीकरणीय इति केचिदुक्तं तन्न भद्रम्। लाघवप्र-तिसन्धानतः साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताक-त्वसम्बन्धेन साध्यविशिष्टाभाववद्वृत्तित्वरूपव्याप्तिज्ञानस्यैवानुमितौ कारणतया प्रतियो-गितासंसर्गकव्याप्तिज्ञानं प्रति प्रतियोगितासंसर्गकव्यभिचारज्ञानस्यैव प्रतिबन्धकता न तु प्रतियोगिताप्रकारकस्येति निरूपकतासम्बन्धेन साध्यतावच्छेदकस्वरूपसम्बन्धावच्छिन्नप्र-मेयत्वत्वावच्छिन्नप्रतियोगितावदभाववद्वृत्त्यभिधेयत्वमित्याकारकप्रतियोगिताप्रकारक-

व्यभिचारभ्रमस्य तादृशप्रतियोगितासंसर्गकव्याप्तिज्ञानाप्रतिबन्धकत्वेन तादृशप्रतियोगिताप्रकारकभ्रममादायातिप्रसंगदानमनुचितमेवेति भावार्थः ।

## बलदेवी

लाघवात् प्रतियोगितासंसर्गकज्ञानस्यैवाऽनुमितिहेतुतया तत्प्रकारकज्ञानस्याऽकिञ्चित्करत्वादिति भट्टाचार्यः

ननु प्रतियोगिताप्रकारकज्ञानस्य हेतुत्व एव लाघवं, तथा हि तत्संसर्गकज्ञानस्य हेतुत्वे साध्यतावच्छेदकसंसर्गावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताघटितपरामर्शत्वेनैव हेतुत्वस्यावश्यकतया साध्यतावच्छेदकस्य द्विधाप्रवेशेन गौरवं, तत्प्रकारकज्ञानस्य हेतुसाध्यतावच्छेदकस्य प्रतियोगितासंसर्गकुक्षावनिवेशेन लाघवमिति । न च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नप्रकारतात्वेनैव साध्यनिष्ठप्रकारतायाः कारणतावच्छेदककुक्षौ निवेशो न तु तादृशप्रकारतायां साध्यतावच्छेदकावच्छिन्नत्वस्य प्रवेश इति वाच्यम्,अन्यनिष्ठप्रतियोगिताया अन्यसम्बन्धत्वस्वीकारे वह्नित्वावच्छिन्नसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाभावांशे घटावगाहिनो घटाभाववद्वृत्तिधूमवान् पर्वत इति परामर्शात् वह्निमानित्यनुमित्यापत्तिः, साध्यनिष्ठत्वस्यैवाधिक्याच्चेति चेन्न,प्रतियोगिताप्रकारकज्ञानस्य कारणत्वे तु प्रतियोगितानिष्ठप्रकारतायाः यत्किञ्चित्सम्बन्धावच्छिन्नत्वेन तत्सम्बन्धनिष्ठसांसर्गिकविषयतायाः प्रप्रतियोगिताकुक्षिप्रविष्टसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकावच्छिन्नत्वादिनिष्ठप्रकारताया अपि किञ्चित्सम्बन्धावच्छिन्नत्वेन तत्सम्बन्धनिष्ठावच्छेदकतायाश्च कल्पनीयतया गौरवादितिदिक् ।

## गादाधरी

अत्राहुः स्वावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यतावच्छेदकवत्त्वमेवाऽभावस्य साध्याभाववद्वृत्तित्वरूपव्याप्तिघटकं लाघवात् । एवञ्च तादृशेन सम्बन्धेनाभावांशे साध्यतावच्छेदकप्रकारकव्यभिचारज्ञा-

नस्य व्याप्तिग्रहविरोधितया घटत्वत्वादेः प्रसिद्धेन तादृशसम्बन्धेन प्रमेयत्वत्वादेरभावांशे भ्रमात्मक एव तथाविधग्रहो विवक्षित इति न किञ्चिदनुपपन्नम् ।

## विमलप्रभा

भ्रमानुपपत्तिशङ्कां समादधति--अत्राहुरित्यादिना । स्वावच्छिन्नेत्यत्र स्वं साध्यतावच्छेदकम् । लाघवात् = साध्याऽप्रवेशेन कारणतावच्छेदकविषयतायाः लघुत्वात् । एवञ्च = साध्यतावच्छेदकविशिष्टाभाववदवृत्तित्वस्य व्याप्तित्वे च । तादृशसम्बन्धेन = स्वावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन । अभवांशे = अभावात्मकविशेष्ये । व्यभिचारज्ञानस्य = साध्यतावच्छेदकविशिष्टाभाववदवृत्तित्वरूपव्यभिचारज्ञानस्य । व्याप्तिग्रहविरोधितया = समानाकारकत्वेन व्याप्तिज्ञानप्रतिबन्धकतया । घटत्वत्वादेः प्रसिद्धेन = अभावो घटत्वत्वाच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटत्ववैशिष्ट्यस्य प्रसिद्धत्वेन । तादृशसम्बन्धेन = स्वावच्छिन्नसाध्यतावच्छेदकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन । प्रमेयत्वत्वादेः = साध्यतावच्छेदकीभूतप्रमेयत्वत्वादेः । अभावांशे = साध्याभाववदवृत्तित्वरूपव्यभिचारघटकाभावांशे । भ्रमात्मकः = स्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रमेयत्वत्वाभाववदभावविशेष्यकप्रमेयत्वत्वप्रकारकज्ञानात्मकः । तथाविधग्रहः = भ्रमात्मकव्यभिचारग्रहः, प्रमेयत्वत्वविशिष्टाभाववदवृत्त्यभिधेयत्वमित्याकारकनिश्चय इति यावत् । न किञ्चिदनुपपन्नं = न भ्रमाऽप्रसिद्ध्या यथार्थपदानुपादाने अतिप्रसंगभंगसम्भावना । अयमर्थः । स्ववृत्त्यन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यतावच्छेदकावच्छिन्नस्याभावांशे प्रवेशे साध्यतावच्छेदकस्य द्विधाभानेन गौरवं स्यादतो लाघवात् स्वावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यतावच्छेदकविशिष्टाभाववदवृत्तित्वमेव व्याप्तिः, तथा चाभिधेयत्वं प्रमेयत्वस्य व्यभिचारीत्यत्रान्यादृशभ्रमानुपपत्तावपि प्रमेयत्वत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रमेयत्वत्वप्रकारकाभाव (घटाद्यभाव) विशेष्यकभ्रमस्य प्रसिद्धतया यथार्थपदानुपादाने तादृशसम्बन्धेन प्रमेयत्वत्वविशिष्टाभाववदवृत्त्यभिधेयत्वमित्याकारकव्यभिचारज्ञाने स्वावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छि-

न्नप्रतियोगिताकत्वसम्बन्धेन प्रमेयत्वत्वविशिष्टाभाववद्वृत्त्यभिधेयत्वमित्याकारकव्याप्तिज्ञानप्रतिबन्धकतायाः वर्त्तमानतया तादृशप्रतिबन्धकताशालिज्ञानविषयत्वमादाया-तिव्याप्तिस्स्यादेवातो यथार्थपदोपादानमावश्यकम्। तदुपादाने च तादृशव्यभिचारज्ञाने यथार्थत्वाभावादेव नातिप्रसंगसम्भावनेति भावः।

## बलदेवी

अत्राहुः स्वावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनेत्यादि भट्टाचार्यः—

तथा च तादृशसम्बन्धावच्छिन्नसाध्यतावच्छेदकनिष्ठप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारताघटितनिश्चयत्वेन कारणत्वमिति पर्यवसितार्थः।

ननु महानसीयवह्निमानित्यनुमितौ तत्व्याप्यवत्ताज्ञानस्य केन रूपेण कारणता? यदि महानसीयत्ववह्नित्वधर्मद्वयनिष्ठप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यताघटितधर्मेण, तदा क्वचिन्महानसीयवह्निमान् क्वचिद्वह्निमहानसीयवानित्यनुमितिभेदः कथं स्यात्। न च तथापि व्याप्तिघटकसामानाधिकरण्यांशे साध्यस्य येन रूपेण भानं तेनैव रूपेणानुमितावपि तद्भानमित्यनुमितिवैलक्षण्यमुपपद्यत इति वाच्यम्। महानसीयवह्न्यभाववदवृत्तिवह्निमहानसीयसमानाधिकरणधूमवान् पर्वत इति परामर्शादपि वह्निमहानसीयवानित्यनुमित्यापत्तेरिति चेन्न, यत्र परामर्शेऽभावविशेषणतापन्नवह्न्यंशे वह्नित्वधर्मितावच्छेदकीकृत्य महानसीयत्वं भासते तत्र विशिष्टवैशिष्ट्यमर्यादया सामानाधिकरण्येन धर्मिपारतन्त्र्येण महानसीयत्वस्य वह्नित्वेऽपि भानात् महानसीयत्वावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकत्वसम्बन्धावच्छिन्नवह्नित्वनिष्ठप्रकारताकाऽभावत्वावच्छिन्नविशेष्यताघटितनिश्चयत्वेन महानसीयवह्निमानित्यनुमितिं प्रति कारणत्वम्। एवं यत्र परामर्शांशे महानसीयत्वं धर्मितावच्छेदकीकृत्य वह्नित्वं भासते तत्र वह्निमहानसीयाभाववदवृत्तिवह्निमहानसीयसमानाधिकरणधूमवानिति परामर्शस्य "वह्नित्वावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकत्वसम्बन्धावच्छिन्नमहानसीयत्वनिष्ठप्रकारतानिरूपिताऽभावत्वावच्छिन्नविशेष्यताघटितनिश्चयत्वेन" वह्निमहानसीयवानित्यनुमितौ कारणत्वमिति नानुपपत्तिः।

## गादाधरी

अन्ये तु प्रथमे साध्याभाववदवृत्तित्वज्ञानविरोधी हेतौ साध्याभाववदवृत्तित्वरूपव्यभिचारभ्रमः। द्वितीये च तदप्रसिद्ध्या व्यापकसामानाधिकरण्यज्ञानविरोधी साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य भ्रमः, असमानाकारकज्ञानस्याऽविरोधितया द्विविधव्यभिचारसंग्रहाय द्विविधव्याप्तिविषयकसमूहालम्बनस्यैव लक्षणे निवेशनीयत्वात्।

## विमलप्रभा

प्रथमे = धूमो वह्नेर्व्यभिचारीति प्रथमवाक्ये। हेतौ = धूमे। व्यभिचारस्य-भ्रमः = वह्न्यभाववदवृत्तित्वस्य शैवालादौ प्रसिद्धस्य। भ्रमः = वह्न्यभाववदवृत्तिताशून्ये धूमे तादृशवृत्तित्वप्रकारकज्ञानम्। द्वितीये = अभिधेयत्वं प्रमेयत्वस्य व्यभिचारीति वाक्ये। तदऽप्रसिद्ध्या = प्रमेयत्वाभावस्याप्रसिद्ध्या तादृशाभाववदवृत्तित्वस्याप्रसिद्धतया। व्यापकसामानाधिकरण्यज्ञानविरोधी = प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यरूपव्याप्तिज्ञानविरोधी। साध्यतावच्छेदके = प्रमेयत्वत्वादौ। हेतुसमानाधिकरणघटाद्यभावप्रतियोगितावच्छेदकत्वस्य = अभिधेयत्वसमानाधिकरणघटाद्यभावप्रतियोगितावच्छेदकत्वस्य। असमानकारकज्ञानस्य = समानाकारताराहितज्ञानस्य। अविरोधितया = अप्रतिबन्धकतया। द्विविधव्यभिचारसंग्रहाय = हेतुनिष्ठसाध्याभाववदवृत्तित्वरूपव्यभिचारस्य, साध्यतावच्छेदकनिष्ठहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वरूपव्यभिचारस्य च संग्रहाय। द्विविधव्याप्तिविषयकसमूहालम्बनस्यैव = साध्याभाववदवृत्तित्वहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यैतदुभयविषयकसमूहालम्बनस्यैव। लक्षणे = अनुमितिकारणीभूताभावेत्यादिलक्षणे। अयमर्थः। अन्यविधप्रकारेण भ्रममुपपादयतां नये धूमो वह्नेर्व्यभिचारीत्यत्र वह्न्यभाववदवृत्तिधूम इत्याकारकव्याप्तिज्ञानविरोधी वह्न्यभाववदवृत्तिधूम इत्याकारकभ्रमात्मकव्यभिचारज्ञानम्, अर्थात् धूमविशेष्यकवह्न्यभाववदवृत्तित्वरूपव्याप्तिज्ञानं प्रति धूमविशेष्यकवह्न्यभाववदवृत्तित्वप्रकारकभ्र-

मात्मकव्यभिचारज्ञानस्यैव प्रतिबन्धकतया तादृशप्रतिबन्धकतामादायातिव्याप्तिवारणाय यथार्थपदम् देयमेव ।

अभिधेयत्वं प्रमेयत्वस्य व्यभिचारीत्यत्र केवलान्वयिसाध्यकस्थले प्रमेयत्वाभावाऽप्रसिद्धया साध्याभाववद्वृत्तित्वादिरूपाव्याप्तिर्नैव सम्भवति, किन्तु हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यरूपैव सा ग्राह्या, समानप्रकारताविरहप्रयुक्तसाध्याभाववद्वृत्तित्वरूपव्यभिचारनिश्चयस्यैव तादृशव्यापकसामानाधिकरण्यरूपव्याप्तिज्ञानं प्रत्यप्रतिबन्धकतया साध्यतावच्छेदकनिष्ठहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वरूपव्यभिचारज्ञानमेव स्वीकरणीयम्, एतादृशव्यभिचारसंग्रहार्थंचोभयविधव्याप्तिविषयकज्ञानं लक्षणघटकतया निवेशनीयम् । एवञ्च घटत्वपटत्वादौ प्रसिद्धस्याभिधेयत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य प्रमेयत्वत्वे भ्रमः प्रसिद्ध एवेति प्रमेयत्वत्वमभिधेयत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकमित्याकारकभ्रमात्मकव्यभिचारज्ञानमादायातिप्रसङ्गवारणाय यथार्थपदोपादानं कृतमिति केचित् ।

## गादाधरी

न च हेतुः साध्यस्य व्यभिचारीत्यतः साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य दुर्लभतया तदवगाहिज्ञानस्याभिधेयत्वं प्रमेयत्वस्य व्यभिचारीत्याकारकता नोपपद्यत इति वाच्यं, यतोऽभाववद्वृत्तित्वं समानाधिकरणाभावप्रतियोगितावच्छेदकत्वं चेति द्वयमेव हेतुः साध्यस्य व्यभिचारीत्यत्र व्यभिचारपदार्थः । तत्र प्रथमव्यभिचारपदार्थैकदेशेऽभावेऽनुयोगितारूपषष्ठयर्थस्य, तत्र प्रकृत्यर्थतावच्छेदकवह्नित्वावच्छिन्ननिरूपितत्वसम्बन्धेन प्रकृत्यर्थस्यान्वयः, मत्वर्थीयार्थः स्वरूपसम्बन्धवान्, तस्य चाभेदसम्बन्धेन प्रथमान्तार्थोऽन्वयः, द्वितीयतत्पदार्थपरवाक्यस्थले च तदेकदेशसामानाधिकरण्ये हेतुपदार्थान्वितप्रथमार्थनिरूपितत्वस्यान्वयः, षष्ठीप्रकृतेस्तद्धर्मपरतया षष्ठयर्थस्य साध्यतावच्छेदकनिष्ठत्वस्य तादृशान्वयबललभ्यहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वे, तस्य तद्धितार्थसम्बन्धिनः एकदेशे घटकत्वरूपसम्बन्धे, सम्बन्धिनश्चाभेदेन प्रथमान्तार्थेऽन्वयः । एवञ्चोक्तवाक्यात्तत्र साध्यतावच्छेदके हेतुसमाना-

धिकरणाभावप्रतियोगितावच्छेदकत्वत्वस्यापि लाभात्तत्र तदवगाहिभ्रमस्य दर्शिताकारतासम्भवादित्यपि वदन्ति ।

## विमलप्रभा

शङ्कते– न चेति, वाच्यमित्यनेनान्वयः । इत्यतः = इति वाक्यतः । साध्यतावच्छेदके = प्रमेयत्वत्वादौ । दुर्लभतया = उक्तवाक्येनालभ्यतया । तदवगाहिज्ञानस्य = साध्यतावच्छेदकीभूतप्रमेयत्वत्वेऽभिधेयत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वावगाहिज्ञानस्य । नोपपद्यते = अभिधेयत्वं प्रमेयत्वस्य व्यभिचारीति वाक्येन नोपपादयितुं शक्यते । समाधानमाह–यत इति । यतः = यस्माद्धेतोः । अभाववद्वृत्तित्वं = साध्याभाववन्निरूपितवृत्तित्वं । समानाधिकरणाभावप्रतियोगितावच्छेदकत्वम् = साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वम् । व्यभिचारपदार्थः = व्यभिचारपदार्थत्वेन द्विविध एवाभिमतः । तत्र = द्विविधव्यभिचारयोर्मध्ये । प्रथमव्यभिचारपदार्थैकदेशेऽभावे = प्रथमव्यभिचारबोधकधूमो वह्नेर्व्यभिचारीत्यत्र वह्न्यभाववद्वृत्तित्वरूपव्यभिचारैकदेशेऽभावे । अस्यान्वय इत्यनेन सम्बन्धः । षष्ठ्यर्थस्य = साध्यस्येत्यत्र षष्ठ्यर्थस्य । तत्र = षष्ठ्यर्थानुयोगित्वे । प्रकृत्यर्थतावच्छेदकवह्नित्वाद्यवच्छिन्ननिरूपितत्वसम्बन्धेन = प्रकृत्यर्थो वह्न्यादिः प्रकृत्यर्थता वह्निप्रभृतौ तदवच्छेदकं वह्नित्वादिः तदवच्छिन्ननिरूपितत्वमभावनिष्ठानुयोगितायामिति तादृशाभावनिष्ठानुयोगितानिरूपितत्वसम्बन्धेन । प्रकृत्यर्थस्य = वह्न्यादेः । मत्वर्थीयार्थः = व्यभिचारीत्यत्र मतुवर्थीयेन्प्रत्ययस्यार्थः । तस्य = मतुवर्थीयार्थस्य स्वरूपसम्बन्धवतः । प्रथमान्तार्थे = प्रथमअन्ते यस्यासौ प्रथमान्तः प्रथमान्तश्चासावर्थश्चेति प्रथमान्तार्थः, हेतुः = धूमादिस्तस्मिन् धूमादौ । द्वितीयतत्पदार्थपरवाक्यस्थले = साध्यतावच्छेदके समानाधिकरणाभावप्रतियोगितावच्छेदकत्वरूपव्यभिचारपदार्थविषयकबोधेच्छयोच्चरितवाक्यस्थले, अभिधेयत्वं प्रमेयत्वस्य व्यभिचारीति वाक्यस्थले इति यावत् । तदेकदेशे = प्रोक्तव्यभिचारपदार्थैकदेशे । सामानाधिकरण्ये = समानाधिकरणाऽभावघटकतदधिकरणवृत्तित्वे । हेतुपदार्थान्वितप्रथमार्थनिरूपितत्वस्य = हेतुपदार्थेऽभिधेयत्वादौ स्वनिष्ठनिरूपकतानिरूपितत्वसम्बन्धेनान्वितस्य हेतुरिति प्रथमान्तार्थनिरूपितत्व-

स्यान्वयः । षष्ठीप्रकृतेः = षष्ठीविभक्तेः प्रकृतिभूतप्रमेयत्वस्य । धर्मपरतया = प्रमेयत्वत्वपरत्वेन । तादृशान्वयबललभ्ये = परम्परयाऽन्वयलभ्ये । तस्य = अवच्छेदकत्वस्य । तद्धितार्थसम्बन्धिनः = व्यभिचारीत्यत्र न्प्रत्ययार्थस्य घटकत्वरूपसम्बन्धवतः । अभेदेन = अभेदसम्बन्धेन । प्रथमान्तार्थे = अभिधेयत्वरूपहेतौ । एवञ्च = उक्तरीत्याऽन्वयस्वीकारे च । उक्तवाक्यात् = अभिधेयत्वं प्रमेयत्वस्य व्यभिचारीति वाक्यात् । साध्यतावच्छेदके = प्रमेयत्वत्वे । तत्र = साध्यतावच्छेदकीभूतप्रमेयत्वत्वे । तदवगाहिभ्रमस्य = तादृशप्रतियोगितावच्छेदकत्वावगाहिभ्रमस्य । दर्शिताकारता = अभिधेयत्वं प्रमेयत्वस्य व्यभिचारीत्याकारकता । अयमर्थः । हेतुः साध्यस्य व्यभिचारीत्यत्र व्यभिचारपदं यदि समानाधिकरणाभावप्रतियोगितावच्छेदकत्वपरं स्यात् स्याच्च तदाऽभिधेयत्व प्रमेयत्व व्यभिचारीत्यत्र निरुक्तरीत्या व्यभिचारभ्रमस्य प्रसिद्धिसम्भावना, परन्तु व्यभिचारपदस्य भूरिप्रयोगविषयसाध्याभाववद्वृत्तित्वमात्रकतया तादृशाऽवच्छेदकत्वे व्यभिचारपदप्रयोगाभावात् तथा चाभिधेयत्वं प्रमेयत्वस्य व्यभिचारीत्यत्र तथाविधभ्रमप्रदर्शनमसङ्गतमेवेति चेन्नतन्मनोरमम्, प्रकारान्तरेण भ्रममुपपादयतां मते यतः हेतुः साध्यस्य व्यभिचारीत्यत्र व्यभिचारपदमभाववद्वृत्तित्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वोभयबोधकमतः अभिधेयत्वं प्रमेयत्वस्य व्यभिचारीत्यत्र तादृशभ्रमप्रदर्शने क्षत्यभावः । तथा च धूमो वह्नेर्व्यभिचारीति वाक्यात् वह्नित्वावच्छिन्ननिरूपितत्वसम्बन्धेन वह्निविशिष्टानुयोगितावदभाववद्वृत्तित्व "स्वरूपसम्बन्ध" वदभिन्नो धूम इति बोधः ।

अभिधेयत्वं प्रमेयत्वस्य व्यभिचारीति वाक्यात् प्रमेयत्वनिष्ठाऽभिधेयत्वनिरूपितसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वघटकत्ववदभिन्नमभिधेयत्वमिति बोधः । एवञ्चाभिधेयत्वं प्रमेयत्वस्य व्यभिचारीत्यत्र तादृशव्यभिचारभ्रमप्रदर्शनस्यसुसङ्गतत्वेन व्याप्तिज्ञानप्रतिबन्धकतादृशभ्रममादायातिप्रसङ्गवारणाय यथार्थपदं देयमेवेति भावः । अनया रीत्या भ्रमत्वोपपादानं विलष्टकल्पनमेवेति वदन्त्या सूचितमिति ।

## गादाधरी

भ्रमादिति । पञ्चम्यर्थः प्रयुक्तत्वं, तस्य प्रतिबन्धपदार्थेऽनुत्पादेऽन्वयः । यथार्थेति । यथा-

र्थपदेन स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता तदनिरूपकत्वस्य सर्वांशे प्रमात्वस्य विवक्षणीयतया दर्शितभ्रमाणां किञ्चिदंशे प्रमात्वेऽपि न तानादाय दोष इति भावः ।

## विमलप्रभा

पञ्चम्यर्थः = भ्रमादित्यत्र या पञ्चमीविभक्तिस्तादृशपञ्चम्या अर्थः । तस्य = पञ्चम्यर्थप्रयुक्तत्वस्य । अन्वयः = भ्रमप्रयुक्तानुमित्यनुत्पादादिति सम्बन्धः । यथार्थपदेन = लक्षणस्थयथार्थपदेन । स्वं = विशेष्यता । तद्व्यधिकरणः = तदधिकरणेऽवर्त्तमानः । अनिरूपकत्वम् = निरूपकत्वाभावः । सर्वांशे = यावत्पदार्थांशे, अवच्छेदकावच्छेदेनेति यावत् । दर्शितभ्रमाणां = पर्वतो निर्वह्निरित्यादिभ्रमाणां । किञ्चिदंशे = पर्वतत्वाद्यंशे । प्रमात्वेऽपि = पर्वतत्वादिमति पर्वतत्वादिप्रकारकत्वेऽपि । तानादाय = तादृशभ्रमात्मकज्ञानमादाय । अयमर्थः । यथार्थपदं यदि तद्वति तत्प्रकारकज्ञानात्मकं स्यात् तदा पर्वतो निर्वह्निरित्यादिज्ञानस्यापि वह्नौ वह्निरित्यादिप्रकारकतया अंशतो यथार्थत्वात्तादृशज्ञानमादायातिव्याप्तिस्तदवस्थैवेति चेन्नतत्सारं यतः लक्षणस्थयथार्थपदेन स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता तदनिरूपकत्वरूपं सर्वांशे प्रमात्वमिह विवक्षणीयम् अर्थात् विशेष्यताऽधिकरणेऽवर्त्तमानो यः प्रकारस्तन्निष्ठप्रकारता निरूपिता या या विशेष्यता तदनिरूपकत्वरूपप्रमात्वस्य प्रकृते यथार्थपदेन विवक्षणीयतया पर्वतो निर्वह्निरिति भ्रमज्ञाने पर्वतो निर्वह्निरिति ज्ञानीयपर्वतनिष्ठविशेष्यताव्यधिकरणः यः वह्न्यभावात्मकः प्रकारस्तदवच्छिन्ना या विशेष्यता तन्निरूपकत्वस्यैव वर्त्तमानतया तत्र तदनिरूपकत्वाभावेन सर्वांशे प्रमात्वाभावात् यथार्थपदेन तादृशज्ञानस्य धर्त्तुमशक्यत्वान्न तादृशभ्रमानादाय दोष इति । पर्वतो वह्निमानित्यादिज्ञानानाञ्च प्रमात्वं, तथा हि स्वपदेन पर्वतो वह्निमानिति ज्ञानीयपर्वतनिष्ठविशेष्यता धर्त्तुं न शक्यते प्रकारीभूतवह्ने[illegible]र्वतनिष्ठविशेष्यताव्यधिकरणत्वाभावात् वह्न्यभावादिरूपप्रकारत्वस्य तादृशविशे[illegible]ताव्यधिकरणत्वेऽपि वह्न्यभावादिरूपप्रकारावच्छिन्नत्वस्य तादृशविशेष्यतायामभावात्, अतः स्वपदेन ह्रदो वह्निमानितिज्ञानीयह्रदनिष्ठविशेष्यतैव धर्त्तुं शक्येति तादृ-

शविशेष्यताव्यधिकरणो यः वह्न्यादिरूपः प्रकारस्तदवच्छिन्ना अर्थात् तादृशप्रकारनिष्ठ-प्रकारतानिरूपिता या ह्रदादिनिष्ठविशेष्यता तदनिरूपकत्वस्य पर्वतो वह्निमानितिज्ञाने सत्त्वादिति ।

## बलदेवी

स्वव्यधिकरणप्रकारावच्छिन्ना या या विशेष्यतेत्यादि भट्टाचार्यैः ।

अत्र स्वव्यधिकरणप्रकारावच्छिन्नेत्यादिना लक्षणघटकज्ञाने विशेष्यताविशिष्टविशेष्य-ताव्यापकत्वं विवक्षणीयम्, वैशिष्ट्यञ्च स्वतादात्म्यस्वाधिकरणावृत्तिनिष्ठप्रकारतानिरू-पितत्वोभयसम्बन्धेन, व्यापकता च निरूपितत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकता-कप्रतियोगिताकभेदवत्त्वसम्बन्धेन । तेन वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वे कथञ्चिन्निरूपकत्वसम्बन्धेन विशेष्यताविशिष्टविशेष्यतासामान्याभावस्याऽप्रसिद्धत्वेऽपि प्रामाण्यवादे भट्टाचार्योक्तरीत्या विषयतानिरूपकत्वस्याऽव्याप्यवृत्तितया तत्सम्बन्धावच्छिन्नाभावस्याऽव्याप्यवृत्तित्वेऽपि न क्षतिरिति ।

स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता तत्तद्व्यक्तित्वावच्छिन्नावच्छेदकता-कप्रतियोगिताकभेदकूटवत्त्वस्या निवेश्यम् ।

अत्र स्वव्यधिकरणप्रकारावच्छिन्नत्वं स्वव्यधिकरणप्रकारनिष्ठप्रकारतानिरूपक-त्वम्, स्वव्यधिकरणत्वञ्च न स्वानधिकरणवृत्तित्वम्, घटो द्रव्यमिति ज्ञानस्य प्रमात्वानुपपत्तेः, तत्र प्रकारीभूतद्रव्यत्वस्य स्वानधिकरणीभूतपटादिवृत्तित्वात् । किन्तु स्वाधिकरणाऽवृत्तित्वम् । एवञ्च स्वाधिकरणाऽवृत्तिनिष्ठप्रकारतानिरूपिता या या विशेष्यता तत्तन्निरूपितत्वाभावकूटवत्त्वमेव पर्यवसितम् । नन्वत्र स्वाधिकरणावृत्तित्वघटकवृत्तित्वं यदि सम्बन्धसामान्येन तदा पर्वतो वह्न्यभाववानिति ज्ञानस्यापि सर्वांशे प्रमात्वापत्तिः, तज्ज्ञानीयविशेष्यताधिकरणपर्वतादौ कालिकेन वह्न्यभावरूपप्रकारस्य सत्त्वेन पर्वतनिष्ठ-विशेष्यतायाःधर्त्तुमशक्यत्वात्,घटो गगनवानिति ज्ञानीयघटादिनिष्ठविशेष्यताया एव स्व-पदेन धर्त्तव्यतया तदनिरूपकत्वस्योक्तभ्रमे सत्त्वात् । न च स्वनिरूपितप्रकारतावच्छेदक-सम्बन्धेन विवक्षणीयम्; तथा च स्वाधिकरणनिरूपितप्रकारतावच्छेदकसम्बन्धावच्छि-

न्नवृत्तित्वाभाववान् यः प्रकारस्तन्निष्ठप्रकारतानिरूपिता या या विशेष्यता तत्तदनिरूपकत्वं पर्यवसितम् । इत्थञ्च तज्ज्ञानीयतादृशपर्वतनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदक - स्वरूपसम्बन्धावच्छिन्नवृत्तित्वाभावस्य वह्न्यभावे सत्त्वात्,तन्निष्ठप्रकारतानिरूपितविशे- ष्यताकत्वात् न तज्ज्ञानस्य प्रमात्वमिति वाच्यं,गुणः संयोगेन घटवानिति ज्ञानस्य प्रमात्वा- पत्तिः, तज्ज्ञानीयविशेष्यताश्रयगुणनिरूपितप्रकारतावच्छेदकसंयोगसम्बन्धावच्छिन्नवृ- त्तित्वाऽप्रसिद्ध्या स्वपदेन गुणनिष्ठविशेष्यतायाः धर्त्तुमशक्यत्वात्, घटो गगनवानिति ज्ञानीयघटनिष्ठविशेष्यतायाः स्वपदेनोपादेयतया तदनिरूपकत्वस्य तत्र सत्त्वात् । न च स्वाधिकरणनिरूपितप्रकारतावच्छेदकसम्बन्धावच्छिन्नवृत्तितावच्छेदकत्वीयस्वरूपस - म्बन्धेन स्वाधिकरणनिरूपितवृत्तितावच्छेदकत्वाभाववान् यो धर्मस्तद्धर्मावच्छिन्नप्रका- रतानिरूपिता या या विशेष्यता तत्तदनिरूपकत्वमेव तत् । तथा च संयोगसम्बन्धावच्छि- न्नवृत्तितावच्छेदकत्वीयस्वरूपसम्बन्धेन गुणनिरूपितवृत्तित्वाभावस्य केवलान्वयितया वि- शिष्टसत्तात्वेऽपि सत्त्वेन स्वपदेन गुणनिष्ठविशेष्यताया उपादातुं शक्यतया नापत्तिरिति वाच्यं,विशेषरूपेण संसर्गतास्वीकारे घटत्वप्रतियोगिकसमवायसम्बन्धेन पटत्ववान् पट इ- ति ज्ञानस्य प्रमात्वापत्तेः,प्रकारतावच्छेदककेवलसमवायसम्बन्धावच्छिन्नवृत्तितावच्छेदक- त्वीयस्वरूपेण तज्ज्ञानीयविशेष्यताश्रयपटनिरूपितवृत्तित्वस्य पटत्वे सत्त्वेन घटनिष्ठविशे- ष्यतायाः स्वपदेनाग्रहणात् । न च स्वनिरूपितप्रकारतावच्छेदकसंसर्गतावच्छेदकता- त्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वीयस्वरूपेण स्वाधिक - रणनिरूपितवृत्तित्वाभावो विवक्षणीयः । तथा चोक्तज्ञानीयपटत्वनिष्ठप्रकारतानिरू- पितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यत् घटत्व- प्रतियोगिकत्वसमवायत्वगतद्वित्वं तदवच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकघटत्वप्रति- योगिकसमवायावच्छिन्नवृत्तित्वीयस्वरूपेण पटनिरूपितवृत्तित्वाभावः केवलान्वयीति प्र- कारीभूतपटत्वेऽपि सत्त्वात् न तत्र प्रमात्वापत्तिरिति वाच्यं, गुणीयसंयोगेन घटवान् गुण इति ज्ञानस्य प्रमात्वापत्तेः, तज्ज्ञानीयप्रकारतावच्छेदकसंसर्गतावच्छेदकगुणीयत्वसंयोग- त्वगतद्वित्ववृत्तित्वस्याऽप्रसिद्ध्या स्वपदेन तादृशविशेष्यताया धर्त्तुमशक्यतया संयोगेन वह्निमान् ह्रद इति ज्ञानीयविशेष्यतैव स्वपदग्राह्येति तच्छून्यत्वस्योक्तज्ञाने सत्त्वादिति चेन्न, स्वनिरूपितप्रकारतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्या -

स्थनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपकीयस्वरूप - सम्बन्धेन स्वाश्रयनिरूपितवृत्तित्वाभावस्य विवक्षणेनोक्तदोषानवकाशात्। प्रकृते गुण-प्रतियोगिकत्वसंयोगत्वगतद्वित्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपकीभू - ता या संसर्गविधया संयोगनिष्ठावच्छेददकता तन्निरूपकत्वस्य वृत्तित्वेऽप्रसिद्धावपि तज्ज्ञा-नीयघटत्वावच्छिन्नप्रकारत्वे तत्सिद्धेः, तादृशप्रकारत्वीयस्वरूपसम्बन्धस्य तज्ज्ञानीयवि-शेष्यताश्रयपटनिरूपितवृत्तित्वस्य व्यधिकरणसम्बन्धतया तत्सम्बन्धावच्छिन्नप्रतियो-गिताकतादृशवृत्तित्वाभावस्य प्रकारीभूतघटे सत्त्वेन तादृशविशेष्यतायाः स्वपदग्राह्यत्वा-त्। न च घटत्वत्वेन घटत्वावगाहिज्ञानीयविषयतायाःस्वरूपतो घटत्वादिप्रकारकज्ञान-स्य प्रमात्वापत्तेः, तज्ज्ञानीयतादृशज्ञाननिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकसंसर्ग - तावच्छेदकविषयतात्वगतैकत्ववृत्तिस्वावच्छिन्नवृत्तित्वीयस्वरूपसम्बन्धेन तादृशविशेष्य-ताश्रयीभूतज्ञाननिरूपितवृत्तित्वस्य घटत्वे सत्त्वात् न तदभावो घटत्वेऽस्तीति स्वपदेन ता-दृशविशेष्यतायाः धर्त्तुमशक्यत्वादिति वाच्यं, तादृशसम्बन्धेन स्वाधिकरणनिरूपितनि रवच्छिन्नवृत्तित्वाभाववन्निष्ठनिरवच्छिन्नप्रकारतानिरूपितविशेष्यत्वानिरूपकत्वस्य विव-क्षितत्वात्। एवञ्च तादृशज्ञाननिरूपितविशेषणतासम्बन्धावच्छिन्नस्वावच्छिन्नवृत्तित्वस्य घटत्वे सत्त्वेऽपि निरवच्छिन्नतादृशवृत्तित्वाभावस्य प्रकारीभूतघटत्वे सत्वान्न दोषः, तादृशवृ-त्तित्वाभाववन्निष्ठनिरवच्छिन्नप्रकारतानिरूपितविशेष्यताशून्यत्वमपि निवेशनीयम्। नि-रवच्छिन्नत्वाऽनिवेशे तु यत्र प्रकारतापन्नघटत्वस्य घटत्वत्वेन घटत्वावगाहिज्ञानस्य पक्ष-त्वं विषयत्वसम्बन्धावच्छिन्नप्रतियोगिकताकघटाभावस्य साध्यत्वं तत्र घटत्वघटितबा-धेऽव्याप्तिरतस्तन्निवेशः। एवञ्च घटत्वत्वेन घटत्वावगाहिज्ञाने विषयितासम्बन्धेन घटत्व-त्वेन घटत्वप्रकारकज्ञानस्य च न प्रमात्वानुपपत्तिरिति तत्र लक्षणसमन्वयः।

न च प्रकारतायां निरवच्छिन्नत्वनिवेशे ह्रदो वह्निमानिति ज्ञानस्य प्रमात्वा-पत्तिः, तज्ज्ञानीयवह्निनिष्ठप्रकारतायाः निरवच्छिन्नत्वाभावात्, निरवच्छिन्नगुणो द्रव्य-मिति ज्ञानीयप्रकारतानिरूपितगुणनिष्ठविशेष्यतानिरूपकताशून्यत्वस्य तत्र सत्त्वादिति वाच्यं, स्वाश्रयनिरूपितवृत्तितानवच्छेदकधर्मावच्छिन्नप्रकारतानिरूपितविशेष्यत्वानि-रूपकत्वस्यापि विशेषणान्तरज्ञाने निवेशनीयतया तज्ज्ञानीयविशेष्यताश्रयह्रदनिरू-पितवृत्तितानवच्छेदकवह्नित्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितनिरूपकतया

तदसंग्रहात्। अत्र स्वाश्रयनिरूपितवृत्तिता च प्रकारतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या तेन न प्रागुक्तकालिकसम्बन्धमादाय दोषः।

एवञ्च तादृशावच्छेदकत्वाभावश्च स्वनिरूपितप्रकारतावच्छेदकसंसर्गतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगितानिरूपकसंसर्गतानिरूपितावच्छेदकत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्य इति।

गुणो विशिष्टसत्तावानिति ज्ञानस्य प्रमात्वापत्तिवारणन्तु वृत्तितास्थले निरूपकतानिवेशेन, गुणकर्मान्यत्वोपलक्षितसत्तावानिति ज्ञानस्य सङ्ग्रहाय सव्यभिचारोक्तक्रमेण विशिष्टवैशिष्ट्यावगाहिज्ञाने विशिष्टनिरूपितसम्बन्ध एव भासते, उपलक्षिते तु शुद्धसम्बन्धः अधिकरणत्वावगाहिनी प्रतीतिरिति मते निरूपकतावच्छेदकत्वादिकमपि निवेश्य तादृशवृत्तित्वाभावनिवेश एव सम्यगिति ध्येयम्। यद्वा विशेष्यताविशिष्टप्रकारताशून्यत्वं सर्वांशे प्रमात्वं विशेष्यतावैशिष्ट्यञ्च प्रकारतायां स्वनिरूपितत्वस्वाश्रयाधिकरणनिष्ठाधिकरणतानिरूपितनिरूपकतावदन्यत्वोभयसम्बन्धेन, निरूपकतावत्ता च स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्यस्वानवच्छेदकानवच्छिन्नत्वस्व। वृत्तित्वैतच्चतुष्टयसम्बन्धेन, स्ववृत्तित्वञ्च स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन। अत्रासम्भववारणाय स्वनिरूपितत्वनिवेशः, अन्यथा पर्वतो वह्निमानिति प्रमीयप्रकारताया अपि उदासीनह्रदादिविशेष्यताविशिष्टतया तदनिरूपकत्वस्य प्रमायां विरहेणासम्भवः स्यात्, निवेशे तु प्रकारतायामुदासीनविशेष्यतानिरूपितत्वविरहेण वैशिष्ट्यविरहात्। भ्रममात्रे प्रमात्वापत्तिवारणाय द्वितीयसम्बन्धः। तत्रापि स्वावच्छेदकसम्बन्धावच्छिन्नत्वानुक्तौ ह्रदो वह्निमानिति ज्ञानीयविषयतानिरूपितवह्निप्रकारतायां ह्रदनिरूपितकालिकसम्बन्धावच्छिन्नवह्निनिष्ठनिरूपकतायाः सामानाधिकरण्यादित्रितयसम्बन्धेन वैशिष्ट्यसत्वात्, तादृशविषयतायाः स्वपदेन धर्त्तुमशक्ययतया घटो गगनवानिति ज्ञानीयविषयताया एव तादृशत्वेन तदनिरूपकोक्तज्ञानस्य प्रमात्वापत्तिः। द्वितीयसम्बन्धानिवेशे गुणो द्रव्यमिति ज्ञानस्य प्रमात्वापत्तिः, गुणत्वनिष्ठनिरवच्छिन्ननिरूपकतायाः सम्बन्धत्रयेण द्रव्यत्वनिष्ठप्रकारतायां सत्त्वेन तथात्वात्। न च निरवच्छिन्ननिरूपकताया अवच्छेदकत्वस्य द्रव्यत्वनिष्ठप्रकारतायाश्चावच्छेदकस्याऽप्रसिद्ध्या नायं दोष इति वाच्यम्, स्वा-

नवच्छेदकानवच्छिन्नत्वमित्यस्य यथाश्रुतार्थकत्वे घटो द्रव्यमिति ज्ञानस्य प्रमात्वानुपपत्तिः स्वावच्छेदकाऽप्रसिद्धेः, अतस्तस्याऽवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववद्धर्मानवच्छिन्नत्वमित्यर्थो वाच्यः,तथा चोक्तापत्तिवारणाय स्वसामानाधिकरण्यदलं देयमेव । तृतीयसम्बन्धानिवेशे स्वरूपतो घटत्वावगाहिज्ञानधर्मिकस्य विषयितासम्बन्धेन घटत्वत्वेन घटत्वप्रकारकज्ञानस्य प्रमात्वापत्तिः, स्वरूपतो घटत्वनिष्ठप्रकारताया अन्यसम्बन्धत्रयेण घटत्वत्वेन घटत्वनिष्ठप्रकारतायां सत्त्वात्, एवं गुणो विशिष्टसत्तावानिति ज्ञानस्य प्रमात्वापत्तिश्च । चतुर्थसम्बन्धानिवेशे घटत्वत्वेन घटत्वावगाहिज्ञानधर्म्मिकस्य विषयतासम्बन्धेन स्वरूपतो घटत्वप्रकारकज्ञानस्य प्रमात्वापत्तिस्स्यादतस्तन्निवेशः ।

अथ वा नित्यज्ञानावृत्तिविषयताशून्यत्वं प्रमात्वं नित्यज्ञानीयविषयताप्रमीयविषयतयोरभेद इति दिक् ।

## दीधितिः

ननु प्रतिबन्धकज्ञानविषयव्यभिचारादिघटकसाध्यादेरपि प्रत्येकं हेत्वाभासतापत्तिः ।

## गादाधरी

अत्र यथार्थपदेन सद्धेतुस्थलेऽनुमितिविरोधिभ्रमविषयसाध्याभावादावतिप्रसङ्गवारणेऽपि असद्धेतुस्थले तादृशप्रमाविषयदोषघटकसाध्यादेः प्रत्येकं दोषत्वापत्तिर्दुर्वारैव तदर्थं प्रकारान्तरानुसरणे च तत एव पूर्वदोषस्यापि वारणसम्भवे यथार्थपदं व्यर्थमिति दोषस्य दुरुद्धरतया तस्यैव यथार्थपदाऽघटितलक्षणान्तरानुसरणे बीजत्वमाहनन्विति । एकदेशस्याऽपि विशिष्टघटकतया हेत्वाभासपदार्थत्वस्येष्टत्वादाह—प्रत्येकमिति । प्रत्येकपदार्थपर्याप्तसाध्यतावच्छेदकाद्यवच्छिन्नस्येत्यर्थः । हेत्वाभासत्वापत्तिः = हेत्वाभासपदार्थत्वापत्तिः । यद्रूपावच्छिन्नज्ञानस्याऽनुमितिविरोधित्वं तद्रूपावच्छिन्ने हेत्वाभासत्वव्यवहारस्य तद्रूपावच्छिन्नमात्रज्ञानाद्धेतौ दुष्टत्वव्यवहारस्य चानुदयेन इष्टापत्तिर्न सम्भवतीति भावः ।

यथार्थपदाघटितद्वितीयलक्षणानुसरणबीजं प्रदर्शयितुं भूमिकां रचयति—अत्रेति। अत्र=प्रथमलक्षणे। यथार्थपदेनेत्यस्य वारणेऽपीत्यनेनान्वयः। सद्धेतुस्थले=पर्वतो वह्निमान् धूमादित्यादौ। अनुमितिविरोधिभ्रमविषये=पर्वतो वह्निमानित्यनुमितिविरोधी यः वह्न्यभाववान् पर्वत इति भ्रमस्तद्विषये वह्न्यभावादौ। वह्न्यभावादावित्यत्रादिपदेन पर्वतपरिग्रहः। अतिप्रसङ्गवारणेऽपि=यथार्थपदप्रदानेनातिव्याप्तिवारणेऽपि। असद्धेतुस्थले=धूमवान् वह्नेरित्यादौ। तादृशप्रमाविषये=धूमाभाववद्वृत्तिवह्निरूपव्यभिचारविषयकप्रमाविषये। दोषघटकसाध्यादेः =धूमाभाववद्वृत्तिवह्निरूपव्यभिचारघटकधूमतदभावादेः। प्रत्येकं=साध्येऽभावे पक्षे च प्रत्येकम्। दोषत्वापत्तिः=अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वसत्त्वेन दोषत्वापत्तिः। तदर्थं=दोषघटकसाध्यादौ दोषत्वापत्तिनिवारणार्थम्। प्रकारान्तरानुसरणे च=यद्रूपावच्छिन्नविषयिता प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिस्तद्रूपावच्छिन्नत्वरूपलक्षणान्तरानुसरणे च। तत एव=प्रकारान्तरानुसरणादेव। पूर्वदोषस्यापि=पर्वतो वह्न्यभाववानिति भ्रमविषयसाध्याभावादावतिप्रसङ्गरूपदोषस्यापि तस्यैव=यथार्थपदवैयर्थ्यरूपदोषस्यैव। लक्षणान्तरानुसरणे=द्वितीयलक्षणानुसरणे। बीजं=कारणम्। आह=दीधितिकार इति शेषः। एकदेशस्यापि=दोषघटकीभूतसाध्याभावादेरपि। विशिष्टघटकतया=दोषघटकतया। हेत्वाभासपदार्थत्वस्य=दोषपदार्थत्वस्य। इष्टत्वात्=तत्र हेत्वाभासव्यवहारस्य सर्वसम्मतत्वात्। हेत्वाभासपदार्थत्वापत्तिः=हेत्वाभासपदजन्यबोधीयमुख्यविशेष्यत्वापत्तिः। यद्रूपावच्छिन्नज्ञानस्य=वह्नित्वाद्यवच्छिन्नवह्निविषयकवह्निरित्याकारकज्ञानस्य। अनुमित्यविरोधित्वं=प्रकृतानुमित्यप्रतिबन्धकत्वम्। तद्रूपावच्छिन्ने=वह्नित्वाद्यवच्छिन्ने। तद्रूपावच्छिन्नमात्रज्ञानात्=वह्नित्वावच्छिन्नमात्रज्ञानात्। अनुदयेन=अभावेन। अयमर्थः। यथार्थपदोपादाने पर्वतो वह्निमान् धूमादित्यादिसद्धेतौ पर्वतो वह्निमानित्यनुमितिविरोधी यो वह्न्यभाववान् पर्वत इति भ्रमस्तादृशभ्रमे यथार्थत्वाभावात्तादृशभ्रममादायातिप्रसङ्गविरहेऽपि ह्रदो वह्निमान् जलादित्याद्यसद्धेतुस्थले ह्रदो वह्निमान् वह्निव्याप्यजलवान् इत्यनुमितिकारणीभूतो यः वह्न्यभाववान् ह्रदः

इत्याकारकबाधनिश्चयाभावस्तत्प्रतियोगि यत् यथार्थज्ञानं तच्च वह्न्यभाववान् ह्रद इत्याकारकं ज्ञानं तद्विषयतायाः वह्नौ अभावे ह्रदे च सर्वत्रैव सत्त्वेन प्रत्येके वह्न्यादौ दोषत्वापत्तिस्तद्वारणाय यदि यद्रूपावच्छिन्नविषयता प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिस्तद्रूपावच्छिन्नत्वरूपद्वितीयलक्षणानुसरणं क्रियते तदा वह्न्यभाववद्ध्रदादिरूपबाधादिघटकसाध्यादिविषयतायाः प्रत्येकं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वाभावेन प्रत्येके दोषत्वापत्तिवारणवत् सद्धेतुस्थलेऽपि भ्रमविषयसाध्याभावादिविषयतायाः प्रत्येकं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वाभावेन साध्याभावादावतिव्याप्तिवारणसम्भवात् यथार्थपदं व्यर्थमेवेति ( प्रथमलक्षणे यथार्थपदं व्यर्थमेवेति ) यथार्थपदाघटितद्वितीयलक्षणमनुसृतमिति । ननु प्रकृतानुमितिप्रतिबन्धकयथार्थज्ञानविषयबाधादिघटकप्रत्येके साध्यादौ हेत्वाभासत्वापत्तिर्या दत्ता सा न संगच्छते साध्यादिरूपैकदेशस्यापि बाधादिरूपविशिष्टघटकतया हेत्वाभासत्वस्येष्टत्वादिति वाच्यं, विशिष्टघटकतया तत्र तादृशव्यवहारस्येष्टत्वेऽपि साध्यादिरूपप्रत्येकपदार्थे पर्याप्तिसम्बन्धेन वर्त्तमानं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्ये तादृशपक्षादौ च हेत्वाभासपदजन्यशाब्दधियः मुख्यविशेष्यत्वापत्तिः, न चेष्टापत्तिः यद्रूपावच्छिन्नज्ञानस्यानुमितिप्रतिबन्धकत्वं तद्रूपावच्छिन्ने एवम् यद्रूपावच्छिन्नमात्रज्ञानात् हेतौ दुष्टत्वव्यवहारस्तद्रूपावच्छिन्ने च हेत्वाभासपदार्थत्वव्यवहारस्य सर्वानुभवसिद्धतया बाधादिघटककेवलसाध्यादिज्ञानात् अनुमित्यनुत्पादस्य हेतौ दुष्टताव्यवहारस्य चानुदयेन साध्यादौ तादृशव्यवहाराभावादिति भावः ।

## दीधितिः

अथ विशिष्टविषयकं ज्ञानं प्रतिबन्धकं तद्घटकश्च नं विशिष्टमिति चेत्तर्हि यथार्थेति व्यर्थम्, भ्रमविशिष्टस्याऽप्रसिद्धत्वादित्याशयेनाह—यदिति ।

## गादाधरी

यादृशविशिष्टविषयकत्वं तादृशानुमितिविरोधिताऽनतिरिक्तवृत्तित्वमिति विवक्षया न साध्यादावतिव्याप्तिरित्याशयेनाऽऽशङ्कते—अथेति । विशिष्टविषयकम् = सा-

ध्याभाववद्वृत्तित्वविशिष्टसाधनादिविषयकमेव । तद्घटकश्च = तादृशविशिष्टघटक-प्रत्येकपदार्थविषयकत्वं च । न विशिष्टम् = न तादृशविशिष्टनिरूपितम् । तथा च प्रत्येकपदार्थविषयकत्वस्य प्रतिबन्धकताया अतिरिक्तवृत्तित्वान्नातिव्याप्तिरिति भावः । व्यर्थमिति । यथार्थपदाऽदानेऽपि सद्धेतुस्थलेऽतिव्याप्तिवारणासम्भवात् । ननु तत्र भ्रमविषयप्रत्येकपदार्थविषयकत्वस्योक्तरीत्या वारणेऽपि तद्विषयविशिष्टेऽतिव्याप्तिरत आह—भ्रमविषयेति । तथा च क्वातिव्याप्तिरिति भावः ।

## विमलप्रभा

यादृशविशिष्टविषयकत्वं तादृशानुमितिविरोधिताऽनतिरिक्तवृत्तित्वमित्यादिना "अथे"त्यादिशिरोमणिग्रन्थमवतारयति । शिरोमणौ भ्रमविषयेति । भ्रमविषये = भ्रमात्मकज्ञानविषये । यादृशविशिष्टविषयकत्वम् = यद्रूपावच्छिन्नविषयकनिश्चयत्वम् । तादृशानुमितिविरोधिता = समूहालम्बनानुमितिप्रतिबन्धकता । तत्त्वम् = तद्रूपावच्छिन्नत्वम् । न साध्यादावतिव्याप्तिः = न साध्यपक्षप्रभृतिषु प्रत्येकेषु लक्षणगमनप्रसङ्गः । साध्याभाववद्वृत्तित्वविशिष्टसाधनादिविषयकम् = धूमाभाववद्वृत्तित्वविशिष्टवह्न्यादिविषयकम् । तादृशविशिष्टघटकप्रत्येकपदार्थविषयकत्वम् = धूमाभाववद्वृत्तित्वविशिष्टवह्न्यादिरूपदोषघटकसाध्यादिपदार्थविषयकत्वम् । न तादृशविशिष्टनिरूपितम् = न धूमाभाववद्वृत्तित्वविशिष्टसाधनादिनिरूपितम् । तथा च = प्रत्येकपदार्थे विशिष्टनिरूपितत्वाभावे च । प्रत्येकपदार्थविषयकत्वस्य = दोषघटकपक्षसाध्यादि-प्रत्येकपदार्थविषयतायाः । प्रतिबन्धकतातिरिक्तवृत्तित्वात् = प्रकृतानुमितिप्रतिबन्धकत्वाभाववति वर्त्तमानत्वात् । नातिव्याप्तिः = न प्रत्येके साध्यादौ हेत्वाभासलक्षणगमनप्रसङ्गः । यथार्थपदाऽदानेऽपि = प्रकृतलक्षणे यथार्थपदाऽनिवेशेऽपि । सद्धेतुस्थले = पर्वतो वह्निमान् धूमादित्यादौ । तत्र = पर्वतो वह्निमान् धूमादित्यादिसद्धेतौ । भ्रमविषयप्रत्येकपदार्थविषयकत्वस्य = वह्न्यभाववान् पर्वत इति भ्रमविषयवह्न्यभावादिविषयतायाः । उक्तरीत्या = यद्रूपावच्छिन्नविषयता प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिरित्यादिलक्षणोक्तरीत्या । तद्विषयविशिष्टे = भ्रमविषयविशिष्टे वह्न्यभाववद्पर्वतादौ । अतिव्याप्तिः = तादृशविशिष्टेऽतिप्रसङ्गः । अतः = अतिप्रसङ्गाद्धेतोः । तथा च = भ्रमविषयविशिष्टस्याऽप्रसिद्धत्वे च । अयमर्थः । यद्रूपावच्छिन्नविषयता -

व्यापिका भवति प्रकृतानुमितिप्रतिबन्धकता तद्रूपावच्छिन्नत्वरूपार्थकरणे बाधादिज्ञानानां साध्याभाववत्पक्षविषयकत्वेनैव प्रतिबन्धकत्वं तादृशविषयतैव च प्रकृतानुमितिप्रतिबन्धकताव्यापिका न तु केवलसाध्यादिविषयिता तस्याः प्रतिबन्धकतातिरिक्तवृत्तित्वात्, एवञ्च पर्वतो वह्निमान् धूमादित्यादौ भ्रमविषयप्रत्येकसाध्यादिविषयतायाः प्रतिबन्धकतातिरिक्ते साध्यादिविषयकज्ञाने वर्त्तमानतया प्रतिबन्धकताऽनतिरिक्तवृत्तित्वाभावादेव साध्यादावतिव्याप्तिवारणसम्भवात् यथार्थपदोपादानमनर्थकमिति ।

न च साध्यादिविषयतायाः प्रत्येकं प्रतिबन्धकतातिरिक्तवृत्तितयाऽनतिरिक्तवृत्तित्वाभावेन तामुपादायैकदेशेऽतिप्रसङ्गवारणेऽपि साध्याभावविशिष्टपक्षविषयतायाः प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तितया भ्रमविषयविशिष्टे साध्याभावविशिष्टपक्षादावतिव्याप्तिस्स्यादेवेति तदर्थं यथार्थपदोपादानमिति वाच्यं, भ्रमस्थले भ्रमविषयविशिष्टस्या ( वह्न्यभावविशिष्टपर्वतादेः ) ऽप्रसिद्धतया यद्रूपावच्छिन्नविषयतापदेन वह्न्यभावविशिष्टपर्वतत्वाद्यवच्छिन्नविषयतायाः धर्त्तुमशक्यत्वान्न भ्रमविषयविशिष्टेऽतिप्रसङ्गसम्भावनेति, तथा च यथार्थपदमनुपादेयमेवेत्याशयेन प्रथमलक्षणं विहाय द्वितीयलक्षणमनुसृतमिति भावः ।

## बलदेवी

व्यर्थमिति,—आह भ्रमविषयेति । अप्रसिद्धत्वादिति तथा च क्वातिव्याप्तिरिति भाव इति भट्टाचार्यः ।

नन्वत्र यथार्थपदानुपादाने दोषविषयकसंशयादौ प्रतिबन्धकत्वाभावेन यद्रूपावच्छिन्नविषयताव्यापकत्वस्य प्रतिबन्धकतायामसत्त्वादतस्तद्वारणायाऽनाहार्यप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्ववैशिष्ट्यं यद्रूपावच्छिन्नविषयतायामवश्यं निवेशनीयम् तदपेक्षया यद्रूपावच्छिन्नविषयितायां यथार्थज्ञानीयत्वनिवेशनमेवोचितमिति यथार्थपदसार्थक्यसम्भवादिति चेन्न, यथार्थपददानेऽपि अविरुद्धभावाभावकोटिकसंशयस्वीकर्तृमते ह्रदो वह्न्यभाववान् जलवान् वेत्यादिज्ञानस्य संशयरूपतया यथार्थतया च वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताया अनुमितिप्रतिबन्धकतातिरिक्तवृत्तितयाऽसम्भववारणाय संशयान्यत्वरूपनिश्चयत्वनिवेशस्यावश्यकतया संशयमादाय दोषस्य तत एव वारणसम्भवात् यथार्थ-

पदवैयर्थ्यं दुःपरिहरमिति । अविरुद्धभावाभावद्वयकोटिकसंशयाऽस्वीकर्त्तृमते कपिसं-योगाभाववत्-वृक्षेऽव्याप्तिः "वक्ष्यग्रन्थे तस्यापि बाधत्वमङ्गीकृतम्" वृक्षः कपिसंयोगा-भाववान्न् वेति संशयस्य यथार्थत्वेनावारणात् ।

न च तथापि यद्रूपावच्छिन्नविषयतायाः वह्निमान् ह्रदो वह्न्यभाववानित्या-हार्यज्ञानसाधारणतया पुनरसम्भवभयेन यथार्थपदसार्थक्यसम्भवादिति वाच्यम् । य-थार्थपददानेऽपि अप्रामाण्यज्ञानास्कन्दितज्ञानमादायाऽसम्भववारणायाप्रामाण्यज्ञाना-भावस्य ज्ञानविशेषणतया निवेशनीयत्वे तत्तद्व्यक्तित्वेनाभावनिवेशे गौरवप्रसङ्गः स्याद-तोऽनुगतरूपेणाप्रामाण्यज्ञानाभावो निवेश्यः, तत्प्रकारश्च अभावविशिष्टान्यत्वं यद्रूपाव-च्छिन्नविषयकज्ञाने निवेशनीयम्, अभाववैशिष्ट्यं ज्ञाने स्वाभाववत्त्वस्वावच्छिन्नप्रतिब-न्धकतावच्छेदकविषयतावत्त्वोभयसम्बन्धेन । स्वाभाववत्त्वञ्च स्वरूपविशेष्यत्वान्यतरसम-म्बन्धेन । अहार्यादिज्ञानवारणाय प्रथमसम्बन्धनिवेशः, गुणत्वाभावमादाय ज्ञानमात्रे तद्विशिष्टत्वसत्त्वेनाऽसम्भववारणाय द्वितीयसम्बन्धनिवेशः । एवञ्चैतादृशविशेषणेनैवो-क्ताऽहार्याप्रामाण्यज्ञानास्कन्दितज्ञानवारणसम्भवेन यथार्थपदं व्यर्थमेवेति ।

न चोक्तानुगमेनानियताऽहार्यवारणेऽपि नियताहार्यवारणासम्भवः, समानाका-रकज्ञानीयविषयताया अभेदेऽपि नियताऽऽहार्यज्ञानीयविषयतायाः दोषविषयकाऽऽहार्यज्ञा-नीयविषयतातो भिन्नत्वस्य ग्रन्थकृतैवाग्रे प्रतिपादनीयतया नियताहार्यज्ञानीयविषयताया प्रतिबन्धकतानवच्छेदकतया तादृशज्ञानेऽभावविशिष्टान्यत्वसत्त्वेन नियताऽऽहार्यव्यावृत्त्य-र्थं यथार्थपदसार्थक्यमिति वाच्यम् । यथार्थपदोपादानेऽपि तुल्ययुक्तया कपिसंयोगाभाव-वत्वृक्षेऽव्याप्तिः, अतो नियताहार्यस्य, कपिसंयोगाभाववान् वृक्षः कपिसंयोगवानित्या-कारकस्य, वारणाय वैशिष्ट्यघटकद्वितीयसम्बन्धपदेन स्वावच्छिन्नप्रतिबन्धकतावच्छेद-कविषयितानिरूपकतावच्छेदकधर्मावच्छिन्नविषयितावत्त्वरूपसम्बन्धोऽवश्यं निवेशनी-यः । तथा च नियताऽऽहार्यज्ञानीयविषयितायाः प्रतिबन्धकतानवच्छेदकत्वेऽपि प्रति-बन्धकतावच्छेदकाऽऽनाहार्यज्ञानीयविषयतामादाय तन्निरूपकतावच्छेदकधर्मावच्छिन्न-विषयितावत्त्वं नियताहार्यज्ञानेऽक्षतमेवेति तज्ज्ञानवारणम् इत्थञ्च यथार्थपदं व्यर्थमेवे-ति बोध्यम् । ननु यद्याहार्यभेदस्य प्रतिबन्धकतावच्छेदकता स्यात् सर्वसामञ्जस्यं तदा भ-वेत्, तदेव न सम्भवति, तथा सति ह्रदो वह्निमानिति ज्ञानं प्रति ह्रदो वह्न्यभाववान् घ-

टाभाववत्पर्वतो घटवानिति समूहालम्बनस्य प्रतिबन्धकत्वानुपपत्तेः, तस्याऽऽशङ्काहार्यतयाहार्यभिन्नत्वाभावात्, एवं संशयभेदोऽपि न प्रतिबन्धकतावच्छेदकः, तथा चोक्तविशेषणेनाऽप्रामाण्यज्ञानास्कन्दितज्ञानवारणेऽपि संशयाहार्यज्ञानयोर्वारणमशक्यमेव, स्वावच्छिन्नप्रतिबन्धकताघटितद्वितीयसम्बन्धविरहप्रयुक्ताऽभावविशिष्टान्यत्वस्याक्षतत्वादिति। तयोर्वारणाय यथार्थपदं सार्थक्यमेवेति चेन्न, आहार्यभेदस्य प्रतिबन्धकतावच्छेदकत्वाभावेऽपि अहार्यस्य प्रतिबन्धकतावारणार्थं विरोधिविषयतायामिच्छाप्रयोज्यत्वं संशयस्य प्रतिबन्धकतावारणार्थं विषयित्वानवच्छिन्नत्वञ्च निवेशनीयम्। एवञ्चाऽभावपदेनेच्छाप्रयोज्यत्वाभावं विषयित्वावच्छिन्नत्वाभावं चोपादाय तयोर्वारणम्। अत्र वैशिष्ट्यघटकस्वाभावत्वञ्च स्वाश्रयीभूतविषयितावत्त्वविशेष्यत्वान्यतरसम्बन्धेन। प्रथमसम्बन्धनिवेशादाहार्यसंशययोर्वारणम्। द्वितीयसम्बन्धनिवेशादप्रामाण्यज्ञानास्कन्दितज्ञानवारणम्। एवञ्च यथार्थपदं व्यर्थमेवेति। नन्वेवमपि यथार्थपदनिवेशेऽसम्भवसम्भवे वैयर्थ्याभिधानमसङ्गतमेव, तथा हि तादृशसम्बन्धेनाभावविशिष्टान्ययद्रूपावच्छिन्नविषयताशालियथार्थज्ञाननिष्ठभेदप्रतियोगितावच्छेदकतात्वस्य तत्समनियतयथार्थपदाघटिततादृशावच्छेदकतात्वापेक्षया गुरुतयाऽभावप्रतियोगिताऽनवच्छेदकत्वेन तादृशाभावाऽप्रसिद्धेरिति, न चाभावविशिष्टान्ययद्रूपावच्छिन्नविषयताशालिज्ञानवृत्तिभेदप्रतियोगितावच्छेदकतात्वस्याभावविशिष्टान्ययद्रूपावच्छिन्नविषयताशालिज्ञानवृत्तिभेदप्रतियोगितावच्छेदकतात्वस्य कुतः सामनैयत्यम् यतोऽभावविशिष्टान्ययद्रूपावच्छिन्नविषयताशालिज्ञानं ह्रदो वह्न्यभाववान् पर्वतश्च तथेति समूहालम्बनज्ञानं तत्र निरुक्तयथार्थत्ववान्नेति भेदो वर्त्तते तादृशभेदप्रतियोगितावच्छेदकत्वं निरुक्तयथार्थत्वनिष्ठावच्छेदकतायामस्ति तादृशदोषविषयकाऽभावविशिष्टान्ययथार्थज्ञानं च न तादृशसमूहालम्बनज्ञानं तत्र याथार्थ्यविरहात्, किन्तु ह्रदो वह्न्यभाववान्, इत्यादियथार्थज्ञानमेव तत्र यथार्थत्ववान्नेति भेदाभावेन भेदान्तरीयप्रतियोगितावच्छेदकतात्वं यथार्थत्ववद्भेदप्रतियोगितावच्छेदकतायान्नास्तीति न समनीयतत्वं तयोरिति वाच्यम्, अव्यापकीभूतविषयताशून्यत्वस्य ज्ञाने निवेशनीयतया ह्रदो वह्न्यभाववान् पर्वतश्च तथेत्याकारकस्य समूहालम्बनात्मकस्य दोषविषयकांशिकभ्रमस्याऽव्यापकीभूतविषयताशून्यत्वाभावेन तस्याऽव्यापकीभूतविषयताशून्याभावविशिष्टान्यज्ञानपदेन धर्त्तुमशक्यत्वात्, किन्तु ह्रदो वह्न्यभाववानित्याद्याकारकस्य दोषविषयकयथार्थज्ञानस्यैव तादृशतया तत्र च यथार्थत्व-

वच्छेदाभावेन तयोः समनीयतत्वमस्त्येवेति चेन्न, यथार्थस्य प्रतियोगितावच्छेदककुक्षाव-निवेशात्, याथार्थ्यसामानाधिकरण्यस्यैव ज्ञाननिष्ठावच्छेदकतायां निवेशात्। अत्रेदं तत्त्वं यथार्थत्वनिष्ठावच्छेदकतायाःन्यूनवारकपर्याप्तिनिवेशे प्रयोजनाभावेन यथार्थत्वघटितयद्रूपावच्छिन्नविषयताशाल्यभावविशिष्टान्ययथार्थज्ञानवृत्तिभेदप्रतियोगिता - वच्छेदकत्वाभावत्वस्य याथार्थ्याऽघटितयद्रूपावच्छिन्नविषयताशाल्यभावविशिष्टा - न्यज्ञानवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावसाधारण्यमस्त्येव, तथा हि निष्ठत्वसम्बन्धावच्छिन्नयद्धर्मनिष्ठावच्छेदकताभिन्ना सती अवच्छेदकतात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका अथ चैतादृशाऽवच्छेदकताद्वयनिरूपिका याऽवच्छिन्नत्वसम्बन्धावच्छिन्नयद्धर्मनिष्ठावच्छेदकता तद्भिन्ना सती विषयितात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका विषयितानिष्ठावच्छेदकता तद्भिन्ना सती ज्ञानत्वनिष्ठावच्छेदकताभिन्ना सती अभावविशिष्टान्यत्वनिष्ठावच्छेदकताभिन्ना सती याथार्थ्यनिष्ठावच्छेदकताभिन्ना सती अथ च "याथार्थ्यनिष्ठावच्छेदकतां विहाय" अवच्छेदकतात्रयनिरूपिका या ज्ञाननिष्ठावच्छेदकता तद्भिन्ना सती वृत्तितात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता-तदनिरूपिका अथ चैतादृशावच्छेदकताद्वयनिरूपिका या वृत्तित्वनिष्ठावच्छेदकता तद्भिन्ना सती भेदत्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका अथ चैतादृशावच्छेदकताद्वयनिरूपिका या भेदनिष्ठावच्छेदकता तद्भिन्ना सती प्रतियोगितात्वनिष्ठावच्छेदकता भिन्ना याऽवच्छेदकता तदनिरूपिका अथ चैतादृशावच्छेदकताद्वयनिरूपिका या प्रतियोगित्वनिष्ठाऽवच्छेदकता तद्भिन्ना सती अवच्छेदकतात्वनिष्ठावच्छेदकता भिन्ना याऽवच्छेदकता तदनिरूपिका अथ चैतादृशावच्छेदकताद्वयनिरूपिकाऽवच्छेदकत्वनिष्ठप्रतियोगिताकाभाववत्त्वस्य द्विविधाभावसाधारणतया स्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तरघटितत्वरूपवैयर्थ्यसम्भवः। याथार्थ्यस्य प्रतियोगितावच्छेदककोटावनिवेशेन नाप्यप्रसिद्ध्याऽसम्भवावकाश इति।

न चाभावविशिष्टान्यत्वमित्यत्र वैशिष्ट्यघटकस्वाभाववत्त्वस्य विशेष्यत्वस्वाश्रयविषयितावत्त्वान्यतरसम्बन्धेन विवक्षणे याथार्थ्यस्य वैयर्थ्यसम्भवेऽपि विशेष्यतामात्रसम्बन्धेन स्वाभाववत्त्वविवक्षणे नैतद्वैयर्थ्याम् आहार्यसंशययोर्वारणीयत्वात्। यथार्थपददानेऽपि कपिसंयोगाभाववान् वृक्षः कपिसंयोगवानिति नियताहा-

र्थज्ञानवारणाऽसम्भवेन कपिसंयोगाभाववन्वृक्षात्मकबाधेऽव्याप्तिवारणाय तादृशविव-क्षाया आवश्यकत्वेन तेनैव संशयनियताहार्यवारणसम्भवेन यथार्थेत्यस्य वैयर्थ्यध्रौ-व्यादिति दिक्।

## दीधितिः

केचित्तु दुष्टानामेव हेतुनामेतानि लक्षणानि, तत्र तृतीयमिव प्रथममपि ज्ञायमान-व्यभिचारादेः प्रतिबन्धकतामभ्युपेत्य तदर्थश्च तादृशाभावप्रतियोगिनो ये व्यभिचारा-दयस्तत्प्रकारकयथार्थज्ञानविषयत्वम्। अग्रे च तत्त्वमित्यस्य तद्वत्त्वमित्यर्थः। आद्यस्यैव वा दुष्टहेतुलक्षणत्वमिति प्राहुः।

## गादाधरी

केचित्त्विति। ननु आद्यस्य दुष्टहेतुलक्षणत्वे दोषेष्वतिव्याप्तिः, तेषामपि अनु-मितिविरोधियथार्थज्ञानविषयत्वात्, न च ह्रदादिपक्षकवह्न्यादिसाध्यकस्थले वह्-न्यभाववद्ध्रदादिरूपदोषाणामपि दुष्टहेतुतया दुष्टत्वमेवेति वाच्यम्। तद्रूपावच्छिन्न-पक्षकतद्रूपावच्छिन्नसाध्यकतद्रूपावच्छिन्नहेतुकस्थले तेन रूपेण दुष्टस्य लक्षणं यदि त-द्रूपावच्छिन्नपक्षसाध्यहेतुकानुमितिविरोधियथार्थज्ञानविषयत्वमात्रं, तदा ह्रदत्वाव-च्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकप्रमाविषयव-ह्न्यभाववद्ध्रदादीनां धूमत्वादिना दुष्टत्वाभावादतिव्याप्तिरित्याशङ्कां परिजिहीर्षुः तादृशाभावप्रतियोगिनां ज्ञानमिति षष्ठीसमासमाश्रित्य तादृशाऽभावप्रतियोगिप्रकारक-यथार्थज्ञानविषयत्वमर्थं व्याख्यास्यति, तच्च ज्ञायमानदोषप्रतिबन्धकतामते एव सङ्गच्छ-ते अतस्तन्मतमवलम्ब्यैवाह "तत्रेति"। तेषु लक्षणेषु मध्ये इत्यर्थः। तृतीयलक्ष-णस्य सर्वमते एव ज्ञायमानदोषप्रतिबन्धकतामताभिप्रायकतया दृष्टान्तत्वेनोपन्यासः। प्र-तियोग्यन्तेन व्यभिचारादिदोषानादाय लक्षणं सङ्गमनीयमिति दर्शयितुं व्यभिचा-रादय इति, न तु तेन रूपेण लक्षणघटकत्वमित्यत्रधेयम्। एवञ्च यथार्थपदानुपा-दाने दुष्टत्वभ्रममादाय प्रकृतहेतुभिन्नेऽतिप्रसङ्ग इति यथार्थपदसार्थक्यम्।

मिश्रादिमतेन यथार्थपदं सार्थकयति–केचित्त्विति । एतानि = मूलोक्तानि । तत्र = तेषु मध्ये । तृतीयमिव = तृतीयलक्षणस्येव । प्रथममपि = प्रथमलक्षणमपि । अभ्युपेत्य = स्वीकृत्य । तदर्थश्च = प्रथमलक्षणार्थश्च । तादृशाभावप्रतियोगिनः = अनुमितिकारणीभूताभावप्रतियोगिनः । तत्प्रकारकम् = तादृशाभावप्रतियोगिव्यभिचारादिप्रकारकम् । अग्रे = द्वितीयादिलक्षणे । तत्त्वमित्यस्य = तत्त्वमिति मूलस्य । आद्यस्यैव = प्रथमलक्षणस्यैव । नन्विति । आद्यस्य = प्रथमलक्षणस्य । दोषेषु = बाधादिषु । अतिव्याप्तिः = अलक्ष्येषु तेषु लक्षणगमनप्रसङ्गः । तेषामपि = बाधादिदोषाणामपि । दुष्टहेतुतया = दुष्टहेतुत्वेन व्यवहर्त्तव्यतया । लक्ष्यत्वमेव = लक्षणस्येति शेषः । तद्रूपावच्छिन्नपक्षकः = ह्रदत्वाद्यवच्छिन्नपक्षकः । तद्रूपावच्छिन्नसाध्यकः = वह्नित्वाद्यवच्छिन्नसाध्यकः । तद्रूपावच्छिन्नहेतुकस्थले = धूमत्वाद्यवच्छिन्नहेतुकस्थले । तेन रूपेण = पक्षतावच्छेदकीभूतह्रदत्वादिरूपेण । विषयत्वमात्रं = मात्रपदेन निरुक्तानुमितिप्रतिबन्धकप्रकारकयथार्थज्ञानविषयत्वस्य व्यवच्छेदः । तदा = तादृशयथार्थज्ञानविषयत्वस्य लक्षणार्थत्वे । अतिव्याप्तिः = वह्न्यभाववद्ध्रदादावतिप्रसंगः । इत्याशङ्काम् = अतिप्रसङ्गाशङ्काम् । परिजिहीर्षुः = परिहर्त्तुमिच्छुः । तादृशाभावप्रतियोगिनाम् = अनुमितिकारणीभूताभावप्रतियोगिनाम् । षष्ठीसमासं = प्रतियोगिनां ज्ञानमिति षष्ठीसमासम् । आश्रित्य = स्वीकृत्य । प्रतियोगिनां ज्ञानमित्यत्र षष्ठ्याः प्रकारत्वमर्थः । व्याख्यास्यति शिरोमणिरिति शेषः । तच्च = तादृशव्याख्यानञ्च । ज्ञायमानदोषस्य = ज्ञानविषयबाधादिदोषस्य । अतः = हेतोः । तन्मतम् = ज्ञायमानदोषस्य प्रतिबन्धकतावादिमतम् । अवलम्ब्य = आश्रित्य । आह = शिरोमणिरिति शेषः । लक्षणेषु मध्ये = प्रथमादिलक्षणेषु मध्ये । अत्र निर्द्धारणार्थे सप्तमी । तृतीयलक्षणस्य = ज्ञायमानं सत् यदनुमितिप्रतिबन्धकं तत्त्वमिति लक्षणस्य । उपन्यासः = कथनम् । प्रतियोग्यन्तेन = अनुमितिकारणीभूताभावप्रतियोगीत्यन्तेन । दोषानादाय = बाधव्यभिचारादिदोषानुपादाय । तेन रूपेण = बाधत्वव्यभिचारत्वादिरूपेण । एवं च = अनुमितिकारणीभूताभावप्रतियोगिप्रकारकज्ञानविषयत्वमात्रस्य लक्षणार्थत्वे च । दुष्टत्वभ्रममादाय = तादृशव्यभिचारादिदोषप्रकारकभ्रममादाय । प्रकृतहेतुभिन्ने = वह्न्यादिहेतुभिन्ने । इति = हेतोः । सार्थक्यं = भविष्यतीति शेषः ।

ग्रयमर्थः। प्रथमलक्षणं यदि दुष्टहेतोः तदा लक्ष्यभिन्ने दोषेष्वतिव्याप्तिः। तथा हि ह्रदो वह्निमान् वह्निव्याप्यधूमवानित्यनुमितिकारणीभूतो यः वह्न्यभाववान् ह्रद इत्याकारकबाधनिश्चयाभावस्तत्प्रतियोगियथार्थज्ञानं वह्न्यभाववान् ह्रद इत्याकारकं ज्ञानँतद्विषयत्वस्य वह्न्यभाववद्ध्रदे सत्त्वात्।

न च ह्रदो वह्निमान् वह्न्यभाववद्ध्रदादित्यादौ वह्न्यभाववद्ध्रदादीनां बाधितत्वेन दुष्टहेतुतया तत्र दोषस्यापि दुष्टहेतुत्वेन लक्ष्यत्वात् लक्षणगमनेऽपि नातिप्रसङ्ग इति वाच्यं, ह्रदत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकस्थले-धूमत्वादिरूपेण ह्रदत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकप्रमाविषयत्वस्य दुष्टलक्षणत्वमिति, ह्रदत्वावच्छिन्नपक्षकबह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकीभूता या वह्न्यभाववान् ह्रद इत्याकारिका प्रमा तद्विषयत्वस्य वह्न्यभाववद्ध्रदे सत्त्वेऽपि तत्र धूमत्वादिनादुष्टत्वाभावेन नतस्य दुष्टहेतुलक्षणलक्ष्यतेति तत्र लक्षणगमने भवत्येवातिप्रसङ्गस्तद्वारणाय तृतीयलक्षणस्येव प्रथमलक्षणमपि ज्ञायमानदोषप्रतिबन्धकत्वमङ्गीकृत्य परिष्करणीयम् तथा चानुमितिकारणीभूताभावप्रतियोगिनां ज्ञानमिति षष्ठीतत्पुरुषसमासमवलम्ब्यानुमितिकारणीभूताभावप्रतियोगिप्रकारकं यत् यथार्थज्ञानं तद्विषयत्वं लक्षणार्थः। एवञ्चानुमितिं प्रति दोषाणां प्रतिबन्धकत्वेन तदभावस्य कारणतया ह्रदो वह्निमान् वह्निव्याप्यधूमवानित्यनुमितिकारणीभूताभावः वह्न्यभाववान् ह्रद इति बाधनिश्चयाभावस्तत्प्रतियोगि वह्न्यभाववान् ह्रद इति बाधनिश्चयात्मकं ज्ञानं स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन तत्प्रकारकं यत् यथार्थज्ञानं तच्च वह्न्यभाववद् ध्रदवान् धूम इति ज्ञानं तद्विषयत्वस्य धूमे सत्त्वात् लक्षणसंगतिः, वह्न्यभाववद्ध्रदे च तादृशविषयतायाश्चासत्त्वाद् दोषेष्वतिव्याप्तिवारणमिति। इत्थञ्च यथार्थपदानुपादानेऽनुमितिकाभूताभावप्रतियोगिप्रकारकज्ञानविषयत्वमात्रस्य लक्षणत्वे सद्धेतावपि दोषप्रकारकभ्रमादायातिप्रसंगस्स्यादतो यथार्थपदम्। तथा च सद्धेतौ दोषप्रकारयथार्थज्ञानानुदयेन न तत्रातिप्रसंगसम्भावनेति भावः।

## गादाधरी

यद्यपि पर्वतत्वावच्छिन्ने वह्नित्वावच्छिन्नसाधने धूमत्वावच्छिन्नो दुष्ट इत्यादेः

सद्धेतौ दुष्टत्वव्यवहारस्य नापत्तिः, तत्र तत्पक्षसाध्यहेतुकानुमितिप्रतिबन्धकरूपदोषप्रकारकज्ञानविषयत्वस्यैव प्रत्येतव्यत्वात् तादृशाऽनुमितिप्रतिबन्धकबाधव्यभिचारादेश्चाऽप्रसिद्धत्वात्। ह्रदादौ वह्न्यादिसाधनमादाय च सर्वत्र दुष्टत्वव्यवहार इष्टः। तथापि धूमसाधने वह्नित्वेनाऽयं दुष्ट इत्यादौ वह्नित्वावच्छिन्नहेतुकधूमाद्यनुमितिप्रतिबन्धकदोषप्रकारकज्ञानविषयत्वस्य प्रत्ययात् वक्ष्यमाणसम्बन्धावच्छिन्नतादृशाऽनुमितिप्रतिबन्धकधूमाभाववद्वृत्तित्वविशिष्टवह्न्यादिरूपदोषप्रकारताशालिभ्रममादाय रासभादितात्पर्येणाऽपि तथा व्यवहारः स्यात्।

## विमलप्रभा

ज्ञायमानदोषप्रतिबन्धकतामतमवलम्ब्य लक्षणकरणेऽनुमितिप्रतिबन्धकदोषस्य सद्धेतुस्थलेऽप्रसिद्ध्या सद्धेतावतिप्रसङ्गाऽभावेन यथार्थपदं व्यर्थमेवेत्याशयत्रानाह-यद्यपीत्यादि। यद्यपीत्यस्य तथापीत्यनेनान्वयः। पर्वतत्वावच्छिन्नेत्यत्र सप्तम्यर्थो विशेष्यत्वम्। साधनेत्यत्र साधनपदार्थोऽनुमितिः। दुष्ट इत्यत्र प्रतिबन्धकप्रकारकज्ञानविषयत्वं दुषतेरर्थः। इत्यादेः = इत्यात्मकस्य। सद्धेतावित्यत्र व्यवहारान्वितविशेष्यत्वं सप्तम्यर्थः। दुष्टत्वव्यवहारस्य = दुष्टत्वप्रकारकव्यवहारस्य। तत्र = व्यवहारे। तत्पक्षसाध्यहेतुकानुमितिः = पर्वतादिपक्षकवह्न्यादिसाध्यकधूमादिहेतुकानुमितिः। प्रत्येतव्यत्वात् = बोधविषयत्वात्। तादृशानुमितिः = पर्वतादिपक्षकवह्न्यादिसाध्यकधूमादिहेतुकानुमितिः। बाधव्यभिचारादेश्च = साध्याभाववत्पक्षरूपबाधस्य साध्याभाववद्वृत्तित्वरूपव्यभिचारस्य च। अप्रसिद्धत्वात् = दोषाऽप्रसिद्ध्या तत्प्रकारकज्ञानविषयत्वस्याऽप्रसिद्धेः। सर्वत्र = धूमादौ। धूमसाधने = धूमसाध्यकवह्निहेतुकानुमितौ। अयं = रासभः। इत्यादौ = इत्यादिव्यवहारे। दोषप्रकारकज्ञानविषयत्वस्य = व्यभिचारादिरूपदोषप्रकारकज्ञानविषयतायाः। प्रत्ययात् = प्रत्ययोत्पादात् ज्ञानजननादिति यावत्। वक्ष्यमाणसम्बन्धावच्छिन्नेत्यत्र वक्ष्यमाणसम्बन्धः = स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वरूपसम्बन्धः। तादृशानुमितिः = धूमादिसाध्यकवह्न्यादिहेतुकाऽनुमितिः। भ्रममादाय = स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन धूमाभाववद्वृत्तिमान् रासभ इति भ्रममादाय। तथा व्यवहारः = धूमसाधने वह्नित्वेनाऽयं रासभो दुष्ट इति व्यवहारः। अयमर्थः। 'पर्वतो वह्निमान् धूमादित्या-

दौ पर्वतत्वावच्छिन्ने वह्नित्वावच्छिन्नसाधने धूमत्वावच्छिन्नो दुष्ट इति वाक्यात् पर्वतत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकाऽनुमितिप्रतिबन्धकदोषप्रकारकज्ञानविशेष्यतावदभिन्नो धूम इति बोधस्य प्रामाण्यं तदा स्यात् यदा पर्वतपक्षकवह्निसाध्यकाऽनुमितिविरोधिवह्न्यभाववत्पर्वतरूपबाधस्य, वह्न्यभाववद्वृत्तिधूमव्यभिचारस्य च प्रसिद्धिस्स्यात्, परन्तु तत्र तादृशदोषाऽप्रसिद्धया तादृशदोषप्रकारकज्ञानविषयत्वस्याप्यप्रसिद्धतयाऽऽपाद्याप्रसिद्धत्वेन न तादृशबोधस्य प्रामाण्यापत्तिरूपापादनम् प्रसिद्धमिति, तथा च सद्धेतौ लक्षणागमनात् यथार्थपदोपादानमनर्थकमिति केचित् ।

तन्न मनोरमम्, यतस्तत्र तादृशव्यवहाराभावेऽपि अयोगोलकं धूमवत्वह्नेरित्यादौ धूमत्वावच्छिन्नसाध्यकवह्नित्वावच्छिन्नहेतुकाऽनुमितिप्रतिबन्धकधूमाभाववद्वृत्तिवह्निरूपव्यभिचारप्रकारकज्ञानविषयतायाः प्रसिद्धतया धूमसाधने वह्नित्वेनाऽयं दुष्ट इति व्यवहारः भवति, तत्र यथार्थपदानुपादाने स्वज्ञानविषयप्रकृतहेतुतावच्छेकवत्वसम्बन्धेन धूमाभाववद्वृत्तिमान् रासभ इत्याकारकभ्रममादाय तद्विषयत्वस्य रासभेऽपि वर्त्तमानतया रासभतात्पर्येण धूमसाधने वह्नित्वेनाऽयं दुष्ट इति व्यवहारस्य प्रामाण्यापत्तिरस्यात् । यथार्थपदोपादाने च धूमवत्धूमव्याप्यवह्निमच्चायोगोलकमित्याकारकानुमितिप्रतिबन्धको यः धूमाभाववद्वृत्तिवह्निरूपो दोषः तत्प्रकारकयथार्थज्ञानं धूमाभाववद्वृत्तिमान् वह्निरित्याकारकज्ञानं तद्विषयतायाः रासभेऽभावेन न तादृशरासभतात्पर्येण तथा व्यवहार इति विभावनीयम् ।

## गादाधरी

न च तत्र विशेष्ये तृतीयान्तार्थवह्नित्ववैशिष्ट्यभानात् रासभे तद्बाधेन नायमतिप्रसङ्ग इति वाच्यम् । तथा सति दोषपदार्थघटकानुमितौ वह्नित्वावच्छिन्नहेतुकत्वाऽलाभात् तल्लाभानुरोधेन हेतुप्रकारकज्ञानजन्यानुमितिप्रतिबन्धकरूपदोषपदार्थघटकहेतौ वह्नित्ववैशिष्ट्यरूपतृतीयान्तार्थस्य तत्प्रकारतायां वा स्वावच्छिन्नत्वार्थकतृतीयान्तार्थलभ्यवह्नित्वावच्छिन्नत्वस्यान्वय इत्येवोपगन्तव्यत्वात् । न च विशेष्ये वह्नित्वादिधर्मवैशिष्ट्यबोधकपदसमभिव्याहारस्थले दोषार्थकधातोरेव वह्नित्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकोऽर्थः, अथ वा अनुमित्यर्थकसाधनशब्दस्यैव वह्नित्वाद्यवच्छि-

न्नहेतुकानुमितिरूपविशेषे लाक्षणिकत्वम्, धात्वर्थेऽनुमित्यन्तर्भावे साधनपदार्थानन्वय - प्रसङ्गात्, तथा च विशेष्य एव तृतीयार्थवैशिष्ट्यस्यान्वयोपगमान्नोक्तातिप्रसङ्ग इति वाच्यम्, एवमपि वह्निना धूमसाधने रासभो दुष्ट इत्यादिव्यवहारस्य भ्रममादाया-तिप्रसङ्गादिति यथार्थपदसार्थक्यम् ।

## विमलप्रभा

शङ्कते—न चेत्यादि । न चेत्यस्य वाच्यमित्यनेनान्वयः । तत्र = धूमसाधने वह्नित्वेनाऽयं दुष्ट इत्यत्र । विशेष्ये = इदं पदार्थे । तद्बाधेन = तृतीयान्तार्थवैशिष्ट्या-नुयोगित्वविरहेण । नातिप्रसङ्गः = न रासभादितात्पर्येण धूमसाधने वह्नित्वेनाऽयं दुष्ट इति व्यवहारप्रसङ्गः । तथा सति = वह्नित्ववैशिष्ट्यस्य विशेष्येऽन्वयोपगमे सति । दो-षपदार्थघटकानुमितौ = प्रकृतानुमितिप्रतिबन्धकत्वरूपदोषघटकीभूता यानुमितिस्तादृ-शानुमितौ । अलाभात् = लाभाभावात् । तल्लाभानुरोधेन = हेतुतावच्छेदकीभूतव-ह्नित्वाद्यवच्छिन्नहेतुकत्वलाभानुरोधेन । वह्नित्ववैशिष्ट्यरूपतृतीयान्तार्थस्य = वह्नि-त्वसमवायरूपस्य तृतीयान्तार्थस्य । तत्प्रकारतायां = हेतुप्रकारकज्ञाननिष्ठजनकता-निरूपितजन्यताशाल्यनुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञान - विषयत्वरूपदोषपदार्थघटकहेतुनिष्ठप्रकारतायाम् । उपगन्तव्यत्वात् = स्वीकर्तव्यत्वात् । शङ्कते पुनः—न चेति वाच्यमिति परेणान्वयः । विशेष्ये = रासभादौ । यदसमभिव्या-हारस्थले = रासभविशेष्यकवह्नित्ववैशिष्ट्यबोधजनकपदसमवधानस्थले । दोषार्थकधा-तोः = दुष्धातोः । साधनशब्दस्यैव = धूमसाधन इत्यत्र साधनशब्दस्यैव । लाक्षणि - कत्वं = स्वीकार्यमिति शेषः । अनुमित्यन्तर्भावे = अनुमितिघटितत्वे । साधनपदार्था-ऽनन्वयप्रसङ्गः = साधनपदार्थस्यान्वयाभावप्रसङ्गः, घटो घट इतिवत् साधनपदार्थे साध-नपदार्थस्यान्वयाभाव इति यावत् । तथा च = अनुमित्यर्थकसाधनशब्दस्यैव तादृश - विशेषरूपलाक्षणिकत्वे च । विशेष्ये एव = इदं पदार्थीभूतसाधनरूपविशेष्ये एव । उप-गमात् = स्वीकारात् । नोक्तातिप्रसङ्गः = न रासभतात्पर्येण धूमसाधने वह्नित्वेनायं दु-ष्ट इति व्यवहारापत्तिरूपातिप्रसङ्गः । एवमपि = उक्तरीत्यातिप्रसङ्गवारणेऽपि । भ्र-ममादाय = वह्निहेतुकधूमसाध्यकानुमितिप्रतिबन्धकप्रकारकज्ञानविशेष्यो रासभ इति भ्रममादाय । इति = हेतोरिति शेषः । सार्थक्यं भविष्यतीतिशेषः । अयमर्थः ।

धूमसाधने वह्नित्वेनाऽयं दुष्टःइत्यत्र स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धावच्छिन्ना या प्रकृतानुमितिप्रतिबन्धकनिष्ठा प्रकारता तच्छालिज्ञानविशेष्यत्वस्यैव वह्नित्ववैशिष्ट्यातयापि''अयंदुष्ट''इति दुष्टत्वव्यवहारनियामकतया रासभे भ्रमात्मकज्ञानविशेष्यत्वसत्त्वेऽपि वह्नित्ववैशिष्ट्यविरहेण न वह्निना धूमसाधनेऽयं दुष्ट इति रासभतात्पर्येण व्यवहारः, यथा च यथार्थपदोपादानमनर्थकमेवेति चेन्नैतत् विचारक्षमम्। तद्धेतुकत्वाप्रवेशे रासभादिलिङ्गकानुमितेरपि तादृशानुमितिसामान्यान्तर्गततया तादृशानुमितिप्रतिबन्धकतायाः धूमाभाववद्वृत्तिवह्निरूपव्यभिचारादावभावेनाऽसम्भवः स्यादतः दुष् धात्वर्थघटकीभूतानुमितौ प्रकृतहेतुप्रकारकज्ञानजन्यत्वरूपप्रकृतहेतुकत्वस्य प्रवेश आवश्यकः। एवं द्रव्यत्वावच्छिन्नहेतुकानुमितेरपि धूमत्वविशिष्टहेतुकानुमितिकतया धूमत्वविशिष्टहेतुकानुमितिप्रतिबन्धकप्रकारकज्ञानविशेष्यत्वस्य तत्र वर्त्तमानत्वेन धूमतात्पर्येणापि पर्वते वह्निसाधने धूमत्वेनाऽयं दुष्ट इति व्यवहारः स्यादतः दोषघटकहेतुनिष्ठप्रकारतायां हेतुतावच्छेदकावच्छिन्नत्वप्रवेश आवश्यकः। तथा च प्रकृते वह्नित्वेनेत्यनेनैव वह्नित्वावच्छिन्नहेतुकत्वनिवेशः कार्यः, इत्थञ्च विशेष्ये वह्नित्ववैशिष्ट्यस्यान्वयाभावेन स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन धूमाभाववद्वृत्तिमान् रासभ इति ज्ञानविशेष्यत्वस्य रासभे वर्त्तमानतया रासभतात्पर्येण धूमसाधने वह्नित्वेनाऽयं दुष्ट इति व्यवहारस्य प्रामाण्यापत्तिवारणाय यथार्थपदं सार्थकमिति भावः। न च रासभादिविशेष्ये वह्नित्ववैशिष्ट्यबोधजनकपदसमभिव्याहारस्थले दुष् धातोरेव वह्नित्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकोऽर्थः न तु वह्नित्वेनेति तृतीयान्तस्य न वा साधनपदार्थस्येति, तथा च वह्नित्वेनेति तृतीयान्तार्थवह्नित्ववैशिष्ट्यस्य विशेष्ये एवान्वयात् रासभे च तादृशवैशिष्ट्यबाधेन रासभतात्पर्येण धूमसाधने वह्नित्वेनायं दुष्ट इति व्यवहाराभावात् व्यर्थमेव यथार्थपदोपादानमिति चेन्नैतत् भद्रम्। यथार्थपदानुपादाने धूमाभाववद्वृत्तित्वरूपव्यभिचारप्रकारकरासभविशेष्यकधूमसाध्यकवह्निहेतुकानुमितिप्रतिबन्धकप्रकारकज्ञानविशेष्यो रासभ इति भ्रमात्मकज्ञानविशेष्यतायाः रासभेऽपि वर्त्तमानतया रासभतात्पर्येण तथा व्यवहारःस्यादतः तद्वारणाय यथार्थपदोपादानम्। तथा च स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धावच्छिन्नप्रकृतानुमितिप्रतिबन्धकनिष्ठप्रकारताशालियथार्थज्ञानविशेष्यत्वस्य रासभे विरहान्न रासभतात्पर्येण तथा व्यवहार इति ध्येयम्।

## गादाधरी

अथ वा इतरभेदानुमापकेदं लक्षणं, तथा च पर्वतपक्षकधूमसाध्यकवह्निहेतुकदुष्टलक्षणस्य तथाविधानुमितिविरोधिव्यभिचारादिभ्रममादाय सद्धेताबितर-भेदव्यभिचारित्वात् यथार्थपदसार्थक्यम्। ज्ञानञ्चात्र स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धावगाहि ग्राह्यम्, तेन प्रकृतहेतुभिन्नस्यापि सम्बन्धान्तरेण दोषप्रमाविषयत्वेऽपि नातिप्रसंगः। अग्रेऽपीदृशसम्बन्धेनैव तद्वत्त्वं बोध्यम्।

## विमलप्रभा

वह्निना धूमसाधने रासभो दुष्ट इत्यादौ वह्निपदोत्तरतृतीयाया अभेदार्थकत्वे वह्न्यभेदस्य विशेष्ये रासभे बाधान्नातिप्रसंग इत्याशयेनाह "अथ वेति"। इतरभेदानुमापकं=दुष्टेतरभेदानुमितिजनकं, व्यावर्तकमिति यावत्। इदं=प्रथमलक्षणम्। तथा च=प्रथमलक्षणस्येतरभेदानुमापकत्वे च। तथाविधानुमितिः=पर्वतपक्षकधूमसाध्यकवह्निहेतुकानुमितिः। व्यभिचारादिभ्रममादाय=स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन धूमाभाववद्वृत्तिर्वह्निमान् काष्ठविशेष इति भ्रममादाय। सद्धेतौ=तत्काष्ठादौ। इतरभेदव्यभिचारित्वात्=दुष्टेतरभेदाभाववति वर्त्तमानत्वात्। ज्ञानञ्च=लक्षणघटकीभूतज्ञानञ्च। अत्र=लक्षणे। स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धावगाहि ग्राह्यं=स्वं-दोषः,तस्य ज्ञानं स्वज्ञानं तद्विषयीभूतो यः प्रकृतहेतुस्तदवच्छेदकवत्त्वरूपसम्बन्धावगाहि ग्राह्यम्। तेन=स्वज्ञान-विषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धावच्छिन्नत्वस्य प्रतिबन्धकनिष्ठप्रकारतायां निवेशेन। प्रकृतहेतुः=वह्न्यादिः। तद्भिन्नस्य=रासभादेः। सम्बन्धान्तरेण=कालिकादिना। दोषप्रमाविषयत्वेऽपि। दोषप्रकारकयथार्थज्ञानविषयत्वेऽपि। अग्रेऽपि=द्वितीयादिलक्षणेऽपि। ईदृशसम्बन्धेनैव=स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेनैव। तद्वत्त्वं=दोषवत्त्वम्। अयमर्थः। यथार्थपदोपादानेऽपि वह्निसाध्यकद्रव्यहेतुकस्थले वह्न्यभाववद्वृत्तिद्रव्यरूपव्यभिचारस्य स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन धूमादिहेतावपि वर्त्तमानतया पर्वते द्रव्येण वह्निसाधने धूमो दुष्ट इति व्यवहारस्स्यात् वह्न्यभाववद्वृत्तिद्रव्यवान् धूम इति ज्ञानस्य तत्र यथार्थत्वादतः

तद्रूपावच्छिन्नलिङ्गकानुमितिप्रतिबन्धकप्रकारकयथार्थज्ञानविषयत्वं तद्रूपावच्छिन्ने दुष्टताव्यवहारनियामकमित्यङ्गीकरणीयम्, तथा च द्रव्यत्वावच्छिन्नलिङ्गकानुमितिप्रतिबन्धकप्रकारकयथार्थज्ञानविशेष्यत्वस्योक्तयुक्त्या धूमे सत्त्वेऽपि धूमत्वावच्छिन्नलिङ्गकानुमितिप्रतिबन्धकप्रकारकज्ञानविषयत्वरूपस्य धूमत्वावच्छिन्ननिष्ठदुष्टताव्यवहारनियामकस्य तत्राभावान्न द्रव्येण वह्निसाधने धूमो दुष्ट इति व्यवहारप्रसंगः। एवञ्च वह्निलिङ्गकानुमितिप्रतिबन्धकप्रकारकज्ञानविषयत्वस्य रासभे सत्त्वेऽपि रासभत्वावच्छिन्ननिष्ठदुष्टताव्यवहारनियामकस्य रासभत्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकप्रकारकज्ञानविषयत्वस्याभावान्न वह्निना धूमसाधने रासभो दुष्ट इति व्यवहारप्रसंगः, तथा च यथार्थपदमनुपादेयमेवेत्याशयेनाह "अथ वेति"। केचित्तु वह्निना धूमसाधने रासभो दुष्ट इत्यादौ तृतीयाविभक्तेरभेदार्थकत्वे वह्न्यभेदस्य रासभे विरहादेवापत्तिवारणसम्भवे यथार्थपदं व्यर्थमेवेत्याशयेनाह "अथ वेति"। इत्थञ्च प्रथमलक्षणस्येतरभेदानुमापकत्वे दुष्टः दुष्टेतरभिन्नः प्रकृतानुमितिप्रतिबन्धकप्रकारकयथार्थज्ञानविषत्वरूपलक्षणवत्त्वादित्यनुमानघटकं हेतौ यथार्थपदानुपादाने दुष्टेतरभेदशून्ये धूमव्याप्यतत्काष्ठादौ प्रकृतानुमितिप्रतिबन्धकधूमाभाववद्वृत्तिवह्निरूपव्यभिचारप्रकारकभ्रमविशेष्यत्वसत्त्वात् पर्वते वह्निना धूमसाधने वह्निर्दुष्ट इति व्यवहारविषयत्वावच्छिन्ने पक्षे तादृशव्यवहारत्वावच्छिन्नेतरभेदस्य पर्वतपक्षकधूमसाध्यकवह्निहेतुकानुमितिप्रतिबन्धकप्रकारकज्ञानविशेष्यत्वहेतुना साधने व्यभिचारप्रसङ्गस्स्यात्, तदुपादाने च निरुक्तानुमितिप्रतिबन्धकयथार्थज्ञानविशेष्यत्वस्य धूमाभाववद्वृतिवह्निप्रकारकप्रमाविशेष्यत्वस्वरूपस्य हेतोः सद्धेतावभावेन तत्र दुष्टेतरभेदरूपसाध्याभावसत्त्वेऽपि न व्यभिचार इति यथार्थपदसार्थक्यम्।

एतल्लक्षणघटकीभूतज्ञानञ्च दोषज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धावगाहिग्राह्यमन्यथा ह्रदो वह्निमान् धूमादित्यादौ ह्रदे धूमेन वह्निसाधने रासभो दुष्ट इति व्यवहारापत्तिः स्यात् कालिकेन वह्न्यभाववद्ध्रदवान् रासभ इति प्रमाविशेष्यत्वस्य रासभेऽपि सत्त्वात्, प्रतिबन्धकनिष्ठप्रकारतायामुक्तसम्बन्धावच्छिन्नत्वनिवेशे तु स्वं वह्न्यभाववद्ध्रदरूपो दोषः तस्य ज्ञानं वह्न्यभाववान् ह्रदो धूमश्चेत्याकारकं तद्विषयीभूतं यत् धूमत्वरूपं हेतुतावच्छेदकं तद्वत्त्वं धूमे न तु रासभादाविति न धूमेन वह्निसाधने रासभो दुष्ट इति व्यवहारप्रसङ्ग इति।

अनयैव दिशाऽतिप्रसङ्गवारणाय द्वितीयादिलक्षणेऽपि स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेनैव दोषवत्त्वं विवक्षीयमिति भावः ।

## गादाधरी

अथ ज्ञायमानपक्षनिष्ठसाध्याभावत्वादिना बाधादिदोषाणां प्रतिबन्धकता न सम्भवति साध्याभावत्वादिना पदार्थान्तरस्यैव यत्र ज्ञानं तत्र दोषाणामज्ञायमानतयाऽविरोधित्वेनाऽनुमित्यापत्तेः, किन्तु ज्ञानीयपक्षतावच्छेदकाद्यवच्छिन्नविषयतानिरूपितसाध्याभावत्वाद्यवच्छिन्नविषयतावत्त्वेन, तादृशविषयतया ज्ञानविशिष्टत्वेन वा । तच्च रूपं तादृशभ्रमविषयपदार्थान्तरसाधारणमेवेति तेषामेव तादृशभ्रमदशायां विरोधित्वान्नोक्तापत्तिः । एवञ्च सद्धेतूनामनुमितिप्रतिबन्धकतावच्छेदकनिरुक्तविषयताश्रयवह्न्यभावादिप्रमाविशेष्यत्वादतिव्याप्तिरिति चेन्न ।

## विमलप्रभा

शङ्कते "अथे" त्यादिना । ज्ञायमानपक्षनिष्ठसाध्याभावत्वादिना = ह्रदे वह्न्यभाव इति ज्ञानविषयीभूतह्रदवृत्तिवह्न्यभावत्वादिना । आदिपदेन = वह्न्यभाववान् ह्रद इति ज्ञानविषयीभूतवह्न्यभाववद्ध्रदत्वादेः संग्रहः । बाधादिदोषाणां = वह्न्यभाववद्ध्रदादीनां ह्रदवृत्तिवह्न्यभावादीनां वा, आदिपदेन = व्यभिचारादिसंग्रहः । साध्याभावत्वादिना = वह्न्यभावत्वादिना । पदार्थान्तरस्य = घटपटादेः । यत्र = यादृशस्थलविशेषे । ज्ञानं = निश्चयः । तत्र = तादृशस्थले । दोषाणां = वह्न्यभाववद्ध्रदादीनां । अज्ञायमानतया = ज्ञानाऽविषयतया । अविरोधित्वेन = अप्रतिबन्धकत्वेन । अनुमित्यापत्तेः = दोषदशायामपि पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रसंगः । केन रूपेण प्रतिबन्धकत्वमित्याशङ्कायामाह "किन्त्विति"- पक्षतावच्छेदकावच्छिन्नविषयतानिरूपितसाध्याभावत्वावच्छिन्नविषयतावत्त्वेन = ह्रदत्वाद्यवच्छिन्नविषयतानिरूपितवह्नित्वाद्यवच्छिन्नविषयतानिरूपिताऽभावत्वावच्छिन्नविषयतावत्त्वेन । तादृशविषयतया = साध्यतावच्छेदकावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयतया । ज्ञानविशिष्टत्वेन = ह्रदे वह्न्यभावः वह्न्यभाववान् ह्रद इति ज्ञानविशिष्टत्वेन, निश्चयवत्त्वेने-

ति यावत्। तच्च रूपं=तादृशविषयतावत्त्वरूपं, तादृशविषयतया ज्ञानविशिष्टत्वरूपं वा। अन्यविषयपदार्थान्तरसाधारणं=वह्नित्वेन घटावगाहि अभावत्वेन दण्डावगाहि ह्रदत्वेन गुञ्जावगाहिवह्न्यभाववान् ह्रदः ह्रदे वह्न्यभाव इति भ्रमविषयघटदण्डादिरूपपदार्थान्तरसाधारणम्। तेषां=घटादीनाम्। तादृशभ्रमदशायां=वह्नित्वेन घटावगाहिपूर्वोक्तवह्न्यभाववान् ह्रद इत्याकारकभ्रमसमये। विरोधित्वात्=प्रतिबन्धकत्वात्। नोक्तापत्तिः=न पूर्वोक्तपक्षविशेष्यकसाध्यानुमित्यापत्तिः। एवञ्च=तादृशविषयतावत्त्वादिना प्रतिबन्धकत्वे च। सद्धेतूनां=पर्वतो वह्निमानित्यादिस्थलीयधूमादिहेतूनाम्। अनुमितिप्रतिबन्धकतावच्छेदकनिरुक्तविषयता=पर्वतपक्षकवह्निसाध्यकपर्वतो वह्निमानित्यनुमितिप्रतिबन्धकतानिरूपितावच्छेदकतावती वह्न्यभाववान् पर्वत इति भ्रमज्ञानीयवह्निविषयतानिरूपिताभावविषयतानिरूपितपर्वतविषयता। वह्न्यभावादिप्रमाविशेष्यत्वात्=स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन वह्न्यभाववान् धूम इत्याकारकप्रमायाः विशेष्यत्वात्! अयमर्थः। ज्ञायमानदोषस्य प्रतिबन्धकतास्वीकर्तृमतेऽपि वह्नित्वावच्छिन्नविषयतानिरूपिताऽभावत्वावच्छिन्नविषयतानिरूपितह्रदत्वावच्छिन्नविषयतात्वेनैव ह्रदो वह्निमानित्यनुमितिम्प्रति ह्रदो वह्न्यभाववानित्यादिनिश्चयस्य प्रतिबन्धकताऽङ्गीकार्या, न तु वह्न्यभाववद्ध्रदत्वादिरूपाखण्डधर्मेण, ह्रदवृत्तिवह्न्यभावत्वरूपाखण्डधर्मेण वा प्रतिबन्धकत्वं तथा सति वह्नित्वेन घटावगाह्यभावत्वेन दण्डावगाहिह्रदत्वेन गुञ्जावगाहिवह्न्यभाववान् ह्रद इत्यादिनिश्चये तादृशाखण्डधर्मविरहेण तत्र प्रतिबन्धकत्वाऽसत्त्वप्रयुक्ततादृशभ्रमदशायां ह्रदो वह्निमानित्यनुमित्यापत्तिः, न चेष्टापत्तिः तादृशभ्रमसत्त्वेऽनुमित्यनुत्पादस्यैवानुभवसिद्धत्वात्। इत्थञ्च पर्वतो वह्निमान् धूमादित्यादिसद्धेतौ पर्वतत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकीभूतो यः वह्न्यभाववान् पर्वत इति भ्रमस्तदीया या प्रतिबन्धकतावच्छेदकीभूता वह्नित्वावच्छिन्नविषयतानिरूपिताऽभावत्वावच्छिन्नविषयतानिरूपितपर्वतत्वावच्छिन्नविषयता तदाश्रयीभूतस्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन वह्न्यभाववान् धूम इति प्रमाविशेष्यत्वस्य धूमे सत्त्वादतिप्रसंग इति शङ्काकर्तृणामाशयः।

## गादाधरी

यद्रूपावच्छिन्नविषयतासामान्यमनुमितिप्रतिबन्धकतावच्छेदकं तद्रूपविशिष्टप्रकारकप्रमाविशेष्यत्वमेव विवक्षणीयम्। ह्रदो वह्निमान् धूमादित्यादौ च तादृशं रूपं ह्रदविशिष्टवह्न्यभावत्वादिकं, ह्रदे वह्निर्नास्तीत्यादिज्ञाननिरूपिततद्रूपावच्छिन्नविषयतासामान्यस्यैव ह्रदत्वावच्छिन्नविषयतानिरूपितवह्न्यभावत्वावच्छिन्नविषयतात्वेन दोषनिष्ठानुमितिप्रतिबन्धकतायामवच्छेदकत्वात्। सद्धेतुस्थले च न केवलवह्न्यभावत्वादिकं तथा, तदवच्छिन्नविषयतासामान्यान्तर्गतधर्म्यविषयकज्ञाननिरूपिततादृशविषयतानामनुमितिप्रतिबन्धकतानवच्छेदकत्वात्। पर्वतविशिष्टवह्न्यभावत्वादिविशिष्टश्च न किञ्चित् वस्तुप्रसिद्धमिति नातिप्रसंगः। तृतीयमपि लक्षणमनयैव दिशा परिष्कार्यमिति।

## विमलप्रभा

सामान्यपदं प्रवेश्यातिव्याप्तिमपाकरोति—यद्रूपेति। यद्रूपावच्छिन्नविषयता =दोषतावच्छेदकावच्छिन्नविषयता। प्रतिबन्धकतावच्छेदकमित्यत्राऽनुमितेरिति पूरणीयम्। तद्रूपविशिष्टप्रकारकप्रमाविशेष्यत्वं =दोषतावच्छेदकधर्मविशिष्टप्रकारिका या प्रमा तद्विशेष्यत्वम्। तादृशं रूपं =यद्रूपपदेन यस्योपादानं तद्रूपपदेन तस्यैव ग्रहणमिति। तद्रूपावच्छिन्नविषयता =ह्रदनिष्ठवह्न्यभावत्वादिविषयता। दोषनिष्ठानुमितिप्रतिबन्धकतायां =वह्न्यभाववद्ध्रदादिरूपदोषनिष्ठा या ह्रदो वह्निमानित्याद्यनुमितिप्रतिबन्धकता तादृशप्रतिबन्धकतायाम्। सद्धेतुस्थले =पर्वतो वह्निमान् धूमादित्यादौ। न तथा =न यद्रूपपदग्राह्यम्। तदवच्छिन्नविषयता =वह्न्यभावत्वावच्छिन्नविषयता। धर्म्यविषयकज्ञाननिरूपिततादृशविषयतानां =पर्वतादिरूपधर्म्यविषयकज्ञाननिरूपितवह्न्यभावत्वावच्छिन्नविषयतानाम्। अनुमितिप्रतिबन्धकतानवच्छेदकत्वात् =केवलवह्न्यभावत्वावच्छिन्नविषयतासामान्यान्तर्गतायाः पर्वताविषयककेवलवह्न्यभाव इति ज्ञाननिरूपितवह्न्यभावत्वावच्छिन्नविषयतायाः पर्वतपक्षकवह्निसाध्यकधूमहेतुकानुमितिप्रतिबन्धकतानवच्छेदकत्वात्। इति =हेतुना। नातिप्रसङ्गः =न सद्धेतावतिव्याप्तिः। तृतीयमपि लक्षणं =ज्ञायमानं सत् यदनुमितिप्रति-

बन्धकं तत्त्वमिति लक्षणम्। अनयैव रीत्या=प्रथमलक्षणोक्तदिशा। अयमर्थः। यद्रूपावच्छिन्नविषयतासामान्यमनुमितिप्रतिबन्धकतावच्छेदकं तद्रूपावच्छिन्नप्रकारकप्रमाविशेष्यत्वरूपलक्षणार्थकरणे ह्रदो वह्निमान् धूमादित्यादौ यद्रूपपदेन ह्रदवृत्तिवह्न्यभाववत्त्वं वह्न्यभाववद्ध्रदत्वं वोपादाय तद्रूपावच्छिन्नविषयतासामान्यस्यैव वह्नित्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितह्रदत्वावच्छिन्नविषयतात्वेन वह्न्यभाववद्ध्रदादिरूपदोषनिष्ठा या ह्रदो वह्निमानित्याद्यनुमितिप्रतिबन्धकता तस्यामवच्छेदकतया तद्रूपविशिष्टप्रकारकप्रमाविशेष्यत्वस्य धूमे सत्त्वात् लक्षणसङ्गतिः। पर्वतो वह्निमान् धूमादित्यादिसद्धेतौ च वह्न्यभावविशिष्टपर्वतत्वस्य पर्वतवृत्तिवह्न्यभावत्वादेर्वा सर्वथैवाऽप्रसिद्धतया न यद्रूपपदेन तयोर्ग्रहणम्। केवलवह्न्यभावत्वादेर्यद्रूपपदेन ग्रहणे तद्रूपावच्छिन्नविषयतासामान्यान्तर्गतपर्वताविषयककेवलवह्न्यभाव इत्याकारकज्ञानीयवह्न्यभावत्वावच्छिन्नविषयतायामनुमितिप्रतिबन्धकतावच्छेदकत्वविरहात्। इत्थञ्च वह्न्यभावत्वावच्छिन्नप्रकारकधूमविशेष्यकवह्न्यभाववान् धूम इति प्रमाविशेष्यत्वस्य धूमे सत्त्वेऽपि वह्न्यभावत्वावच्छिन्नविषयतासामान्ये पर्वतपक्षकवह्निसाध्यकधूमहेतुकानुमितिप्रतिबन्धकतावच्छेदकत्वाभावेन यद्रूपपदेन तस्याः ग्रहणाभावान्नातिप्रसंगः।

अनयैव दिशा ज्ञायमानदोषप्रतिबन्धकतामतमाश्रित्य प्रथमलक्षणं यथापरिष्कृतं तथैव ज्ञानविषयीभूतयद्रूपावच्छिन्नविषयत्वं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकं तद्रूपावच्छिन्नत्वमित्यादिरीत्या तृतीयलक्षणस्यापि परिष्कारः कार्य इति भावः।

## बलदेवी

यद्रूपावच्छिन्नविषयतासामान्यमनुमितिप्रतिबन्धकतावच्छेदकं तद्रूपविशिष्टेत्यादि भट्टाचार्यः।

तथा च यद्रूपावच्छिन्नविषयतासामान्यमनुमितिप्रतिबन्धकतावच्छेदकं तद्रूपावच्छिन्नप्रकारकप्रमाविशेष्यत्वमिति फलितम्। ज्ञायमानदोषस्य प्रतिबन्धकतया तद्विषयत्वस्य प्रतिबन्धकतावच्छेदकत्वात् लक्षणसंगतिरिति। नन्वत्र स्वरूपसम्बन्धरूपावच्छेदकत्वमेव लक्षणे निविष्टम्, अन्यथा सामान्यपदसार्थक्यानुपपत्तेः, तथा च प-

र्वतो वह्निमान् धूमादित्यादिदुष्टे तावतिव्याप्तिः पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषय-तासामान्यस्यैव पर्वतो वह्निमानित्याद्यनुमितिप्रतिबन्धकतावच्छेदकत्वात् पाषाणम-त्ववत्पर्वतत्वावच्छिन्नप्रकारकप्रमाविशेष्यत्वस्य हेतुभूतधूमे सत्त्वात् पाषाणमयो न व-ह्निमानिति ज्ञानविशिष्टस्य पर्वतश्च पाषाणमय इति ज्ञानस्य प्रतिबन्धकत्वात्, समा-नाकारकज्ञानीयविषयताया ऐक्यात्, अन्यथाऽग्रेऽपि पाषाणमयत्ववत्पर्वतेऽतिव्याप्ति-दानासंगतेरिति चेन्न ज्ञानभेदेन विषयताभेदमङ्गीकृत्यैतल्लक्षणकरणात्। अ-ग्रे च समानाकारज्ञानीयविषयताया ऐक्यं स्वीकृत्य दोषस्य वक्ष्यमाणत्वात्। एवं चा-ऽनाहार्यत्वादिकमप्यत्र निवेशनीयम्, न चैवमप्यसम्भवः, अव्याप्यवृत्तित्वज्ञान ( ह्रदे वह्न्यभावोऽव्याप्यवृत्तित्वज्ञान ) कालीनह्रदो वह्न्यभाववानित्यनाहार्याप्रामाण्य-ज्ञानास्कन्दितनिश्चये प्रतिबन्धकत्वाभावेन तादृशविषयतासामान्यस्यानवच्छेदकत्वा-दिति वाच्यम्, अव्याप्यवृत्तित्वज्ञानानास्कन्दितत्वस्यापि ज्ञाने विशेषणीयत्वोप गमान्ना-व्याप्तिः। न च वृक्षः कपिसंयोगीत्यत्र कपिसंयोगाभाववत् वृक्षेऽतिव्याप्तिः, अव्याप्य-वृत्तित्वज्ञानाभावकाले तादृशज्ञानस्यानुमितिप्रतिबन्धकत्वादिति वाच्यम्, अव्याप्यवृत्ति-त्वभ्रमानास्कन्दितत्वस्यापि ज्ञाने विशेषणीयत्वात्। वृक्षे कपिसंयोगाभावोऽव्याप्य-वृत्तिरितिज्ञानस्य प्रमात्वेनाऽव्याप्यवृत्तित्वभ्रमानास्कन्दिततया तदीयविषयतायाः सामा-न्यान्तर्गतायास्तादृशप्रतिबन्धकतानवच्छेदकत्वेनाऽतिप्रसंगाभावादिति। न च ह्र-दो वह्निमान् जलादित्यादौ वह्निव्यापकीभूताभावप्रतियोगि जलं जलवान् ह्रद इत्यसा-धारणज्ञानविषयेऽसाधारणेऽव्याप्तिः तद्विषयतासामान्यान्तर्गतपक्षधर्मताज्ञानाऽसमान-कालीनज्ञानविषयतायाः प्रतिबन्धकतानवच्छेदकत्वादिति वाच्यम्, अस्य दुष्टलक्षणतया दोषलक्षणत्वाभावेनाऽसाधारण्यनियतबाधस्वरूपासिद्ध्यादिकमादायैव दुष्टे लक्षणसम-न्वयात्। न चैवं सति असाधारण्येनायं दुष्ट इति व्यवहारानुपपत्तिरिति वाच्यं, तादृश-ज्ञानीययद्धर्मावच्छिन्नविषयतात्वव्यापकः प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपि-तप्रतिबन्धकतानवच्छेदकत्वसाधारण्यविषयताभिन्नत्वोभयाभावस्तद्रूपावच्छिन्नत्व-मिति विवक्षणे दोषाभावादिति।

ज्ञानभेदेन विषयताभेदास्वीकर्तृमते ऽनाहार्यत्वविशिष्टयद्रूपावच्छिन्नविषयता-शालिनिश्चयत्वव्यापकः प्रकृतानुमित्यप्रतिबन्धकत्वाऽसाधारण्यविषयताशून्यत्वोभ-

याभावस्तद्रूपावच्छिन्नत्वरूपार्थकरणे पर्वतो वह्निमान् धूमादित्यादौ पाषाणमयत्ववत्-पर्वते नातिप्रसङ्गः,पाषाणमयत्ववान् वह्न्यभाववानिति ज्ञानाकालीनपाषाणमयत्ववत्पर्वतविषयकनिश्चये तादृशोभयाभावविरहादिति ।

महामहोपाध्यायबलदेवभट्टाचार्यस्य प्रथमलक्षणबलदेवी टीका सम्पूर्णा ।

## गादाधरी

यद्यपि अस्य दुष्टहेतुलक्षणत्वे ज्ञायमानदोषप्रतिबन्धकतामताश्रयणेऽपि तद्रूपावच्छिन्नपक्षसाध्यहेतुकानुमितिप्रतिबन्धकप्रमाविषयतद्धेतुतावच्छेदकवत्त्वं तद्रूपावच्छिन्नपक्षसाध्यहेतुकस्थले तेनैव रूपेण दुष्टत्वमित्यर्थकतामुपगम्य यथार्थपदसार्थक्यमुपपादयितुं शक्यते । तथापि दुष्टस्य दोषघटितत्वानुरोधेन तन्मतमवलम्ब्य षष्ठीसमास आदृत इति ।

## विमलप्रभा

यद्यपीत्यादिना शङ्कते । यद्यपीत्यस्य तथापीत्यनेनान्वयः । अस्य=प्रथमलक्षणस्य । अनाश्रयणेऽपि=षष्ठीतत्पुरुषसमासाऽस्वीकारेऽपि । तेनैव रूपेण=हेतुतावच्छेदकादिरूपेण । उपगम्य=स्वीकृत्य । उपपादयितुं=समर्थयितुं । सिद्धान्तयति "तथापीति" । तथापि=अनुमितीत्यादिप्रथमलक्षणस्य दुष्टलक्षणत्वेऽपि । दुष्टस्य=दोषवतः हेतोः । दोषघटितत्वानुरोधेन=दोषविषयकप्रतीतिविषयत्वानुरोधेन । तन्मतमवलम्ब्य=ज्ञायमानदोषप्रतिबन्धकतावादिमतं स्वीकृत्य । षष्ठीसमासः=अनुमितिकारणीभूताभावप्रतियोगिनां ज्ञानमिति विग्रहलभ्यषष्ठीतत्पुरुषसमासः । आदृतः=स्वीकृतः । अयमर्थः । यदि प्रथमलक्षणं दुष्टहेतोरेव स्यात्तदा ज्ञायमानदोषप्रतिबन्धकतावादिमतानङ्गीकारेऽपि यद्रूपावच्छिन्नपक्षकयद्रूपावच्छिन्नसाध्यकयद्रूपावच्छिन्नहेतुकानुमितिप्रतिबन्धकप्रमाविषयतद्धेतुतावच्छेदकवत्त्वं तद्रूपावच्छिन्नपक्षकतद्रूपावच्छिन्नसाध्यकतद्रूपावच्छिन्नहेतुकस्थले तेनैव रूपेण दुष्टत्वमित्यर्थस्वीकारे यथार्थपदानुपादाने पर्वतो वह्निमान् धूमादित्यादौ पर्वतो वह्निमानित्याद्यनुमितिप्रतिबन्धकपर्वतो वह्न्यभाववान् धूमश्चेत्याकारकसमूहालम्बनात्मकभ्र-

मविषयतद्धेतुतावच्छेदकीभूतधूमत्ववत्तायाः धूमे सत्त्वादतिप्रसङ्गः स्यादतस्तद्वारणाय प्रमापरपर्यायियथार्थपदसार्थक्यसम्भवेन ज्ञायमानदोषप्रतिबन्धकतावादिमताश्रयणमनर्थकमेवेति चेत्तथापि तन्मतास्वीकारे षष्ठीसमासमन्तरा दुष्टस्य हेतोः दोषविषयकप्रतीतिविषयत्वानुपपत्तिस्स्यादतस्तन्मतमवलम्ब्य षष्ठीसमासादरणं कृतमिति भावः ।

## दीधितिः

अग्रे तत्त्वमित्यस्य न तद्वत्त्वमित्यर्थः । आद्यस्यैव वा दुष्टहेतुलक्षणत्वमिति प्राहुः ।

## गादाधरी

ननु द्वितीयतृतीयलक्षणयोर्दोषेऽतिव्याप्तिरव्याप्तिश्च क्वचिद्धेतौ, यत्पदेन दोषस्यैवोपादेयतया तत्त्वस्य तन्मात्रवृत्तित्वादत आह "तत्त्व"मित्यस्येति । प्रथममात्रस्य दुष्टहेतुलक्षणत्वेनैवोपपत्तौ चरमयोर्दोषलक्षणत्वमेवोचितम्, तत्त्वमित्यस्य यथाश्रुतार्थकत्वानुरोधादतस्तथैवाह "आद्यस्यै" वेति । ईदृशव्याख्याया निर्दोषत्वात् प्राहुरित्युक्तम् ।

## विमलप्रभा

क्वचिद्धेतौ = बाधितसत्प्रतिपक्षितहेतौ । यत्पदेन = लक्षणस्थयत्पदद्वारा । तन्मात्रवृत्तित्वात् = दोषमात्रवृत्तित्वात् । अतः = हेतोः । आह दीधितिकार इति शेषः । प्रथममात्रस्य = प्रथमलक्षणमात्रस्य । मात्रपदेन द्वितीयादिलक्षणस्य व्यवच्छेदः कृतः । उपपत्तौ = यथार्थपदसार्थक्योपपत्तौ । चरमयोः = द्वितीयतृतीयलक्षणयोः । तत्त्वमित्यस्य = तत्त्वमिति ग्रन्थस्य । यथाश्रुतार्थकत्वानुरोधात् = लक्षणां विनाऽर्थबोधकत्वानुरोधात् । तत्त्वशब्दस्य लाक्षणिकत्वमनुपयुक्तमिति यावत् । अतः = हेतोः । ईदृशव्याख्यायाः = षष्ठीसमासमाश्रित्य प्रतिपादितव्याख्यायाः । अनिर्दोषत्वात् = दोषरहितत्वात् । अयमर्थः । द्वितीयतृतीयलक्षणघटकीभूततत्त्वमिति पदं यदि यथाश्रुतार्थपरं स्यात्तदा ह्रदो वह्निमान् जलादित्यादौ वह्न्यभाववद्ध्रदरूपबाधात्मकदोषेऽतिप्रसंगः वह्न्यभाववद्ध्रदादिरूपबाधात्मकदोषस्यानुमितिप्रतिबन्धकतया तत्त्व-

स्य तादृशबाधात्मकदोषेष्वेव सत्त्वात् दुष्टत्वेनाभिमतहेतावसत्त्वाच्चेत्यतः दुष्टहेताव-व्याप्तिश्च । अतः तत्त्वमित्यस्य लक्षणया तद्वत्त्वमित्यर्थः कार्यः,तथा च दोषवत्त्वस्य दुष्टहेतावेव वर्त्तमानतया दोषेष्वभावेन नाव्याप्त्यतिव्याप्तिसम्भावनेति भावः। तत्त्वमित्यस्य यथाश्रुतार्थकतासंरक्षणाय द्वितीयतृतीयलक्षणं दोषस्यैवेति मते न दोषेऽतिव्याप्तिस्तस्य लक्ष्यत्वात् न वा दुष्टहेतावव्याप्तिस्तस्याऽलक्ष्यत्वात्। षष्ठीसमासमाश्रित्य प्रतिपादितव्याख्यायां दोषराहित्यसूचनायैव दीधितिकृता प्राहुरित्युक्तं, प्रकर्षश्च दोषराहित्यमेवेति विभावयन्तु तर्ककुशला इति ।

इति सर्वतन्त्रस्वतन्त्रमैथिलपं०नीलाम्बरात्मजश्रीरूपनाथझाविरचिता सामान्यनिरुक्तिप्रथमलक्षणटीका विमलप्रभा समाप्ता ।

## चिन्तामणिः

यद्विषयकत्वेन लिङ्गज्ञानस्याऽनुमितिप्रतिबन्धकत्वं तत्त्वम् ।

## दीधितिः

लिङ्गमविवक्षितम् ।

## गादाधरी

लिङ्गज्ञानस्येति । लिङ्गांशनिवेशस्य निष्प्रयोजनकतया तस्याऽविवक्षितत्वमाह—लिङ्गमिति ।

## विमलप्रभा

यद्विषयकत्वेन = यः विषयो यत्रेति यद्विषयकं तस्य भावो यद्विषयकत्वं, तेन यद्विषयकत्वेन तृतीयाया अवच्छेदकत्वमर्थः। लिङ्गज्ञानस्य = लिङ्गस्य ज्ञानं लिङ्गज्ञानं तस्य हेतुविषयकज्ञानस्येति यावत् । षष्ठ्याः निष्ठत्वमर्थः । अनुमितिप्रतिबन्धकत्वम् = समूहालम्बनरूपाया अनुमितेः प्रतिबन्धकमनुमितिप्रतिबन्धकं तस्य भावोऽनुमितिप्रतिबन्धकत्वम् । तृतीयाविभक्त्यर्थावच्छेदकत्वे तस्यान्वयः । तत्त्वम् = तादृशविषयकत्वम्, हेत्वाभाससामान्यलक्षणमिति शेषः । निष्प्रयोजनकतया = फलशून्यत्वप्रयुक्तेच्छाविषयत्वाभावरूपनिष्प्रयोजनकत्वेन, उत्कटेच्छानधीनेच्छाविषयत्वरूपं यदनतिप्रयोजनकत्वं तेनेति यावत् । तस्य = लिङ्गांशनिवेशस्य । अविवक्षितत्वम् = अर्थबोधजनकत्वप्रकारकमूलकृदिच्छाविषयताशून्यत्वं, लक्षणाऽघटकत्वमिति यावत् । आह शिरोमणिरिति शेषः । अयमर्थः । प्रथमलक्षणे यथार्थपदवैयर्थ्यरूपदोषस्य जागरूकतया तल्लक्षणं विहाय द्वितीयलक्षणमनुसृतम् । तदर्थश्च लिङ्गविषयकज्ञाननिष्ठा यद्विषयता भवति प्रकृतानुमितिप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदिका तत्त्वं हेत्वाभासत्वम्, भवति चात्र ह्रदपक्षकवह्निसाध्यकजलहेतुकस्थले ह्रदो वह्निमान् जलादित्यत्र वह्न्यभाववद्ह्रदरूपबाधे लक्षणासङ्गतिः, तथा हि जलविषयकवह्न्यभाववद्ह्रदविषयकजलवान् वह्न्यभाववांश्च ह्रद इत्याकारकज्ञाननिष्ठा या

वह्न्यभाववद्ध्रदत्वावच्छिन्ना विषयता सा भवति ह्रदो वह्निमान् वह्निव्याप्यजलवानित्याकारकानुमितिनिष्ठप्रतिवध्यतानिरूपितजलवान् वह्न्यभाववांश्च ह्रद इत्याकारकनिश्चयनिष्ठप्रतिबन्धकतावच्छेदिकेति तत्त्वस्य वह्न्यभाववद्ध्रदे सत्त्वात्। अनयैव दिशा वायुर्गन्धवान् स्नेहादित्यत्र सर्वविधहेत्वाभासस्थले लक्षणसमन्वयः कार्यः। अथात्र लक्षणे यद्विषयकत्वेन ज्ञानस्याऽनुमितिप्रतिबन्धकत्वं तत्त्वमित्यस्यैव सम्यक्त्वे लिङ्गपदस्याव्याप्त्यतिव्याप्त्यसम्भवप्रभृतिदोषावारकत्वेन प्रयोजनानर्हस्य निवेशनं निष्प्रयोजनकमेवेति। न च तर्हि मूलोक्तलिङ्गपदमुन्मत्तप्रलपितमेवेति वाच्यं, लिङ्गपदस्य स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन दोषवत्त्वलाभार्थकतया सार्थकतेति नोन्मत्तप्रलपितत्वम्। किन्तु दोषनिवारकत्वेन तन्निवेशप्रयोजनन्नास्तीत्यभिप्रायेण दीधितिकृता विवक्षाराहित्यरूपं निष्प्रयोजनकत्वमुपपादितमिति भावः।

## बलदेवी

लिङ्गांशनिवेशस्य निष्प्रयोजनकतयेति भट्टाचार्यः। नन्वत्र लिङ्गात् ज्ञानं लिङ्गज्ञानमिति व्युत्पत्त्या ज्ञाने लिङ्गजन्यत्वलाभेनानुमितित्वलाभसम्भवात् यद्विषयकानुमितित्वप्रकृतानुमितिप्रतिवन्धकतावच्छेदकं तत्त्वमिति लक्षणं पर्यवसितम्। अत्र चाऽप्रामाण्यज्ञानानास्कन्दितत्वमात्रं निवेश्यं, न त्वनाहार्यत्वनिश्चयत्वेऽपि प्रवेश्ये, परोक्षज्ञानेऽनाहार्यत्वसंशयत्वयोरभावात्। तथा चाऽनाहार्यत्वाद्यनिवेशप्रयुक्तलाघवसम्भवेन लिङ्गांशनिवेशस्य सप्रयोजनकतया कथं तस्य निष्प्रयोजनकत्वमुक्तम्। न च घटोऽवृत्तिरित्यादौ घटावच्छिन्नरूपबाधेऽव्याप्तिः, निर्द्धर्मितावच्छेदकाऽनुमित्यनङ्गीकारेण तादृशदोषविषयकाऽनुमित्यप्रसिद्धेः, तथा च लक्षणेऽनुमितित्वप्रवेशो न सम्भवतीति वाच्यम्। घटवद्भूतलमित्यनुमितिमादायैव लक्षणसमन्वयसम्भवात्।

न चाव्यापकीभूतविषयताशून्यत्वनिवेशस्यावश्यकतया घटत्वावच्छिन्नविषयत्वाव्यापकभूतलत्वावच्छिन्नविषयत्वसत्त्वेन न तादृशानुमितिमादाय लक्षणसमन्वय इति वाच्यम्, घटो घटवानित्यनुमितिमादायैव लक्षणसमन्वयसम्भवात् तादृशानुमितिविषयतायाः सर्वस्याऽपि घटत्वावच्छिन्नविषयताव्यापकत्वात्। नच तत्रापि घटांशे घटत्वस्य सामाना-

धिकरण्येन भानात् तद्विषयतेत्राऽव्यापिकेति वाच्यम्, यद्रूपावच्छिन्नविषयताव्यापकत्वं प्रतिबन्धकत्वे वक्तव्यं तद्रूपावच्छिन्नविषयताव्यापकत्वस्य न लक्षणे प्रवेशः,किन्तु किञ्चिद्रूपावच्छिन्नविषयत्वाऽव्यापकत्वस्यैव,तथा च तादृशविषयताशून्ययद्रूपावच्छिन्नविषयताशालिज्ञाननिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावस्यैव प्रतिबन्धकत्वांशे निवेशात्,ह्रदो वह्निमानित्यादौ तादृशं रूपं वह्न्यभाववद्ध्रदत्वमेवेति तत्संग्रहः। वह्न्य...त्वाद्यवच्छिन्नविषयत्वाव्यापकविषयताशून्यतदवच्छिन्नविषयताशालिज्ञानवृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावो न प्रतिबन्धकतायामिति नैकदेशेऽतिव्याप्तिः,एवं वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताशालिज्ञाननिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावश्च न प्रतिबन्धकतायामिति नातिव्याप्तिः,एतच्चाग्रे स्फुटीभविष्यति। तथा च प्रकृते घटवद्भूतलत्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यघटावच्छिन्नविषयताशालिभूतलं घटवदित्यनुमितिनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावमादायैव लक्षणसमन्वयादिति चेन्न, महानसीयवह्नीतरवह्न्यभाववत्पर्वतो वह्न्यभाववानित्यत्र वह्निमत्तादृशपर्वतरूपबाधेऽव्याप्तिः, तत्र दोषविषयकाऽनुमितौ पक्षे इतरबाधसहकृतपरामर्शादितरप्रतियोगिविधेयकत्वभानेन महानसीयत्वावच्छिन्नविषयतायाः नियमतः सत्त्वेन महानसीयत्वावच्छिन्नविषयतायाः वह्निमत्पर्वतत्वावच्छिन्नविषयत्वाव्यापकत्वात्। न च महानसीयवह्न्यभाववान् पर्वत इति बाधनिश्चयकालीनानुमितिमादाय तत्र लक्षणसंगतिस्तत्काले शुद्धवह्नेरेवानुमितौ भानादिति वाच्यम्, यादृशस्थले एकविशेषेतरबाधस्य पक्षतावच्छेदकता, दोषाऽनुमितेः प्राक् तद्विशेषणस्य महानसीयवह्नेः न बाधनिश्चयः तत्र यादृशदोषविशेषानुमितिरेव न तत्र च तादृशानुमितिद्वयघटितलक्षणसम्भवात् लिङ्गांशाविवक्षणादिति। यद्वा ...याकारानुमितिस्वीकर्तृनये लिङ्गात् ज्ञानमित्यर्थकरणेऽपि संशयान्यत्वनिवेशस्या...कत्वात्, एवमप्रमाण्यज्ञानस्योत्तेजकत्वानुरोधेनानुगतरूपेण निवेशाभिप्रायेणलाघ... न...काशाच्चेति दिक्। गुरवस्तु यादृशस्थलविशेषे दोषविषयकं ज्ञानं प्रत्यक्षात्मकम् अ...न्यविषयकं वा तत्रत्यदोषेऽव्याप्तिस्स्यादतो न लिङ्गांशस्य विवक्षेति प्राहुः।

ननु लिङ्गांशनिवेशस्य वैयर्थ्यसम्भवे इच्छाधीनेच्छाविषयताशून्यत्वरूपनिः-

प्रयोजनकत्वकथनमसङ्गतमिति चेन्न, अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वकल्पे स्वसमानाधिकरणप्रकृतसाध्यव्यापकतावच्छेदकं यत् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तदवच्छिन्नाविषयकप्रतीतिविषयतानवच्छेदकत्वरूपवैयर्थ्यासम्भवात् । लिङ्गविषयकयद्विषयकनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धस्य व्यापकतारूपाऽभावस्य केवलयद्विषयकनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाऽभावाऽघटितत्वात्, तथा हि लक्षणं द्विविधमितरभेदानुमापकं व्यवहारोपयिकञ्च, तत्राद्ये दोषपदप्रतिपाद्यः दोषेतरभिन्नः प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्त्यभावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताऽधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपित "लिङ्गविषयकत्वघटितनिरूपकत्वनिष्ठावच्छेदकतानिरूपिताऽवच्छेदकत्वनिष्ठावच्छेदकतानिरूपितपर्याप्तिनिष्ठावच्छेदकतानिरूपितानुयोगित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकतावत्स्वरूपलक्षणवत्त्वात् इत्यनुमाने लिङ्गांशं परित्यज्य हेतोः प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिर्यः तादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयतावद्वृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावस्तादृशाभावीयप्रतियोगितानिरूपितपरम्परीयावच्छेदकतावद्रूपस्य तादृशत्वेऽपि तद्घटितत्वाभावान्न वैयर्थ्यावकाशः,एवञ्चाखण्डाभावघटकतया सार्थक्यमिति ध्येयम् । ननु लिङ्गांशनिवेशे ह्रदो वह्निमान् जलवद्ध्रदादित्यादौ वह्न्यभाववज्जलवत्यतिव्याप्तिः। हेतुभूतजलवद्ध्रदविषयकवह्न्यभाववज्जलवद्विषयकज्ञानस्य व्यावर्त्तकधर्मदर्शनविधया, [निश्चयविशिष्टनिश्चयत्वेन ] प्रकृतानुमितिप्रतिबन्धकत्वादिति, एवं ह्रदो वह्निमान् वह्निमद्ध्रदादित्यादौ वह्न्यभाववद्ध्रदेऽतिव्याप्तिः,वह्निमद्ध्रदरूपप्रकृतहेतुविषयकतादृशबाधनिश्चयस्याऽऽहार्यत्वेनाऽनाहार्यतादृशनिश्चयाऽप्रसिद्धेः, तथा चानतिप्रयोजनकत्वकथनमयुक्तमिति चेन्न.लिङ्गत्वस्य केवलान्वयित्वात् एवञ्च दोषात्मकलिङ्गविषयकज्ञानमादायेव सर्वत्र लक्षणसमन्वयसम्भवेन प्रकृतलिङ्गस्याविवक्षणादिति ।

यद्वा लिङ्गतावच्छेदकस्य पर्याप्त्यनिवेशेन जलवद्ध्रदादिहेतुकस्थले शुद्धह्रदादिविषयकज्ञानमादायैवाव्याप्त्यतिव्याप्त्योर्वारणात् ।

अथाव्यापकीभूतविषयताशून्यत्वस्याऽवश्यं निवेशनीयतया ह्रदो वह्न्यभाववान् धूमश्चेति निश्चयस्य वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयत्वाऽव्यापकलिङ्ग [धूम] विषयताशून्यत्वाभावेन हेत्वघटिततादृशदोषमात्रेऽव्याप्तिसम्भवेऽनतिप्रयोजनकत्वकथनमसङ्गतमिति, न च प्रकृतलिङ्गस्याऽविवक्षणान्नानुपपत्तिरिति वाच्यम्, मूलोक्तलिङ्गपदस्योन्मत्तप्रलपितत्वापत्तिरिति चेत् सत्यम्, यथाश्रुते लिङ्गपदस्य दुष्टत्वलक्षणे स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन तद्वत्त्वलाभाय सार्थक्यम्,परन्तु लक्षणे तन्निवेशस्य निष्प्रयोजनकत्वमिति शिरोमणेरभिप्राय इति । न च प्रकृतलिङ्गविषयताभिन्ना या यद्रूपावच्छिन्नविषयित्वाव्यापकविषयता तच्छून्यत्वनिवेशे न दोष इति वाच्यम्, ह्रदो वह्निमान् जातेरित्यादौ जातिमान् वह्न्यभाववान् इति ज्ञानमादाय बाधेऽव्याप्त्यापत्तेः, जात्यवच्छिन्नविषयतायास्तादृशाऽव्यापकत्वेऽपि तस्य हेतुविषयताभिन्नत्वाभावेन तादृशाऽव्यापकविषयताशून्यत्वस्याक्षतत्वादिति चेन्न, अव्यापकीभूतविषयताशून्यज्ञानीयत्वोपलक्षितत्वं यद्रूपावच्छिन्नविषयतायां निवेश्यते न त्वाव्यापकीभूतविषयताशून्यत्वं ज्ञाने निवेश्यते,उपलक्षणत्वञ्च प्रतियोगिवैयधिकरण्यावच्छिन्नतदभावाभाववत्त्वम् । तस्य च लिङ्गविषयकनिश्चयीयवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयतायां सत्त्वेन नाऽव्याप्तिः,लिङ्गविषयकलिङ्गाविषयकसमानाकारकज्ञानीयविषयतायाः एतयादसमूहालम्बनवह्न्यभाववान् ह्रद इत्याकारकाऽव्यापकीभूतविषयिताशून्यज्ञानीयविषयतायाः तादृशसमूहालम्बनेऽपि सत्त्वात् । समानाकारकत्वञ्चाग्रे प्रपञ्चयिष्यते ।

केचित्तु लिङ्गनिष्ठविषयतानिवेशे ह्रदत्वेन धूमावगाहिवह्न्यभाववान् ह्रदो ह्रदश्चेति समूहालम्बनलिङ्गविषयकज्ञानमादधते,तत्र चाऽव्यापकीभूतविषयताशून्यत्वमक्षतमेव । नन्वभावत्वेन ह्रदत्वावगाहि अभाववान् वह्न्यभाववान् इति ज्ञानमादायाऽसम्भववारणाय विषयता [प्रकारता] विशिष्टविषयता [ विशेष्यता ] शून्यत्वस्य ज्ञाने निवेशनीयतया तत एव तादृशज्ञानस्य वारणासम्भवः,विषयतावैशिष्ट्यम् स्वनिरू-

पितत्वस्वाश्रयाभावनिष्ठत्वोभयसम्बन्धेनेति, न चैताहशविशेषणदाने एतल्लक्षणस्य यथार्थपदघटिततया यथार्थपदाघटितत्वमेतल्लक्षणस्य दुष्परिहरमिति "यथार्थपदाऽघटितेत्यादि"। पूर्वग्रन्थविरोधापत्तिरिति वाच्यम्, अवच्छेदकताविशिष्टावच्छेदकताशून्यत्वस्यैव अभाववान् वह्न्यभाववानितिज्ञानमादायासम्भववारणाय निवेशनीयत्वात्, वैशिष्ट्यं पूर्वोक्तोभयसम्बन्धेनेति। न च घटपक्षकद्रव्यभेदसाध्यकस्थले द्रव्यात्मकघटरूपबाधेऽव्याप्तिः घटत्वेन द्रव्यत्वावगाहि घटवान् घट इति ज्ञानस्यापि ताहशत्वात् [अवच्छेदकताविशिष्टावच्छेदकताशून्यत्वात्] इतिवाच्यम्, अवच्छेदकताविशिष्टविषयताशून्यत्वस्यविवक्षितत्वात्, वैशिष्ट्य पूर्वोक्तोभयसम्बन्धेन। अत्र चावच्छेदकताविशिष्टसांसर्गिकविषयतामादायाऽसम्भववारणाय विषयतायां किञ्चित्सम्बन्धावच्छिन्नत्वं विशेषणन्देयम्। न च स्वरूपतःसमवायनिष्ठावच्छेदकताकद्रव्यभेदसाध्यके द्रव्यात्मकघटरूपबाधेऽव्याप्तिः, घटत्वेन ससमवायावगाहिघटसम्बन्धेन द्रव्यं घट इति ज्ञानस्यापि ताहशत्वात्। किञ्च वैशिष्ट्यघटकस्वाश्रयाभावः स्वावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकोऽवश्यमुपादेयः, अन्यथा व्यभिचारित्वादिसम्बन्धेन स्वाश्रयाभाववन्निष्ठत्वस्यैव सत्त्वादुभयसम्बन्धेनावच्छेदकताविशिष्टविषयत्वाऽप्रसिद्धेः। एवञ्च स्वरूपप्रतियोगिकसंयोगिनाभावत्वेन ह्रदत्वावगाह्यभाववान् वह्न्यभाववानिति ज्ञानस्यवारणम्, स्वपदेन ताहशसम्बन्धावच्छिन्नाभावत्वनिष्ठावच्छेदकतायाः ग्रहीतुमशक्यत्वात्, तत्सम्बन्धावाच्छिन्नप्रतियोगिताकाभावाऽप्रसिद्धेरिति वाच्यम्। विषयताविशिष्टावच्छेदकताशून्यत्वस्य निवेशनीयत्वात्, वैशिष्ट्यञ्चस्वनिरूपितत्वस्वाश्रयनिरूपितवृत्तिताविशिष्टान्यत्वोभयसम्बन्धेन। वृत्तितावैशिष्ट्यञ्च स्वावच्छेदकसम्बन्धावाच्छिन्नत्वस्वसामानाधिकरण्यस्वानवच्छेदकानवच्छिन्नत्वस्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन, स्ववृत्तित्वञ्च स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन। अभावत्वनिष्ठावच्छेदकतायां ह्रदत्वनिष्ठविषयतावैशिष्ट्यान्न तच्छून्यत्वं ताहशज्ञाने इत्यसम्भवानवकाशात्। तथा च तत एव ह्रदत्वेन धूमावगाहिज्ञानवारणसम्भवात् लिङ्गांशनिवेशेऽसम्भवो नास्त्येव। किञ्च प्रकृते भ्रमवारकविशेषणन्न देयम्, अभावत्वेन ह्रदत्वावगाह्यभाववान् वह्न्यभाववानिति ज्ञानवारणं तु याहशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताक विषयताव्यापिका प्रकृतानुमितिप्रतिबन्धकता ताहशरूपविशिष्टत्वमिति पर्यवसि -

-तल्लक्षणेनैव । जातिमान् वह्न्यभाववानिति ज्ञानस्य वारणन्तु अ-व्यापकीभूतविषयताशून्यविशेषणेनैव, तथा हि अभावत्वेन ह्रदत्वावगाहिज्ञाने वह्न्यभाववद्ध्रदत्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपता-कविषयताया अस्वीकारात्, अन्यथा तादृशज्ञानानन्तरं वह्न्यभाववद्ध्रदमहं जाना-मीत्यनुव्यवसायापत्तेः, तादृशानुव्यवसायं प्रति वह्न्यभाववद्ध्रदत्वगतसमुदायत्ववृ-त्तिनिरूपकताकविषयताशालिज्ञानत्वेन हेतुतया अभाववान् वह्न्यभाववानिति ज्ञानी-यविषयताया अपि वह्निवह्नित्वाभावाभावत्वह्रदह्रदत्वगतसमुदायत्वे वृत्तित्वात्, अभावत्वरूपद्विधाभानेऽपि अभावस्याऽविशेषात् । वह्न्यभाववदभावत्वावच्छिन्न-निरूपकताकविषयतायाश्च भ्रमज्ञानेऽसत्त्वात् । जातिमान् वह्न्यभाववानिति ज्ञाने च वह्न्यभाववज्जातिमत्त्वस्य प्रसिद्धतया तद्रूपावच्छिन्ननिरूपकताकविषयतायाः स्वीका-रः, तज्ज्ञानानन्तरं वह्न्यभाववज्जातिमन्तमहं जानामीत्यनुव्यवसायात् । तादृशज्ञाने वह्न्यभाववद्ध्रदत्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयता-याः सत्त्वादव्यापकीभूतविषयताशून्यत्वनिवेशेनैव तद्वारणमिति ।

अथ यादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपक-ताकविलक्षणविषयितायाम्मानाभावेन लक्षणायोगः, न च वह्न्यभाववद्ध्रदमहं जानामीत्यनुव्यवसायं प्रति वह्न्यभाववान् ह्रद इति यथार्थज्ञानस्य कारणतया कार्य-कारणभावानुरोधादेव तत्स्वीकारः, कार्यकारणभावश्च रूपवृत्तिविषयताशालिज्ञान-प्रत्यक्षं प्रति रूपवृत्तिविषयताशालिज्ञानत्वेन कारणतेति । उभयत्र विषयतायां रूप-वृत्तित्वञ्च स्वनिरूपितनिरूपकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व-सम्बन्धेन । कार्यतावच्छेदकसम्बन्धो विषयताकारणतावच्छेदकसम्बन्धश्च ता-दात्म्यमिति वाच्यम्, तादृशानुव्यवसायं प्रति वह्न्यभाववान् ह्रद इति यथार्थ-ज्ञानस्य वह्नित्वावच्छिन्नवह्नीतरावृत्तिवह्निनिष्ठविषयतानिरूपिताऽभावत्वावच्छि-न्नाऽभावेतरावृत्त्यभावनिष्ठविषयतानिरूपितह्रदत्वावच्छिन्नह्रदेतरावृत्तिह्रदनिष्ठ-विषयताशालिज्ञानत्वेन कारणताकल्पनात् । वह्नित्वावच्छिन्नत्वानुपादाने घटत्वादि-ना वह्न्यवगाहिघटाभाववान् ह्रद इति ज्ञानोत्तरं तादृशानुव्यवसायस्स्यादतस्तन्निवेशः ।

वह्नीतरावृत्तित्वपदेन वह्निघटोभयावगाहिज्ञानव्युदासः । वह्निनिष्ठेति स्वरूपकथनम् । एवञ्च तादृशविषयताशालिज्ञानप्रत्यक्षं प्रति तादृशविषयताशालि-ज्ञानत्वेन कारणतायाः वक्तव्यत्वान्नानुपपत्तिरिति चेन्न, विलक्षणविषयताया अस्वीकारे तु वह्न्यभाववद्ध्रदत्वगतसमुदायत्ववृत्तिविषयतासम्बन्धेन वह्न्यभाववद्ध्रदविषयकं ज्ञानं वह्न्यभाववद्ध्रदवदिति प्रतीत्यनुपपत्तेः, न हि तादृशप्रतीतिर्विषयिता-सम्बन्धेनोपपादयितुं शक्या, अन्यधर्मावच्छिन्नस्य संसर्गो नान्यधर्मावच्छिन्नस्येति नियमेन वह्नित्वादिगतैकत्ववृत्तिविषयतानां प्रत्येकं वह्नित्वावच्छिन्नस्य संसर्गत्वं न तु वह्न्यभाववद्ध्रदत्वावच्छिन्नस्येति,तादृशज्ञाने चावच्छेदकताप्रकारताविशेष्यता-भिन्ना वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताविलक्षणा काचिदभ्युपेतव्येति,यदि च तज्-ज्ञानीयनिरूप्यनिरूपकभावापन्नविषयताया एव संसर्गत्वस्वीकारेण तादृशप्रतीतेर्निर्वाहः तदा वह्न्यभाववद्ध्रदविषयकं ज्ञानं तादृशविषयतया अभाववद्ध्रदवदितिप्रतीतेः प्रमात्वापत्तिः,विषयताया एकज्ञानीयह्रदनिष्ठाया अवैलक्षण्यादित्यवश्यं विलक्षणविष-स्वीकार इति ध्येयम् ।

अथ वा वास्तवह्रदो वह्न्यभाववानिति ज्ञाने ह्रदत्वावच्छिन्नविशेष्यतानिरूपितविशेष्यि-ताव्यक्तावेव तादृशज्ञानावच्छेदेन विलक्षणनिरूपकतानिरूपितत्वोपगमात्,तेन वह्नित्वा-दिना घटावगाहिभ्रमज्ञाने तादृशविशेष्यितासत्त्वेन तादृशज्ञानन्तरं वह्न्यभाववद्ध्रदमहं-जानामीत्यनुव्यवसायवारणाय तादृशज्ञानावच्छेदेन विलक्षणनिरूपकतानिरूपितत्वानु-पगमात् इत्युक्तम् । यदि विषयतायां तादृशविलक्षणनिरूपकतानिरूपितत्वस्वीकारः तदा तादृशविषयतायाः स्वनिरूपकत्वसम्बन्धेन ज्ञाने सत्त्वेन तादृशसम्बन्धस्य वृत्त्य-नियामकतया तादृशसम्बन्धेन तादृशविषयत्वाधिकरणत्वाऽप्रसिद्ध्या तज्ज्ञानस्य तादृशविषयतानिष्ठनिरूपकतानिरूपितत्वस्यावच्छेदकत्वासम्भवस्तदधिकरणस्यैव त-न्निष्ठधर्मावच्छेदकत्वनियमादिति ।

## दीधितिः

यद्विषयकत्वेन—यादृशविशिष्टविषयकत्वेन ।

## गादाधरी

यद्विषयकत्वेनेत्यत्र तृतीयार्थोऽवच्छेदकत्वं तच्च यदि अनतिरिक्तवृत्तित्वरूपमिदानीं निवेश्यते, तदाऽसम्भवः, विशिष्टस्याऽनतिरिक्ततया वह्न्यभावविशिष्टह्रदादिरूपदोषविषयकत्वस्य शुद्धह्रदत्वावच्छिन्नविषयकज्ञानेऽपि सत्त्वेनाऽनुमितिप्रतिबन्धकताऽतिरिक्तवृत्तित्वात्, अतः स्वरूपसम्बन्धरूपमेव तद्वाच्यम्, तथा च पर्वतो वह्निमानित्याद्यनुमितिप्रतिबन्धकभ्रमविषयवह्न्यभावादावतिप्रसङ्गः, तद्विषयत्वस्यापि प्रतिबन्धकतावच्छेदकत्वात्, असम्भवभयेन चाऽवच्छेदकतापर्याप्तिनिवेशाऽसम्भवात्, अतो यद्विषयत्वेनेति पदं व्याचष्टे यादृशविशिष्टविषकत्वेनेति, यद्रूपावच्छिन्नविषयताकत्वेनेत्यर्थः। एवं च तत्त्वमित्यस्य तद्रूपावच्छिन्नत्वमित्यर्थः।

## विमलप्रभा

तृतीयार्थः = तृतीयाविभक्तेरर्थः। तच्च = अवच्छेदकत्वञ्च। इदानीं = यद्रूपावच्छिन्नविषयकत्वविवक्षातः पूर्वम्। तदा = तन्निवेशे। असम्भवः = लक्ष्यमात्रे लक्षणागमनप्रसङ्गः। विशिष्टस्य = वह्न्यभावविशिष्टस्य ह्रदादेः। अनतिरिक्ततया = शुद्धह्रदाद्यभिन्नतया। शुद्धह्रदत्वाद्यवच्छिन्नविषयकज्ञाने = वह्न्याभावाविशिष्टशुद्धह्रद इति ज्ञाने। प्रतिबन्धकताऽतिरिक्तवृत्तित्वात् = प्रतिबन्धकत्वाभाववति वर्त्तमानत्वात्। अतः = असम्भवप्रसङ्गतः। तद्वाच्यम् = तृतीयार्थावच्छेदकत्वं वाच्यम्। तथा च = स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशे च। भ्रमविषये = वह्न्यभाववान् पर्वत इत्याकारकभ्रमात्मकज्ञानविषये। तद्विषयत्वस्याऽपि = वह्न्यभावत्वाद्यवच्छिन्नविषयत्वस्यापि। प्रतिबन्धकतावच्छेदकघटकत्वात् = प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत्त्वात्। असम्भवभयेन = लक्ष्यमात्रे लक्षणागमनभयेन। असम्भवात् = अयोगात्। अतः = हेतोः। यद्विषयकत्वेनेति पदम् = मूलोक्तमिति शेषः। व्याचष्टे = व्याकरोति—विवृणोतीति यावत्, दीधितिकार इति शेषः। यद्रूपावच्छिन्नविषयताकत्वेन = यद्रूपावच्छिन्नविषयतानिरूपितविषयित्वेन। एवञ्च = यद्विषयकत्वेनेति पदस्य यद्रूपावच्छिन्नविषयकत्वेनेत्यर्थकरणे

च। अयमर्थः। **यद्विषयकत्वेनेत्यस्य** यद्रूपावच्छिन्नविषयकत्वेनेत्यर्थोऽकरणसमये लक्षणघटकीभूततृतीयाविभक्त्यर्थावच्छेदकताऽनतिरिक्तवृत्तित्वरूपा स्वरूपसम्बन्धरूपा वा ? आद्ये यद्विषयकत्वं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्तित्वमिति लक्षणं स्यात्, तथा सति ह्रदो वह्निमान् जलादित्यादिस्थलीयबाधादौ सर्वत्रैव लक्षणागमनेनासम्भवप्रसङ्गः, विशिष्टं शुद्धान्नातिरिच्यत इति नियमेन विशिष्टस्य शुद्धाभिन्नतया वह्न्यभावविशिष्टह्रदविषयताशुद्धह्रदविषयतयोरभिन्नतया ह्रदो वह्निमान् वह्निव्याप्यजलवानित्याकारकप्रकृतानुमित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्ये शुद्धह्रद इत्याकारकज्ञानेऽपि केवलह्रदत्वावच्छिन्नविषयताया इव वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयकत्वस्यापि वर्त्तमानतया प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तित्वस्य तादृशविषयतायामभावात्। अनयैव दिशा सत्प्रतिपक्षादिरूपसकललक्ष्ये लक्षणागमनमूहनीयम्। असम्भववारणाय यद्यनतिरिक्तवृत्तित्वरूपावच्छेदकत्वं परित्यज्य स्वरूपसम्बन्धरूपावच्छेदकत्वन्निवेश्यते तदा यद्विषयकत्वं प्रकृताऽनुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत् तत्त्वमिति लक्षणं स्यात् एवञ्च वह्न्यभावविशिष्टह्रदविषयकत्वं भवति ह्रदो वह्निमान् वह्निव्याप्यजलवानित्याकारकाऽनुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावदिति तत्त्वं वह्न्यभाववद्ह्रदे सत्वात् बाधे लक्षणसंगतिः, प्रोक्तदिशा सत्प्रतिपक्षादावपि संगतिरिति क्वाऽसम्भवसम्भावनेति यद्युच्यते तदाऽपि पर्वतो वह्निमान् धूमादित्यादिसद्धेतौ भ्रममादायातिप्रसङ्गः। तथा हि पर्वतो वह्निमानित्यनुमितिं प्रति वह्न्यभाववान् पर्वत इति भ्रमात्मकज्ञानस्य प्रतिबन्धकतया तादृशभ्रमज्ञानीयवह्निविषयताऽभावविषयता पर्वतविषयता भवति प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावदिति तत्त्वं वह्न्यावभावे पर्वते च सत्वात् तत्र तत्रातिप्रसङ्गो दुर्वारः। नचैतादृशाऽतिप्रसङ्गवारणाय यद्विषयकत्व प्रकृतानुमितिप्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणं तत्त्वमितिः [यद्विषयतात्वावच्छिन्ननिरूपकताऽवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तत्त्वमिति]

पर्याप्तिघटितलक्षणार्थः करणीयः, तथा चोक्तभ्रमज्ञानीयवह्निविषयतायामभावविषय-तायां पर्वतविषयतायाञ्च प्रत्येके पर्याप्तिसम्बन्धेन प्रकृतानुमितिप्रतिबन्धकतावच्छेदक-ताविरहेण वह्निविषयकत्वमभावविषयकत्वं पर्वतविषयकत्वं वह्न्यभावविषयकत्वं-वा न प्रकृतानुमितिप्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणमिति तत्त्वस्य वह्न्या-दावभावान्नातिव्याप्तिरिति वच्यम्, तथा सति ह्रदो वह्निमान् जलादित्यादौ सर्वत्रैव बाधादिरूपलक्ष्ये लक्षणागमनेनासम्भवः,तथा हि ह्रदो वह्निमान् वह्निव्याप्यजलवानित्य-नुमितिं प्रति वह्न्यभाववान् ह्रद इति निश्चयस्य वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविष-यताशालिनिश्चयत्वेन प्रतिबन्धकता न सम्भवति ह्रदत्वेन कूपावगाहिवह्नित्वेन गुञ्जा-वगाह्यभावत्वेन पटावगाहिह्रदो वह्न्यभाववानित्याकारकज्ञानस्यापि ह्रदधर्मिकवह्न्य-नुमितिप्रतिबन्धकतया तत्र तादृशनिश्चयत्वविरहात् अतः भ्रमप्रमासाधारणवह्नित्वाव-च्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितह्रदत्वावच्छिन्नविषयताशालि-निश्चत्वेनैव प्रतिबन्धकता वाच्येति तादृशनिश्चयत्वमेव प्रकृतानुमितिप्रतिबन्धकतावच्छे-दकतापर्याप्त्यधिकरणं न तु वह्न्यभावविशिष्टह्रदविषयकत्वमिति तत्त्वस्य वह्न्यभाव-वद्ह्रदादावभावात्। मान्यास्तु प्रत्येकविषयताया अवच्छेदकतापर्याप्त्यनधिकर-णत्वे प्रत्येकावृत्तिधर्मस्य समुदायावृत्तित्वनियमेन समुदायेऽपि तदभावापत्त्या प्रत्येकस्य तथात्वं वाच्यं तथा च कुतोऽसम्भव इति चेन्मैवं वोचः तथा सति प्रत्येकं वह्न्या-दावतिप्रसङ्गो दुर्वारस्तद्वारणाय यद्विषयतामात्रगतरूपं तादृशावच्छेदकतापर्याप्त्य-नुयोगितावच्छेदकमित्यस्य विवक्षितत्वेऽसम्भवस्य जागरूकत्वादिति प्राहुः। तथा चाऽ-वच्छेदकतापर्याप्त्यधिकरणत्वनिवेशाऽसम्भवेन पूर्वोक्तातिप्रसङ्गस्तदवस्थ एवेति। अतः प्रथमं यद्विषयकत्वेनेत्यस्य यद्रूपावच्छिन्नविषयकत्वेनेत्यर्थः करणीयः, तृतीया-विभक्त्यर्थावच्छेदकता चानतिरिक्तवृत्तित्वरूपैवादरणीयेति एवञ्च यद्रूपावच्छिन्न-विषयता भवति प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्त-वृत्तिः तद्रूपावच्छिन्नत्वं हेत्वाभासत्वमिति लक्षणार्थः। तथा च ह्रदो वह्निमान् जलादित्यादौ वह्न्यभावत्वावच्छिन्नविषयतायाः प्रकृतानुमितिप्रतिबन्धकताऽतिरिक्ते केवलवह्न्यभाव इत्यादिज्ञाने वर्तमानतयाऽनतिरिक्तवृत्तित्वाभावान्न सा विषयता

यद्रूपावच्छिन्नविषयतापदेन ग्रहीतुं शक्येति यद्रूपावच्छिन्नविषयतापदेन वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयतामुपादाय तादृशविषयता भवति ह्रदो वह्निमान् वह्निव्याप्यजलवानित्याकारकानुमितित्वव्यापकप्रतिबध्यतानिरूपितह्रदो वह्न्यभाववानित्याकारकनिश्चयनिष्ठप्रतिबन्धकतानतिरिक्तवृत्तिरिति तद्रूपावच्छिन्नत्वं वह्न्यभावद्ध्रदे ऽसत्त्वात् लक्षणसंगतिरतो नासम्भवः। पर्वतो वह्निमान् धूमादित्यादिसद्धेतौ वह्न्यभावादावतिव्याप्तिवारणन्त्वग्रे ग्रन्थकृतैव प्रदर्शयिष्यत इति।

## बलदेवी

यद्विषयकत्वेन=यादृशविशिष्टविषयकत्वेनेति दीधितिः। यद्रूपावच्छिन्नविषयकत्वेनेति भट्टाचार्यः। तथा च यादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताव्यापिका प्रकृतानुमितिप्रतिबन्धकता तादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकतावत्त्वमनतिरिक्तवृत्तित्वरूपावच्छेदकताघटितस्य, यद्रूपावच्छिन्ननिरूपकताकविषयत्वावच्छिन्नप्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपावच्छिन्नत्वमिति स्वरूपसम्बन्धरूपावच्छेदकताघटितस्य फलितार्थः। अथ विषयितायाः प्रतिबन्धकतावच्छेदकत्वे किम् मानमिति ? न च विषयतायाः प्रतिबन्धकत्वव्यधिकरणतयाऽवच्छेदकत्वमेव न सम्भवतीति वाच्यम्, निरूपकत्वसम्बन्धेन तत्सामानाधिकरण्यादिति वाच्यम्, विनिगमनाविरहेण विषयितायामपि तत्स्वीकारादिति, अत एव स्वनिरूपितविषयितावत्त्वसम्बन्धेन तथात्वेन प्रतिबन्धकताघटकसम्बन्धस्य गुरुत्वाभाव इति।

न च विषयतायामवच्छेदकत्वे ह्रदो वह्निमानिति बुद्धिं प्रति सावच्छिन्नावच्छेदकताकप्रतियोगिताकवह्न्यभाववान् ह्रद इति ज्ञानस्य प्रतिबन्धकत्वाभावसम्पत्तये वह्नित्वनिष्ठावच्छेदकतायां निरवच्छिन्नत्वं निवेश्य सौलभ्यम्। तथा हि वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताकविषयितानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितेत्यादिक्रमेण प्रतिबन्धकता वाच्या। विषयतायास्तदवच्छेदकत्वे केन रूपेण प्रति-

वध्यप्रतिबन्धकभाव इति वाच्यम्, यादृशविषतयोर्निरूप्यनिरूपकभावस्तन्निरूपित-विषयितयोरवच्छेद्यावच्छेदकभाव इति नियमेन यन्निरूपितत्व यस्य तदाश्रयनिरू-पितत्वमपि तस्येति नियमात् विषयनिरूपितत्वस्यात्र लाभेन वह्न्यभाववान् ह्रद इति ज्ञानस्य निरवच्छिन्नसमवायत्वनिरूपितावच्छेदकित्वावच्छिन्नसंसर्गित्वावच्छिन्नवह्नि-त्वनिरूपितावच्छेदकित्वावच्छिन्नप्रकारित्वावच्छिन्ननिरवच्छिन्नाभावत्वनिरूपिताव-च्छेदकित्वावच्छिन्नविशेष्यित्वावच्छिन्नस्वरूपत्वनिरूपिताऽवच्छेदकित्वावच्छिन्नसंस-र्गित्वावच्छिन्नाऽभावत्वनिरूपितावच्छेदकित्वावच्छिन्नप्रकारित्वावच्छिन्नसमवायत्वनि-रूपिताऽवच्छेदकित्वावच्छिन्नसंसर्गित्वावच्छिन्नह्रदत्वनिरूपितावच्छेदकित्वावच्छिन्न-विशेष्यितावज्ज्ञानत्वेन प्रतिबन्धकता सौलभ्यात्। अत्र निरवच्छिन्नत्वमवच्छेदकि-त्वानवच्छिन्नत्वम्, तच्च स्वावच्छिन्नत्वस्वभिन्नावच्छेदकित्वावच्छिन्नत्वोभयसम्बन्धे-नावच्छेदकताविशिष्टान्यत्वम्, तथा च वह्नित्वत्वनिरूपितावच्छेदकित्वावच्छिन्नत्वस्य वह्निनिरूपितावच्छेदकित्वावच्छिन्नत्वस्य च वह्नित्वनिरूपितावच्छेदकतायां सत्त्वेन नोक्तज्ञानस्य प्रतिबन्धकत्वम्। एवं विषयतायां निरवच्छिन्नत्वम् अवच्छेदकतावि-शिष्टान्यत्वम्, वैशिष्ट्यं स्वनिरूपितत्वस्वभिन्नावच्छेदकतानिरूपितत्वोभयसम्बन्धेन, तथा च वह्नित्वत्वनिष्ठावच्छेदकतानिरूपितत्वस्य वह्निनिष्ठायाःप्रतियोगित्वसम्बन्धाव-च्छिन्नप्रकारतावच्छेदकतानिरूपितत्वस्य च वह्नित्वनिष्ठावच्छेदकतारूपविषयतायां सत्त्वेऽपि न क्षतिः। वह्निमानिति बुद्धिं प्रति वह्नित्ववदभाववानिति ज्ञानस्य विरो-धित्वन्न सम्भवति, तथा च विषयतयोः, परस्परनिरूप्यनिरूपकभावः, अथ वा तादृशविलक्षणविषयितायाम् प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्व-विवक्षयैव, एवं विषयतयोर्निरूप्यनिरूपकभावस्यावश्यकतया वह्नित्वनिष्ठावच्छे-दकतानिरूपितत्वस्य, वह्नित्वनिरूपितावच्छेदकित्वावच्छिन्नत्वस्य समानतया न लाघवगौरवस्यावकाश इति। न च विषयतायाः प्रतिबन्धकतावच्छेदकत्वे तत्कुक्षौ संशयान्यत्वनिवेशेन गौरवं, संशये प्रतिबन्धकतावारणाय ह्रदत्वावच्छिन्नविशेष्यतायां वह्नित्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वानवच्छिन्नत्वस्य गौरवेण निवेशायोगात्, सामान्यतो विशेष्यत्वानवच्छिन्नत्वस्य न निवेशः, तथा हि वह्न्यवभावान् ह्रद इति ज्ञानस्यापि संग्रहानुपपत्तिः, अभावप्रकारतानिरूपितह्रदनिष्ठविशेष्यतायाः ह्रदत्वप्रका-

तानिरूपितनिरवच्छिन्नह्रदनिष्ठविशेष्यत्वावच्छिन्नत्वात् विषयितायाः प्रतिबन्धकतावच्छेदकत्वे तु संशयवारणमभावत्वावच्छिन्नप्रकारितायाः प्रकारित्वान्नवच्छिन्नत्वदानेनैव सम्भवति । संशयसमुच्चययोर्वैलक्षण्यानुरोधेन कोटित्वाख्यविषयतानिरूपितविषयितयोरवच्छेद्यावच्छेदकभावस्य सत्प्रतिपक्षे स्वीकारादिति वाच्यम्, संशयसमुच्चययोर्वैलिक्षण्यानुरोधेन विषयतायाः प्रतिबन्धकतावच्छेदकत्ववादिना कोटितानिरूपितह्रदत्वावच्छिन्नविशेष्यताद्वयनिरूपितह्रदत्वनिष्ठाऽवच्छेदकताद्वयोरवच्छेद्यावच्छेदकभावं स्वीकृत्य तादृशावच्छेदकतायामवच्छेदकत्वानवच्छिन्नत्वं देयमिति कल्पद्वयोः साम्यं सुष्ठु । एवमनाहार्यत्वादीनामपि निवेशनं समानमिति विनिगमनाविरहेण विषयित्वं विषयत्वं वा प्रतिबन्धकतावच्छेदकं भवत्येवेति ध्येयम् ।

अथ यत्पदस्य यद्रूपावच्छिन्नपरत्वेऽपि यद्रूपपदेन किं धर्तव्यम् ? यदि सामानाधिकरण्यसम्बन्धेन वह्न्यभावविशिष्टह्रदत्वमुच्यते । तदा धर्मितावच्छेदकविधया ह्रदत्वानवगाहिसामानाधिकरण्यसम्बन्धेन वह्न्यभाववद्ध्रदत्ववानिति ज्ञानेऽपि वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयतासत्त्वेनानुमितिप्रतिबन्धकताऽतिरिक्तवृत्तित्वादसम्भवः । यदि च वह्न्यभावह्रदत्वोभयमुच्यते तदा एकत्र द्वयमिति रीत्या जायमाने तादृशोभयावगाहिज्ञाने [ वह्न्यभावह्रदत्ववानिति ज्ञाने] तस्य तथात्वेनानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वात् पुनरसम्भव इति चेन्न ।

यादृशसमुदायवृत्तिसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयताव्यापिका प्रकृतानुमितिप्रतिबन्धकता तादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकतावत्त्वं लक्षणार्थः । तथा च वह्नि वह्नित्वाभावाभावत्वह्रदह्रदत्वगतसमुदायत्वस्यैव यद्रूपपदेन ग्रहणात्, तादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयत्वं वह्न्यभाववान् ह्रद इति ज्ञाने एव स्वीक्रियते, न तु सामानाधिकरण्येन वह्न्यभावविशिष्टह्रदत्ववानितिज्ञाने, तदुत्तरं वह्न्यभावविशिष्टह्रदविषयकज्ञानवानहमित्यनुव्यवसायाभावात् तथा च नासम्भव इति संसर्गविधया निवेशस्तु प्रकृतानुमितिप्रतिबन्धकतावृत्तिरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकतावत्त्वम्, रूपे प्रतिबन्धकतावृत्तित्वञ्च

स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयितासमानाधिकरण-भेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन । तादृशञ्च रूपं वह्निवह्नित्वाभावाभावत्वह्रदह्रदत्वगतसमुदायत्वं तदवच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकनिरूपकताकविषयतायाः ह्रदत्वधर्मितावच्छेदकवह्न्यभाववानिति यथार्थज्ञाने एव सत्त्वं नान्यत्र, अतोऽयथार्थसमूहालम्बन एकत्र द्वयमिति रीत्या ज्ञानानामुत्तरक्षणे न वह्न्यभाववद्ध्रदमहं जानामीत्यनुव्यवसाय इति भावः। प्रकारमुद्रया च प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्त्यभावीयावच्छेदकतात्वावच्छिन्नप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकता निरूपितभेद-निष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताऽधिकरणनिष्ठावच्छेदकता-निरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितनिरूपकत्वनिष्ठावच्छेदकतानिरूपिताऽवच्छेदकत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिरूपितपर्याप्तिनिष्ठावच्छेदकतानिरूपितानुयोगित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकतावत्त्वं समुदितार्थः। अभावप्रतीतिश्च रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयित्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्तीति दिक्।

## दीधितिः

तेनानुमितिप्रतिबन्धकपक्षविशेष्यकभ्रमविषये साध्याभावादौ सद्धेतुत्वादिनिष्ठे नातिप्रसङ्गः।

## गादाधरी

व्याख्यायाः प्रयोजनं स्फुटयति तेनेति। यत्प्रकारकत्वेन प्रतिबन्धकत्वमित्युक्तौ पक्षविशेषणकभ्रममादाय वह्न्यभावादौ नातिप्रसङ्गसम्भवः, पर्वतादावतिप्रसङ्गसम्भवेऽपि यत्सम्बन्धावच्छिन्नयन्निष्ठप्रकारताकत्वेनाऽनुमितिविरोधित्वं तेन सम्बन्धेन तद्वत्त्वस्य दुष्टताव्यवहारनियामकत्वोपगमे पर्वतादिविशेषणकवह्न्यभावज्ञानस्य विशेषणताविशेषावच्छिन्नाधेयतासंसर्गावच्छिन्नपर्वतनिष्ठप्रकारताकत्वेन प्रतिबन्धकत्वात्तेन सम्बन्धेन पर्वतादिमत्तायाः पर्वतमहानसान्यतरत्वादिरूपसद्धेतौ सत्त्वेऽपि प्रसिद्धधूमादिहेतावसत्त्वात्तत्र दुष्टताव्यवहारापत्तेरयोग इति तदनुरोधेन पक्षविशेष्यकेत्युक्तम्।

दीधितौ–तेनेति । तेन = यद्विषयकत्वेनेत्यस्य यादृशविशिष्टविषयकत्वेनेत्यर्थकरणेन । पक्षविशेष्यकभ्रमविषये = पर्वतादिरूपपक्षविशेष्यको यःपर्वतो वह्न्यभाववानिति भ्रमस्तद्विषये । साध्याभावादौ = वह्न्यभावादौ । सद्धेतुत्वादिनिष्ठे = धूमादिनिष्ठे । नाप्रसङ्ग = नैकदेशे दोषलक्षणस्यातिव्याप्तिः । व्याख्यायाः = यद्विषयकत्वेनेत्यस्य यादृशविशिष्टविषयकत्वेनेति व्याख्यायाः। प्रयोजनम् = अतिप्रसङ्गवारणरूपं फलं । स्फुटयति = कथयति । पक्षविशेषणकभ्रमभादाय = पक्षनिष्ठप्रकारताकभ्रममादाय । पर्वतविशेषणकवह्न्यभावविशेष्यकपर्वते वह्न्यभाव इति भ्रममादायेति यावत् । नातिप्रसङ्गसम्भवः = न दोषलक्षणस्यैकदेशेऽतिव्याप्तिसम्भावना । पर्वतादावतिप्रसङ्गसम्भवेऽपि = पर्वते वह्न्यभाव इति भ्रमस्य पर्वतप्रकारकत्वेन प्रतिबन्धकत्वमिति तत्त्वस्य पर्वते सत्त्वेन तत्रातिव्याप्तावपि । तेनसम्बन्धेनेत्यत्र तत्पदस्य यत्सम्बन्धावच्छिन्नघटकयत्पदेनान्वयः। तद्वत्त्वस्य = तादृशप्रकारताश्रयाधिकरणत्वस्य । पर्वतादिविशेषणकवह्न्यभावादिज्ञानस्य = पर्वते वह्न्यभाव इति ज्ञानस्य । तेन सम्बन्धेन = स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन । पर्वतादिमत्तायाः = पर्वतादिमत्त्वस्य । सत्त्वेऽपि = वर्तमानत्वेऽपि । दुष्टत्वव्यवहारोपपत्तावपीति यावत् । असत्त्वात् = अभावात् । तत्र = प्रसिद्धधूमादौ । तदनुरोधेन = प्रसिद्धधूमादिरूपसद्धेतौ दुष्टत्वव्यवहाराऽपत्त्यनुरोधेन । उक्तम् = प्रतिपादितं दीधितिकृतेति शेषः । अयमर्थः । यद्विषयकत्वेनेत्यस्य यद्रूपावच्छिन्नविषयकत्वेनेत्यर्थाऽकरणेऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वाऽप्रवेशे च पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभावाद्येकदेशेऽतिव्याप्तिः वह्न्यभावत्ववच्छिन्नविषयताया अपि पर्वतधर्मिकवह्न्यनुमितिप्रतिबन्धकतावच्छेदकतया तत्त्वस्य वह्न्यभावादौ सत्त्वादतस्तादृशार्थः करणीयः तादृशावच्छेदकत्वञ्च लक्षणे निवेश्यम् । तथा च वह्न्यभावत्वावच्छिन्नविषयतायाः प्रकृतानुमितिप्रतिबन्धकताऽतिरिक्ते केवलवह्न्यभाव इति ज्ञानेऽपि वर्त्तमानतयाऽनतिरिक्तवृत्तित्वविरहेण न तादृशविषयतामादायातिव्याप्तिः । वह्न्यभाववत्पर्वतत्वस्याऽप्रसिद्ध्यैव न तद्रूपावच्छिन्नविषयतामादायापि दोषसम्भावना । ननु पक्षविशेष्यकभ्रमस्येव पक्षविशेषणकपर्वते वह्न्यभाव इति भ्रममादायातिप्रसङ्गसम्भवे पक्षविशेषण-

कभ्रममादायैवाऽतिव्याप्तिप्रदर्शकपक्षविशेष्यकत्वोपादानमनर्थममेवेति चेन्न, यद्विषयकत्वेनेत्यादिमूलस्य यत्प्रकारकत्वेन प्रतिबन्धकत्वं तत्त्वमित्यर्थकरणे पक्षविशेषणकभ्रममादाय न साध्याभावादावतिप्रसङ्गः, तथा हि पर्वतविशेषणकपर्वते वह्न्यभाव इति भ्रमस्य पर्वतनिष्ठप्रकारताकत्वेनैवार्थात् पर्वतनिष्ठप्रकारतानिरूपितवह्न्यभावनिष्ठविशेष्यताकत्वेनैव पर्वतविशेष्यकवह्न्यनुमितिं प्रति प्रतिबन्धकतया यत्पदेन पर्वतस्यैव धत्तु ं शक्यत्वेन तत्त्वस्य पर्वते एव सत्त्वेन वह्न्यभावादावभावात् शिरोमण्युक्तवह्न्यभावादावतिव्याप्तिविरहात् न च वह्न्यभावेऽतिव्याप्तिविरहेऽपि पर्वतप्रकारकत्वेन ज्ञानस्यानुमितिविरोधितया तत्त्वस्य पर्वते सत्त्वात् पर्वत एवाऽतिव्याप्तिरिति वाच्यम् यः प्रकारः यादृशसम्बन्धेन यादृशविशेष्ये वर्त्तते तादृशसम्बन्धावच्छिन्नाधेयतासम्बन्धेन तादृशविशेष्यस्तस्मिन् प्रकारे यथा वह्न्यभावः स्वरूपेण पर्वते वर्त्तते पर्वतस्तु स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन वह्न्यभावे, एवम् धूमः संयोगेन पर्वते पर्वतस्तु संयोगसम्बन्धावच्छिन्नाधेयतासम्बन्धेन धूमे वर्त्तत इति वस्तुस्थितिः एवञ्च प्रकृते पक्षविशेषणकपर्वते वह्न्यभाव इति ज्ञानस्य पर्वतो वह्निमानित्यादिसमूहालम्बनानुमितिम्प्रति स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन पर्वतनिष्ठप्रकारताकत्वेन प्रतिबन्धकतेति स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन पर्वतवत्ता धूमे नास्ति अस्ति च पर्वतमहानसान्यतरत्वे इति प्रसिद्धधूमहेतौ दुष्टताव्यवहारापत्तिविरहात्। अतः प्रसिद्धधूमहेतौ दुष्टताव्यवहारोपपत्त्यर्थं पक्षविशेष्यकेत्युक्तम्। तथा च पक्षविशेष्यकपर्वतो वह्न्यभाववानिति भ्रमस्य स्वरूपसम्बन्धेन वह्न्यभावनिष्ठप्रकारताकत्वेनाऽनुमितिम्प्रति प्रतिबन्धकतया तेन सम्बन्धेन वह्न्यभाववत्तायाः प्रसिद्धधूमे वर्त्तमानतया दुष्टत्वव्यवहारापत्तिस्स्यादेवेत्यतः यद्रूपावच्छिन्नविषयकत्वेनेति निवेशनम् सार्थकमेवेति। मान्यास्तु वह्न्यभाववद्ध्रदादिप्रकारकत्वेन यद्यपि प्रतिबन्धकता नास्ति तथापि ह्रदे वह्न्यभाव इति ज्ञानस्य ह्रदप्रकारकत्वेनाऽनुमितिम्प्रति प्रतिबन्धकतया तत्त्वस्य वह्न्यभाववद्ध्रदेऽपि सत्त्वात् विशिष्टस्य विशेष्याऽनतिरिक्तत्वात् नासम्भवः। एतेन दोषप्रकारकत्वस्य प्रतिबन्धकतानवच्छेदकतयाऽसम्भवापत्त्या यत्प्रकारकत्वेनेत्यादि वक्तुमशक्यमिति शङ्का निरस्ता।

एवञ्चोक्तविवक्षायां पक्षविषणभ्रममादाय साध्याभावादेर्दोषासम्भवेऽपि पक्षे

यद्यप्यतिव्याप्तिः भवत्येव तथापि सद्धेत्वादिनिष्ठ इत्युक्त्या दुष्टलक्षणातिव्याप्तिमाकलय्य पक्षविशेषणकभ्रममादाय प्रसिद्धसद्धेतावतिव्याप्तेरभावात् पक्षविशेष्यकेत्युक्तमित्याह-यत्प्रकारकत्वेनेत्यादिनेत्याहुः ।

## बलदेवी

यत्प्रकारकत्वेनानुमितिप्रतिबन्धकत्वमिति भट्टाचार्यः । नन्वत्र पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे नायं सद्धेतुस्तत्र सामानाधिकरण्येन बाधस्येष्टत्वात्, किन्तु सामानाधिकरण्येनानुमितिस्थल एवाऽतिव्याप्तिर्वक्तव्या, तथा चावच्छेदकावच्छेदेन बाधभ्रमस्य पर्वतत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रकारकत्वेनैव प्रतिबन्धकतया तादृशसम्बन्धाऽप्रसिद्ध्या तेन सम्बन्धेन तद्वत्ताया अतीवाऽप्रसिद्धौ कथमतिव्याप्तिः । न च तत्संसर्गांशेऽवच्छेदकतापर्याप्तिमनिवेश्य यद्धर्मावच्छिन्नयन्निष्ठसंसर्गताकयन्निष्ठप्रकारताप्रतिबन्धकतावच्छेदिका तद्धर्मावच्छिन्नतन्निष्ठसंसर्गताकतन्निष्ठनिरूपकताकाधिकरणत्वस्यैव विवक्षितत्वात् । तथा च स्वरूपत्वावच्छिन्नस्वरूपनिष्ठसंसर्गताकवह्न्यभावत्वावच्छिन्नप्रकारता तादृशप्रतिबन्धकतावच्छेदिका इति तादृशसंसर्गतानिरूपकवह्न्यभावत्वावच्छिन्ननिरूपकताकाऽधिकरणतायाः धूमे सत्त्वादतिव्याप्तिर्भवत्येवेति वाच्यम् । तथा सति शुद्धाधेयत्वमुपादाय पक्षविशेषणकभ्रममादायाऽप्यतिव्याप्तिस्सम्भवति, पर्वतत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नाधेयतात्वावच्छिन्नशुद्धाधेयतासंसर्गकपर्वतनिष्ठनिरूपकताकाधिकरणत्वस्य धूमे सत्वात् । सम्बन्धभेदेनाऽऽधेयताभेदेऽपि संयोगेन वह्न्यभावव्याप्यः पर्वते इति ज्ञानीयपर्वतत्वव्यापकवह्न्यभावव्याप्यप्रतियोगिकसंयोगसम्बन्धावच्छिन्नाधेयतासम्बन्धेन पर्वतप्रकारताया अपि अवच्छेदकतया संयोगसम्बन्धावच्छिन्नाऽधेयतात्वावच्छिन्नसंसर्गताकनिरूपकताकाधिकरणत्वस्य धूमे सत्वात्, अतः यद्धर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकसंसर्गताकप्रकारता प्रतिबन्धकतावच्छेदिका तद्धर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकसंसर्गताकनिरूपकताकाधिकरणतावत्त्वस्यैव विवक्षितत्वात् । तथा च पक्षविशेषणकभ्रममादाय नातिव्याप्तिः, तत्र पर्वतत्वव्यापकवह्न्यभावव्याप्यप्रतियोगिकसंयोगसम्बन्धावच्छिन्नाधेयतात्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकसंसर्गता-

कप्रकारतायाः प्रतिबन्धकतावच्छेदकतया तादृशसमुदायत्वावच्छिन्नानुयोगिताक-पर्याप्तिकावच्छेदकताकसंसर्गताकनिरूपकताकाधिकरणत्वस्याऽप्रसिद्धेरिति वाच्यम्, एवं सति पक्षविशेष्यकभ्रममादायाप्यतिव्याप्त्यभावादिति, तत्र पर्वतत्वव्यापकवह्न्य-भावप्रतियोगिकस्वरूपत्वगतसमुदायत्वस्यैव तथात्वेन तादृशसमुदायत्वावच्छिन्नानु-योगिताकपर्याप्तिकावच्छेदकसंसर्गताकनिरूपकत्वस्यैवाऽप्रसिद्धेरिति। न च समान-विषयकत्वेन प्रतिबध्यप्रतिबन्धकभावाभिप्रायेणेदम्। तथा च शुद्धस्वरूपसम्बन्धा-वच्छिन्नप्रकारताया अपि सामानाधिकरण्येनानुमितिप्रबन्धकतया पर्याप्तिनिवेशे पक्ष-विशेष्यकभ्रममादायातिव्याप्तिः संगच्छत इति वाच्यं, तुल्ययुक्त्या वह्न्यभावव्याप्यः पर्वते इति पक्षविशेषणकभ्रममादायाप्यतिव्याप्तिसम्भवात्तद्ग्रन्थासंगतिर्दुर्वारैवेति चेन्न, उद्देश्यतावच्छेदकावच्छेदेन विधेयतास्थले उद्देश्यतावच्छेदकव्यापकत्वमिव विधेयव्याप्यत्वमुद्देश्यतावच्छेदके उद्देश्यतावच्छेदकप्रतियोगिकसंसर्गे वा भासते, इत्यस्यानुमितिग्रन्थे जगदीशेन स्वीकृततया यत्सम्बन्धावच्छिन्नयन्निष्ठावच्छेदकताक-विशेष्यतानिरूपिता या यत्सम्बन्धावच्छिन्नयन्निष्ठावच्छेदकताकयत्सम्बन्धावच्छिन्न-यन्निष्ठप्रकारता तादृशप्रतिबन्धकतावच्छेदिका तत्सम्बन्धावच्छिन्नतन्निष्ठावच्छेदकता-कतत्सम्बन्धावच्छिन्नतन्निष्ठनिरूपकताकाधिकरणतावत्त्वस्यैव विवक्षितत्वात्। अत्र सम्बन्धद्वयस्येतरवारकन्यूनवारकपर्याप्तिर्निवेश्या। एवञ्च पक्षविशेष्यकभ्रममादाया-तिव्याप्तिः संगच्छते, वह्न्यभावव्याप्यपर्वतत्वप्रतियोगिकसमवायसम्बन्धावच्छिन्न-पर्वतत्वनिष्ठावच्छेदकताकविशेष्यतानिरूपितताया वह्न्यभावत्वनिष्ठस्वरूपसम्बन्धा-वच्छिन्नवह्न्यभावनिष्ठप्रकारतायाः समानाधिकरण्येनानुमितिप्रतिबन्धकतावच्छेदक-तया स्वरूपसम्बधावच्छिन्नवह्न्यभावत्वनिष्ठावच्छेदकताकवह्न्यभावनिष्ठशुद्धस्वरूप-सम्बन्धावच्छिन्ननिरूपकताकाधिकरणत्वस्य धूमे सत्त्वात्, पक्षविशेषणकभ्रममादाय तु नातिव्याप्तिः सम्भवति, तत्र वह्न्यभावव्याप्यत्वावच्छिन्नविशेष्यतायाः वह्न्यभाव-व्याप्यपर्वतत्वप्रतियोगिकसमवायसम्बन्धावच्छिन्नपर्वतत्वनिष्ठावच्छेदकतानिरूपितसं-योगसम्बन्धावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नप्रकारताया एव प्रतिबन्धकतावच्छेदक-तया तादृशसम्बन्धावच्छिन्नावच्छेदकताकतादृशसम्बन्धावच्छिन्ननिरूपकताकाऽधि-करणत्वाऽप्रसिद्धेरिति। तन्निवेशश्च प्रकृतानुमितिप्रतिबन्धकतावच्छेदकप्रकारता-विशिष्टनिरूपकताकाधिकरणतावत्त्वं दुष्टत्वनियामकम्, वैशिष्ट्यञ्च स्वसामानाधि-

करणयस्व निरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिकताकपर्याप्त्यनुयोगिताव-च्छेदकरूपवृत्तित्वस्वावच्छेदकतात्वावच्छिन्नप्रतियोगिकताकपर्याप्त्यनुयोगितावच्छेदक-त्वैतत्त्रितयसम्बन्धेन प्रथमरूपवृत्तित्वञ्च स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छि-न्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, द्वितीयरूपवृत्तित्वञ्च स्वा-वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति दिक्।

## गादाधरी

भ्रमपदं निश्चयसामान्यपरम्, तेन सद्धेत्वादीत्यादिपदग्राह्यसाध्यशून्यपक्षक-दुष्टहेतौ प्रतिबन्धकप्रमाविषयसाध्याभावादेरेव सत्त्वेऽपि नातिप्रसङ्गः। उक्तव्याख्या-नेऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वं विवक्षणीयम्। विशेषणीभूतवह्न्यभावाद्यवि-षयके शुद्धह्रदत्वादिना ह्रदादिविषयकज्ञाने वह्न्यभावविशिष्टह्रदत्वाद्यवच्छिन्नविल-क्षणविषयतानिरूपकत्वस्यासत्त्वेनोक्तासम्भावानवकाशात्। तथा च केवलवह्न्यभा-वत्वावच्छिन्नविषयकत्वस्य प्रतिबन्धकतातिरिक्तवृत्तित्वान्नातिप्रसंग इत्यर्थः।

## विमलप्रभा

सद्धेतौ भ्रमविषयसाध्याभावादावतिप्रसङ्गवदसद्धेतावपि प्रमाविषयसाध्या-भावादावतिव्याप्तिप्रदर्शनार्थं दीधितिग्रन्थस्य भ्रमपदं भ्रमप्रमोभयसाधारणनिश्च-यपरमित्यभिप्रेत्याह—भ्रमपदमिति। भ्रमपदं=पक्षविशेष्यकभ्रमविषयेत्यत्र दीधि-तिस्थभ्रमपदम्। निश्चयसामान्यपरम्=निश्चत्वेन रूपेण भ्रमप्रमोभयबोधकम्। तेन = भ्रमपदस्य निश्चयसामान्यपरत्वकथनेन। साध्यशून्यपक्षकदुष्टहेतौ = वह्नि - शून्यह्रदपक्षकवह्निसाध्यकधूमादिहेतौ। बाधितादिहेताविति यावत्। प्रतिबन्ध-कप्रमाविषयसाध्याभावादेः=ह्रदधार्मिकवह्न्यनुमितिप्रतिबन्धकीभूता या वह्न्यभाव-वद्ध्रदविषयिणी प्रमा तद्विषयकवह्न्यभावादेः। सत्त्वेऽपि=स्वज्ञानविषयप्रकृतहेतुता-वच्छेदकवत्त्वसम्बन्धेन हेतौ वर्त्तमानत्वेऽपि। नातिप्रसंगः=नैकदेशेऽतिव्याप्तिः। केवलवह्न्यभावविषयकत्वस्याऽनुमितिप्रतिबन्धकताऽतिरिक्तवृत्तित्वात् इति शेषः। उक्तव्याख्याने=यद्विषयकत्वेनेत्यस्य यादृशविशिष्टविषयकत्वेनेति व्याख्याने। अन-तिरिक्तवृत्तित्वमेवेत्यत्रैवकारेण स्वरूपसम्बन्धरूपावच्छेदकत्वव्यवच्छेदः कृतः।

ह्रदादिविषयकज्ञाने = ह्रदत्वरूपेण केवलह्रद इत्याकारकज्ञाने । विलक्षणविषयतानिरूपकत्वस्य = वह्न्यभावह्रदत्वरूपधर्मद्वयावच्छिन्ना या शुद्धह्रदत्वावच्छिन्नविषयता तादृशविषयतातो या विलक्षणविषयता तन्निरूपकत्वस्य । नोक्ताऽसम्भवः = न पूर्वोक्तरीत्या सद्धेतुमात्रे लक्षणागमनप्रसङ्गः । तथा च = अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशे च । प्रतिबन्धकतातिरिक्तवृत्तित्वात् = प्रतिबन्धकताशून्यकेवलवह्न्यभाव- इति ज्ञाने वृत्तित्वात् । नातिप्रसंगः = नैकदेशे वह्न्यभावादावतिव्याप्तिः । अयमर्थः । यद्विषयकत्वेनेत्यस्य यादृशविशिष्टविषयकत्वरूपार्थाऽङ्करणे स्वरूपसम्बन्धरूपावच्छेदकताप्रवेशे च यथा पर्वतो वह्निमान् धूमादित्यादिसद्धेतौ वह्न्यभाववान् पर्वत इति भ्रममादाय वह्न्यभावादावतिव्याप्तिः, तथैव ह्रदो वह्निमान् धूमादित्याद्यसद्धेतावपि ह्रदधार्मिकवह्न्यनुमितिप्रतिबन्धकवह्न्यभाववान् ह्रद इति प्रमामादाय वह्न्यभावादावतिव्याप्तिः सम्भवतीति मनसि निधाय दीधितिस्थभ्रमपदस्य निश्चयसामान्यरूपार्थः कार्यः । यद्रूपावच्छिन्नविषयकत्वेनेति व्याख्याने तृतीयार्थोऽवच्छेदकताऽनतिरिक्तवृत्तित्वरूपैव, न तु स्वरूपसम्बन्धरूपः, तन्निवेशे पूर्वोक्तरीत्या एकदेशेऽतिप्रसङ्गो दुर्वारः, तथा च विशिष्टस्य शुद्धाऽभिन्नत्वेन । [ विशिष्टं, शुद्धान्नातिरिच्यन इति नियमेन ] वह्न्यभावविशिष्टह्रदविषयतायाः शुद्धह्रदविषयतातः अभिन्नतया केवलह्रद इत्याकारकज्ञाने वर्त्तमानत्वेऽपि वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविलक्षणविषयतायाः केवलह्रदादिविषयकह्रद इति ज्ञानेऽवर्त्तमानतया प्रतिबन्धकतानतिरिक्तवृत्तित्वान्नासम्भवः । एवमनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशे शुद्धवह्न्यभावत्वाद्यवच्छिन्नविषयतायाः प्रतिबन्धकताऽतिरिक्ते केवलवह्न्यभाव इति ज्ञाने वर्त्तमानतयाऽनतिरिक्तवृत्तित्वविरहान्नातिप्रसङ्गसम्भावनेति भावः ।

## दीधितिः

अवच्छेदकत्वञ्चेहानतिरिक्तवृत्तित्वम् ।

## गादाधरी

ननु स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशेऽयमेवातिप्रसङ्गो दुर्वारः' अप्रामाण्यज्ञानाभावविशिष्टयद्रूपाच्छिन्नविषयकनिश्चयत्वं प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिक-

रणमित्येतादृशविवक्षया तादृशातिप्रसङ्गवारणे पुनरसम्भवः, वह्न्यभावत्वादिना घटाद्यवगाहिनो वह्न्यभाववान् ह्रद इति ज्ञानस्यापि प्रतिबन्धकतया तत्साधारण्यानुरोधेन वह्नित्वावच्छिन्नप्रकारतानिरूपिताऽभावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वाच्छिन्नविशेष्यताकनिश्चयत्वेनैव प्रतिबन्धकताया वाच्यततया वह्न्यभावविशिष्टह्रदत्वाच्छिन्नविषयतायास्तादृशप्रकारतानिरूपितह्रदत्वावच्छिन्नविषयतात्वेनाऽवच्छेदकत्वेऽपि अप्रमाण्यज्ञानाभावविशिष्टह्रदत्वावच्छिन्नविषयताकनिश्चयत्वस्यावच्छेदकतापर्याप्त्यनधिकरणत्वादतस्तृतीयाया अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वं स्फुटयति-अवच्छेदकत्वं चेति। इह=लक्षणे घटकत्वं सप्तम्यर्थः।

## विमलप्रभा

तृतीयार्थोऽवच्छेदकताऽनतिरिक्तवृत्तित्वरूप एवेति मतं समर्थयति—नन्वित्यादिग्रन्थेन। अयमेवातिप्रसङ्गः=वह्न्यभावादिरूपैकदेशेऽतिव्याप्तिः। अयमेवेत्यत्र एवकारस्य दुर्वारपदेन सहान्वयः। एतादृशविवक्षया=एतादृशलक्षणेन। तादृशातिप्रसङ्गवारणे वह्न्यभावादिरूपैकदेशेऽतिव्याप्तिवारणे। पुनरसम्भवः=पुनर्लक्ष्यमात्रे लक्षणागमनप्रसङ्गः। ज्ञानस्यापि=भ्रमात्मकज्ञानस्यापि। तत्साधारण्यानुरोधेन=भ्रमात्मकज्ञानसाधारण्यानुरोधेन। वाच्यतया=निवेश्यतया। तादृशप्रकारता=वह्न्यभावत्वाद्यवच्छिन्नप्रकारता। पर्याप्त्यनधिकरणत्वात्=प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणत्वाभावात्। अतः=अतिप्रसङ्गभयतः। तृतीया याः=यद्विषकत्वेनेत्यत्र तृतीयाविभक्तेः। स्फुटयति=करोति। लक्षणे=यद्विषयकत्वेनेत्यादिलक्षणे। सप्तम्यर्थः=लक्षणे इत्यत्र सप्तम्याः घटकत्वमर्थः। अयमर्थः। यद्विषयकत्वेनेत्यस्य यद्रूपावच्छिन्नविषयकत्वेनेत्यर्थविवक्षायामपि यदि तृतीयार्थोऽवच्छेदकता स्वरूपसम्बन्धरूपः निवेश्यते तदा यद्रूपावच्छिन्नविषयता प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावती तद्रूपावच्छिन्नत्वमित्येव लक्षणार्थस्तथा च पुनः पर्वतो वह्निमान् धूमादित्यादिसद्धेतौ ह्रदो वह्निमान् जलादित्याद्यसद्धेतौ च केवलवह्न्यभावादावतिव्याप्तिः, केवलवह्न्यभावत्वावच्छिन्नविषयतायाः पर्वतह्रदादिरूपपक्षविशेष्यकवह्निप्रकारकानुमितिप्रतिबन्धकतानिरू

पितस्वरूपसम्बन्धरूपावच्छेदकत्वात् । यद्य तादृशातिप्रसङ्गवारणायाऽप्रामाण्यज्ञा-नाभावविशिष्टयद्रूपावच्छिन्नविषयताकत्वं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपि-तप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतायाः पर्याप्त्यधिकरणं तद्रूपाव-च्छिन्नत्वं [यादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताशाल्य-प्रामाण्यज्ञानाभावविशिष्टनिश्चयत्वावच्छिन्ननिरूपकतावच्छेदकतात्वावच्छिन्नपर्याप्त्य-नुयोगितावच्छेदकं यत् प्रकृतानुमितिनिरूपितप्रतिबन्धकतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तादृशरूपवृत्तिनिरूपकतानिरूपितविषयता-त्वावच्छिन्नावच्छेदकतानिरूपितनिरूपकतात्वावच्छिन्नावच्छेदकतानिरूपितपरम्परा-वच्छेदकतावद्रूपवृत्तिनिरूपकतात्वत्वं ] हेत्वाभासत्वमिति लक्षणार्थः क्रियते तदा वह्न्यभावत्वावच्छिन्नविषयतायां पर्याप्तिसम्बन्धेन प्रतिबन्धकतावच्छेदकता-विरहेण [ अर्थात् एकदेशीयविषयतायां स्वरूपसम्बन्धसत्त्वेऽपि प्रत्येके पर्याप्तिसम्ब-न्धेनावच्छेदकता नास्ति अस्ति च समुदाये इति तादृशावच्छेदकतापर्याप्त्यधिक-रणत्वस्यैकदेशविषयतायामभावेन] यद्रूपावच्छिन्नविषयतापदेन वह्न्यभावत्वा-द्यवच्छिन्नविषयतायाः धारणासम्भावान्नैकदेशे तादृशविषयतामादायातिप्रसङ्ग इ-त्युच्यते तथापि पुरःसम्भवस्तदवस्थ एव, तथा हि वह्न्यभावत्वेन घटावगाहिवह्न्यभाववान् ह्रद इत्याकारकभ्रमज्ञानस्यापि ह्रदधर्मिकवह्न्यनुमितिप्रतिबन्धकतया तादृशभ्रमसाधा-रण्यानुरोधेन संयोगसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपिताभाव-त्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नाभावत्वावच्छिन्नप्रकारतानिरू-पितह्रदत्वावच्छिन्नविशेष्यताकनिश्चयत्वेनैव प्रतिबन्धकत्वं वाच्यं, तथा च वह्न्यभाव-विशिष्टह्रदत्वावच्छिन्नविषयतायां वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वाव-च्छिन्नविषयतात्वेन प्रतिबन्धकतावच्छेदकत्वस्य वर्त्तमानत्वेऽपि तादृशवह्निप्रकारतानि-रूपिताभावप्रकारतानिरूपितह्रदत्वावच्छिन्नविषयताकनिश्चयत्वं न निरुक्तप्रतिबन्ध-कतावच्छेदकतापर्याप्त्यधिकरणमिति तादृशविषयतायाः यद्रूपावच्छिन्नविषयतापदे-न धर्त्तुमशक्यतया सर्वत्रैव लक्ष्ये लक्षणागमनात् । अतः स्वरूपसम्बन्धरूपावच्छेदकत्वं न तृतीयार्थः किन्त्वनतिरिक्तवृत्तित्वरूपावच्छेदकत्वमेव । तथा च यद्रूपावच्छिन्नवि-षयताव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपत्व-

च्छिन्नत्वं लक्षणार्थः । एवञ्च वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयताव्यापिका भवति ह्रदधर्मिकवह्न्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितवह्न्यभाववान् ह्रद इति निश्चयनिष्ठप्रतिबन्धकतेति तद्रूपावच्छिन्नत्वं वह्न्यभाववद्ध्रदादौ सत्त्वात् नासम्भवावकाश इति ।

## गादाधरी

न च विशिष्टविषयकत्वस्याप्रतिबन्धकसंशयादौ सत्त्वात् पुनरसम्भव इति वाच्यम् । ज्ञानस्येत्यत्र ज्ञानपदमनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयपरम् । षष्ठ्यर्थ आधेयत्वं तस्य यद्विषयकत्वेऽन्वयः । एवञ्च तादृशनिश्चयवृत्तित्वविशिष्टं यादृशविशिष्टविषयकत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशत्वस्य विवक्षणीयतया असम्भवाद् । अनतिरिक्तवृत्तित्वं, स्वव्यापकतत्कत्वं, न तु तच्छून्यावृत्तित्वं, तादृशनिश्चयवृत्तित्वविशिष्टस्य यादृशविशिष्टविषयकत्वस्य विशेष्यीभूतविशिष्टविषयकत्वाऽनतिरिक्ततया तस्याऽतिप्रसक्तत्वे विशिष्टे तस्मिन्ननतिप्रसक्तत्वस्य दुर्घटत्वात् ।

## विमलप्रभा

अनतिरिक्तवृत्तित्वरूपावच्छेदकताघटितलक्षणेऽप्यसम्भवमाशङ्कते—न चेत्यादिना । विशिष्टविषयकत्वस्य = वह्न्यभावादिविशिष्टह्रदादिविषयकत्वस्य । संशयादौ = ह्रदो वह्निमान्न वेत्यादि संशये, वह्निमान् ह्रदो वह्न्यभाववानित्याकारकाहार्यज्ञाने, ह्रदो वह्न्यभाववानिदं ज्ञानमप्रमेत्यप्रामाण्यज्ञाने च । षष्ठ्यर्थः = ज्ञानस्येत्यत्र षष्ठीविभक्तेरर्थः । तस्य = आधेयत्वस्य । एवञ्च = ज्ञानपदस्यैतादृशार्थकरणे च । तादृशनिश्चयः = अनाहार्याप्रामाण्यज्ञानानास्कन्दितसंशयान्यज्ञानात्मकनिश्चयः । यादृशविशिष्टविषयकत्वं = यद्रूपावच्छिन्नविषयकत्वम् । तादृशत्वस्य = तद्रूपावच्छिन्नत्वस्य । विवक्षणीयतया = लक्षणार्थत्वेन प्रतिपादनीयतया । असम्भवाभावात् = संशयादौ तादृशविषयताविरहेणासम्भवविरहात् । अनतिरिक्तवृत्तित्वञ्च = लक्षणघटकाऽनतिरिक्तवृत्तित्वपदार्थश्च । स्वव्यापकतत्कत्वं = स्वं यद्रूपावच्छिन्नविषयता तद्व्यापकं यत्प्रकृतानुमितिप्रतिबन्धकत्वं तत्कत्वं स्वस्मिन् अनतिरि-

त्तवृत्तित्वं, विषयताव्यापकप्रतिबन्धकताकत्वमिति यावत् । तच्छून्यावृत्तित्वं = प्रतिबन्धकत्वाभाववदवृत्तिरिति यावत् । विशिष्टविषयकत्वस्य = तादृशनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषकत्वस्य, वह्न्यभावादिविशिष्टह्रदादिविषयकत्वस्येति यावत् । विशेष्यीभूतविशिष्टविषयत्वानतिरिक्ततया = शुद्धह्रदादिविषयकत्वाऽभिन्नतया । तस्य = केवलह्रदत्वाद्यवच्छिन्नविषयकत्वस्य । अतिप्रसक्तत्वेन = प्रतिबन्धकत्वाभाववति वर्त्तमानत्वेन । विशिष्टे = वह्न्यभावादिविशिष्टह्रदादिविषयकत्वे । अनतिप्रसक्तत्वस्य = प्रतिबन्धकताशून्यावृत्तित्वस्य । दुर्घटत्वात् = विशेष्यवृत्तिधर्मस्य विशिष्टानुयोगिकत्वाभावेनासम्भवात् ।

अयमर्थः । यद्रूपावच्छिन्नविषयता प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्तिः तद्रूपावच्छिन्नत्वरूपलक्षणार्थकरणेऽपि असम्भवस्तदवस्थः, तथा हि ह्रदो वह्निमान् जलादित्यादौ ह्रदो वह्निमान्न वेति संशये वह्निमान् ह्रदो वह्न्यभाववानित्याहार्यज्ञाने ह्रदो वह्न्यभाववानिदं ज्ञानमप्रमेत्यप्रामाण्यज्ञानास्कन्दितज्ञाने च वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयतायाः वर्त्तमानतया तत्र च ह्रदधर्मिकवह्न्यनुमितिप्रतिबन्धकताविरहेण प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वस्य वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयतायामभावादव्याप्तिः । अनयैव रीत्या सर्वत्र लक्ष्ये लक्षणागमनादसम्भव इति ।

तद्वारणाय मूलोक्तलक्षणघटकीभूतज्ञानपदमनाहार्याप्रामाण्यज्ञानानास्कन्दितसंशयान्यज्ञानात्मकनिश्चयपरम् । एवञ्चानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयता भवति प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिः तद्रूपावच्छिन्नत्वं समुदितलक्षणार्थः । तथा चानाहार्याप्रामाण्यज्ञानानास्कन्दितवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताशालिवह्न्यभाववान् ह्रद इत्याकारकनिश्चयवृत्तित्वविशिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयतायाः संशयाहार्यप्रामाण्यज्ञानादावभावेन भवति त्र तादृशविषयता ह्रदो वह्निमानित्यादिसमूहालम्बनानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिरिति तद्रूपावच्छिन्नत्वं वह्न्यभाववद्ध्रदरूपबाधे सत्त्वाल्लक्षणसंगतिः । अनयैव दिशा सर्वत्र लक्षणसमन्वयसम्भवेन नासम्भव इति ।

इदमुपलक्षणम्, अव्याप्यवृत्तित्वभ्रमानास्कन्दितत्वमपि विशेषणन्देयमतो न वह्न्यभाववद्ध्रदादावसम्भवः। भ्रमत्वनिवेशात् वृक्षः कपिसंयोगवानित्यत्र कपि-संयोगाभाववद्वृक्षे नातिप्रसंगः।

अत्राऽनतिरिक्तवृत्तित्वं यदि तच्छून्यावृत्तित्वमर्थात् प्रकृतानुमितिप्रतिबन्धक-त्वाभाववदवृत्तित्वरूपं तदा यद्रूपावच्छिन्नविषयता प्रकृतानुमितित्वव्यापकप्रतिबध्य-तानिरूपितप्रतिबन्धकत्वाभाववदवृत्तिः तद्रूपावच्छिन्नत्वरूपार्थे पुनरसम्भवः, वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयतायाः शुद्धह्रदत्वावच्छिन्नविषयतातो "विशिष्टं शुद्धान्नातिरिच्यत" इति नियमेनाभिन्नतया ह्रदो वह्निमानित्याद्यनुमितिप्रतिब-न्धकत्वाभाववति शुद्धह्रद इति ज्ञाने शुद्धह्रदविषयतातः अभिन्नायाः वह्न्यभावविशिष्ट-ह्रदविषयतायाः वर्त्तमानत्वेनानतिरिक्तवृत्तित्वाभावात्। अतोऽनतिरिक्तवृत्तित्वं स्वव्या-पकतत्कत्वरूपमेव, तथा चानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टय-द्रूपावच्छिन्नविषयताव्यापिका भवति प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपित-प्रतिबन्धकता तद्रूपावच्छिन्नत्वमिति पर्यवसितलक्षणेऽनाहार्याप्रामाण्यज्ञानानास्कन्दि-तनिश्चयवृत्तित्वविशिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताव्यापकत्वस्य निरुक्ता-नुमितिप्रतिबन्धकतायां सत्त्वान्नासम्भव इति।

## बलदेवी

विशिष्टदोषविषयकत्वस्य संशयादौ सत्त्वात् पुनरसम्भव इति भट्टाचार्यः।

नन्वत्राभावपक्षकवह्निसाध्यकसंयोगसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धेन वह्न्यभावस्य स्वरूपेण हेतुतास्थले वह्न्यभाववदभावे लक्षणसमन्वयसम्भवे कथमस-म्भवः, अभावो वह्निमान्नवेति संशयेऽपि समूहालम्बनानुमितित्वव्यापकपक्षतावच्छे-दकविशिष्टे तादृशहेत्ववगाहित्वघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपिताया अभावत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धाव-च्छिन्नवह्नित्वावच्छिन्नप्रकारताघटितप्रतिबन्धकतायाः सत्त्वात्, तादृ-शसंशयस्याभावांशे तादृशसम्बन्धेन वह्न्यवगाहित्वादिति चेन्न। अभावो वह्निमान् वह्न्यभाववदवृत्तितादृशवह्न्यभाववांश्चेति ज्ञानस्य व्याप्तिघट-

काभावांशे तादृशप्रतियोगितासम्बन्धेन वह्न्यवगाहित्वेनाहार्यतया तादृशानुमित्यप्रसिद्धेरिति । न च प्रतियोगित्वसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभाववदभावकालीनघटसाध्यकवह्निमद्ध्रदहेतौ वह्न्यभाववद्ध्रदरूपसाधनाऽप्रसिद्ध्यादावव्याप्तिविरहः, दोषविषयकसंशयस्यापि प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितसाध्यविशेषणाऽसिद्धिप्रतिबन्धकत्वादिति वाच्यम् । विशेषणांशे संशयत्वस्वीकारे । अभावांशे प्रतियोगितासम्बन्धेन वह्निसंशयात्मकह्रदो वह्निमान् प्रतियोगितासम्बन्धेन वह्निवह्न्यभाववदभाववान्वेति संशयमादायाऽव्याप्तेः, आदिपदग्राह्याहार्याप्रामाण्यज्ञानास्कन्दितज्ञानमादायाप्यसम्भव इति दिक् ।

न चाऽनतिरिक्तवृत्तित्वं स्वव्यापकतत्कत्वमिति कल्पे प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वाभावेऽनाहार्याप्रामाण्यज्ञानानास्कन्दितदोषविषयकनिश्चयवृत्तित्वाभाव एव कुतो नोक्तः व्यापकत्वापेक्षया लाघवात्, न चाधिकरणभेदेनाभावभेदस्वीककर्तृमते घटादिप्रतिबन्धकत्वाभावे तादृशोदासीनपटादिनिश्चयवृत्तित्वाभावसत्त्वात् पटादावतिव्याप्तिरिति वाच्यं, तादृशप्रतिबन्धकत्वाभावत्वे तादृशनिश्चयवृत्तितानवच्छेदकत्वविवक्षणेनाऽतिव्याप्तेरभावात्, अधिकरणभेदेनाभावभेदस्वीकर्तृमतेऽपि तादृशाभावत्वस्यानुगतत्वादिति चेन्न । शुद्धाभावत्वे निश्चयवृत्तितावच्छेदकत्वसत्त्वे विशिष्टाभावेऽपि तत्सम्भवादसम्भवापत्तेः । यदि च तादृशप्रतिबन्धकतात्वावच्छिन्नप्रतियोगिताकाऽभावत्वावच्छिन्ननिरूपकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतधर्मे तादृशप्रतिबन्धकत्वाभावगतसमुदायत्वे तादृशनिश्चयनिरूपितवृत्तितात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभावो निवेश्यते, तदा गौरवम्, अभावद्वयपर्याप्तिघटितत्वात्, सिद्धान्ते चैकाभावस्य निवेशात् एवं प्रतिबन्धकत्वाभावे तादृशविषयत्वाधिकरणावृत्तित्वमेव प्रतिबन्धकतायां तद्व्यापकत्वं यथा वह्न्यभावे धूमाधिकरणावृत्तित्वमेव वह्नौ धूमव्यापकत्वमित्यनुमितौ भट्टाचार्येणोक्तत्वादिति ।

## गादाधरी

यत्तु प्रतिबन्धकताशून्यतादृशनिश्चयावृत्तित्वमेवाऽनतिरिक्तवृत्तित्वम्, अतो

नोक्तरीत्या असम्भव इति, तदसत् । तथा सति मूलोक्तस्य ज्ञानस्येत्यस्य वैयर्थ्यापत्तेः ह्रदत्वावच्छिन्ना या वह्न्यभावविशिष्टह्रदत्वाद्यवच्छिन्नविषयकयत्किञ्चिज्ज्ञानीय-विषयता तन्निरूपकत्वस्य प्रतिबन्धकताशून्यतादृशनिश्चयावृत्तित्वेन शुद्धह्रदत्वावच्छि-न्नेऽतिप्रसङ्गाच्च । मन्मते चानुमितिप्रतिबन्धकतायास्तादृशनिश्चयवृत्तित्वविशिष्टह्रद-त्वाद्यवच्छिन्नविषयतात्वावच्छिन्नव्यापकताविरहेणाऽतिप्रसङ्गानवकाशात् ।

## विमलप्रभा

अनतिरिक्तवृत्तित्वं न स्वव्यापकतत्कत्वरूपम् किन्त्वन्यादृशमेव तथापि न पूर्वो-क्तासम्भवसम्भावनेति वादिमतमुपन्यस्यति–यत्त्विति ।

यत्त्वित्यस्य तदसदित्यनेनान्वयः । तादृशनिश्चयावृत्तित्वम् = अनाहार्यप्रा-माण्यज्ञानानास्कन्दितनिश्चयावृत्तित्वम् । अतः = एतादृशनिवेशवसतः । उक्तरी-त्या = विशिष्टस्य शुद्धाभिन्नत्वादिप्रदर्शितरीत्या । नासम्भवः = न लक्ष्यमात्रे लक्षणा-गमनम् । तदसत् = तन्न समीचीनं । तथा सति = प्रतिबन्धकताशून्यतादृशनिश्चया-वृत्तित्वरूपाऽनरितिक्तवृत्तित्वनिवेशे सति । मूलोक्तस्य = चिन्तामण्युक्तस्य । ज्ञानस्य = ज्ञानपदस्य । वैयर्थ्यात् = ज्ञानपदमन्तरैवासम्भवादिवारणसम्भवे ज्ञानपदनिवेशानर्थ-क्यप्रसङ्गात् । यत्किञ्चिज्ज्ञानीयविषयता = वह्न्यभाववान् ह्रद इत्याकारकज्ञानीय-ह्रदत्वाद्यवच्छिन्नविषयता । तन्निरूपकत्वस्य = तादृशज्ञानीयविषयतानिरूपकत्व-स्य । तादृशनिश्चयः = प्रतिबन्धकताशून्यानाहार्यप्रामाण्यज्ञानानास्कन्दितनिश्चयः । अवृत्तित्वेन = ज्ञानभेदेन विषयताभेदप्रयुक्तावर्त्तमानत्वेन । अतिप्रसङ्गात् = अतिव्या-प्तिः स्यात् । मन्मते = स्वव्यापकतत्कत्वरूपानतिरिक्तवृत्तित्वरूपावच्छेदकत्ववादि-मते । अनुमितिप्रतिबन्धकतायाः = प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिब-न्धकतायाः । तादृशनिश्चयः = अनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयः । अयम-र्थः । यद्रूपावच्छिन्नविषयताप्रतिबन्धकताशून्यानाहार्याप्रामाण्यज्ञानानास्कन्दितनि-श्चयावृत्तिः तद्रूपावच्छिन्नत्वरूपान्यविधानतिरिक्तवृत्तित्वघटितलक्षणकरणेनैव ह्रदो वह्निमाञ्जलादित्यादौ वह्न्यभाववान् ह्रद इत्याकारकज्ञानीया या वह्न्यभाववद्ध्र-दत्वावच्छिन्ना विषयता सम्भवति प्रतिबन्धकताशून्यानाहार्यप्रामाण्यज्ञानानास्कन्दित-

घटः पट इत्यादिनिश्चयावृत्तिः तद्रूपावच्छिन्नत्वं वह्न्यभाववद्ध्रदादौ सत्त्वात् लक्षणसङ्गत्याऽसम्भववारणसम्भवे स्वव्यापकतत्कत्वरूपानतिरिक्तवृत्तित्वादरो व्यर्थ इति वाच्यं, तथा सति चिन्तामणिलक्षणस्थज्ञानपदस्य वैयर्थ्यापत्तिः ज्ञानपदमन्तरेणै-वानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयलाभसम्भवात् । एवं वह्न्यभाववान् ह्रद इत्याकारकज्ञानीया या ह्रदत्वावच्छिन्नविषयता सा प्रतिबन्धकताशून्यानाहार्याप्रामा-ण्यज्ञानानास्कन्दितनिश्चयेऽवर्त्तमानेति तद्रूपावच्छिन्नत्वस्य शुद्धह्रदे सत्त्वात् शुद्धह्रदे-ऽतिव्याप्तिः स्यादतः प्रतिबन्धकताशून्येत्याद्यर्थः न समीचीनः । स्वव्यापकतत्कत्वरू-पानतिरिक्तवृत्तित्ववादिमते चानाहार्याप्रामाण्यज्ञानानास्कन्दितकेवलह्रदविषयकनि-श्चवृत्तित्वविशिष्टह्रदत्वावच्छिन्नविषयताव्यापकतायाः प्रकृतानुमितिप्रतिबन्धकतायां विरहेण न केवलह्रदेऽतिव्याप्तिः, न वा मूलोपात्तज्ञानपदस्य वैयर्थ्यसम्भावनेति ।

तथा च, अनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छि-न्न विषयताव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपा-वच्छिन्नत्वं हेत्वाभासत्वमिति पर्यवसितलक्षणम् । भवति च ह्रदो वह्निमान् ज-लादित्यादौ वह्न्यभाववद्ध्रददरूपबाधादौ लक्षणसङ्गतिः, तथा हि अनाहार्याप्रामा-ण्यज्ञानानास्कन्दितवह्न्यभाववान् ह्रद इत्याकारकनिश्चयवृत्तित्वविशिष्टवह्न्यभाव-वद्ध्रदत्वावच्छिन्नविषयताव्यापिका भवति ह्रदो वह्निमान् वह्निव्याप्यजलवानित्या-का रकानुमितित्वव्यापकप्रतिबध्यतानिरूपितस्वरूपसम्बन्धावच्छिन्नवह्न्यभावत्वाव-च्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्ना प्रतिबन्ध-कतेति तद्रूपावच्छिन्नत्वं वह्न्यभाववद्ध्रदे सत्त्वात् । अनयैव दिशा व्यभिचार-विरोधादावपि संगतिः कार्येति ।

## बलदेवी

यत्तु प्रतिबन्धकताशून्यताद्दशनिश्चयावृत्तियद्रूपावच्छिन्नविषयित्वं तद्रूपवत्त्वमर्थः इति तत्तुच्छम्, ज्ञानपदस्य वैयर्थ्यापत्तेः ह्रदत्वावच्छिन्ने-ऽतिप्रसङ्गाच्चेति भट्टाचार्यः ।

अथात्र यद्रूपावच्छिन्नविषयितात्वं प्रकृतानुमितिप्रतिबन्धकताशून्यतादृशनिश्चयवृत्तितानवच्छेदकमिति विवक्षणेनैव सामञ्जस्ये कथं तच्छून्यावृत्तित्वकल्पपरित्यागः, विषयितायाः भेदेऽपि विषयितात्वस्यानुगतत्वेन ह्रदत्वावच्छिन्नविषयितात्वस्य प्रतिबन्धकताशून्यह्रद इति निश्चयनिरूपितवृत्तितावच्छेदकत्वेन नोक्तातिव्याप्तिरिति। न च शुद्धविषयितात्वे तादृशनिश्चयनिरूपितवृत्तितावच्छेदकत्वसत्त्वेन विशिष्टविषयितात्वस्यानतिरिक्ततया तत्रापि तादृशावच्छेदकत्वस्यैव सत्त्वात् तद्रूपपर्यन्तस्य निवेशेऽपि तथात्वादसम्भवः गुणे विशिष्टसत्तेति प्रमोदयेन-वृत्तितायामवैलक्षण्यादिति वाच्यम्। वृत्तितास्थानेऽधिकरणतानिवेशः, तथा हि यादृशसमुदायत्वं प्रतिबन्धकताशून्यतादृशनिश्चयनिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेकत्वसामान्याभाववत्तद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकतावत्त्वस्यैव वक्तव्यत्वात्। संसर्गमुद्रया निवेशस्तु प्रतिबन्धकताशून्यतादृशनिश्चयनिष्ठाधिकरणता [विषयता] विशिष्टान्यरूपाश्रयत्वमेव। वैशिष्ट्यञ्च स्वनिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन। तथा च तादृशाधिकरणताविशिष्टत्वं ह्रदत्वगतैकत्वे न तु वह्न्यभाववद्ध्रदत्वगतसमुदायत्वे इत्यसम्भवानवकाशः। न चासाधारण्येऽव्याप्तिः, असाधारण्यतावच्छेदकधर्मस्य=वह्निव्यापकीभूताभावप्रतियोगित्ववज्जलत्वादेः पक्षधर्मताज्ञानाऽसमानकालीनतादृशप्रतिबन्धकताशून्यासाधारण्यविषयकतादृशनिश्चयवृत्तिविषयितानिरूपकतावच्छेदकत्वादिति वाच्यम्, स्वमतेऽपि तादृशाव्याप्तेः समानत्वात्। यदि च स्वमते प्रकृतपक्षे प्रकृतहेतुमत्ताज्ञानकालीनत्वप्रकृतानुमित्यप्रतिबन्धकत्वोभयाभावे यद्रूपावच्छिन्नविषयतात्वव्यापकत्वं विवक्ष्यते, तदाऽस्मन्मतेऽपि पक्षधर्मिकहेतुमत्ताज्ञानकालीनप्रतिबन्धताशून्यासाधारण्यविषयताशून्यतादृशनिश्चयवृत्तिविषयतानिरूपकतानवच्छेदकत्वविवक्षणे न कश्चिद्दोषः तादृशज्ञानं यदि पक्षधर्मिकहेतुमत्ताज्ञानकालीनं तदा प्रतिबन्धकमेवेति चेन्न, ह्रदो वह्निमानित्यादौ कपिसंयोगाभाववत्कपिसंयोगवत्त्यतिव्याप्तेः। तद्विषयकज्ञानस्य नियताहार्यतया कपिसंयोगवत्कपिसंयोगाभाववत्त्वस्य तादृशनिश्चयनिष्ठाविषयितानिरूपकतानवच्छेदकत्वात्। न च स्वातन्त्र्येणानाहार्यनिश्चयनिरूपितवृत्तितावच्छेदकत्व-

निवेशेनैव तद्वारणमिति वाच्यम्, यत्र स्थलविशेषे घटविषयकं ज्ञानं वह्न्यभाववद्ध्रदविषयकं स्वतन्त्रं चेदप्रामाण्यज्ञानास्कन्दितं तत्र घटेऽतिव्याप्तेः। मन्मते यद्रूपावच्छिन्नविषयतायामभावविशिष्टान्यत्वनिवेशात्। अभावविशिष्टान्यतादृशविषयितात्वावच्छिन्नव्यापकताकुक्षत्वधिकरणतायाः प्रवेशात्, यदज्ञानान्तर्भाविणाभावविशिष्टान्यत्वं तदवच्छिन्नाधिकरणत्वं तत्र वेति। अभाववैशिष्ट्यञ्च स्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वस्वप्रतियोगिमत्त्वोभयसम्बन्धेन। प्रतियोगिमत्ता च स्ववृत्तित्वस्वाश्रयवृत्तित्वान्यतरसम्बन्धेन। भवन्मतेऽप्रामाण्यज्ञानानास्कन्दितज्ञानान्तर्भाविणाभावविशिष्टान्यविषयितायां प्रतिबन्धकताशून्याप्रामाण्यज्ञानास्कन्दितज्ञानवृत्तितयाऽसम्भवात्। न च तादृशनिश्चयवृत्तीत्यस्य प्रतिबन्धकताशून्यतादृशनिश्चयनिष्ठाधिकरणतानिरूपकतानवच्छेदकत्वरूपार्थविवक्षणेनैवे तद्दोषवारणसम्भवः। अभावविशिष्टान्यत्वनिवेशाच्च यत्र स्थले घटविषयकं नियतं ज्ञानं वह्न्यभाववद्ध्रदविषयकं स्वतन्त्रं चेत् अप्रामाण्यज्ञानास्कन्दितं तत्र घटे नातिव्याप्तिः, घटत्वावच्छिन्नविषयताया अप्रामाण्यज्ञानास्कन्दितज्ञानेऽभावविशिष्टान्यत्वात्। एवं कपिसंयोगाभाववत्कपिसंयोगवत् वृक्षे नातिव्याप्तिः, कपिसंयोगसाध्यके तद्रूपावच्छिन्नविषयताया अभावविशिष्टत्वात्, अन्यसाध्यकेऽभावविशिष्टान्यतादृशविषयितायां प्रतिबन्धकताशून्यतादृशनिश्चयवृत्तित्वादिति वाच्यं, यत्र स्थले वह्न्यभाववद्ध्रदविषयकं ज्ञानं नियमतो घटविषयकं पृथक्तया च दोषान्तरविषयकम् इदं ज्ञानमप्रमेति भ्रमास्कन्दितं तत्र घटेऽतिव्याप्तेः। किञ्च तादृशन्यूनवारकेतरवारकसकलपर्याप्तिनिवेशे न लाघवप्रत्याशेति दिक्।

अथ ह्रदादावेकदेशेऽतिव्याप्तिः कथं संगच्छते, ह्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयिताया अप्रतिबन्धकज्ञानवृत्तित्वादिति चेन्न, संयोगपक्षकसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकसंयोगाभावसाध्यकस्थले संयोगवान् संयोग इति बाधभ्रमैकदेशेऽतिव्याप्तिः। न च भ्रमवारकविशेषणेनैव तद्वारणमिति वाच्यं, यतो विशेष्यताविशिष्टावच्छेदकताशून्यत्वस्यैव भ्रमवारकविशेषणत्वे पर्यवसन्नतया संयोगवत्संयोग इति अवच्छेदकांशे भ्रमानात्मकज्ञानस्यापि तादृशविशेषणाक्रान्तत्वादिति ध्येयम्।

## गादाधरी

अथैवमपि जातित्वादिना ह्रदत्वादिविषयकस्य जातिमान् वह्न्यभाववानित्यादिज्ञानस्यापि वह्न्यभाववद्ध्रदत्वाद्यवच्छिन्नविषयकतया तस्य च ह्रदो वह्निमानित्याद्यनुमित्यविरोधित्वादसम्भवः। जलवान् वह्निमानित्यादिस्थलीयदोषासंग्रहेणाविशेषितधर्मावच्छिन्नपक्षकस्थलीयस्य किञ्चिद्विशिष्टतद्घटितस्यासंग्रहेण च पक्षतावच्छेदकाद्यंशेऽन्याप्रकारकत्वादिनिवेशस्याशक्यत्वात्, तादृशविशिष्टाघटकपदार्थाविषयकत्वस्य ज्ञानविशेषणत्वोपगमे सर्वमाकाशवदित्यादिस्थलीयबाधादौ तद्घटकाऽप्रसिद्ध्या अव्याप्तिः।

## विमलप्रभा

यद्रूपावच्छिन्नविषयताव्यापकत्वनिवेशेऽपि अथैवमित्यादिना असम्भवमाशङ्कते। एवमपि = स्वव्यापकतत्कत्वरूपानतिरिक्तवृत्तित्वनिवेशेन ह्रदाद्येकदेशेऽतिप्रसङ्गवारणेऽपि। जातित्वादिनेत्यत्रादिपदेन वाच्यत्वादिपरिग्रहः। तस्य च = जातित्वादिना ह्रदत्वावगाहिजातिमान् वह्न्यभाववानिति निश्चयस्य। अविरोधित्वात् = असमानाकारकत्वेनाप्रतिबन्धकत्वात्। जलवान् वह्निमानित्यादिस्थलीयदोषासंग्रहेण = जलवत्पक्षकवह्निसाध्यकस्थलीयवह्न्यभाववज्जलवत्रूपबाधेऽव्याप्तिभयेन। अविशेषितधर्मावच्छिन्नपक्षकादिस्थलीयस्य = अविशेषितः विशेष्यताशून्यो यो ह्रदत्वादिरूपो धर्मः तदवच्छिन्नपक्षकस्थलीयस्य, येन रूपेण पक्षतावच्छेदकस्य दोषघटकत्वं तद्रूपानवच्छिन्नधर्मावच्छिन्नपक्षकस्थलीयस्येति यावत्। किञ्चिद्विशिष्टतद्घटितस्य = किञ्चिद्धर्मविशिष्टपक्षतावच्छेदकघटितस्य। ह्रदत्वत्वादिविशिष्टह्रदत्वादिघटितदोषस्येति यावत्। असंग्रहेण = संग्रहाभावेन। पक्षतावच्छेदकाद्यंशे = ह्रदत्वादिरूपं यत् पक्षतावच्छेदकं तदंशे। अन्याप्रकारकत्वादिनिवेशस्य = अन्याप्रकारकत्वाप्रकारकत्वनिवेशस्य। अशक्यत्वात् = अयोगात्। तादृशविशिष्टाघटकपदार्थाविषयकत्वस्य = यद्रूपावच्छिन्ने लक्षणं संगमनीयं तद्रूपावच्छिन्नो यः बाधादिरूपो दोषः तदघटकस्तदविषयकप्रतीततिविषयः पदार्थसद्विषयताशून्यत्वस्य। ज्ञानविशेषणत्वोपगमे = निश्चयांशे विशेषणतया भानस्वीकारे। बाधादौ = आकाशाभाव-

वत्सर्वरूपबाधादौ। आदिना सत्प्रतिपक्षसंग्रहः। तदघटकाऽप्रसिद्धया। सकलस्यैव वस्तुनः बाधघटकत्वेन तादृशबाधाद्यविषयकपदार्थाऽप्रसिद्धया। अव्याप्तिः=तादृशबाधे लक्षणागमनप्रसंगः। अयमर्थः। स्वव्यापकतत्कत्वरूपाऽनतिरिक्तवृत्तित्वरूपावच्छेदकतानिवेशपक्षेऽपि ह्रदो वह्निमान् जलादित्यादौ सर्वत्रैव वह्न्यभाववद्ध्रदादिरूपबाधादावसम्भवः, तथा हि निरवच्छिन्नह्रदत्वनिष्ठावच्छेदकताकविशेष्यताकह्रदो वह्निमानित्याद्याकारकसमूहालम्बनानुमितिं प्रति निरवच्छिन्नह्रदत्वनिष्ठावच्छेदकताकविशेष्यताकवह्न्यभाववत्ताज्ञानस्यैव समानाकारकत्वेन प्रतिबन्धकता न तु जातित्वादिना ह्रदत्वावगाहिजातिमान् वह्न्यभाववानित्यसमानाकारकज्ञानस्येति वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयता तु अधिकं प्रविष्टमित्यादिन्यायेन जातित्वादिना ह्रदत्वावगाहिजातिमान् वह्न्यभाववानिति ज्ञानेऽपि वर्त्तते तत्र तादृशानुमितिप्रतिबन्धकताविरहेण निरुक्तविषयताव्यापकत्वस्य प्रकृतानुमितिप्रतिबन्धतायामभावात्। सत्प्रतिपक्षादावप्यनयैव दिशा दोषो बोध्यः। यदि च निरुक्तासम्भववारणाय पक्षतावच्छेदकनिष्ठविशेष्यतानिरूपितप्रकारताशून्यत्वं यद्रूपावच्छिन्नविषयकनिश्चये विशेषणं दीयते तदा प्रकृते पक्षतावच्छेदकीभूतह्रदत्वनिष्ठविशेष्यतानिरूपितजातित्वनिष्ठप्रकारताशून्यत्वस्य जातित्वेन ह्रदत्वावगाहि जातिमान् वह्न्यभाववानिति निश्चये विरहेण तादृशनिश्चयस्य यद्रूपावच्छिन्नविषयकनिश्चयपदेन धारणायोगात्, वह्न्यभाववद्ध्रदविषयकवह्न्यभाववान् ह्रद इत्याकारकनिश्चयस्यैव तादृनिश्चयपदेन धर्त्तुं शक्यतया तादृशनिश्चयवृत्तित्वविशिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताव्यापकतायाः ह्रदो वह्निमानित्यादिसमूहालम्बनानुमितित्वव्यापकप्रतिबध्यतानिरूपितवह्न्यभाववान् ह्रद इति निश्चयनिष्ठप्रतिबन्धकतायां सत्त्वेन तद्रूपावच्छिन्नत्वस्य वह्न्यभाववद्ध्रदरूपबाधे सत्वादनयैव दिशा सर्वत्र लक्षणसंगतिसम्भवेनासम्भव इति चेन्मैवं वोचः। तथा सति जलवत्पक्षकवह्निसाध्यकस्थलीयवह्न्यभाववज्जलवद्रूपबाधेऽव्याप्तिदुर्वारैव, तत्र पक्षतावच्छेदकजलनिष्ठविशेष्यतानिरूपितजलत्वनिष्ठप्रकारताशून्यत्वस्य वह्न्यभाववज्जलवद्रूपबाधविषयकनिश्चये विरहेण तादृशनिश्चयस्य निरुक्तनिश्चयपदेन धर्त्तुमशक्यतया निरुक्तनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयताव्यापकत्वस्य वह्न्यभावविशिष्टजलरूपबाधप्रतिबन्धकतायामभावेन लक्षणागमनात्।

एवं ह्रदो वह्निमान् ह्रदत्वादित्यादौ वह्न्यभाववद्वृत्तिह्रदत्वरूपव्यभिचार-विषयकनिश्चये पक्षतावच्छेदकीभूतह्रदत्वनिष्ठविशेष्यतानिरूपितह्रदत्वत्वनिष्ठविशेषणताशून्यत्वविरहेण [उल्लिख्यमानजातेः। स्वरूपतो न भानं किन्तु किञ्चिद्रूपेणैवेति नियमेनेदम् ] यद्रूपपदेन वह्न्यभाववद्वृत्तित्वविशिष्टह्रदत्वस्य धर्त्तुमशक्यत्वादव्याप्तिस्तादृशव्यभिचारे, इत्यतः यदि अवच्छेदकतासम्बन्धावच्छिन्नप्रतियोगिताकपक्षतावच्छेदकत्वाभाववद्धर्मनिष्ठप्रकारतानिरूपितपक्षतावच्छेदकनिष्ठविशेष्यताशून्यानाहार्यप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयताव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपावच्छिन्नत्वमित्यर्थः क्रियते तदा प्रकृतेऽवच्छेदकतासम्बन्धेन पक्षतावच्छेदकत्वस्य जलत्वे वर्त्तमानतायऽवच्छेदकतासम्बन्धावच्छिन्नप्रतियोगिताकपक्षतावच्छेदकत्वाभाववद्धर्मपदेन जलत्वस्य धर्त्तुमशक्यतया द्रव्यत्वादिकं तादृशधर्मपदेन संगृह्य तन्निष्ठप्रकारतानिरूपितविशेष्यताशून्यत्वस्य वह्न्यभाववज्जलवद्रूपबाधविषयकतादृशनिश्चये सत्त्वेन तादृशनिश्चयीयवह्न्यभाववज्जलवत्त्वावच्छिन्नविषयताव्यापकतायाः जलवान् वह्निमानित्यादिसमूहालम्बनानुमितित्वव्यापकप्रतिबध्यतानिरूपितवह्न्यभाववज्जलवद्रूपबाधनिश्चयनिष्ठप्रतिबन्धकतायां सत्त्वेन तद्रूपावच्छिन्नत्वस्योक्तबाधे सत्त्वाल्लक्षणसंगतिः। एवं व्यभिचारेऽपि लक्षणसमन्वयः स्वयमूहनीयः।

न चैवं रीत्या पक्षतावच्छेदकांशेऽन्याऽप्रकारकत्वनिवेशेऽसम्भवादिवारणसम्भवेऽपि ह्रदो वह्निमान् ह्रदत्वादित्यादावविशेषितधर्मावच्छिन्नपक्षकस्थले वह्न्यभाववद्वृत्तित्वविशिष्टह्रदत्वरूपव्यभिचारेऽव्याप्तिः, तथा हि अवच्छेदकतासम्बन्धावच्छिन्नप्रतियोगिताकपक्षतावच्छेकत्वाभाववद्धर्मपदेन वह्न्यभाववद्वृत्तित्वस्य ग्रहीतुं शक्यतया तन्निष्ठप्रकारतानिरूपितह्रदत्वनिष्ठविशेष्यताशून्यत्वस्य तादृशव्यभिचारविषयकनिश्चये विरहेण लक्षणागमनात्।

न चैतद्दोषवारणाय यद्रूपावच्छिन्ने लक्षणं सङ्गमनीयं तद्रूपावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदप्रतियोगितानवच्छेदकीभूतधर्मनिष्ठविषयताशून्यत्वं लक्षणघटकीभूतनिश्चये विशेषणीयम्। तथा च वह्न्यभाववद्वृत्तित्वविशिष्टह्रदत्वरूपव्य-

भिचारत्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदप्रतियोगितानवच्छेदकीभूतजातित्व - रूपधर्मनिष्ठविषयताशून्यत्वस्य वह्न्यभाववद्वृत्तित्वविशिष्टह्रदत्वरूपव्यभिचारविषय - कनिश्चये सत्त्वेन लक्षणसमन्वयसम्भवान्नाव्याप्तिः। एवं वह्न्यभाववद्वृत्तित्वावच्छि - न्नावच्छेदकताकप्रतियोगिताकभेदप्रतियोगितानवच्छेदकीभूतजातित्वनिष्ठविषयताशू - न्यत्वस्य जातिमान् वह्न्यभाववानिति निश्चये विरहेणैताद्दशनिश्चयस्य निरुक्तनि - श्चयपदेन धर्त्तुमशक्यत्वान्नासम्भवसम्भावनेति वाच्यम्

तथा सति सर्वं गगनवत् वाच्यत्वादित्यादौ गगनाभाववत्सर्वरूपबाधेऽव्याप्तिः, सर्वाति- रिक्तपदार्थस्यैवाऽप्रसिद्धचा गगनाभाववत्सर्वत्वावच्छिन्नाविषयकपदार्थस्यासुलभ - त्वप्रयुक्तताद्दशविषयताशून्यत्वस्यापि सुतरामप्रसिद्धचा निरुक्तनिश्चयपदेनैताद्दशबाध - विषयकनिश्चयस्य धर्त्तुमशक्यत्वात्।

## बलदेवी

जातित्वेन ह्रदत्वावगाहिज्ञानमादायासम्भव इति भट्टाचार्यः। नन्वत्राऽसम्भवाभिधानमसङ्गतम्, सामानाधिकरण्येन वह्नेः साध्यत्वेनावच्छेदकाव - च्छेदेन बाधे लक्षणसमन्वयात्, तथा हि ह्रदत्वावच्छेदेन वह्न्यभावावगाहिज्ञाने ह्रदत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपस्य प्रकारीभूतवह्न्यभावसम्बन्धतया तत् - स्थलीयबाधे ताद्दशसम्बन्धावच्छिन्नवह्न्यभावनिष्ठनिरूपकताकविषयितामादायैव लक्ष- णसमन्वयात्, ताद्दशविषयतायाश्च जातिमान् वह्न्यभाववानिति ज्ञानेऽसत्त्वात्, तत्र हि जातिव्यापकवह्न्यभावप्रतियोगिकस्वरूपमेव सम्बन्धः ताद्दशसंसर्गकोटिप्रविष्टव्यापक- त्वरूपाभावस्तु विलक्षण इति चेत्, अत्र केचित् अत्रासम्भवपदेनाव्याप्तिरेवाभिहितेति। अन्ये तु व्यापकत्वरूपाभावत्वस्य प्रमेयत्वेन यत्र भानं तत्र ह्रदत्वसमानाधिकरणभेदप्रतियो- गितावच्छेदकत्वीयप्रमेयविशिष्टवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धेन वह्न्यभाववान् ह्रद इति ज्ञानस्य, एवं यत्र वह्न्यभावत्वस्य प्रमेयत्वेन भानं तत्र ह्रदो वह्नीयप्रमेय - वानिति ज्ञानस्य च वारणासम्भवेनाव्याप्तिस्तत्रापीति हृदयम्। वस्तुतः अवच्छेद - कावच्छेदेन विशिष्टबुद्धौ विधेयव्याप्यत्वमेवोद्देश्यतावच्छेदके तत्प्रतियोगिकसंसर्गे वा

भासत इति ह्रदो वह्न्यभाववान् जातिमान् वह्न्यभाववानितिज्ञानद्वयस्यापि वह्न्यभाववद्वृत्तित्वावगाहित्वाऽविशेषात् भवत्यसम्भव इति ।

पक्षतावच्छेदकाद्यंशेऽन्याप्रकारकत्वनिवेशस्यावश्यकत्वादिति भट्टाचार्यः

नन्वत्र पक्षतावच्छेदकाद्यंशे किं तावदन्याप्रकारकारकत्वं, यदि पक्षतावच्छेदकनिष्ठविशेष्यतानिरूपितप्रकारताशून्यत्वं तदा ह्रदो वह्न्यभाववानिति ज्ञानस्यासंग्रहः, तस्यापि ह्रदत्वनिष्ठविशेष्यतानिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नवह्न्यभावनिष्ठप्रकारतानिरूपकत्वात् यद्विशिष्टे यद्भासते तत्रापि तद्भासत इति नियमात् । न च तादृशप्रकारतायां प्रकारत्वानवच्छिन्नत्वदानेनैव तद्वारणं, दोषज्ञानीयह्रदत्वांशे सामानाधिकरण्येन वह्न्यभावप्रकारतायां ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्न्यभावप्रकारत्वावच्छिन्नत्वात् जातिमान् वह्न्यभाववानितिज्ञानीयह्रदत्वनिष्ठविशेष्यताकजातित्वनिष्ठप्रकारतायां प्रकारत्वानवच्छिन्नत्वसत्त्वेन तस्याश्चासंग्रह इति वाच्यम् । प्रमेयत्वेन वह्न्यभावत्वप्रकारतावच्छेदकत्वावगाहिह्रदो वह्नीयप्रमेयत्ववद्वानिति ज्ञानस्यावारणात् ।

न चादिपदग्राह्यप्रकारतावच्छेदकनिष्ठविशेष्यतानिरूपितप्रकारताशून्यत्वं निवेशनीयमिति वाच्यम् । तथा सति ह्रदो वह्न्यभाववानिति ज्ञानस्यापि असंग्रहः, प्रकारतावच्छेदकीभूतवह्न्याद्यंशे वह्नित्वप्रकारकत्वात्, तादृशप्रकारतायां प्रकारत्वानवच्छिन्नत्वनिवेशेन, सामानाधिकरण्यसम्बन्धावच्छिन्नवह्निनिष्ठप्रकारतायामभावनिष्ठविशेष्यतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारित्वावच्छिन्नत्वात् । वह्निनिष्ठविशेष्यतानिरूपितवह्नित्वनिष्ठप्रकारतायामवच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नाभावनिष्ठविशेष्यतानिरूपितप्रकारत्वावच्छिन्नत्वात् तद्दोषवारणे तु प्रमेयत्वेन स्वरूपावगाहिप्रमेयसम्बन्धेन वह्न्यभाववान् ह्रद इति ज्ञानवारणाय संसर्गतावच्छेदकाद्यंशेऽपि तथा निवेशेऽननुगम इति चेन्न, विशेष्यताविशिष्टविशेषणताशून्यत्वस्यैवानुगतस्य निवेशात् वैशिष्ट्यञ्च स्वनिरूपितत्वस्वावच्छेद्यावच्छेदकतानिरूपिता या विशेष्यता तन्निरूपितविशेषणत्वानवच्छिन्नत्वोभयसम्बन्धेन तथा च ह्रदत्वनिष्ठविशेष्यतानिरूपितवह्न्यभावनिष्ठप्रकारतायाः तादृशप्रकारत्वानवच्छेद्यत्वविरहान्नोक्तानुपपत्तिः ।

जातिमान् वह्न्यभाववान् इतिज्ञानस्य जातिनिष्ठविशेष्यतानिरूपितत्वस्य तादृशवि-शेष्यत्वावच्छेद्यावच्छेदकतानिरूपकजात्यवच्छिन्नविशेष्यतानिरूपितवह्न्यभावनिष्ठ - विशेषणत्वानवच्छिन्नत्वस्य च जातित्वनिष्ठविशेषणतायां सत्त्वेन तन्निरूपकत्वादुक्त - ज्ञानस्यासंग्रहः । एवं जलवान् वह्न्यभाववानित्यत्र वह्न्यभाववज्जलरूपबाधेऽव्या - प्तिरपि संगच्छते, जलवान् वह्न्यभाववानिति ज्ञानस्य जलनिष्ठविशेष्यतानिरूपिता अथ च तादृशविशेष्यत्वावच्छेद्यावच्छेदकतानिरूपकजलावच्छिन्ननिष्ठविशेष्यतानिरू - पितवह्न्यभावनिष्ठप्रकारत्वानवच्छिन्ना च या प्रकारता तन्निरूपकत्वात् ।

ननु प्रथमस्थलपरित्यागे का युक्तिरिति चेत्, विशेष्यताविशिष्टतादृशविशेष-णतायां पक्षतावच्छेदकगतधर्मवृत्तिविशेष्यतावच्छेदकतावच्छेदकत्वानवच्छिन्नत्वम्, अवच्छेदकतासम्बन्धावच्छिन्नप्रतियोगिताकपक्षतावच्छेकत्वाभावसामानाधिकरण्यम्वा निवेश्य प्रथमदोषवारणसम्भवे स्थलान्तरानुधावनम् । तथा च ह्रदो वह्निमान् जातिमदित्यविशेषितधर्मावच्छिन्नपक्षकस्थले वह्न्यभाववद्वृत्तिजातिमद्रूपव्यभि - चारेऽव्याप्तिः, तादृशव्यभिचारज्ञाने जातिनिष्ठविशेष्यतानिरूपितत्वस्य तादृशविशेष्य-त्वावच्छेद्यावच्छेदकतानिरूपकजात्यवच्छिन्नविशेष्यतानिरूपितवह्न्यभाववद्वृत्तित्व - निष्ठविशेषणत्वानवच्छिन्नत्वस्य च जातित्वनिष्ठविशेषणतायामिति तन्निरूपकत्वस्य सत्त्वेन तच्छून्यत्वाभावादिति ।

तादृशविशिष्टाघटकपदार्थाविषयकत्वमिति भट्टाचार्यः ।
नन्वत्र किं तावदघटकत्वम् ? यदि तादृशविशिष्टाविषयकप्रतीतिविषयपदार्थाऽविषयकत्वं तदा वह्न्यभाववद्ध्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावद्वह्निवह्नित्वादिपदार्थावि-षयकत्वाभावादसम्भव इति चेन्न,तादृशविशिष्टनिरूपितविषयितासमानाधिकरणभेदप्रति-योगितावच्छेदकीभूतपदार्थाविषयकत्वस्यैव पर्यवसितत्वात् । भेदश्चात्र स्वनिरूपितवि-षयित्वसम्बन्धावच्छिन्नाऽवच्छेदकताकप्रतियोगिताकः, एवञ्च नासम्भवः वह्निवह्नि - त्वाभावभावत्वह्रदत्वादीनां स्वनिरूपितविषयित्वसम्बन्धेन बाधज्ञाने सत्त्वात् ।

सर्वं गगनवदित्यादौ सर्वेषां स्वनिरूपितविषयितावत्त्वसम्बन्धेन तादृशबाधज्ञा-ने सत्त्वात् भवत्येवाव्याप्तिरिति ।

न चात्रावच्छिन्ननिरूपकताकविषयितासम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदनिवेशेनैव घटत्वपटत्वादिपदार्थानां तत्प्रसिद्धिरिति वाच्यं, यद्यद्रूपावच्छिन्नस्येत्याद्युत्तरकल्पेनैक्यप्रसङ्गात्। अस्य संसर्गविधयाऽनुगमस्तु, प्रकृतानुमितिप्रतिबन्धकतावृत्तिरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकतावत्त्वं, प्रतिबन्धकतावृत्तित्वञ्च रूपे,स्वविशिष्टनिश्चयत्वव्यापकतासम्बन्धेन, स्ववैशिष्ट्यञ्च स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयितावत्त्वस्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयितासमानाधिकरणभेदप्रतियोगितावच्छेदकीभूतधर्मनिष्ठविषयिताशून्यत्वोभयसम्बन्धेन भेदश्च प्रागुक्तसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताको ग्राह्यः।

प्रकारमुद्रया निवेशस्तु, किञ्चिद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयितावद्वृत्तिभेदप्रतियोगितावच्छेदकतावत्पदार्थविषयताशून्यत्वव्यक्तेः तत्तद्व्यक्तित्वेनोपादाय यद्रूपावच्छिन्नविषयितावत्तद्व्यक्तिमन्निश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धो यः प्रकृतानुमितिप्रतिबन्धकतावृत्त्यभावस्तादृशाभावीयप्रतियोगितानिरूपकपरम्परयाऽवच्छेदकतावद्रूपावच्छिन्नत्वमिति।

## गादाधरी

यद्यद्रूपावच्छिन्नस्य यस्य यस्य यादृशविशिष्टघटकता तत्तद्रूपावच्छिन्नतत्तन्निष्ठविषयताभिन्नविषयताशून्यत्वं ज्ञाने निवेश्यम्। जातित्वाद्यवच्छिन्नस्य ह्रदत्वादेर्न वह्न्यभाववद्ह्रदत्वावच्छिन्नात्मकदोषघटकतेति जातित्वाद्यवच्छिन्नह्रदत्वादिविषयता तादृशविषयताभिन्नैव, तच्छून्यत्वञ्च नोक्तज्ञानस्येति न दोषः, इत्यपि न सत्। तथा सति ह्रदो जात्यभाववानित्यादिस्थलीयबाधादेरेव दुःसंग्रहत्वात्। जातित्वादिना ह्रदत्वादिरूपधर्मितावच्छेदकावगाहिनो जातिमान् जातिमान् इत्यादिज्ञानस्य जातित्वाद्यवच्छिन्नह्रदत्वादिनिष्ठधर्मितावच्छेदकतारूपविषयतायाः निरुक्तविषयताभिन्नत्वविरहेण तादृशज्ञानस्यानुमित्यप्रतिबन्धकस्य शून्यत्वान्तेनावारणात्।

## विमलप्रभा

सर्वं गगनवद्वाच्यत्वादित्यत्र बाधे प्रसक्तामव्याप्तिं पूर्वोक्तासम्भवञ्चापाकरोति यद्यद्रूपावच्छिन्नस्येत्यादिना ।

यस्य यस्य = पदार्थस्य । यादृशविशिष्टघटकता = यादृशदोषघटकता । ज्ञाने = यद्रूपावच्छिन्नविषयकनिश्चये । जातित्वाद्यवच्छिन्नस्य = जातित्वादिविशिष्टस्य । तादृशविषयताभिन्नैव = वह्न्यभावविशिष्टह्रदरूपदोषघटकतावच्छेदकीभूतधर्मावच्छिन्न-विषयताभिन्नैव । तच्छून्यत्वम् = जातित्वावच्छिन्नविषयताशून्यत्वम् । नोक्तज्ञान-स्य = न जातिमान् वह्न्यभाववानिति ज्ञानस्य । नोक्तदोषः = न पूर्वोक्तासम्भावा-दिदोषः । इत्यपि न सत् = नेदम् समीचीनम् । तथा सति = निरुक्तनिश्चये तादृशविष-यताशून्यत्वविशेषणादाने सति । बाधादेः = जातिमद्ध्रदरूपबाधादेः । निरुक्तविषयता = यद्यद्रूपावच्छिन्नस्य यस्य यस्य विशिष्टघटकता तत्तद्रूपावच्छिन्नतत्तन्निष्ठविषयता । तादृशज्ञानस्य = जातिमान् जातिमान् इत्याकारकज्ञानस्य । अनुमित्यप्रतिबन्धकस्य = अनुमितिप्रतिबन्धकतारहितस्य । शून्यान्तेन = यद्यद्रूपावच्छिन्नस्येत्यादिशून्यान्तपर्यन्त-विशेषणादानेन । अवारणात् = अव्याप्तिवारणासम्भवात् । अयमर्थः । यद्यद्रूपावच्छिन्नस्य यस्य यस्य यादृशविशिष्टघटकता तत्तद्रूपावच्छिन्नतत्तन्निष्ठविषयताभिन्नयत्किञ्चिदव-च्छिन्नविषयाताशून्यानाहार्यप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छि-न्नविषयताव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपाव-च्छिन्नत्वं हेत्वाभासत्वमिति लक्षणकरणेनैव सर्वं गगनवद्वाच्यत्वादित्यादौ गगनाभाव-वत्सर्वरूपबाधे लक्षणसमन्वयसम्भवात्, तथा हि गगनत्वावच्छिन्नगगनस्याभावत्वा-वच्छिन्नाभावस्य सर्वत्वावच्छिन्नसर्वस्य गगनाभाववत्सर्वरूपबाधघटकतेति गगनत्वाव-च्छिन्नगगननिष्ठविषयता अभावत्वावच्छिन्नाभावनिष्ठविषयता सर्वत्वावच्छिन्नस-र्वनिष्ठविषयता तद्भिन्ना या यत्किञ्चिदवच्छिन्नविषयता सा च घटत्वाद्यवच्छिन्न-घटादिनिष्ठविषयता तच्छून्यत्वं गगनाभाववत्सर्वरूपबाधविषयकनिश्चये सत्त्वेन ता-दृशनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयताव्यापकतायाः प्रकृतानुमितिप्रतिबन्धक-तायां सत्त्वात् ।

एवं ह्रदो वह्निमान् जलादित्यादौ वह्नित्वावच्छिन्नस्य वह्नेः अभावत्वाव-च्छिन्नस्याभावस्य ह्रदत्वावच्छिन्नस्य ह्रदस्य वह्न्यभाववद्ध्रदरूपदोषघटकतेति तत्त-द्रूपावच्छिन्नविषयता वह्नित्वावच्छिन्नवह्निविषयताभावत्वावच्छिन्नाभावविषयता ह्रदत्वावच्छिन्नह्रदविषयता तद्भिन्ना या यत्किञ्चिदवच्छिन्नविषयता सा च जाति-त्वावच्छिन्नविषयता तच्छून्यत्वस्य जातिमान् वह्न्यभाववानिति निश्चयेऽसत्त्वेन तादृशनिश्चयस्य निरुक्तनिश्चयपदेन धर्त्तुमशक्यत्वान्नासम्भवः। तादृशनिश्चयपदेन वह्न्यभाववान् ह्रद इति निश्चयं परिगृह्य तदीयवह्न्यभाववद्ध्रदत्वावच्छिन्नविषय-ताव्यापकतायाः प्रकृतानुमितिप्रतिबन्धकतायां सत्त्वेन वह्न्यभाववद्ध्रदादिरूपबाधे लक्षणसमन्वय इति ।

उक्तरीत्या लक्षणकरणेऽपि ह्रदो जात्यभाववान् शैवालादित्यादौ जातिमद्-ध्रदादिरूपवधादावव्याप्तिः, तत्र जातित्वावच्छिन्नह्रदत्वस्य जातिमद्ध्रदात्मकविशिष्ट-घटकतया जातित्वावच्छिन्नह्रदत्वविषयताभिन्ना या विषयता सा च घटत्वावच्छिन्ना विषयता न तु जातित्वावच्छिन्नह्रदत्वविषयता स्वभेदस्य स्वस्मिन्नवर्त्तमानत्वात् तादृशघटादिविषयताशून्यत्वं यथा जातिमान् ह्रद इति निश्चये तथैव जातिमान् जा-तिमानित्याकारकनिश्चयेऽपि वर्त्तमानेति तादृशनिश्चयीयविषयताव्यापकत्वं प्रकृतह्रदो जात्यभाववान् जात्यभावव्याप्यशैवालवांश्चेत्याकारकानुमितिप्रतिबन्धकतायां विर-हेण यद्रूपपदेन जातिमद्ध्रदत्वस्योपादानासम्भवादतस्तन्निवेशो न युक्त इति भावः ।

## बलदेवी

यद्यद्रूपावच्छिन्नस्य यस्य यस्येति भट्टाचार्यः । अत्र यद्यद्रूपाव-च्छिन्नस्येति वीप्सानुपादाने भेदकूटानिवेशेन वह्नित्वावच्छिन्नवह्निनिष्ठविषयताभेद-स्य ह्रदत्वावच्छिन्नविषयतायां सत्त्वेन तच्छून्यत्वस्य वह्न्यभाववान् ह्रद इति निश्च-ये विरहेणासम्भवः स्यादतस्तन्निवेशः ।

. यद्यद्रूपावच्छिन्नस्येत्यनुपादाने सर्वं गगनवद्वाच्यत्वादित्यत्र गगनाभाववत्स-र्वरूपबाधेऽव्याप्तिः, तत्र सर्वस्यैव विशिष्टघटकतया तद्विषयताभिन्नविषयत्वाऽप्रसिद्धेः।

तदुपादाने च सर्वत्वावच्छिन्नघटपटादीनां दोषघटकत्वेऽपि तद्रूपावच्छिन्नविषयताभिन्नत्वस्य घटत्वावच्छिन्नविषयतायां सत्त्वेन न दोषः ।

किञ्चिदवच्छिन्नत्वानुपादाने निरवच्छिन्नह्रदत्वादिविषयतामादायासम्भवापत्तिस्स्यादतस्तन्निवेशः ।

अत्र यस्य यस्येत्यनुपादाने ह्रदो वह्निमानित्यादौ बाधासंग्रहः, तथा हि अभावत्वेन ह्रदत्वावगाह्यभाववान् वह्न्यभाववानिति ज्ञानस्यावारणात् अभावत्वावच्छिन्नस्य विशिष्टघटकतया अभावत्वावच्छिन्नविषयताभिन्नयत्किञ्चिदवच्छिन्नविषयताशून्यत्वस्य तज्ज्ञाने सत्त्वात् प्रतिबन्धकतायां तद्रूपावच्छिन्नविषयत्वाव्यापकत्वात्, तत्र चाभावत्वावच्छिन्नस्य तादृशदोषघटकत्वात् ।

तदुपादाने चाभावत्वावच्छिन्नाभावस्य तादृशविशिष्टघटकत्वेऽपि अभावत्वेन ह्रदत्वस्य विशिष्टाऽघटकतया तद्रूपावच्छिन्नतन्निष्ठविषयतानिरूपकत्वात् तज्ज्ञानवारणम् । तथा च यद्रूपावच्छिन्नविषयताव्यापकरूपविशिष्टविषयताभिन्नयत्किञ्चिदवच्छिन्नविषयिताशून्यत्वमिति तदर्थः ।

विषयिताव्यापकता च रूपे, स्वविशिष्टविषयितावत्त्वसम्बन्धेन । स्ववैशिष्ट्यं च स्वावच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन । विषयतायां रूपवैशिष्ट्यं च प्रागुक्तोभयसम्बन्धेन । अभावत्वावच्छिन्नह्रदत्वनिष्ठविषयता च न तादृशरूपविशिष्टा तस्याः अभावत्वसामानाधिकरण्याभावात् अतो न तत्संग्रह इति केचित् वदन्ति, तन्न ह्रदो वह्न्यभाववानिति ज्ञानीयवह्न्यभाववद्ध्रदत्वविशिष्टवैशिष्ट्यावगाहिबुद्धिनियामिकायाः विलक्षणविषयतायाः अभाववान् वह्न्यभाववानिति ज्ञानेऽसत्त्वात् । अन्यथा तादृशज्ञानानन्तरं वह्न्यभाववद्ध्रदमहं जानामीत्यनुव्यवसायापत्तेः । न च जातिमान् वह्न्यभाववानिति ज्ञानानन्तरमपि तादृशानुव्यवसायाभावात् तत्रापि तादृशविषयताया अभावप्रसङ्गः, तथा च तादृशज्ञानमादाय दोषकथनासङ्गतिरिति वाच्यम् । जातिमान् वह्न्यभाववानिति ज्ञाने जातित्वादिघटितसमुदायत्ववृत्तिनिरूपकताकविषयताया एवाधिकन्यूनवारकपर्याप्तिघटितायास्तत्र स-

त्वात्, जातित्वाघटितह्रदत्वादिघटितसमुदायत्ववृत्तिनिरूपकताकविषयिताया वह्न्यभाववद्ध्रदमहं जानामीत्यनुव्यवसायात्मकविशिष्टबुद्धिनियामिकायास्तत्रासत्त्वान्न जातिमान् वह्न्यभाववानिति ज्ञानानन्तरं तादृशानुव्यवसायप्रसङ्गः। अधिकन्यूनवारकपर्याप्तिघटितनिरूपकताकविषयताया एव विशिष्टबुद्धिनियामकत्वस्वीकारात्। अधिकवारकपर्याप्त्यघटितह्रदत्वादिघटितसमुदायवृत्तिसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयतायाः जातिमान् वह्न्यभाववानिति ज्ञानेऽपि सत्त्वात्तज्ज्ञानमादाय दोषाभिधानसंगतिः। अभाववान् वह्न्यभाववानिति ज्ञाने चाभावत्वस्य ह्रदत्वनिष्ठनिरूपकताया व्यधिकरणतया तादृशज्ञानवृत्तिविषयतानिरूपकतावच्छेदकसमुदायेऽप्रवेशेन ह्रदत्वांशेऽभावत्वाघटितसमुदाय एव निरूपकतावच्छेदकतापर्याप्तिः, तादृशभ्रमानन्तरं तादृशप्रमात्मकज्ञानावगाहितादृशानुव्यवसायापत्तिरतस्तत्र तादृशविषयिता तादृशज्ञाने नास्त्येवेति।

वस्तुतस्तु ह्रदः प्रमेयत्ववद्वानित्यादिस्थलीयबाधेऽव्याप्तिः, तत्र प्रमेयत्वेन ह्रदत्वावगाहिज्ञानवारणाय यस्य यस्येत्युपादानं कृतम्।

तथा च तादृशविशिष्टविषयित्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितावच्छेदकताविशिष्टविषयताभिन्नविषयत्वानिरूपकत्वं तदर्थः। वैशिष्ट्यञ्च स्वसामानाधिकरण्यस्वावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन। उक्तस्थले प्रमेयत्वावच्छिन्नह्रदत्वनिष्ठविषयता न तादृशावच्छेदकताविशिष्टेति तदसंग्रहः। अवच्छेदकतावैशिष्ट्यघटकावच्छेदकतासाक्षादतोह्रदत्वनिष्ठाऽवच्छेदकतायां प्रमेयत्वस्य परम्परयाऽवच्छेदकत्वेऽपि न क्षतिरिति दिक्। अनुगमस्तु प्रकृतानुमितिप्रतिबन्धकतावृत्तिरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकतावत्त्वम्। रूपे वृत्तित्वञ्च, स्वविशिष्टनिश्चयत्वव्यापकतासम्बन्धेन। स्ववैशिष्ट्यञ्च निश्चये, स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयितावत्त्वस्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयित्वावच्छिन्नभेदप्रतियोगितावच्छेदकताविशिष्टविषयिताभिन्नावच्छिन्नविषयिताशून्यत्वोभयसम्बन्धेन। अवच्छेदकतावैशिष्ट्यञ्च स्वावच्छेदकधर्मावच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेनेति दिक्।

## गादाधरी

मैवं यद्रूपावच्छिन्नविषयितात्वं यादृशविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयताशून्यत्वस्य ज्ञानविशेषणतया सामञ्जस्यात् ।

अप्रतिबन्धकज्ञानविषयतावच्छेदकजातित्वादिविशेषितह्रदत्वादिघटिततत्तद्रूपावच्छिन्नविषयितात्वावच्छिन्नाभावस्य दोषात्मकविशिष्टविषयितासमानाधिकरणत्वात् तज्ज्ञानव्यावृत्तिः ।

## विमलप्रभा

अथैवमपीत्यादिना प्रसक्तासम्भवमपाकरोति मैवमित्यादिना । ज्ञाने = लक्षणघटकतादृशनिश्चये । सामञ्जस्यात् = असम्भवादिदोषनिराकरणसम्भवात् । अप्रतिबन्धकज्ञानविषयता = प्रकृतानुमितेरप्रतिबन्धकं यज्जातिमान् वह्न्यभाववानित्याकारकं ज्ञानं तादृशज्ञानीयविषयता । तत्तद्रूपावच्छिन्नविषयिता = वह्न्यभाववज्जातित्वावच्छिन्नविषयिता । दोषात्मकविशिष्टविषयिता = वह्न्यभाववद्ध्रदादिविषयिता । समानाधिकरणत्वात् = तदधिकरणे वर्त्तमानत्वात् । तज्ज्ञानव्यावृत्तिः = जातिमान् वह्न्यभाववानिति ज्ञानवारणम् । अयमर्थः । यद्रूपाच्छिन्नविषयितात्वं यद्रूपावच्छिन्नविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयताशून्यत्वरूपाव्यापकीभूतविषयताशून्यत्वरूपं यद्रूपावच्छिन्नविषयकानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चये विशेषणं प्रक्षिप्य तादृशनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयताव्यापिकाप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपावच्छिन्नत्वरूपलक्षणार्थकरणे नैवासम्भवादेर्वारणसम्भवात् ।

तथा हि ह्रदो वह्निमान् जलादित्यत्र वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयतासमानाधिकरणाभावः वह्न्यभाववज्जातिमत्त्वावच्छिन्नविषयितात्वावच्छिन्नाभावः जातिमत्त्वावच्छिन्नह्रदत्वविषयितात्वावच्छिन्नाभावो वा तत्प्रतियोगितावच्छेदकं यत् वह्न्यभाववज्जातिमत्त्वावच्छिन्नविषयितात्वं जतित्वाव -

च्छिन्नह्रदत्वविषयितात्वं वा ताद्दशजातित्वावच्छिन्नह्रदत्वविषयताशून्यत्वस्य वह्न्यभाववज्जातिमत्त्वावच्छिन्नविषयतात्वावच्छिन्नविषयताशून्यत्वस्य वा जातिमान् वह्न्यभाववानिति निश्चये विरहेण ताद्दशनिश्चयपदेन निरुक्तनिश्चयस्य धारणासम्भवान्नासम्भवः वह्न्यभाववान् ह्रद इति निश्चये च ताद्दशविषयताशून्यत्वसत्त्वेन ताद्दशनिश्चयीयवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताव्यापकत्वस्य ह्रदो वह्निमानित्यादिसमूहालम्बनानुमितिप्रतिबन्धकतायां सत्त्वेन तद्रूपावच्छिन्नत्वस्य वह्न्यभाववद्ध्रदात्मकबाधे सत्त्वात् लक्षणसङ्गतिः ।

ह्रदो जात्यभाववान् शैवालादित्यत्र जातिमद्ध्रदत्वावच्छिन्नविषयतासमानाधिकरणाभावप्रतियोगितावच्छेदकं भवति जातिमज्जातिमत्त्वावच्छिन्नविषयितात्वं तद्रूपावच्छिन्नविषयताशून्यत्वस्य जातिमान् जातिमानिति निश्चयेऽभावेन ताद्दशनिश्चयस्यैताद्दशनिश्चयपदेन धारणासम्भवात् जातिमान् ह्रद इत्याकारकनिश्चयमादाय तदीयजातिमद्ध्रदत्वावच्छिन्नविषयताव्यापकत्वस्य ह्रदो जात्यभाववानित्याकारकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतायां सत्त्वेन ताद्दशजातिमद्ध्रदत्वावच्छिन्नविषयतायाः जातिमद्ध्रदरूपबाधेऽक्षततया तत्र लक्षणगम्नान्न पूर्वोक्तदोषावकाश इति ।

## बलदेवी

अथाव्यापकीभूतविषयताशून्यत्वकल्पः । अत्र यद्रूपावच्छिन्नविषयितात्वमित्यत्र यद्विषयितात्वमिति निवेशे लक्षणस्यानुगमे ताद्दशविशिष्टविषयत्वाव्यापकविषयित्वसामान्याभावस्यैव पर्यवसितनिवेशे सर्वं गगनवत् वाच्यत्वादित्यादौ बाधविषयतासमानाधिकरणाभावप्रतियोगितावच्छेदकयन्निष्ठविषयितात्वस्याप्रसिद्धचाव्याप्तिरतो यद्रूपावच्छिन्नत्वनिवेशः तन्निवेशे चाव्यापकत्वघटकभेदस्य यद्रूपावच्छिन्नविषयतावान्नेति प्रतीतिसिद्धस्यैव निवेशान्नाप्रसिद्धिः । तत्रापि पर्याप्त्यनिवेशे ह्रदपक्षकप्रमेयवह्निसाध्यके बाधेऽव्याप्तिः, प्रमेयत्वेन ह्रदत्वावगाहिज्ञानावारणात् । अस्य संसर्गविधया अनुगमस्तु—प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकतावत्त्वं समुदितपर्यवसितार्थः । रूपे वृत्तित्वञ्च स्वविशिष्टानाहार्यप्रामाण्यज्ञानानास्कन्दितनिश्चयत्वव्यापकतासम्बन्धेन । निश्चये स्ववैशिष्ट्यञ्च, स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदक-

ताकनिरूपकताकविषयितावत्त्वस्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूप-कताकविषयितासमानाधिकरणतद्व्यक्तिमद्भेदनिरूपितप्रतियोगितावच्छेदकतावद्विष-यताशून्यत्वोभयसम्बन्धेन। तद्व्यक्तिश्चात्र यत्किञ्चिद्रूपावच्छिन्नानुयोगिताकपर्याप्ति-कावच्छेदकताकनिरूपकताकविषयितात्वावच्छिन्नप्रतियोगिताकत्वरूपा प्रकारमुद्रया निवेशस्तु– प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्त्यभावीयप्रति-योगितानिरूपितपरम्परीयावच्छेदकतावद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदक-ताकनिरूपकतावत्त्वम् प्रतिबन्धकतावृत्त्यभावश्च, किञ्चिद्रूपावच्छिन्नानुयोगिताकपर्या-प्तिकावच्छेदकताकनिरूपकताकविषयताशाल्यनाहार्याप्रामाण्यज्ञानानास्कन्दिततद्व्य-क्तिमन्निश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धः, तद्व्यक्तिश्च यत्किञ्चिद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयतासमानाधिकरणतद्व्-यक्तिमद्भेदप्रतियोगितावच्छेदकतावद्विषयित्वन्नास्तीति प्रतीतिसिद्धाभावरूपा। अत्र तद्व्यक्तिः,—किञ्चिद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविष-यित्वावच्छिन्नप्रतियोगिताकत्वरूपा। परम्परीयावच्छेदकता च, तादृशाभावस्यैव एवञ्च स्वावच्छिन्नविषयताया अव्यापकविषयताशून्यत्वादिनिवेशेऽपि न क्षतिः। स्वावच्छिन्नविषयताया अव्यापकत्वनिवेशस्तु यथाश्रुतरक्षायैव।

प्रकारान्तरं यथा प्रकृतानुमितिप्रतिबन्धकतावृत्त्यभावीयावच्छेदकतात्वनिष्ठावच्छेद-कताभिन्ना प्रतियोगित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता या अवच्छेदकता-त्वावच्छिन्नप्रतियोगिता तन्निरूपकभेदनिष्ठावच्छेदकताभिन्नप्रतियोगितात्वनिष्ठावच्छे-दकताभिन्नाऽवच्छेदकत्वानिरूपितप्रतियोगितात्वनिष्ठावच्छेदकत्वानिरूपितप्रतियोगित्व-निष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकताभिन्नभेदत्वनिष्ठावच्छेदकताभिन्नावच्छेद-कत्वानिरूपकभेदत्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपकनिश्चयनिष्ठाव-च्छेदकताभिन्नवृत्तितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितवृत्तितात्वावच्छिन्नाव-च्छेदकतानिरूपकीभूता याऽव्यापकीभूतविषयताशून्यत्वरूपाभावनिष्ठावच्छेदकता तामा-दाय तत्तदवच्छेदकतानिष्ठावच्छेदकताया इतरवारकपर्याप्ति निवेशयन् तत्तत्स्वरूपाभाव-निष्ठावच्छेकताभिन्ना सती अप्राण्यज्ञानाभावनिष्ठावच्छेदकताभिन्ना सती अव्याप्यवृत्तित्व-ज्ञानाभावनिष्ठावच्छेदकताभिन्ना निश्चयत्वनिष्ठावच्छेदकताभिन्ना यावच्छेदकता तदनिरू-

पिता अनाहार्यत्वाभावाव्याप्यवृत्तित्वज्ञानाभावाप्रामाण्यज्ञानाभावनिश्चयत्वादिनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकता तन्निरूपकक्रमेणाव्यापकीभूतविषयताशून्यत्वपथेन रूपनिष्ठावच्छेदकतां प्रत्यागृत्य तदवच्छेदकतासमानाधिकरणावच्छेदकताभिन्नानुयोगितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितानुयोगित्वनिष्ठावच्छेदकताभिन्नेत्यादिक्रमेण रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयितापर्यन्तस्येतरवारकपर्याप्तिं निवेशयन् निश्चयनिष्ठावच्छेदकतामादाय पुनस्तन्निरूपितेत्यादिक्रमेण रूपनिष्ठावच्छेदकतावद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकतावत्त्वं समुदितार्थः। प्रतीतिश्च, रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयितावद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयित्वाव्यापकविषयिताशून्यत्वाहार्यत्वाभावाप्रामाण्यज्ञानाभाववन्निश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्तीति तादृशविषयताशून्यत्वानाहार्यत्वादिसकलविशेषणानि एकत्र बहुर्रिति रीत्या ज्ञातव्यानि।

अथात्र यत्किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकत्वपक्षे यद्रूपावच्छिन्नविषयितासमानाधिकरणाभावद्यद्रूपावच्छिन्नविषयितावन्निश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्तीतिसिद्धाभावस्यैव प्रतिबन्धकतायां निवेशेनैवोपपत्तावव्यापकत्वघटकप्रतियोगितावच्छेदकविषयितात्वावच्छिन्नाभावस्य प्रवेशो व्यर्थः, जातित्वावच्छिन्नविषयित्वाभावस्य तादृशविषयितासमानाधिकरणतया तदभाववन्निश्चयवृत्तिभेदेत्यादिरूपाभावस्यैकमेकमुपादाय लक्षणसमन्वयादिति चेन्न, यद्रूपावच्छिन्नविषयितासमानाधिकरणाभावस्य यत्किञ्चित्त्वेन निवेशः, यावत्त्वेन वा, नाद्यः, जातित्वावच्छिन्नविषयित्वाभावरूपस्यैकाभावस्याधिकरणे प्रमेयत्वेन ह्रदत्वावगाहिज्ञाने तादृशप्रतिबन्धकताया अवर्त्तमानतयाऽसम्भवतादवस्थ्यात्। नान्त्यः, तादृशविषयतासमानाधिकरणाभावकूटस्याधिकरणं न वह्न्यभाववान् ह्रद इति ज्ञानसाधारणमित्यसम्भवतादवस्थ्यप्रसङ्गादिति ध्येयम्।

अथाभावत्वेन ह्रदत्वावगाह्यभाववान् वह्न्यभाववानिति ज्ञानात्वारणेनासम्भवतादवस्थ्यमिति चेन्न, पर्यवसितयादृशसमुदायत्वावच्छिन्नानुयोगिताकेत्यादि-

लक्षणेनैव वारणात् । किञ्च प्रागुक्तभ्रमवारकविषयिताविशिष्टावच्छेदकताशून्यत्व-निवेशेनैव तद्वारणादिति दिक् ।

नन्वत्र यादृशसमुदायत्ववृत्तिनिरूपकताकविषयिताव्यापकत्वं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतायां निवेशनीयं तावतैव च वह्न्यभाववद्ध्रदत्वगतसमुदायत्ववृत्तिनिरूपकताकविषयतायाः जातिमान् वह्न्यभाववानिति ज्ञाने विरहेणासम्भववारणसम्भवेऽव्यापकीभूतविषयताशून्यत्वविशेषणं विफलं, जगदीशेन तथैव निवेश्यासम्भववारणं कृतं, भट्टाचार्येण कथं न निवेशितमिति चेन्न, भट्टाचार्यमतेऽङ्कुरविशेषं स्वीकृत्य दोषवारणायाव्यापकीभूतविषयताशून्यत्वनिवेशनम् । जगदीशमते तादृशाङ्कुरविशेषस्यास्वीकारादिति ग्रन्थकर्त्तुराशयः । अङ्कुरविशेषे दोषो यथा, यत्र स्थलविशेषे बाधविषयकं ज्ञानं नियमतो ह्रदाद्यंशे घटकालीनत्वमवगाह्यैव जातं तत्रत्यबाधेऽव्याप्तिः, दोषतावच्छेदकगतरूपवृत्तिविषयत्वाऽप्रसिद्धेः ।

अव्यापकीभूतविषयताशून्यत्वनिवेशे च तज्ज्ञानकालीनत्वविषयतानाव्यापकीभूतेति तच्छून्यत्वस्य तत्र सत्त्वेन तादृशज्ञानस्य प्रतिबन्धकतया लक्षणसंगतिः । न च तत्र स्थले साध्याभाववद्घटकालीनपक्षादावतिव्याप्तिः अव्यापकीभूतविषयताशून्यत्वविशिष्टान्तराऽघटितत्वविशेषणेनावारणात्, इति भट्टाचार्यमतेऽपि तादृशाङ्कुरे मानाभावो मन्यतामिति वाच्यम् यत्र स्थलविशेषे बाधघटकपक्षांशे घटकालीनत्वमवगाह्य ज्ञानं जातं पृथक्तया च बाधविषयकमप्रामाण्यज्ञानास्कन्दितमेव तत्रत्यबाधेऽव्याप्तिः । अप्रामाण्यज्ञानानास्कन्दितज्ञानवृत्तितादृशसमुदायत्ववृत्तिनिरूपकताकविषयत्वाऽप्रसिद्धेः ।

तत्र घटकालीनपक्षघटितबाधे नातिव्याप्तिः, विशिष्टान्तराऽघटितत्वेन तद्वारणात्, विशिष्टान्तरञ्च बाधत्वं तद्घटितत्वात् ।

न चाव्यापकीभूतविषयताशून्यत्वनिवेशे कथं तत्र लक्षणसमन्वयः. दोषतावच्छेदकावच्छिन्नविषयत्वाव्यापकस्य घटकालीनविषयत्वस्य दोषज्ञाने नियमतः सत्त्वादिति वाच्यम्, अप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तिस्वावच्छिन्नविषयत्वाव्यापकत्वस्य घटकालीनत्वविषयतायामसत्त्वादिति ध्येयम् ।

यद्वा यत्र स्थलविशेषे घटविषयकं ज्ञानं नियमतो बाधविषयकं सत्प्रतिपक्षविषयकञ्च तत्रत्यघटेऽतिव्याप्तिः। प्रकृतानुमितीयैकधर्मावच्छिन्नप्रतिबध्यतानिरूपितबाधसत्प्रतिपक्षनिष्ठप्रतिबन्धकतायाः घटत्वावच्छिन्नविषयत्वव्यापकत्वात्, प्रकृतानुमितिप्रतिबन्धकतात्वेनैवानुगतधर्मपुरस्कारेण व्यापकत्वस्य निवेशादिति। न च तत्र घटे विशिष्टान्तराघटितत्वाभावान्नातिव्याप्तिरिति वाच्यं, यत्र घटविषयकज्ञानत्वं बाधविषयकज्ञानत्वव्यापकं क्वचित् सत्प्रतिपक्षविषयकं तत्र घटेऽतिव्याप्तिः। न च तादृशाङ्कुरस्वीकारे बाधेऽव्याप्तिः, भट्टाचार्यमते विशिष्टान्तराघटितत्वशरीरे प्रतीतिपदस्य निवेशेन विशिष्टान्तरीभूतघटत्वघटितत्वादिति वाच्यम् विशिष्टान्तरघटकस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदके प्रकृतप्रतिबन्धकतानतिरिक्तवृत्तित्वं स्वव्यापकतत्कत्वरूपमेव। तथा च यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयत्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वमित्यर्थस्य वक्ष्यमाणतया घटत्वावच्छिन्नविषयित्वाव्यापकीभूतपरस्परबाधसत्प्रतिपक्षविषयताशून्यघटत्वावच्छिन्नविषयताशालिनिश्चयाऽप्रसिद्धेरिति घटत्वस्य विशिष्टान्तरत्वासम्भवादिति।

वस्तुतस्तु यत्र जलवद्ध्रदज्ञानं क्वचिदप्रामाण्यज्ञानास्कन्दित क्वचित्तद्घटितसत्प्रतिपक्षविषयकं, तत्र जलवद्ध्रदेऽतिव्याप्तिः। एतेन यद्रूपावच्छिन्नविषयतायामभावविशिष्टान्यत्वनिवेशेऽपि न निस्तारः, अप्रामाण्यज्ञानास्कन्दितस्य तादृशस्योत्तेजकत्वादिति ध्येयम्।

## दीधितिः

तेन विशिष्टस्याऽसत्त्वेऽपि भ्रमात्प्रतिबन्धेऽपि न क्षतिः।

## गादाधरी

विशिष्टस्य = विशिष्टविषयकत्वस्य, असत्त्वेऽपि = वह्न्यभावत्वादिना घटाद्यवगाहिभ्रमेऽसत्त्वेऽपि। तथा च विशिष्टविषयकत्वेन प्रतिबन्धकता न सम्भवतीति भावः। भ्रमात्प्रतिबन्धेऽपि = तादृशभ्रमस्यानुमित्यनुत्पादप्रयोजकत्वेऽपि, न क्षतिः नोक्तयुक्त्या पर्याप्त्यनिवेशेऽसम्भवस्तदनिवेशे पूर्वोक्तातिप्रसङ्गो वा।

## विमलप्रभा

दीधितिग्रन्थं व्याचष्टे विशिष्टस्येत्यादिना । विशिष्टविषयकत्वस्य = वह्न्यभावविशिष्टह्रदादिविषयकत्वस्य । तथा च = वह्न्यभाववत्वादिना घटावगाहिभ्रमे विशिष्टविषयत्वस्याभावे च । विशिष्टविषयकत्वेन = वह्न्यभावविशिष्टह्रदादिविषयकत्वेन । तादृशभ्रमस्य = पर्वतादिविशेष्यकवह्न्यभावादिप्रकारकपर्वतो वह्न्यभाववानित्यादिभ्रमस्य । नोक्तयुक्तया = पूर्वोक्तयुक्त्या निरूप्यनिरूपकभावापन्नविषयताशालित्वेन प्रतिबन्धकत्वेनेति युक्त्या । तदनिवेशे = पर्याप्त्याख्यसम्बन्धानिवेशे । पूर्वोक्तातिप्रसंगः = बाधाद्येकदेशे वह्न्यभावादावतिव्याप्तिः । अयमर्थः । विशिष्टविषयकत्वेन प्रतिबन्धकत्वासम्भवेन निरूप्यनिरूपकभावापन्नविषयताशालित्वेन प्रतिबन्धकत्वेन पूर्वोक्तासम्भवः, न वा बाधाद्येकदेशे साध्याभावादौ पर्याप्त्यनिवेशे दोष इति संक्षिप्तार्थः विस्तरस्तु पूर्वमेवाभिहितमिति ।

## गादाधरी

ननु विशिष्टदोषघटकीभूततदेकदेशविषयतायां स्वरूपसम्बन्धरूपावच्छेदकत्वसत्त्वेऽपि यादृशविशिष्टविषयतासामान्यस्य तादृशावच्छेदकत्वविवक्षया अतिप्रसंगवारणसम्भवात् तदेव कथं न विवक्षितमिति ।

## विमलप्रभा

लक्षणे सामान्यपदं प्रक्षिप्य पूर्वोक्तातिव्याप्तिं वारयन् स्वरूपसम्बन्धरूपावच्छेदकतावादी पुनराह नन्वित्यादिना । विशिष्टदोषघटकीभूततदेकदेशविषयतायां = वह्न्यभाववद्ह्रदादिरूपदोषघटकवह्न्यभावादिरूपैकदेशनिष्ठविषयतायाम् । यादृशविशिष्टविषयता = यद्रूपावच्छिन्नविषयता । तादृशावच्छेदकत्वविवक्षया = स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशेन । अतिप्रसङ्गवारणसम्भवात् = बाधाद्येकदेशे वह्न्यभावादावतिव्याप्तिवारणसम्भवात् । तदेव = स्वरूपसम्बन्धरूपावच्छेदकत्वमेव । कथन्न विवक्षितं = कस्मान्न निवेशितम् । अयमर्थः । मूलोक्तलक्षणघटकीभूततृतीयार्थाऽवच्छेदकत्वमनतिरिक्तवृत्तित्वरूपमेव न तु स्वरूपसम्बन्धरूपं, तथात्वे यद्रूपावच्छिन्नविषयताप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावती तद्रूपावच्छिन्नत्वमिति लक्षणं स्यादेवं,सति पर्वतो वह्नि-

मान् धूमादित्यादौ वह्न्यभावाद्येकदेशेऽतिप्रसङ्गो दुर्वारः, पर्वतो वह्निमानित्याद्यनुमितित्वव्यापकप्रतिबध्यतानिरूपिता या वह्न्यभाववान् पर्वत इत्याकारकनिर्णयनिष्ठा प्रतिबन्धकता तन्निरूपितस्वरूपसम्बन्धरूपावच्छेदकतापदेनैकदेशीयवह्न्यभावत्वाद्यवच्छिन्नविषयतायाः धर्तुं शक्यत्वात् । अतः अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वमेव निवेश्यमिति प्रागेवाभिहितम् । तत्रेयं शङ्का यद्रूपावच्छिन्नविषयतासामान्यं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत्तद्रूपावच्छिन्नत्वमिति सामान्यपदघटितलक्षणार्थकरणेनैव वह्न्यभावाद्येकदेशेऽतिव्याप्तिवारणसम्भवात्, पर्वतो वह्न्यभाववानित्यादिज्ञानीयवह्न्यभावविषयतायाः पर्वतो वह्निमानित्यनुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत्त्वेऽपि विषयतासामान्यान्तर्गतवह्न्यभावः वह्न्यभाववान् घटःपटः इत्यादिज्ञानीयवह्न्यभावादिविषयतायां तादृशानुमितिप्रतिबन्धकतावच्छेदकत्वविरहेण वह्न्यभावत्वावच्छिन्नविषयतायाः यद्रूपावच्छिन्नविषयतासामान्यपदेन धर्त्तुमशक्यतया लक्षणागमनात् । तथा च स्वरूपसम्बन्धरूपावच्छेदकत्वमेव कथन्न दीधितिकृता निवेशितमिति भावः ।

## गादाधरी

न च सामान्यपदस्य व्यापकत्वार्थकतया प्रतिबन्धकतावच्छेदकतायां विशिष्टविषयतात्वव्यापकत्वं प्रवेश्यं, तदपेक्षया प्रतिबन्धकतायां विशिष्टविषयताव्यापकत्वनिवेशनमेवोचितमिति वाच्यम् ? यतो वह्न्यभावविशिष्टह्रदादिनिरूपितविषयताया अनुमित्यप्रतिबन्धकसंशयाहार्यप्रामाण्यज्ञानास्कन्दितज्ञानसाधारणतया नानुमितिप्रतिबन्धकतायां तद्व्यापकत्वमित्यनाहार्यप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टाया विशिष्टविषयताया एव व्यापकत्वं प्रतिबन्धकतायां भवता विवक्षणीयं तदपेक्षया लाघवेन च स्वरूपसम्बन्धरूपावच्छेदकतायां बाधादिरूपदोषविषयतात्वव्यापकत्वं वक्तुमुचितम् ।

## विमलप्रभा

स्वरूपसम्बन्धरूपावच्छेदकतावादिमते सामान्यपदप्रक्षेपे गौरवमाशङ्कते

न चेत्यादिना । विशिष्टविषयतात्वव्यापकत्वं = यद्रूपावच्छिन्नविषयतात्वव्यापक-त्वम् । प्रवेश्यं = लक्षणे निवेश्यम् । स्वरूपसम्बन्धरूपावच्छेदकत्ववादिनेति शेषः । तदपेक्षया = यद्रूपावच्छिन्नविषयतात्वव्यापकत्वप्रतिबन्धकतावच्छेदकतायां निवेशा-पेक्षया ।

प्रतिबन्धकतायां = प्रकृतानुमितिव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता-याम् । उचितं = लाघवादनतिरिक्तवृत्तित्वरूपावच्छेदकत्ववादिना तन्निवेशनमेव समीचीनम् । यत इत्यारभ्य विवक्षणीयमित्यन्तेनानतिरिक्तवृत्तित्वरूपावच्छेदकता-वादिनये गौरवं प्रदर्शयति । यतः = यस्माद्धेतोः । अनुमित्यप्रतिबन्धकसंशयाहा-र्याप्रामाण्यज्ञानास्कन्दितज्ञानसाधारणतया = ह्रदो वह्निमानित्यनुमितेरप्रतिबन्धकी-भूतो यः ह्रदो वह्निमान्नवेति संशयः वह्निमद्ध्रदो वह्न्यभाववानित्याहार्यज्ञानं, ह्रदो वह्न्यभाववानिदं ज्ञानमप्रमेत्यप्रामाण्यज्ञानास्कन्दितज्ञानं तत्रापि वह्न्यभाव-विशिष्टह्रदविषयतायाः वर्त्तमानतया । तद्व्यापकत्वं = तादृशविषयताव्यापकत्वम् । भवता = अनतिरिक्तवृत्तित्वरूपावच्छेदकत्ववादिना । तदपेक्षया = तादृशविशिष्टविष-यताव्यापकत्वनिवेशापेक्षया । लाघवेन = अनाहार्यत्वाद्यनिवेशप्रयुक्तलाघवेन । अ-यमर्थः । अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशपक्षेऽपि केवलविषयतायाः निरु-क्तप्रतिबन्धकताव्यापकत्वपक्षे ह्रदो वह्निमान् जलादित्यादौ ह्रदो वह्निव्याप्यजल-वान् वह्निमानित्याद्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतारहिते ह्रदो वह्निमान्न वेति संशये, वह्निमद्ध्रदो वह्न्यभाववानित्याहार्यज्ञाने, ह्रदो वह्न्य-भाववानिदं ज्ञानमप्रमेत्यप्रामाण्यज्ञानास्कन्दितज्ञाने च वह्न्यभावविशिष्टह्रदविषय-तायाः वर्त्तमानतया विषयताव्यापकत्वस्य प्रतिबन्धकतायां विरहेणासम्भवस्स्यात् । अतो न केवलविषयताव्यापकत्वन्निवेशनीयम् । किन्तु अनाहार्याप्रामाण्यज्ञानानास्क-न्दितनिश्चयवृत्तित्वविशिष्टविषयताव्यापकत्वमेव, तथा चैतादृशविषयतायाः प्रकृता-नुमितिप्रतिबन्धकतारहिते संशयादाववर्त्तमानतया संशयादिमादायासम्भववारणेऽपि अनाहार्यत्वादिनिवेशप्रयुक्तगौरवस्य जागरूकतया अनाहार्यत्वाद्यनिवेशप्रयुक्तलाघवेन विषयतात्वव्यापकत्वमेव प्रतिबन्धकतावच्छेदकतायां निवेशनीयम् । तथा च य-द्रूपावच्छिन्नविषयतात्वव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितबन्धकता-

वच्छेदिका तद्रूपावच्छिन्नत्वम्। भवति च वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयतात्वव्यापिका ह्रदो वह्निमानित्याद्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितवह्न्यभाववान् ह्रद इति निश्चयनिष्ठप्रतिबन्धकतानिरूपितावच्छेदकतेति तद्रूपावच्छिन्नत्वस्य बाधादौ सत्त्वात् लक्षणसङ्गतिरिति भावः।

## बलदेवी

यद्रूपावच्छिन्नविषयतासामान्यमनुमितिप्रतिबन्धकतावच्छेदकमिति भट्टाचार्यः। अथात्र प्रतिबन्धकतावच्छेदकतायां तादृशविषयितात्वव्यापकत्वनिवेशपक्षे तादृशविषयतावृत्तिभेदप्रतियोगितावच्छेदकत्वाभावो निवेश्यः,। प्रतिबन्धकतायां विषयताव्यापकत्वनिवेशपक्षे तादृशविषयतासमानाधिकरणभेदप्रतियोगितावच्छेदकत्वाभावो निवेश्यः। तथा च विषयतात्वव्यापकत्वापेक्षया विषयताव्यापकत्वनिवेशपक्षे एव गौरवमिति कथं विषयताव्यापकत्वनिवेशनमेवोचितमिति ग्रन्थो नासङ्गतः। न चाऽवच्छेदकतायां व्यापकत्वपक्षे व्यापकत्वघटकभेदप्रतियोगितावच्छेदकत्वे प्रतिबन्धकतावच्छेदकत्वतदितरोभयानवच्छिन्नत्वं देयं, मन्मते च प्रतिबन्धकतात्वतदितरोभयानवच्छिन्नत्वं देयं, प्रतिबन्धकताया ऐक्यादवच्छेदकतायाः नानात्वादिति वाच्यम्। पुच्छलग्नविशेषणस्यैकस्याधिक्ये तृतीयस्येतरवारकदानकाले तन्निरूपितावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वम् एवं तन्निरूपिततन्निरूपितावच्छेदकतानिरूपितत्वम् एवञ्च चतुर्थाकाले निरूपितनिरूपितनिरूपितभिन्नावच्छेदकत्वानिरूपितेत्यादिक्रमेण देयम्।

तथा च पुच्छांशे एकस्याधिक्ये यावदितरवारकविशेषणं देयं तावदवच्छेदकत्वमधिकम् [ अधिकरणनिष्ठावच्छेदकतामादाय बोध्यं ] शेषांशे [ विषयितात्वव्यापकत्वपक्षे ] विशेषणस्यानाधिक्ये, इतरवारकस्याल्पत्वादल्पत्वं, न्यूनवारकस्य व्यावृत्तिः, तद्व्यक्तेः स्वरूपतो भानात्, अवच्छेदकतावच्छेदकसाधारणावच्छेदकतामते इतरवारकपर्याप्तिकुक्षौ यावत्पदार्थनिष्ठावच्छेदकताभिन्नत्वं निवेश्यम्। अन्यथा तत्तत्पदार्थनिष्ठावच्छेदकतामादायासम्भव इति चेन्न, इतरवारकदानकालेऽनवस्थाभयेन

भिन्नावच्छेदकत्वानिरूपितत्त्वरूपतद्व्यक्तिमदवच्छेदकताभिन्नत्वं निवेश्यम्। एवञ्चेच्छीयविषयित्वादेः प्रतिबन्धकतानवच्छेदकतया विषयितायां ज्ञानीयत्वं निवेश्यं, तथा च न किमपि लाघवमिति वदन्ति। परे तु नन्वत्र प्रतिबन्धकतावच्छेदकतायां विशिष्टव्यापकत्वनिवेशापेक्षया प्रतिबन्धकतायां विषयताव्यापकत्वमेवोचितमित्यनेन लाघवमभिहितः, तन्न सम्भवति प्रतिबन्धकतायां व्यापकत्वनिवेशे विशिष्टविषयतावन्निश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावस्य निवेशनीयतया तत्प्रतियोगितावच्छेदककुक्षौ निश्चयस्यापि निवेशात् तदभावस्य गुरुशरीरकत्वम्, एतन्मते विशिष्टविषयतावृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावस्य निवेशात्, तत्र निश्चयस्यावच्छेदककुक्षावनिवेशेन लघुशरीरकत्वमित्येतद्विवक्षया विपरीतलाघवमिति।

न चाहार्यादिविषयतायाः प्रतिबन्धकतावच्छेदकत्वाभावादसम्भववारणायानाहार्यज्ञानीययद्रूपावच्छिन्नविषयतानिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावस्यैव निवेशनीयत्वात्, तदंशे साम्यम्, प्रतिबन्धकतावच्छेदकतायां व्यापकत्वस्य निवेशनीयतया लक्षणस्य गुरुत्वमिति वाच्यम् एतन्मतेऽपि प्रतिबन्धकतायामवच्छेदकतासम्बन्धेन व्यापकत्वस्य निवेशात्। न चैवं स्वमते तादृशनिश्चयनिष्ठात्यन्ताभावाप्रतियोगित्वरूपव्यापकतानिवेशेनापि तत्सम्भवति, तन्मते वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वेनावच्छेदकतासम्बन्धावच्छिन्नप्रतियोगिकाभावाऽप्रसिद्धेः। तादृशविषयतानिष्ठतत्सम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदप्रतियोगितावच्छेदकत्वाभावस्यैवागत्या निवेशनीयतया तादृशव्यापकत्वरूपाभावप्रतियोगितावच्छेदकत्वप्रतियोगितायामपीति गौरवमिति वाच्यम् तथापि तादृशात्यन्ताभावाप्रतियोगित्वस्य कुत्राप्यसत्त्वात्तादृशात्यन्ताभावप्रतियोगितानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकैकत्ववदुभयावृत्तिधर्मवत्त्वं विवक्षणीयम्। धर्मे उभयावृत्तित्वानुपादाने तादृशैकत्ववत्प्रमेयत्वमादायोदासीनेऽतिव्याप्तिः। तथा च स्वमते गौरवम्। न च तथापि त्वन्मत एव तादृशविषयतावृत्तिप्रतिबन्धकतावदुभयभेदं तादृशप्रतिबन्धकतावद्वह्नित्वभेदश्चादायासम्भववारणायोक्तविवक्षाऽऽवश्यकीति वाच्यं, तथापि तादृविषयतावृत्तिभेदप्रतियोगिताव-

च्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकैकत्ववत्त्वस्य विवक्षणीयत्वात् ।

तद्व्यक्तेः स्वरूपतो भानानङ्गीकारेण तद्व्यक्तिमान्नेत्याकारकभेदस्य तादृशविषयतावृत्तितयाऽसम्भववारणाय यत्किञ्चित्प्रतिबन्धकताव्यक्तिमद्भेदमादाय तादृशविषयिताभेदप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकैकत्ववद्धर्मवत्त्वस्य विवक्षणीयतया तादृशधर्मे उभयावृत्तित्वानुपादाने तादृशप्रमेयत्ववत्त्वमादायोदासीनेऽतिव्याप्तिः, तथा च गौरवं दुष्परिहरमेवेति ।

अथ वा स्वमते तादृशनिश्चयवृत्त्युभयावृत्तिधर्मेतरधर्मानवच्छिन्नत्वप्रतियोगिताकात्यन्ताभावाऽप्रतियोगित्वं विवक्षणीयम् । तन्मते विषयतावृत्त्युभयावृत्तिधर्मेतरधर्मानवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकभेदप्रतियोगितावच्छेदकत्वाभावो वक्तव्यमिति महागौरवमिति दिक् ।

## गादाधरी

तथा सति निश्चयत्वाद्यनिवेशात् समानाकारकज्ञानस्य विषयताया भेदस्याप्रामाणिकतया संशयादिज्ञानीयविषयताया अपि निश्चयत्वादिविशिष्टीयतयैव प्रतिबन्धकतावच्छेदकतया बाधादिरूपदोषनिरूपितविषयतात्वव्यापकताया अक्षतत्वात् ।

## विमलप्रभा

स्वरूपसम्बन्धरूपावच्छेदकतापक्षे लक्षणस्य लघुत्वे युक्तिमाह तथा सतीत्यादिना । तथा सति = विषयतात्वव्यापकत्वस्य प्रतिबन्धकतावच्छेदकतायां निवेशे सति । निश्चयत्वाद्यनिवेशात् = अनाहार्येत्यादिविशेषणस्य प्रयोजनाभावेनाप्रवेशात् । समानाकारकज्ञानेषु = स्वस्मिन् यादृशनिरूप्यनिरूपकभावापन्नविषयताकत्वं तादृशनिरूप्यनिरूपकभावापन्नविषयताकज्ञानेषु, मुख्यविशेष्यताविशिष्टमुख्यविशेष्यताशालिज्ञानेष्विति यावत् । अप्रामाणिकतया = प्रमाणरहिततया । संशयादिज्ञानीयविशेषतायाः = ह्रदो वह्निमान्नवेति संशयादिज्ञानीयविषयतायाः । निश्चयत्वादिविशिष्टीयतया = निश्चयत्वादिविशिष्टनिश्चयनिरूपिततया । बाधादिरूपदोषनिरूपितविषयता = वह्न्यभावविशिष्टह्रदादिविषयता । अक्षतत्वात् = वर्तमानत्वात् । अथ-

मर्थः । अनतिरिक्तवृत्तित्वरूपावच्छेदकतानिवेशपक्षे संशयादिज्ञानमादायासम्भव-वारणायानाहार्यप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषय-ताव्यापकत्वं प्रकृतानुमितिप्रतिबन्धकतायामवश्यमेव निवेशनीयम् ।

स्वरूपसम्बन्धरूपावच्छेदकतानिवेशपक्षे तु समानाकारकज्ञानीयविषयतायाः परस्परमभिन्नतया संशयादिज्ञानीयविषयताया अपि निश्चयत्वावच्छिन्ननिरूपितत्वेना-नुमितिप्रतिबन्धकतावच्छेदकतया वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयतात्वव्याप-कत्वं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकतायां वर्त्तत एवेत्यत एवासम्भववारणसम्भ-वेनानाहार्यप्रामाण्यज्ञानानास्कन्दितत्वादिनिवेशस्य प्रयोजनाभावेन लाघवस्याक्ष-ततया तन्निवेशनमेवोचितमिति भावः ।

## बलदेवी

तादृशज्ञानसमानाकारकानाहार्यज्ञानाऽप्रसिद्धेरिति गदाधरः । अ-थात्र किन्तावत् समानाकारकत्वमिति चेत् स्वीयमुख्यविशेष्यताविशिष्टमुख्यविशेष्यता-वत्त्वं समानाकारकत्वं, वैशिष्ट्यञ्च स्वसमनियतत्वस्वनिरूपितविषयतात्वावच्छिन्नप्रति-योगिताकपर्याप्त्यनुयोगितावच्छेदकधर्मवत्त्वोभयसम्बन्धेन । वृत्तित्वञ्च स्वनिरूपित-विषयतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । निरूपित-त्वञ्च, साक्षात्परम्परासाधारणम् । स्वं समानाकारकत्वेनाभिमतज्ञानम् । अत्र प्रथमसम्बन्धनिवेशात् घटत्वेन घटावगाहिज्ञानघटत्वेन पटावगाहिज्ञानयोः समानाका-रकत्वव्यावृत्तिः । सामानाधिकरण्यमात्रनिवेशेन तद्व्यावर्त्तनेऽपि घटत्वेनैकघटाव-गाहिज्ञानस्य घटत्वेन घटपटावगाहिज्ञानस्य च घटत्वेन सकलघटावगाहिज्ञानसमा-नाकारकत्वापत्तिरतस्तदुपेक्षितम् । समनियतत्वघटकदलद्वयमपि घटत्वेनैकघटवि-षयकज्ञानघटत्वेन यावद्घटविषयकज्ञानयोः परस्परं समानाकारकत्वापत्तिवारणार्थं निवेशितम् ।

उभयत्र मुख्यत्वाऽनिवेशे घटवद्भूतलमिति ज्ञानघटवद्भूतलवान् देश इति ज्ञानयोः परस्परं समानाकारकत्वापत्तिस्स्यादतस्तन्निवेशः । तच्च मुख्यत्वन्न प्रकारता-

नात्मकत्वं, भट्टाचार्यमते समानाधिकरणयोरपि विषयतयोर्नभेदः किन्तु अवच्छेद्यावच्छेदकभाव एवेति, गौणीयविशेष्यताया अपि प्रकारताभिन्नत्वेन तद्दोषतादवस्थ्यात्। नापि विषयत्वानवच्छिन्नत्वं, विशेष्यतावच्छेदकनिष्ठनिरवच्छिन्नप्रकारतानिरूपितनिरवच्छिन्नविशेष्यत्वावच्छिन्नत्वात्, तथा च न कुत्रापि तादृशमुख्यत्वं सम्भवतीति। किन्तु प्रकारत्वानवच्छिन्नत्वं तत् अथ वा अवच्छेदकत्वानवच्छिन्नप्रकारतानिरूपितत्वं तत्। तेन घटवद्भूतलवान् देश इति ज्ञानीयघटत्वावच्छिन्नप्रकारतानिरूपितप्रकारतानात्मकभूतलत्वावच्छिन्नविशेष्यतामादाय घटवद्भूतलमित्यस्य न समानाकारकत्वापत्तिः, घटनिष्ठावच्छेदकत्वावच्छेद्यघटनिष्ठप्रकारतानिरूपितत्वात्।

अत एव वह्न्यभाववद्ध्रदो वह्निमानिति ज्ञानसमानाकारकाऽनाहार्यज्ञानाऽप्रसिद्धिरुक्ता भट्टाचार्येण साऽपि संगच्छते। अन्यथा वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतामुपादाय वह्न्यभाववान् ह्रद इति ज्ञानस्य प्रसिद्धतया तद्ग्रन्थाऽसङ्गतिप्रसङ्ग इति।

यत्तु मुख्यत्वं प्रकारतानात्मकत्वम् अनाहार्यज्ञानस्याहार्यज्ञानस्य च गौणीयविशेष्यतामादायोक्तदोषवारणाय वैशिष्ट्यघटकसम्बन्धे स्ववृत्तियावदवच्छेद्यत्वाभावकूटवत्त्वस्यापि प्रक्षेपः। तथा च स्ववृत्तिवह्निप्रकारतानिरूपितविशेष्यत्वावच्छेद्यत्वाभावस्याहार्यज्ञानीयविशेष्यतायामसत्त्वादिति तत्तुच्छम्। गदाधरमते सकलविषयताया भिन्नत्वेन प्रकारतानात्मकत्वस्यैव सर्वदा सत्त्वादव्यावर्त्तकत्वापत्तेः। एवं लक्षणस्वरूपलक्षणनिर्वचने न लक्ष्यनिर्वचनमस्मदादीनां लक्षणैकचक्षुष्कत्वात्।

यदि च समानाकारकत्वं स्यात्तदा स्वपदेन ज्ञानद्वयीयविशेष्यताया एकाया एव धारणेन तादृशसम्बन्धद्वयस्यापि सत्त्वात्, अन्यथा स्वीयविशेष्यतावत्त्वस्यैव सम्यक्त्वे गुरुतराऽऽयासो निरर्थक एव, यादृशज्ञानयोः समानाकारकत्वमस्ति तयोश्च स्वीयविषयतावत्त्वमप्यस्ति, ययोर्ज्ञानयोः समानाकारकत्वन्नास्ति तयोः स्वीयविषयतावत्त्वमपि नास्ति तदीयविषयतयोरनैक्यादेवश्चान्योन्याश्रयदोषनिरासाय प्रयासाधिक्यमिति विषयताप्रकारतयोः पर्याप्तिः स्वयं सव्यभिचारे स्वीकृतेति भावः।

केचित्तु समानाकारकारकत्वं स्वीयविषयताव्यापकप्रतिबन्धकतावत्त्वं, व्या-

पकताघटकसम्बन्धश्च स्वानवच्छेदकविषयतावत्त्वं, भूतलं घटवत्पटवच्चेति ज्ञानस्य समूहालम्बनसमानाकारकत्वविरहेऽपि प्रत्येकं भूतलं घटवदित्यादिज्ञानेन समानाकारकत्वं समूहालम्बनज्ञानस्येति, तन्न विशिष्टबुद्धिप्रतिबन्धकत्वस्य भ्रमसाधारणत्वात्तादृशप्रतिबन्धकत्वमादाय भ्रमेऽपि प्रमासमानाकारकत्वापत्तिः। न च स्वीयविषयताव्याप्यप्रतिबन्धकतावत्त्वं तथेति वाच्यम्। प्रमेयवानिति ज्ञानस्य स्वीयविषयत्वाभावाऽप्रसिद्धया व्याप्यत्वाऽप्रसिद्धत्वेन तत्समानाकारकत्वानुपपत्तेः। स्वाभाववद्वृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वस्वरूपव्याप्यत्वस्य निवेशेन तद्दोषवारणेऽपि वह्नित्वावच्छिन्नतत्तद्वह्निप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिज्ञानं जायतामितीच्छायाः प्रतिबन्धकत्वमादायवह्नित्वेन तत्तद्वह्न्यवगाहिज्ञानस्य वह्नित्वेन सकलवह्न्यवगाहिज्ञानसमानाकारकत्वापत्तिरतः सामनैयत्यं वाच्यम्। तथा च यद्धर्मोपरागेण यद्विषयकयज्ज्ञानविषयकत्वं तद्धर्मोपरागेणतन्निष्ठविषयताकतज्ज्ञानस्यैव प्रतिबन्धकत्वात्, तादृशप्रतिबन्धकतामादाय तादृशज्ञानसमानाकारकत्वस्य लक्षणसमन्वयसम्भवः। पर्वतो वह्निमानिति निश्चयनिष्ठप्रतिबन्धकतामादाय संशये पर्वतो वह्निमान् घटवांश्चेति समूहालम्बनादौ समानाकारकत्वोपपत्तिः। परन्तु वह्नित्वावच्छिन्नवह्निनिष्ठविषयताशालिज्ञानं जायतामितीच्छाप्रतिबन्धकतामादाय पर्वतो वह्निमानिति ज्ञानस्य वह्निमानिति ज्ञानसमानाकारकत्वापत्तिः। न च लक्षणघटकप्रतिबन्धकतावत्त्वञ्च, स्वरूपविशिष्टप्रतिबन्धकतावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन निवेश्यम्। वैशिष्ट्यञ्च, स्वव्यापकत्वस्वव्यभिचारित्वोभयसम्बन्धेन,व्याप्यत्वं व्यापकत्वञ्च स्वावच्छेदकविषयतावत्त्वसम्बन्धेन। एवमप्यसम्भवापत्तेः, वह्नित्वावच्छिन्नविषयतानिरूपितपर्वतत्वावच्छिन्न विषयताशालिज्ञानं जायतामितीच्छाप्रतिबन्धकतावच्छेदकविषयतायाः भ्रमविषयघटादिसाधारणतया तत्प्रतिबन्धकतायाः। एवञ्च पर्वतत्ववान् वह्निमानिति ज्ञानसमानाकारकत्वं निर्द्धर्मितावच्छेदककखण्डज्ञानेऽपिसत्त्वात् विषयस्यैवयात्। एवञ्च वह्नित्वावच्छिन्नवह्निमात्रनिष्ठविषयतानिरूपितविषयताशालिज्ञानं जायतामितीच्छाप्रतिबन्धकत्वं वह्नित्वावच्छेद्यत्वरूपपदार्थस्यापि तथा च विषयतावानित्याकारकज्ञानसमानाकारकत्वाऽसिद्धिः प्रतिबन्धकतायाः स्वनिरूपितनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतात्पदार्थीभूतविषयतासम्बन्धेन सर्वत्र सत्त्वात्। निष्ठत्वसम्बन्धावच्छिन्नाऽवच्छे-

दकतावद्विषयतासम्बन्धेनोक्तौ च मात्रघटकतदितरावृत्तित्वकुक्षौ प्रतियोगितासम्बन्धेनापि तत्पदार्थस्य पतितत्वादिति ध्येयम् ।

## गादाधरी

न च वह्न्यभाववान् ह्रदो वह्निमानित्याहार्यज्ञानीयवह्न्यभावविशिष्टह्रदादिविषयता नाऽनाहार्यज्ञानसाधारणी तादृशाहार्यज्ञानसमानाकारकानाहार्यज्ञानाऽप्रसिद्धेः, ह्रदो वह्न्यभाववानित्यनाहार्यज्ञानीयवह्न्यभावविशिष्टह्रदादिविषयतातश्च वह्न्यादिप्रकारतानिरूपिततादृशाहार्यज्ञानीयवह्न्यभावविशिष्टह्रदादिविषयताया भिन्नत्वात्, तथा चानाहार्यज्ञानवृत्तित्वविशिष्टविषयताया एव प्रतिबन्धकतावच्छेदकतया न प्रतिबन्धकतावच्छेदकतायां दर्शिताऽऽहार्यज्ञानीयविषयितासाधारणविशिष्टविषयितात्वव्यापकत्वमिति वाच्यम्, तथा सति अनाहार्यज्ञानीयविशिष्टविषयतात्वव्यापकताया एव विवक्षणीयत्वात्, तावतापि संशयान्यत्वाप्रामाण्यज्ञानानास्कन्दितत्वाप्रवेशेन, लाघवानपायात् ।

## विमलप्रभा

शङ्कते न चेति वाच्यमित्यनेनान्वयः । नाऽनाहार्यज्ञानसाधारणी=नाऽनाहार्यज्ञानवृत्तिः, न निश्चयादौ वृत्तित्वमर्हतीति यावत् । तादृशाहार्यज्ञानं=वह्न्यभाववान् ह्रदो वह्निमानित्याकारकज्ञानम् । तथा च=अनाहार्यज्ञानीयविषयतायाः, आहार्यज्ञानीयविषयतायाश्च परस्परभिन्नत्वे च । दर्शिताहार्यज्ञानीयविषयता=वह्न्यभाववान् ह्रदो वह्निमानित्याकारकाहार्यज्ञानीयवह्न्यभावविशिष्टह्रदाविषयता । तथा सति=आहार्यज्ञानीयविषयतातः अनाहार्यज्ञानीयविषयतायाः विभिन्नत्वे सति । तावतापि=अनाहार्यत्वप्रवेशेनाऽपि । अप्रवेशेन=अनिवेशेन । लाघवानपायात्=स्वरूपसम्बन्धरूपावच्छेदकतावादिमते स्वरूपतः लाघवसत्त्वात् । अयमर्थः । समानाकारकज्ञानीयविषयतायाः परस्पराभिन्नत्वेऽपि वह्न्यभाववान् ह्रदो वह्निमानित्याकारकाहार्यज्ञानं न ह्रदो वह्न्यभाववानित्याकारकबाधनिश्चयसमानाकारकं यतः बाधनिश्चयीया या विशेष्यता सा शुद्धह्रदत्वावच्छिन्ना आहार्यज्ञानी-

या या विशेष्यता सा च वह्न्यभाववद्ध्रदत्वोभयावच्छिन्नेति आहार्यज्ञाने बाधनिश्चयीयविशेष्यताया अभावसत्त्वादिति वह्न्यभाववान् ह्रद इति बाधनिश्चयीयवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयतात्वस्याहार्यज्ञानीयताद्दशविषयतायामपि वर्त्तमानतया तत्र ह्रदो वह्निमानित्याद्यनुमितिप्रतिबन्धकतावच्छेदकत्वस्याभावेनासम्भवः स्यदतः असम्भव-वारणाय स्वरूपसम्बन्धरूपावच्छेदकत्वकल्पेऽपि अनाहार्यज्ञानीयत्वं यद्रूपावच्छिन्नविषयतायां निवेशनीयम्, तथा च गौरवं दुष्परिहरमेवेति चेत् सत्यं यद्यप्यसम्भववारणायानाहार्यज्ञानीयत्वं यद्रूपावच्छिन्नविषयतायां निवेशनीयं तथापि अप्रामाण्यज्ञानानास्कन्दितत्वसंशयान्यत्वादिनिवेशाभावेनानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयत्वादिघटितानतिरिक्तवृत्तित्वरूपावच्छेदकत्वघटितकल्पापेक्षया केवलानाहार्यत्वघटितस्वरूपसम्बन्धरूपावच्छेदकत्वघटितकल्पे एव लाघवमिति ।

## बलदेवी

तथा सति अनाहार्यज्ञानीयविशिष्टविषयितात्वव्यापकताया एव विवक्षणीयत्वादिति भट्टाचार्यः। नन्वत्रानाहार्यत्वाऽनिवेशेऽपि नासम्भवः। अनियताहार्यविषयतायां स्वरूपसम्बन्धरूपावच्छेदकत्वं सुघटमेव। नियताहार्यज्ञानीयविषयताया लक्षणाघटकत्वात्, यथा सिद्धान्तेऽप्यव्यापकीभूतविषयताशून्यत्वस्यावश्यकत्वं तथैतत्कल्पेऽप्यस्ति, अन्यथा ह्रदादौ समानाधिकरण्येन वह्नेः साध्यतास्थले जात्यवच्छेदेन वह्न्यभावावगाहिजातिमान् वह्न्यभाववानिति ज्ञानस्य ह्रदो जातिमानि ज्ञानविशिष्टस्य प्रतिबन्धकतया ताद्दशज्ञानीयवह्न्यभाववद्ध्रदात्मकजात्यवच्छिन्नविषयतायां प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वसत्त्वेऽपि अवच्छेदकावच्छेदेन वह्न्यादिसाध्यके सामानाधिकरण्येन दोषेऽव्याप्तेः, सामानाधिकरण्येन वह्न्यभावावगाहिनो जातिमान् वह्न्यभाववान् जातिमान् ह्रद इति विशिष्टस्याप्यप्रतिबन्धकत्वात्। एवं सति नियताहार्यविषयकज्ञाने दोषविषयत्वाव्यापकविषयताशून्यत्वस्याभावात् तदीयविषयताव्यावृत्तिः। न च वह्न्यभाववद्ध्रदो वह्निमानिति नियताहार्ये दोषविषयत्वाव्यापिका न कापि विषयतेति वाच्यम्। यद्रूपावच्छिन्नविषयितात्वावच्छिन्ननिरूपितयद्रूपावच्छिन्नविषयित्वं विशिष्टविषयित्वाव्यापकं तद्रूपाव-

च्छिन्नविषयितात्वावच्छिन्ननिरूपिततद्रूपावच्छिन्नविषयितात्वावच्छिन्नशून्यत्वस्याव्यापकीभूतविषयताशून्यत्वपदार्थतया निरुक्ताहार्ये च वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयतानिरूपितवह्नित्वावच्छिन्नविषयताया विशिष्टविषयत्वाव्यापकतया तच्छून्यत्वाभावादिति विशेषणान्तरप्रक्षेपापेक्षया उक्तविशेषणस्यैवोचितत्वादिति चेन्न, ह्रदे स्वरूपतो भेदत्वसाधने भेदभेदवद्ध्रदरूपबाधेऽव्याप्तेः तत्र भेदभेदवद्ध्रदो भेद इति नियताहार्यज्ञाने यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयतायाः कस्या अपि भेदभेदवद्ध्रदत्वावच्छिन्नविषयत्वाव्यापिकाया असत्त्वात् यद्रूपावच्छिन्नविषयत्वाव्यापिकेत्युक्तावपि भेदत्ववद्भेदभेदवद्ध्रदत्वावच्छिन्नविषयत्वाप्रसिद्ध्यैव तज्ज्ञानवारणात्, तत्र च दोषविषयतायाः सत्त्वात् शेषांशे भेदत्वस्य स्वरूपतो भानेन द्वितीयरूपावच्छिन्नविषयत्वाऽप्रसिद्धेरिति। न चाहार्यस्य प्रत्यक्षात्मकतया तादात्म्येन भेदस्यापि भेदत्वेन ह्रदांशे भानात् अवच्छिन्नविषयिताऽप्रसिद्ध्या भेदभेदवद्ध्रदत्वावच्छिन्नविषयितानिरूपितभेदत्वावच्छिन्नविषयताया एवाव्यापकत्वमिति वाच्यम्। यत्र स्थलीयाहार्यज्ञानकाले ह्रदांशे भेदस्य तादात्म्येन भासकसन्निकर्षो नास्ति किन्तु भेदत्वस्यैव तत्र तादृशाहार्यस्यैव तथात्वात्, तथा चाव्याप्तिवारणायानाहार्यज्ञानीयत्वमावश्यकमिति। किञ्च भेदभेदेऽवृत्तित्वसाधने भेदभेदवत्यव्याप्तिः। तत्र तादृशदोषविषयतावति भेदत्वेन घटावगाहिभेदोभेदभेदवानिति नियताहार्ये भेदत्वावच्छिन्नविषयिताव्यापिका तदीयसकलविषयिताशेषांशे भ्रमत्वात् यद्रूपावच्छिन्नविषयत्वाऽप्रसिद्धेः भेदभेदवद्भेदत्वावच्छिन्नविषयतात्वाऽप्रसिद्ध्यैवेति, व्यधिकरणधर्मस्य निरूपकतानवच्छेदकत्वात्, तथा चानाहार्यत्वनिवेशनमावश्यकमेवेति दिक्।

यद्रूपावच्छिन्नविषयतासामान्यमित्यत्र सामान्यपदं व्यर्थमुक्तयुक्त्या अव्यापकीभूतविषयताशून्यत्वस्य निवेशनीयतया एकदेशेऽतिव्याप्तिविरहात्, एकदेशविषयताया दोषज्ञानीयाया एव प्रतिबन्धकतावच्छेदकतया तज्ज्ञानस्यैकदेशे एकदेशविषयत्वाव्यापकविशिष्टविषयिताशून्यत्वाभावात्।

न च गोत्वाभावो गोत्वाभाववानित्यादौ गोत्वाभावेऽतिव्याप्तिः। गोत्वाभावो गोत्ववानिति ज्ञानीयगोत्वाभावविषयतायाः प्रतिबन्धकतावच्छेदकत्वात्, तज्ज्ञाने च गोत्वाभावविषयत्वाव्यापकविषयताया असत्त्वात्। सामान्यपदोपादाने तु गोत्वाभाव इति ज्ञानीयतद्विषयतायाः प्रतिबन्धकतानवच्छेदकतया न दोष इति वाच्यम्।

यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयिता तादृशविशिष्टविषयित्वाऽव्यापिका तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नविषयताशून्यत्वविवक्षणेन गोत्वाभावाभावत्वावच्छिन्नविषयतानिरूपितसमवायावच्छिन्नविषयताया अव्यापकत्वादिति चेन्न। यत्र स्वरूपे स्वरूपवद्भेदत्वं साध्यते तत्र स्वरूपवद्भेदभेदवत्स्वरूपमिति बाधस्तदैकदेशे स्वरूपवद्भेदभेदवत्यतिव्याप्तिः तादृशभेदावच्छिन्नविषयित्वाव्यापिकायाः प्रतिबन्धकतावच्छेदकीभूततादृशविषयिता तच्छालिज्ञाने कस्या अप्यभावात् अतः यद्रूपावच्छिन्नविषयत्वाव्यापकयद्रूपावच्छिन्नविषयताशून्यत्वं यदि निवेश्यते तदा तादृशबाधत्वावच्छिन्नविषयिताया एवाव्यापकतया तच्छून्यत्वविरहेण तद्दोषवारणे च गौरवम्।

वस्तुतः गुणपक्षकस्वरूपतो द्रव्यभेदसाध्यके गुणो द्रव्यमिति बाधभ्रमैकदेशे गुणेऽतिव्याप्तिः, तत्र द्वितीयरूपावच्छिन्नविषयिताया असत्त्वात्। प्रकारावच्छिन्नत्वमते गुणत्वावच्छिन्नविषयतानिरूपितद्रव्यत्वरूपप्रकारावच्छिन्नविषयताया अव्यापकतया तच्छून्यत्वाभावादतिव्याप्तिवारणेऽपि प्रकारावच्छिन्नत्वास्वीकर्तृमते एव सामान्यपदव्यावृत्तिसम्भवादिति दिक्॥

## गादाधरी

मैवम्, स्वरूपसम्बन्धरूपावच्छेदकत्वप्रवेशे पाषाणमयत्वावच्छेदेन वह्न्यभाववत्तानिश्चयविशिष्टस्य पाषाणमयत्वादिविशिष्टस्य पक्षादेर्ज्ञानस्य वह्न्यनुमितिप्रतिबन्धकतया तदवच्छेदकविषयिताकपाषाणमयत्ववत्पर्वतादावतिव्याप्तिः। अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशपक्षे तादृशविशिष्टविषयतायाः पाषाणमयत्वावच्छेदेन वह्न्यभाववत्तानिश्चयाऽविशिष्टज्ञानसाधारणतया अनुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वेनातिप्रसङ्गानवकाशात्।

## विमलप्रभा

सम्प्रति अनतिरिक्तवृत्तित्वरूपावच्छेदकतावादी स्वरूपसम्बन्धरूपावच्छेदकतावादिमते दोषमाह—मैवमित्यादिना। पाषाणमयत्वावच्छेदेन वह्न्यभाववत्ता-

निश्चयविशिष्टस्य=पाषाणमयो वह्न्यभाववानित्याकारकनिश्चयविशिष्टस्य । पाषाणमयत्वविशिष्टस्य=पाषाणमयत्वप्रकारकस्य । पक्षादेर्ज्ञानस्य=पाषाणमयः पर्वत इति निश्चयस्य । वह्न्यनुमितिप्रतिबन्धकतया=पर्वतधर्मिकवह्निप्रकारकानुमितिविरोधितया । तदवच्छेदकविषयिताकपाषाणमयत्ववत्पर्वते=पर्वतधर्मिकवह्न्यनुमितिप्रतिबन्धकतानिरूपकपाषाणमयत्वविशिष्टपर्वते । निवेशपक्षे=अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशकरणे । तादृशविशिष्टविषयतायाः=पाषाणमयत्वविशिष्टपर्वतविषयतायाः । निश्चयाविशिष्टज्ञानसाधारणतया=पाषाणमयत्वावच्छेदेन पाषाणमयो वह्न्यभाववानित्याकारकनिश्चयाविशिष्टो यः केवलपाषाणमयः पर्वत इत्याकारकनिश्चयः तत्रापि वर्त्तमानतया । अनुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वेन=पर्वतधर्मिकवह्न्यनुमितिप्रतिबन्धकतारहितशुद्धपाषाणमयः पर्वत इत्याकारकज्ञानवृत्तित्वेन । अतिप्रसङ्गानवकाशात्=अतिव्याप्तिविरहात् । अयमर्थः । यद्रूपावच्छिन्नविषयतात्वव्यापकं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वं तद्रूपावच्छिन्नत्वरूपस्वरूपसम्बन्धरूपावच्छेदकताघटितलक्षणार्थनिर्वचने पर्वतो वह्निमान् धूमादित्यादौ पाषाणमयत्ववत् पर्वतेऽतिप्रसङ्गः । तथा हि पर्वतो वह्निमान् वह्निव्याप्यधूमवानित्याकानुमितिम्प्रति पाषाणमयत्ववान् वह्न्यभाववान् पाषाणमयत्ववांश्च पर्वत इत्याकारकनिश्चयस्यापि निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकत्व[ यद्धर्मं धर्मितावच्छेदकीकृत्य यदभावो भासते स धर्मः यद्धर्मं धर्मितावच्छेदकीकृत्य भासते तद्धर्मावच्छेदेन तद्वत्ताग्रहो न जायत इति नियमेन यदा प्रकृते पाषाणमयत्वरूपधर्मं धर्मितावच्छेदकीकृत्य पर्वते वह्न्यभावो भासते पाषाणमयत्वञ्च पर्वतत्वरूपधर्मं धर्मितावच्छेदकीकृत्य भासते तदा पर्वतत्वावच्छेदेन वह्निमत्ताग्रहो न जायत इति तादृशवह्न्यनुमितिं प्रति निश्चयविशिष्टनिश्चयत्वेन निरुक्तनिश्चयस्य प्रतिबन्धकत्व ]मिति तथा च समानाकारकज्ञानीयविषयताया अभिन्नत्वेन पाषाणमयो वह्न्यभाववानिति ज्ञानकालीनस्य पर्वतः पाषाणमय इति ज्ञानस्य पाषाणमयो न वह्निमानिति ज्ञानाऽकालीनस्य पाषाणमयः पर्वत इति ज्ञानस्य च समानाकारकतया तदीय पाषाणमयत्ववत् पर्वतविषयताया ऐक्यात् तादृशज्ञानकालीनतादृशज्ञानीयपाषाणमयत्ववत् पर्वतविषयतायाः प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत्त्वे पाषाणमय-

त्ववत्पर्वतविषयतासामान्यस्यैव समानाकारकज्ञानीयविषयतयोरैक्यप्रयुक्तप्रतिबन्ध-कतावच्छेदकतया यद्रूपपदेन पाषाणमयत्ववत्पर्वतत्वस्य धर्तुं शक्यतया पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयता भवति पर्वतो वह्निमानित्याद्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदिकेति तद्रूपावच्छिन्नत्वं पाषाणमयत्ववत्पर्वते सत्त्वात् ।

अतोऽनतिरिक्तवृत्तित्वरूपावच्छेदकतैव लक्षणे प्रवेशनीयेति । तथा चानाहार्याप्रामाण्यज्ञानानास्कन्दिताव्यापकीभूतविषयताशून्यनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयताव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपावच्छिन्नत्वमिति पर्यवसितलक्षणे पाषाणमयत्ववत्पर्वते नातिव्याप्तिः, तत्र पर्वतो वह्निमानित्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतारहिते तादृशज्ञानाऽकालीनशुद्धपाषाणमयः पर्वत इति ज्ञानेऽपि पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयतायाः वर्त्तमानतया अनतिरिक्तवृत्तित्वाभावात् ।

## गादाधरी

न चानतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशपक्षेऽपि जलाद्यवच्छेदेन वह्न्यभाववत्ताघटितस्य वह्न्यभाववज्जलादिमद्वृत्तिजलादिविशिष्टस्य ह्रदादिरूपपक्षस्य जलवान् वह्न्यभाववानित्यादिज्ञानसहितस्य जलवांश्च ह्रद इत्यादि ज्ञानस्य तादृशज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया तादृशप्रतिबन्धकताशून्यज्ञानाविषयस्य सत्प्रतिपक्षाद्यनात्मकस्य वारणाय ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य प्रतिबन्धकतायामवश्यं निवेशनीयतया मन्मतेऽपि तत्र नातिप्रसंग इति वाच्यम् ।

## विमलप्रभा

अनतिरिक्तवृत्तित्वरूपावच्छेदकतानिवेशपक्षेऽपि दोषमाह न चेत्यादिना । न चेत्यस्य वाच्यमित्यनेनान्वयः । ह्रदादिरूपपक्षस्य = वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदस्य । तादृशज्ञानविशिष्टज्ञानत्वेनैव = जलवान् वह्न्यभाववानित्याकारकनि-

श्चयविशिष्टजलवांश्च ह्रद इत्याकारकनिश्चयत्वेनैव । तादृशप्रतिबन्धकताशून्यज्ञानाविषयस्य = ह्रदो वह्निमानित्याद्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यं यज्ज्ञानं तदविषयस्य । सत्प्रतिपक्षाद्यनात्मकस्य = साध्याभावव्याप्त्यघटितत्वप्रयुक्तसत्प्रतिपक्षादिभिन्नस्योदासीनस्येति यावत् । वारणाय = वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिवारणाय । मन्मतेऽपि = स्वरूपसम्बन्धरूपावच्छेदकतावादिनो मम मतेऽपि । तत्र = पाषाणमयत्ववत्पर्वतादौ । नातिप्रसङ्गः = ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकत्वाभावान्नातिव्याप्तिः । अयमर्थः । अनतिरिक्तवृत्तित्वरूपावच्छेदकतावादिमतेऽपि ह्रदो वह्निमान् जलादित्यादौ वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिर्दुर्वारैव वह्न्यभाववज्जलवद्वृत्तिजलवान् ह्रद इति निश्चयस्यापि जलवान् वह्न्यभाववान् जलवान् ह्रद इति निश्चयसाधारण्यानुरोधेन वह्न्यभाववज्जलवत्वावच्छिन्नविषयताशालिनिश्चयविशिष्टजलवद्ध्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वेनैव ह्रदो वह्निमानित्याद्यनुमितिं प्रति प्रतिबन्धकत्वमिति भवति वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयता ह्रदो वह्निमानित्याद्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितवह्न्यभाववज्जलवद्वृत्तिजलवान् ह्रद इत्याकारकनिश्चयनिष्ठप्रतिबन्धकतानतिरिक्तवृत्तीति तद्रूपावच्छिन्नत्वं वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदरूपोदासीने सत्त्वात् ।

न च तस्य सत्प्रतिपक्षरूपतया लक्ष्यत्वेन तत्र लक्षणगमनेऽपि नातिप्रसङ्गसम्भावनेति वाच्यम् । जलव्यापकवह्न्यभावसामानाधिकरण्यविशिष्टजलाऽघटितत्वेन वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदस्य सत्प्रतिपक्षादावनन्तर्भावाद्ध्रुवत्येवालक्ष्यत्वेनातिव्याप्तिरिति भावः ।

न चैतादृशातिप्रसङ्गवारणाय प्रकृतानुमितिप्रतिबन्धकतायां निश्चयविशिष्टनिश्चयत्वानवच्छिन्नत्वं निवेशनीयम् । तथा च यद्रूपावच्छिन्नविषयकानाहार्यप्रामाण्यज्ञानानास्कन्दितनिश्चयत्वव्यापकं ज्ञानवैशिष्ट्यानवच्छिन्नं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपावच्छिन्नत्वं लक्षणार्थः एवञ्च प्रकृते वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदविषयकनिश्चयस्य जलवान् वह्न्यभाववान् जलवान् ह्रद इत्याकारकनिश्चयविशिष्टनिश्चयत्वेनैव प्रतिबन्धकतया तत्र ज्ञानवैशिष्ट्यावच्छिन्नत्वस्यैव सत्त्वेन ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतापदेनैतादृशप्रतिबन्धकतायाः धारणासम्भवान्नाति-

व्याप्तिरिति वाच्यम् । तथा सति स्वरूपसम्बन्धरूपावच्छेदकतावादिनो मम मतेऽपि प्रकृतानुमितिप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वं निवेश्य पाषाणमयत्ववत्पर्वतादावव्याप्तिवारणं सुकरमेव । पाषाणमयत्ववत्पर्वतविषयकनिश्चयस्यापि पाषाणमयो न वह्निमानिति निश्चयविशिष्टपर्वतश्च पाषाणमय इति निश्चयत्वेनैव प्रतिबन्धकतया तत्प्रतिबन्धकतायामपि ज्ञानवैशिष्ट्यानवच्छिन्नत्वविरहेण ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतापदेनैताद्दशप्रतिबन्धकतायाः धारणासम्भवात् । इत्थञ्चानतिरिक्तवृत्तित्वरूपावच्छेदकतावादिनये गौरवादि दोषः दुष्परिहरणीय एवेति चेन्नैतन्मनोरमम् । प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वं मतद्वयेऽपि न निवेशयितुं शक्यते तदेवाह ज्ञानवैशिष्ट्येत्यादिना ।

## गादाधरी

ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य प्रतिबन्धकताविशेषणत्वे प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणतद्धेतुमत्पक्षरूपसत्प्रतिपक्षाऽव्याप्तेः । साध्याभावांशे तद्व्यापकताग्रहविशिष्टतद्वत्ताज्ञानसाधारण्यानुरोधेनावश्यकल्प्य प्रतिबन्धकतयैवोपपत्तेः ताद्दशविशिष्टज्ञानस्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतान्तरे मानाभावात् उक्तविशिष्टेऽतिप्रसङ्गस्तु विवक्षणीयविशिष्टान्तराऽघटितत्वनिवेशेनैव वारणीयः ।

## विमलप्रभा

प्रतिबन्धकताविशेषणत्वे = प्रकृतानुमितिप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वविशेषणदाने ।

प्रतिहेतुः = जलादिरूपहेतुः । साध्याभावः = वह्न्याद्यभावः । तद्धेतुमत्पक्षः = जलवद्ध्रदादिरूपपक्षः । अव्याप्तेः = प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वविरहेणाव्याप्तेः । साध्याभावांशे = वह्न्यभावाद्यंशे । तद्व्यापकता = प्रतिहेतुभूतजलादिव्यापकता । तद्वत्ताज्ञानत्वेन = हेतुमत्ताज्ञानत्वेन, जलवान् ह्रद इति ज्ञानत्वेनेति यावत् । ताद्दशविशिष्टज्ञानस्य = प्रतिहेतुव्यापकसाध्याभावसमानाधिकरण-

तिहेतुमत् पक्षरूपसत्प्रतिपक्षनिश्चयस्य। मानाभावात् = गौरवभयेन तादृशप्रतिबन्धकतास्वीकारे प्रमाणाभावात् उक्तविशिष्टे = वह्न्यभाववज्जलवद्वृत्ति जलवद्ध्रदरूप विशिष्टे। विवक्षणीयविशिष्टान्तराघटितत्वनिवेशेन = अग्रे विवक्षणीयं यद्विशिष्टान्तराघटितत्वरूपविशेषणं तेनैव। अयमर्थः। ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य, प्रतिबन्धकतायां निवेशे मतद्वयेऽपि ह्रदो वह्निमान् जलादित्यादौ जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदरूपसत्प्रतिपक्षेऽव्याप्तिः दुर्वारैव, तथा हि ह्रदो वह्निमान् वह्निव्याप्यजलवानित्यनुमितिं प्रतिजलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदरूपसत्प्रतिपक्षविषयकैकनिश्चयत्वेन एवं जलव्यापको वह्न्यभावः इति निश्चयविशिष्टवह्न्यभावसमानाधिकरणजलवांश्च ह्रद इति निश्चयत्वेन च प्रतिबन्धकताद्वयकल्पने गौरवमतः निश्चयविशिष्टनिश्चयत्वेनैकविधप्रतिबन्धकताकल्पने एव लाघवमिति जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदरूपसत्प्रतिपक्षनिश्चये ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकत्वाभावेन जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदरूपसत्प्रतिपक्षविषयकनिश्चयत्वव्यापकतायाः प्रकृतानुमितिप्रतिबन्धकतायामभावात्। अतः मतद्वयेऽपि प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वं निवेशयितुमशक्यमेवेति, तथा च पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिवारणायावश्यमनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वं निवेशनीयम्। न च प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वानिवेशे वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदेऽतिव्याप्तिः कथं वारणीयेति वाच्यम्, मेयत्वविशिष्टव्यभिचारेऽतिप्रसङ्गभङ्गाय दीधितिकृता विवक्षणीयं यद्विशिष्टान्तराऽघटितत्वरूपविशेषणं तेनैवातिप्रसङ्गवारणसम्भवात्, तथा हि वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदात्मकं यद्विशिष्टं तदन्यं यद्वह्न्यभाववज्जलादिरूपं विशिष्टान्तरं तद्घटितत्वस्यैव वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदे वर्त्तमानतया तदघटितत्वाभावान्न तत्रातिव्याप्तिः।

## गादाधरी

न च ज्ञानद्वयसाधारणप्रतिबन्धकतायाः प्रत्येकज्ञानविषयविशिष्टविषयकत्वं नानतिरिक्तवृत्तित्वरूपावच्छेदकतावत्, तथा च दर्शितविशिष्टघटकस्य प्रत्येकज्ञानविषयस्य न निरुक्तविशिष्टान्तरात्मकतेति निरुक्तविशिष्टान्तराघटितत्वमुक्तविशिष्ट-

स्याक्षतमेवेति वाच्यम्, वक्ष्यमाणविशिष्टान्तराघटितत्वस्यैव यादृशविशिष्टविषयकनिश्चयविशिष्ट्यादृशविशिष्टविषयकनिश्चयत्वं प्रतिबन्धकतानतिरिक्तवृत्तिताादृशविशिष्टद्वयाघटितत्वस्यापि निवेशनीयतया उक्तविशिष्टवारणासम्भवात् ।

## विमलप्रभा

ज्ञानद्वयसाधारणप्रतिबन्धकतायाः=जलवान् वह्न्यभाववान् जलवाश्च ह्रद इति ज्ञानद्वयनिष्ठायाः प्रतिबन्धकतायाः । प्रत्येकज्ञानीयविशिष्टविषयकत्वं=केवल-वह्न्यभाववज्जलवत्त्वावच्छिन्नरूपविशिष्टविषयकत्वम् । नानतिरिक्तवृत्तित्वरूपावच्छेदकतावत्=न प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वरूपावच्छेदकताधिकरणम् । तथा च=प्रत्येकज्ञानीयविशिष्टविषयकत्वस्य प्रतिबन्धकतानवच्छेदकत्वे च । दर्शितविशिष्टघटकस्य =वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदरूपविशिष्टघटकस्य । प्रत्येकज्ञानविषयस्य=जलवान् वह्न्यभाववानितिज्ञानविषयस्य, जलवान् ह्रद इति ज्ञानविषयस्य च । न निरुक्तविशिष्टान्तरात्मकता=प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकविशिष्टस्यैव विशिष्टान्तरतया न तयोः प्रत्येकं विशिष्टान्तरत्वम् । निरुक्तविशिष्टान्तराऽघटितत्वं =प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयताकविशिष्टान्तराऽघटितत्वम् । उक्तविशिष्टस्य=वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रद-रूपविशिष्टस्य । अक्षतमेव=निराबाधमेव । वक्ष्यमाणविशिष्टान्तराघटितत्वस्यैव-=मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिवारणाय यथा विशिष्टान्तराऽघटितत्वमवश्यमेव निवेशनीयं तथैव । यादृशविशिष्टविषयकनिश्चयविशिष्ट्यादृशविशिष्टविषयकनिश्चयत्वं=सामानाधिकरण्यसम्बन्धेन यद्रूपावच्छिन्नविषयताशालिनिश्चयविशिष्टो यः यद्रूपावच्छिन्नविषयताशालिनिश्चयस्तादृशनिश्चयत्वम् । प्रतिबन्धकतानतिरिक्त-वृत्तिः = प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिः । तादृशविशिष्टद्वयाऽघटितत्वस्य=तद्रूपावच्छिन्नविषयताविशिष्टतद्रूपावच्छिन्नविषय-ताशून्यप्रतीतिविषयतावच्छेदकत्वस्य । निवेशनीयतया=लक्ष्यतावच्छेदकत्वेनाभिमतयद्रूपे विशेषणीयतया । उक्तविशिष्टवारणासम्भवात्=वह्न्यभाववज्जलवद्वृत्ति-जलवद्ध्रदरूपविशिष्टेऽतिव्याप्तिवारणासम्भवात् । अयमर्थः । जलवान् वह्न्यभाववान् जलवान् ह्रद इति ज्ञानद्वयसाधरणभूता या प्रतिबन्धकता तदनतिरिक्त-

वृत्तित्वस्य प्रत्येकज्ञानीयविषयतायामभावेन वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य वह्न्यभाववज्जलवत्त्वे जलवद्ध्रदत्वे वा सत्त्वेऽपि तत्र ह्रदधर्मिकवह्न्यनुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकत्वविरहान्न विशिष्टान्तरतावच्छेदकत्वं तयोरिति विशिष्टान्तरतावच्छेदकीभूतं यत्वह्न्यभाववद्ध्रदत्वादिरूपबाधत्वं तदघटितत्वस्य वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदे सत्त्वादतिप्रसङ्गस्तदवस्थ एवेति न विशिष्टान्तराऽघटितत्वविशेषणेनातिप्रसङ्गवारणमिति चेत् सत्यं, न तद्विशेषणेनैतादृशातिप्रसङ्गवारणं, किन्तु यथाऽग्रे मेयत्वविशिष्टव्यभिचारेऽतिप्रसङ्गभङ्गाय विशिष्टान्तराऽघटितत्वरूपविशेषणं दास्यति दीधितिकारस्तथैव प्रकृते वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिवारणाय यद्रूपे विशिष्टद्वयाघटितत्वविशेषणन्देयम्, तथा च यद्रूपावच्छिन्नविषयताशालिनिश्चयविशिष्टयद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापकं भवति प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं तद्रूपावच्छिन्नविषयताविशिष्टतद्रूपावच्छिन्नविषयताशून्यप्रतीतिविषयतानिरूपकतावच्छेदकं यद्रूपं तद्रूपावच्छिन्नविषयताशाल्यनाहार्याप्रामाण्यज्ञानानास्कन्दिताव्यापकीभूतविषयताशून्यनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयताव्यापिका भवति प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपावच्छिन्नत्वं हेत्वाभासत्वमिति पर्यवसिते वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिवारणं सम्भवति तथा हि वह्न्यभाववज्जलवत्वावच्छिन्नविषयताशालिजलवान् वह्न्यभाववानिति निश्चयविशिष्टजलवद्ध्रदत्वावच्छिन्नविषयताशालिजलवान् ह्रद इत्याकारकनिश्चयत्वव्यापकत्वं ह्रदो वह्निमान् वह्निव्याप्यजलवांश्चेति समूहालम्बनानुमितित्वव्यापकप्रतिबध्यतानिरूपितवह्न्यभाववज्जलवद्वृत्तिजलवान् ह्रद इत्याकारकनिश्चयनिष्ठप्रतिबन्धकत्वं भवतीति तादृशवह्न्यभाववज्जलवत्वावच्छिन्नविषयताविशिष्टजलवद्ध्रदत्वावच्छिन्नविषयताशून्यप्रतीतिविषयतावच्छेदकत्वस्य वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वेऽविद्यमानतया यद्रूपपदेन वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वस्य धारणाऽसम्भवात् ।

अथात्र पर्यवसितलक्षणे ह्रदो वह्निमान् जलादित्यादिस्थलीयवह्न्यभाववद्-

ध्रदादिरूपबाधादौ लक्षणसङ्गमनप्रकारश्चेत्थम्, वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयताशालिनिश्चयविशिष्टजलवद्ध्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वव्यापिका भवति ह्रदो वह्निमानित्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितजलवान् वह्न्यभाववान् जलवान् ह्रद इत्याकारकनिश्चयनिष्ठा प्रतिबन्धकतेति वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयताविशिष्टजलवद्ध्रदत्वावच्छिन्नाविषयताशून्यवह्न्यभाववान् ह्रद इत्याकारकबाधविषयकप्रतीतिविषयतावच्छेदकं यत् रूपं तच्च वह्न्यभाववद्ध्रदत्वं तद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्यवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताशाल्यनाहार्याप्रामाण्यज्ञानानास्कन्दितवह्न्यभाववान् ह्रद इत्याकारकनिश्चयवृत्तित्वविशिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताव्यापिका भवति ह्रदधर्मिकवह्न्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितवह्न्यभाववान् ह्रद इत्याकारकबाधनिश्चयनिष्ठप्रतिबन्धकतेति तद्रूपावच्छिन्नत्वं वह्न्यभाववद्ध्रदे सत्त्वादिति। अनयैव दिशा व्यभिचारादावपि लक्षणसमन्वयः कार्यः।

## बलदेवी

याद्दशविशिष्टविषयकनिश्चयविशिष्टयाद्दशविशिष्टविषयकनिश्चयत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्तिताद्दशविशिष्टद्वयाघटितत्वमिति भट्टाचार्यः।

नन्वत्र ताद्दशविषयताशून्यप्रतीतिविषयतावच्छेदकरूपवत्वमात्रनिवेशेनैव सामञ्जस्ये विशेष्यदलोपादानमनर्थकमिति चेन्न, तथा सति वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयताविविष्टजलवद्ध्रदत्वावच्छिन्नविषयताशून्यप्रतीतिविषयतावच्छेदकत्वस्य घटत्वपटत्वादौ सत्त्वेन तदवच्छिन्नत्वस्य घटपटादौ सत्त्वात् घटपटदावतिव्याप्तिः स्यादतः विशेष्यदलोपादानं कृतमिति।

अत्र ताद्दशविशिष्टद्वयाघटितत्वं ताद्दशविशिष्टद्वयविषयताशून्यत्वं, तच्च यदि ताद्दशविशिष्टविषयताशून्यत्वे सति ताद्दशविशिष्टविषयताशून्यत्वं,तदा वह्न्यभाववद्ध्रदादिरूपदोषासंग्रहः,ह्रदो वह्निमान् वह्निव्याप्यधूमवानित्यनुमितिं प्रति वह्न्यभाववान्

धूमाभाववान् वह्न्यभाववान् ह्रद इत्याकारकनिश्चयस्य प्रतिबन्धकतया तादृशप्रतिबन्धकतानतिरिक्तवृत्तिः उक्तनिश्चयविशिष्टवह्न्यभाववद्ध्रदविषयकनिश्चयत्वमपीति वह्न्यभाववद्ध्रदविषयताशून्यत्वस्य ह्रदो वह्न्यभाववानिति निश्चयेऽसत्त्वात् । नापि तादृशविशिष्टविषयतातादृशविशिष्टविषयत्वोभयाभाववत्प्रतीतिविषयत्वम्, तथा सति ह्रदो वह्न्यभाववानिति ज्ञाने धूमाभाववद्वह्न्यभावत्वावच्छिन्नविषयत्वाभावेनोभयाभावसत्त्वात्तादृशदोषसंग्रहेऽपि, ह्रदो वह्निमानित्यत्र वह्न्यभावव्याप्यह्रदवृत्तिपङ्कजे धर्मितावच्छेदकभावानापन्ने वह्न्यभावव्याप्तिह्रदवृत्तित्वघटितविशिष्टेऽतिव्याप्तिः। वह्न्यभावव्याप्यं पङ्कजं पङ्कजवान् ह्रद इति ज्ञानयोरिव वह्न्यभावव्याप्यं पङ्कजं ह्रदवृत्तिपङ्कजमिति ज्ञानयोरपि ज्ञानविशिष्टज्ञानत्वेन ह्रदो वह्निमानित्यनुमितिप्रतिबन्धकतया वह्न्यभावव्याप्तिह्रदवृत्तित्वोभयमेकत्र द्वयमिति रीत्याऽवगाहमाने वह्न्यभावव्याप्यह्रदवृत्तित्ववत्पङ्कजमिति ज्ञाने विशेष्यताया ऐक्येन विषयताद्वयशून्यत्वसत्त्वात्, तत्र वह्न्यभावव्याप्तिप्रकारतानिरूपितपङ्कजत्वावच्छिन्नविशेष्यताशालिनिश्चयविशिष्टह्रदवृत्तित्वप्रकारतानिरूपितपङ्कजत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतायाः प्रकृतानुमितिनिरूपितायाः सत्त्वात् ।

किन्तु तद्रूपावच्छिन्नविषयताविशिष्टतद्रूपावच्छिन्नविषयताशून्यप्रतीतिविषयत्वमेव तत् ।

अत्र प्रथमनिश्चयत्वानिवेशे जलवान् वह्न्यभाववान्न वेति संशयविशिष्ट जलवान् ह्लद इति निश्चये प्रतिबन्धकताविरहेण यादृशविशिष्टद्वयपदेन तादृशविशिष्टद्वयस्य धर्तुमशक्यतया [विशिष्टद्वयान्तरस्यैव ग्राह्यतया] तादृशविशिष्टद्वयाऽघटितत्वस्योक्तविशिष्टविषयकज्ञाने सत्त्वेन वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिस्तदवस्थैवातः प्रथमनिश्चयत्वनिवेशः ।

द्वितीयनिश्चयत्वानिवेशे जलवान् वह्न्यभाववानिति निश्चयविशिष्टह्लदो जलवान्न वेति ज्ञाने प्रतिबन्धकताविरहेण तादृशविष्टिद्वयस्य यादृशविशिष्टद्वयपदेन धर्तुमशक्यतया विशिष्टद्वयाघटितत्वस्योक्तविशिष्टविषयकनिश्चये सत्त्वेन तद्दोषतादवस्थ्यमतो द्वितीयनिश्चयत्वनिवेशः।

न च तादृशविशिष्टद्वयाऽन्तरस्याऽप्रसिद्धयैव नातिव्याप्तिरिति वाच्यम्, एवं सति तुल्ययुक्त्याऽसम्भवापत्तेः। यद्वा वह्न्यभाववज्जलवद्ध्रदकालीनघटजलवद्ध्रकालीनघटादिकमेव तादृशविशिष्टद्वयं प्रसिद्धं तत्रोभयत्र निश्चयत्वाऽनिवेशेऽपि विशिष्टवैशिष्ट्यबुद्धौ विशेषणांशे संशयाऽस्वीकारेण "वह्न्यभाववज्जलवद्ध्रदकालीनो घटः जलवद्ध्रदकालीनो घट" इत्याकारकतादृशविशिष्टद्वयविषयकज्ञाने कालीनत्वांशे संशयात्मकेऽपि जलवत्वादिविशिष्टांशे वह्न्यभावादिसंशयात्मकत्वाभावेन प्रकृतानुमितिप्रतिबन्धकता सत्त्वात्। इत्थञ्च विशेषणांशे संशयाऽस्वीकारेऽसम्भवः, तत्स्वीकारेऽतिव्याप्तिरिति। नन्वत्र निश्चयत्वनिवेशेऽपि जातिमान् वह्न्यभाववान् जलवान् ह्रद इति निश्चययोः जलवान् वह्न्यभाववान् जातिमद्वान् ह्रद इति निश्चययोश्च प्रकृतानुमित्यप्रतिबन्धकतया तादृशविशिष्टद्वयाऽप्रसिद्धिनिबन्धनाऽसम्भववारणायोभयत्र निश्चयेऽव्यापकीभूतविषयताशून्यत्वं निवेशनीयम्। तथा च निश्चयत्वाऽनिवेशेऽपि जलवान् वह्न्यभाववान्न वेति ह्रदो जलवान्न वेति संशययोर्वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयित्वाव्यापकवह्न्यभावत्वावच्छिन्नविषयिता, जलवद्ध्रदत्वावच्छिन्नविषयित्वाऽव्यापकाऽभावत्वावच्छिन्नविषयिताश्रययोर्वारणसम्भवेन तादृशविशिष्टद्वयस्य यादृशविशिष्टद्वयपदेन धर्तुं शक्यतयोक्तातिव्याप्तिविरहेणोभयत्र निश्चयत्वप्रवेशो व्यर्थ इति चेन्न अव्यापकीभूतविषयताशून्यत्वनिवेशेऽपि प्रथमनिश्चयत्वानिवेशे वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयित्वाव्यापकविषयताशून्यस्य जलवान् वह्निमान्न वेति संशयस्यावारणात् तादृशसंशयविशिष्टजलवान् ह्रद इति निश्चयस्याप्रतिबन्धकतया यादृशविशिष्टपदेन तादृशविशिष्टद्वयस्य धर्तुमशक्यतयोक्तातिव्याप्त्यापत्तेः।

एवं द्वितीयनिश्चयत्वाऽनिवेशे वह्न्यभाववत्तेजोऽभाववद्वृत्तितेजोऽभाववद्ध्रदेऽतिव्याप्तिः, तेजोभाववान् वह्न्यभाववान् इति निश्चयविशिष्टस्य ह्रदस्तेजस्वी न वेति संशयस्य तेजोभाववद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यस्यानुमित्यप्रतिबन्धकतया यादृशविशिष्टपदेन तादृशविशिष्टद्वयस्य धर्तुमशक्यत्वात्।

न च यादृशविशिष्टविषयित्वाव्यापिका यद्रूपावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्नविषयितातद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नविषयिताशून्यत्वमुभयत्राऽव्या-

पक्षीभूतविषयताशून्यत्वमित्यनेन विवक्षणीयम् । तथा च जलवान् वह्निमान्न वेति संशये वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयित्वाव्यापिकायाः संयोगत्वावच्छिन्नविषयतानिरूपितवह्नित्वावच्छिन्नविषयितायाः सत्त्वेन,ह्रदस्तेजस्वी न वेति संशये च तेजोभाववद्ध्रदत्वावच्छिन्नविषयित्वाव्यापिकायाः संयोगत्वावच्छिन्नविषयतानिरूपिततेजस्त्वावच्छिन्नविषयतायाः सत्त्वेन चोक्तसंशययोर्वारणसम्भवात् ।

यादृशविशिष्टपदेन तादृशविशिष्टद्वयस्य धर्त्तुं शक्यतयाऽतिव्याप्तिविरहेणोभयत्रनिश्चयत्वांशनिवेशो व्यर्थ इति वाच्यम् । ह्रदपक्षकस्वरूपतो भेदत्वसाध्यके भेदभेदवदभावभेदवद्वृत्त्यभावभेदवद्ध्रदेऽव्याप्तेः उक्ताव्यापकविषयताशून्यत्वविशेषणेनाभावभेदवान् भेदो न वेत्याकारकस्य स्वरूपतो भेदभेदत्वभेदभेदकोटिकसंशयस्यावारणात्, तत्र भेदभेदवदभावभेदवत्त्वावच्छिन्नविषयित्वाव्यापकीभूतायाः कस्या अपि तादृशविषयितायाः अभावात् । एवं ह्रदोऽभाववान्न वेत्याकारकस्य स्वरूपतोऽभावत्वाभावभेदकोटिकसंशयस्य वारणन्न सम्भवति, तत्राभावभेदवद्ध्रदत्वावच्छिन्नविषयित्वाऽव्यापिकायास्तादृशविषयितायाः असत्त्वात्, तथा चैतादृशैकतरसंशयाऽपरनिश्चययोर्ह्रदो भेद इत्यनुमित्यप्रतिबन्धकत्वेन यादृशविशिष्टपदेन तादृशविशिष्टद्वयस्य धर्त्तुमशक्यत्वादत उभयत्र निश्चयत्वनिवेश आवश्यक इति ।

तथा च यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्ययद्रूपावच्छिन्नविषयताशालिनिश्चयविशिष्टयद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्ययद्रूपावच्छिन्न-विषयिताशालिनिश्चयत्वं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिः तद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयित्वशून्ययद्रूपावच्छिन्नविषयताशालिनिश्चयत्व-व्यापिका भवति प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतातद्रूपावच्छिन्नत्वं सामान्यलक्षणम् । अथ यद्रूपावच्छिन्नविषयकनिश्चयविशिष्टयद्रूपावच्छिन्नविषयकनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदकतावदित्येव कथं नोक्तम्, तथा च प्रकृताऽनुमितिप्रतिबन्धकतायां यद्रूपावच्छिन्नविषयित्वावच्छिन्नसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकताकत्वे सति

यद्रूपावच्छिन्नविषयकत्वावच्छिन्नत्वं यद्रूपे तद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविषयिताशून्यप्रतीतिविषयितानिरूपकतावच्छेदकत्वं निवेश्यम्,तथा च संशयान्यत्वानार्यत्वाऽप्रामाण्यज्ञानाभावादीनामप्रवेशात् लाघवम्। न च वह्नित्वावच्छिन्नविषयताशालिनिश्चयविशिष्टह्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वादेर्बाधादि - निश्चयनिष्ठप्रतिबन्धकतायामवच्छेदकत्वेनाऽसम्भवापत्तिरिति वाच्यम्। प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरुपितप्रतिबन्धकताविशिष्टविषयताशून्यप्रतीतिविषय - तावच्छेदकत्वस्य यद्रूपे विवक्षणीयत्वात्। प्रतिबन्धकतावैशिष्टयञ्च विषयतायां स्वावच्छेदकविषयतावच्छेदकधर्मावच्छिन्नत्वस्वनिरुपितसामानाधिकरण्यसम्बन्धाव - च्छिन्ननिश्चयनिष्ठावच्छेदकतानिरुपितविषयतानिष्ठावच्छेदकतानिरुपिताऽवच्छिन्न - त्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयितासामानाधिकरण्योभयसम्बन्धेन। तथा च बाधनिश्चयप्रतिबन्धकतायां सामानाधिकरण्यसम्बन्धेन निश्चयस्यावच्छेदकत्वविरहेणासम्भवासम्भवः।

न च वह्नित्वह्रदत्वाद्यवच्छिन्नविषयतायाः निश्चयविशिष्टनिश्चयनिष्ठप्रतिबन्धकतायामवच्छेदकतया तादृशविषयताशून्यत्वस्य बाधनिश्चयेऽसत्त्वादसम्भवतादवस्थ्यमिति वाच्यम्, स्वावच्छेदकत्वस्वनिरुपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकविषयतासामानाधिकरण्योभयसम्बन्धेन वैशिष्ट्यस्य निवेश्यत्वादिति चेन्न, ह्रदो वह्निमान्जलादित्यादौ वह्निव्यापकीभूताभावप्रतियोगिजलरुपाऽसाधारण्येऽव्याप्तिः, तत्र ह्रदधर्मिकजलप्रकारकनिश्चयवैशिष्टयावच्छिन्ना या वह्निव्यापकीभूताभावप्रतियोगिजलमित्याकारकवह्निव्यापकीभूताभावप्रतियोगिजलविषयकनिश्चयत्वावच्छिन्ना प्रतिबन्धकता तस्या अपि जलत्वावच्छिन्नविषयकत्वावच्छिन्नज्ञाननिष्ठावच्छेदकताकवह्निव्यापकीभूताभावप्रति - योगिजलरूपाऽसाधारण्यविषयकत्वावच्छिन्नतया प्रथमयादृशपदेन जलत्वावच्छिन्नस्य द्वितीययादृशपदेन वह्निव्यापकीभूताभावप्रतियोगिजलरूपाऽसाधारण्यस्य च धारणसम्भवात्, तादृशजलत्वावच्छिन्नविषयिताविशिष्टवह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविषयताशून्यप्रतीतिविषयत्वस्य वह्निव्यापकीभूताभावप्रतियोगिजलरूपाऽसाधारण्ये विरहात्। अनतिरिक्तवृत्तित्वरूपाऽवच्छेदकतानिवेशे तु वह्निव्यापकी-

भूताभावप्रतियोगिजलमिति निश्चयविशिष्टजलमिति निश्चये प्रतिबन्धकत्वासत्त्वेन यादृशविशिष्टपदेन तादृशविशिष्टद्वयं धर्तुं न शक्यते इति नाव्याप्तिः। नन्वत्राऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशपक्षेऽपि तादृशनिश्चयद्वयेऽव्यापकीभूतविषयताशून्यत्वमवश्यन्निवेशनीयम्, अन्यथा तादृशविशिष्टद्वयाऽप्रसिद्धया प्रगुक्तरीत्याऽसम्भवापत्तेः एवं सति स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशेऽपि वह्निव्यापकीभूताभावप्रतियोगिजलमित्याकारकनिश्चयविशिष्टजलवान् ह्रद इत्याकरकनिश्चयस्य प्रतिबन्धकत्वेऽपि जलवान् ह्रद इति निश्चये जलत्वावच्छिन्नविषयित्वाव्यापक विषयताशून्यस्य शुद्धजलमित्याकारकनिश्चयस्याऽसाधारण्यविषयकनिश्चयस्यानुमित्यप्रतिबन्धकतया न तादृशविशिष्टद्वयमादायाऽव्याप्तिः।

न च जलं वह्निमज्जलादित्यत्रासाधारण्येऽव्याप्तिः,तत्र तादृशाऽसाधारण्यविषकनिश्चयविशिष्टजलवज्जलमिति निश्चयत्वे प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदकत्वसत्त्वात् ,तत्र च जलत्वावच्छिन्नविषयित्वाव्यापकविषयताशून्यत्त्वस्यापि सत्त्वात्, जलवज्जलत्वावच्छिन्नविषयिताया अव्यापकत्वेऽपि जलशून्यजलधर्मिकनिश्चये तदसत्त्वात्। अनतिरिक्तवृत्तित्वनिवेशेऽसाधारण्यनिश्चये प्रतिबन्धकताविरहान्न दोष इति वाच्यम्, यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयितायादृशविशिष्टविषयित्वाव्यापिका तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नविषयिताशून्ययादृशविशिष्टविषयकनिश्चयविशिष्टयद्रूपावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्नविषयिता यादृशविशिष्टविषयित्वाव्यापिका तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नविषयिताशून्ययादृशविशिष्टविषयकनिश्चयत्वमनुमितिप्रतिबन्धकतावच्छेदकं तादृशविशिष्टद्वयाघटितत्वनिवेशे नोक्तदोषः, तत्रासाधारण्यनिश्चयविशिष्टजलं जलवदित्याकारकनिश्चये जलत्वावच्छिन्नविषयित्वाव्यापकीभूतजलत्वावच्छिन्नविषयितानिरूपितजलत्वावच्छिन्नविषयितायाः सत्त्वात् तच्छून्यजलमिति निश्चयस्यानुमित्यप्रतिबन्धकत्वात्। न च जलवज्जलं स्वरूपवज्जलवज्जलकालीनवह्निमत्स्वरूपवज्जलादित्यत्राऽसाधारण्येऽव्याप्तिः तादृशविवक्षायामपि दुर्निवारैव तादृशाऽसाधारण्यविषयकनिश्चयविशिष्टस्वरूपवज्जलत्वविशिष्टविषयिताशालिस्वरूपवज्जलवज्जलमितिनिश्चयत्वस्याऽनुमितिप्रतिबन्धकतावच्छेदकतया तादृशाऽसाधारण्यात्मकविशिष्टस्वरूपवज्जलवज्जल-

त्वविशिष्टयोर्यादृशपदेन धर्त्तुं शक्यतया तादृशविशिष्टद्वयाघटितत्वस्यासाधारण्ये विरहात् । अनतिरिक्तवृत्तित्वरूपावच्छेदकतानिवेशे तु तादृशाऽसाधारण्यविषयकनिश्चयविशिष्टस्वरूपवज्जलवज्जलमित्याकारकनिश्चये तादृशप्रतिबन्धकत्वाभावेनैतादृशविशिष्टद्वयस्य यादृशविशिष्टद्वयपदेन धर्त्तुमशक्यतया नाव्याप्तिरिति वाच्यम् । स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशपक्षेऽपि यादृशविशिष्टविषयित्वाव्यापिका यादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयितानिरूपितयादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयिता तादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयितानिरूपिततादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयिताशून्यत्वस्योक्ताऽव्याप्तिवारणाय विवक्षणीयत्वात् । विशिष्टपक्षतावच्छेदकत्वस्य प्रकृतेऽप्रसिद्धत्वेऽपि तादृशाऽसाधारण्यविषयकनिश्चयविशिष्टस्वरूपवज्जलवज्जलवज्जलमिति निश्चयेऽनुमितिप्रतिबन्धके स्वरूपवज्जलवज्जलत्वावच्छिन्नविषयित्वाऽव्यापिकायाः जलत्वजलस्वरूपजलत्वगतसमुदायत्वस्य प्रसिद्धत्वेन जलवज्जलत्वनिष्ठधीविशेषविषयत्वरूपसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकजलवज्जलत्वावच्छिन्नविशेष्यतानिरूपितस्वरूपवज्जलत्वनिष्ठधीविशेषविषयत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकप्रकारतायाः सत्त्वेन तच्छून्यस्वरूपवज्जलवज्जलमित्याकारकनिश्चये प्रतिबन्धकताविरहेण तादृशविशिष्टद्वयस्य यादृशविशिष्टपदेन धर्त्तुमशक्यत्वादिति ।

यत्तु स्वरूपसम्बन्धरूपावच्छेदकत्वप्रवेशे नीलोत्पलवद्ध्रदो रक्तदण्डवानित्यत्र रक्तदण्डाभाववन्नीलोत्पलवद्ध्रदात्मकबाधेऽव्याप्तिः, समानविषयकप्रत्यक्षसामग्र्या अनुमितिप्रतिबन्धकतया नीलोत्पलवान् ह्रदो रक्तदण्डवानिति प्रत्यक्षसामग्र्यास्तादृशानुमितिप्रतिबन्धकत्वेन तादृशप्रत्यक्षस्य च ह्रदांशे नीलत्वविशिष्टोत्पलस्य रक्तविशिष्टदण्डस्य च वैशिष्ट्यावगाहितया तत्सामग्रीकुक्षौ नीलमुत्पलं रक्तो दण्ड इत्याकारकनिश्चययोर्विशेषणतावच्छेदकप्रकारकनिश्चयमुद्रयाप्रवेशात् सामग्र्या अपि एकविशिष्टापरत्वेनैव प्रतिबन्धकत्वस्य वक्तव्यतया नीलोत्पलत्वविशिष्टविषयकनिश्चयविशिष्टरक्तदण्डत्वविषयकनिश्चयत्वस्य तादृशानुमितिप्रतिबन्धकतावच्छेदकतया तादृशविशिष्टद्वयाघटितत्वस्योक्तबाधेऽसत्त्वात् ।

अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशे तु चक्षुः संयोगाऽसमानकालीनतादृश-

निश्चययोः प्रतिबन्धकत्वाभावेन तादृशविशिष्टयोर्यादृशविशिष्टपदेन धत्तु मशक्यत्वान्न दोष इति, तदसत्, विशिष्येच्छोत्तेजकत्वानुरोधेन विशिष्यप्रतिबध्यप्रतिबन्धकभावस्य वक्तव्यत्वेन प्रकृतानुमितिं प्रति प्रत्यक्षसामग्र्याः प्रतिबन्धकत्वे सामाग्रीकोटौ तादृशनिश्चयद्वयप्रवेशस्याऽनावश्यकतया तादृशनिश्चयत्वे प्रतिबन्धकतावच्छेदकत्वाभावात्।

न च सामग्रीप्रतिबन्धकतायां तादृशनिश्चयाऽनिवेशे तादृशनिश्चयाभावदशायामपरप्रत्यक्षकारणसत्त्वेऽनुमितिर्न स्यादिति वाच्यम्। तादृशानुमितिं प्रत्यपि विशेषणतावच्छेदकविधया तादृशनिश्चययोरपि कारणत्वेन तदभावेऽनुमित्यनुत्पादस्येष्टत्वादिति।

यदपि केनचिदुक्तं चिकीर्षासामग्र्या अनुमितिप्रतिबन्धकतामते ह्रदः कृतिसाध्यतावदिष्टसाधनतावत्पाककालीनवह्निमान् धूमादित्यत्र तादृशवह्न्यभाववद्ध्रदरूपबाधेऽव्याप्तिः, तत्र तादृशचिकीर्षासामग्रीनिष्ठानुमितिप्रतिबन्धकतावच्छेदककुक्षौ कृतिसाध्यतावत्पाकेष्टसाधनतावत्पाकविषयकनिश्चययोः प्रवेशेन तादृशविशिष्टद्वयाऽघटितत्वस्य तत्रत्यबाधेऽसत्त्वात्। अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशे तु फलेच्छाविगमकालीनतादृशनिश्चययोः प्रतिबन्धकताविरहेण न दोष इति तदपि तुच्छम्। प्रागुक्तरीत्यैव तादृशाऽनुमितिप्रतिबन्धकतावच्छेदककोटौ तादृशनिश्चययोरप्रवेशादिति।

स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशे ह्रदो वह्निमान् कृतिसाध्यतावत्पाककालीनजलादित्यत्राऽसाधारण्येऽव्याप्तिः, तादृशस्थलीयानुमितिनिरूपितचिकीर्षासामग्रीनिष्ठप्रतिबन्धकतावच्छेदककोटौ तादृशनिश्चययोरप्यवश्यं निवेशनीयत्वात्, अन्यथा तादृनिश्चयाभावकाले फलेच्छादिसत्त्वे लिङ्गान्तरपरामर्शादपि अनुमित्यापत्तेः। सामग्रीत्वञ्चैकविशिष्टापरत्वमिति तदवच्छिन्नप्रतिबन्धकतानिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकत्वस्य प्रसिद्धिः तथा च कृतिसाध्यतावत्पाकस्येष्टसाधनतावत्पाकस्य च यादृशविशिष्टपदेन धत्तुं शक्यतया तदघटितत्वस्योक्तहेतुघटिताऽसाधारण्येऽसत्त्वात्।

अनतिरिक्तवृत्तित्वनिवेशे तु तादृशनिश्चयत्ववति फलेच्छाविगमकालीननिश्चये सामग्रीप्रतिबन्धकताविरहेण कृतिसाध्यतावत्पाकादेर्यादृशपदेनोपादानासम्भवान्नाव्याप्तिरिति भावः।

न च यादृशविशिष्टविषयकनिश्चयविशिष्ट्यादृशविशिष्टविषयकनिश्चयत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्तीत्येव कथं नोक्तं किमनुमितौ प्रकृतित्वनिवेशेनेति वाच्यम्। प्रकृतपक्षकप्रकृतसाध्यकत्वलाभार्थं तदुपादानात्, अन्यथा ह्रदो गगनाभाववद्वह्न्यधिकरणनिरूपितत्ववत्कालीनवह्निमान् जलादित्यत्रतादृशवह्निव्यापकीभूताभावप्रतियोगिजलरूपाऽसाधारण्येऽव्याप्तिः स्यात्, तत्र व्यापकताशरीरे वृत्तित्वांशे वह्न्यधिरकरणनिरूपितत्वस्य प्रविष्टतया तादृशाऽसाधारण्यस्य गगनाभाववद्वह्न्यधिकरणनिरूपितत्वविशिष्टवह्न्यधिकरणनिरूपितत्ववद्वृत्तित्वविशिष्टात्मकविशिष्टद्वयघटिततया वह्न्यधिकरणनिरूपितत्ववान् गगनाभाववानितिनिश्चयविशिष्टवह्न्यधिकरणनिरूपितत्ववद्वृत्तित्वमिति निश्चयत्वस्य वृत्तित्वं गगनवदित्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तितया तदघटितत्वस्य तत्राभावात्। अतः प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तित्वमेव तद्घटकं वाच्यम्

नन्वेवमपि गगनवानभावोगगनाभाववद्वह्न्यधिकरणनिरूपितवृत्तित्ववत्कालीनवह्निमान् जलादित्यत्राऽसाधारण्येऽव्याप्तिः, वह्न्यधिकरणनिरूपितवृत्तित्ववान् गगनाभाववानिति निश्चयविशिष्टवह्न्यधिकरनिरूपितवृत्तित्ववानभाव इति निश्चयत्वस्य प्रकृतानुमितित्वव्यापकाऽ"भावत्वावच्छिन्नविशेष्यकगगनत्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्न" प्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तितया गगनाभाववद्वह्न्यधिकरणनिरूपितवृत्तित्ववत्वविशिष्टवह्न्यधिकरणनिरूपितवृत्तित्ववदभावत्वविशिष्टरूपविशिष्टद्वयाऽघटितत्वस्य तादृशाऽसाधारण्येऽभावात्, असाधारण्यघटकव्यापकताघटकाभावे वह्न्यधिकरणनिरूपितवृत्तित्वस्य प्रविष्टत्वादिति चेन्न। विशेष्यदले यादृशप्रतिबन्धकता प्रविष्टा तादृशप्रतिबन्धकताया एव प्रवेशात्। तथा च किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्ययद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितयत्प्रतिबन्धकता तत्प्र-

तिवन्धकतानतिरिक्तवृत्तियद्रूपावच्छिन्नविषयिताशालिनिश्चयविशिष्टयद्रूपावच्छिन्न-विषयिताशालिनिश्चयत्वं तद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविषयिताशून्यप्रतीतिविषयितानिरूपकतावच्छेदकं यद्रूपं तद्रूपावच्छिन्नत्वं लक्षणम्।

पक्षधर्मिकहेतुमत्ताज्ञानकालीनाऽसाधारण्यविषयकनिश्चयत्वव्यापिका प्रकृतानुमितित्वव्यापकपक्षे साध्यवत्ताबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकता, अथ च प्रकृताऽसाधारण्यघटकविशिष्टद्वयविषयकनिश्चयत्वव्यापिका पक्षे पक्षतावच्छेदकप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतेति तयोर्भेदेन तत्राऽव्याप्तिविरहात्। न चैवं सति वह्न्यभाववद्ध्रदादावव्याप्तिः, बाधनिश्चयत्वावच्छिन्नप्रतिबन्धकतायाः ज्ञानवैशिष्ट्यानवच्छिन्नतया तदवच्छिन्नव्यावर्त्तकधर्मदर्शनप्रतिबन्धकतातो भिन्नतया यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं बाधनिश्चयप्रतिबन्धकताऽनतिरिक्तवृत्तितादृशविशिष्टद्वयाऽप्रसिद्धेरिति वाच्यम्। वक्ष्यमाणानुगमेन सर्वदोषसंग्रहात्, तत्प्रकारश्च = प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टरूपवत्त्वम्। रूपे प्रतिबन्धकतावैशिष्ट्यञ्च स्वनिष्ठकिञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्ननिरूपकतानिरूपितविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावस्तन्निरूपितावच्छेदकतानिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिता सत्यव्यापकीभूतविषयताशून्यत्वनिष्ठावच्छेदकतानिरूपिता सत्यप्रामाण्यज्ञानाभावनिष्ठावच्छेदकतानिरूपिता सत्यनाहार्यत्वनिष्ठावच्छेदकतानिरूपितानिश्चयनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व, स्वाभाववत्प्रतीतिविषयतानिरूपकतावच्छेदकत्वोभयसम्बन्धेन। अभावप्रतियोगितावच्छेदकसम्बन्धश्च स्वनिष्ठो यः किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयविशिष्टकिञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धो योऽभावस्तन्निरूपितावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकता-

विशिष्टविषयितावत्त्वरूपः अवच्छेदकतावैशिष्ट्यञ्च स्वविशिष्टरूपावच्छिन्ननिरूपक-तानिरूपितत्व, स्वविशिष्टरूपावच्छिन्ननिरूपकतानिरूपितविषयितासामानाधिकरण्यो-भयसम्बन्धेन। प्रथमसम्बन्धघटकरूपे स्ववैशिष्ट्यं स्वनिरूपितविषयितानिष्ठावच्छेदक-तानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व, स्वनिरूपितशून्यत्वनिष्ठावच्छेद-कतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपित-प्रतियोगित्वनिष्ठावच्छेकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदक-तानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताव-च्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्वोभयसम्बन्धेन। द्वितीयरूपे स्ववैशिष्ट्यं स्वनि-रूपितसामानाधिकरण्यसम्बन्धावच्छिन्ननिश्चयनिष्ठावच्छेदकतावत्वसम्बन्धेन अवच्छेदक-तावत्ता च रूपे, स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितनिरूपकत्वनिष्ठावच्छेद-कतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व, स्वनिरूपितशून्यत्वनिष्ठाव-च्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरू पितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेद-कतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदक-तावत्वोभयसम्बन्धेन।

तथा च प्रतियोगितावच्छेदकीभूतनिरुक्तविषयितासम्बन्धेन प्रतिबन्धकता निश्चयवि-शिष्टनिश्चये एव वर्त्तते, प्रतिबन्धकत्वाभाववती प्रतीतिस्तादृशविशिष्टाऽविषयकैव, तन्नि-ष्ठविषयितानिरूपकतावच्छेदकत्वस्य वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदे विरहान्ना-तिव्याप्तिः।

तादृशसम्बन्धस्य बाधप्रतिबन्धकता व्यधिकरणतया तेन सम्बन्धेन प्रतिब-न्धकत्वाभाववान् बाधनिश्चय इति तन्निष्ठविषयितानिरूपकतावच्छेदकत्वस्य च बाधतावच्छेदकवह्न्यभाववद्ध्रदत्वादौ वर्त्तमानत्वात् लक्षणसंगतिः। अथैवमपि बाधाद्यसंग्रहः, वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यवह्न्यभा-ववद्ध्रदत्वावच्छिन्नविषयताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावस्य बाधबुद्धित्वावच्छिन्नप्रतिबन्धकतायामपि सत्त्वेन तादृशाभा-वीयावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनि-ष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकताविशि-ष्टविषयितया बाधविषयकज्ञाने सत्त्वेन तादृशसम्बन्धेन प्रतिबन्धकत्वाभाववतीप्र-

तीतिबांधाविषयकैवेति तन्निष्ठविषयितानिरूपकतावच्छेदकत्वस्य वह्न्यभाववद्ध्रदत्वे विरहादिति चेन्न, द्वितीयसम्बन्धघटकस्वाभावस्य स्वविशिष्टाऽवच्छेदकताविशिष्ट-विषयितासम्बन्धावच्छिन्नप्रतियोगिताकस्य विवक्षणात्। अवच्छेदकतायां स्ववैशिष्ट्यं स्वनिष्ठकिञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नवि-षयिताशालिनिश्चयविशिष्टकिञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चि-द्रूपावच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीति-सिद्धाभावनिरूपितावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकता-निरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितत्वस्वातिरिक्तवृ-त्तिविषयतानिरूपकतावच्छेदकत्वसमानाधिकरणावच्छिन्नत्वसम्बन्धावच्छिन्नधर्मनिष्ठा-वच्छेदकतानिरूपकनिरूपकतासम्बन्धावच्छिन्नविषयतानिष्ठावच्छेदकतानिरूपकत्वस्वा-तिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकत्वसमानाधिकरणावच्छिन्नत्वसम्बन्धावच्छि-न्नधर्मनिष्ठावच्छेदकतानिरूपकनिरूपकतासम्बन्धावच्छिन्नविषयितानिष्ठावच्छेदकता-निरूपकसामानाधिकरण्यसम्बन्धावच्छिन्ननिश्चयनिष्ठावच्छेदकतानिरूपकत्वैतत्त्रितय-सम्बन्धेन, विषयतायामवच्छेदकतावैशिष्ट्यं पूर्ववत्। तथा च बाधप्रतिबन्धकतायां वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताशालिनिश्चयविशिष्टवह्न्यभाववद्ध्रदत्वावच्छि-न्नविषयताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभाव-स्य सत्त्वेऽपि तादृशाभावीयप्रतियोगितानिरूपितनिश्चयनिष्ठावच्छेदकता च न स-म्बन्धत्रयेण प्रतिबन्धकताविशिष्टा तत्र प्रथमसम्बन्धसत्त्वेऽपि अन्यसम्बन्धयोरभावा-त् निश्चयनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वस-म्बन्धावच्छिन्नावच्छेदकत्वस्य वह्न्यभाववद्ध्रदत्वनिष्ठस्य तादृशप्रतिबन्धकतानति-रिक्तवृत्तिविषयतानिरूपकतावच्छेदकतासामानाधिकरण्याभावात्, एवं तादृशनि-श्चयनिष्ठावच्छेदकतानिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्न "वह्न्यभाववान् ह्रद इति निश्चय" निष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिता-वच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकत्वस्य वह्न्यभाववद्ध्रदत्वनिष्ठस्य तादृशप्रति-बन्धकतानतिरिक्तवृत्तिविषयितानिरूपितनिरूपकतावच्छेदकतासामानाधिकरण्याभा-वाच्च।

जलवान् वह्न्यभाववान् जलवांश्च ह्रद इति निश्चयविशिष्टनिश्चयनिष्ठप्र-

तिबन्धकतावैशिष्ट्यं जलवान् ह्रद इति निश्चयनिष्ठावच्छेदकतायामस्ति, स्ववृत्तिर्यो निरुक्तोऽभावस्तदीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितत्वस्य तादृशप्रतिबन्धकत्वाभाववान् यो जलवान् ह्रद इति निश्चयस्तद्वृत्तिविषयितानिरूपितनिरूपकतावच्छेदकतासमानाधिकरणजलवद्ध्रदत्वनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकविषयित्वनिष्ठावच्छेदकतानिरूपकत्वस्य, एवं तादृशप्रतिबन्धकत्वाभाववान् यो जलवान् वह्न्यभाववान् इति निश्चयः तद्वृत्तिविषयितानिरूपितनिरूपकतावच्छेदकतासमानाधिकरणवह्न्यभाववज्जलवत्त्वनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकविषयित्वनिष्ठावच्छेदकतानिरूपकसामानाधिकरण्यसम्बन्धावच्छिन्न "जलवान् ह्रद" इति निश्चयनिष्ठावच्छेदकतानिरूपकत्वस्य च सत्त्वात्, तथा च तादृशावऽच्छेदकताविशिष्टविषयितासम्बन्धेन तादृशप्रतिबन्धकत्वाभाववान् बाधनिश्चयस्तद्वृत्तिविषयितानिरूपकतावच्छेदकत्वस्य वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वे विरहेण नातिप्रसङ्गः। तादृशावच्छेदकताविशिष्टविषयिता च बाधप्रतिबन्धकताया व्यधिकरणसम्बन्ध एवेति नाऽसम्भवः।

वस्तुतो द्वितीयसम्बन्धघटकस्वाभावप्रतियोगितावच्छेदकसम्बन्धः, स्वनिष्ठो यः किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयविशिष्टकिञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयताशून्यकिञ्चिद्रूपावच्छिन्नविषयताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धोऽभावस्तन्निरूपितावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकताविशिष्टविषयितावत्त्वमेव, विषयितायामवच्छेदकतावैशिष्ट्यं स्वविशिष्टरूपावच्छिन्ननिरूपकतानिरूपितत्व स्वविशिष्टरूपावच्छिन्ननिरूपकतानिरूपितविषयितासामानाधिकरण्योभयसम्बन्धेन। प्रथमरूपे वैशिष्ट्यं स्वनिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वस्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेद-

कतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताव-च्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व, स्वनिरूपितसामानाधिकरण्यसम्बन्धाव-च्छिन्ननिश्चयनिष्ठावच्छेदकतानिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठा-वच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वैतत्त्रितयसम्बन्धेन। द्वितीयरूपे स्ववैशिष्ट्य स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठा-वच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्वस्वनिरूपितसामाना-धिकरण्यसम्बन्धावच्छिन्ननिश्चयनिष्ठावच्छेदकतावत्त्वोभयसम्बन्धेन। द्वितीयसम्ब-न्धघटकावच्छेदकतावत्त्वञ्च स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्न-त्वसम्बन्धावच्छिन्नावच्छेदकतावत्वस्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरुपितविष-यित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानि-रूपिताधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्न-त्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेनेति।

एवञ्च बाधप्रतिबन्धकतायां वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताशून्यव-ह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताशालिनिश्चयविशिष्टतादृशनिश्चयवृत्तिभेदप्रतियो-गितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावो नास्त्येव, तादृशनिश्चयस्यैवाऽप्रसिद्ध-त्वात्।

वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदविषयकनिश्चयविशिष्टज्ञानवैशिष्ट्यावच्छिन्न-प्रतिबन्धकतायान्तु वह्न्यभाववज्जलवत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यजल-वद्ध्रदत्वावच्छिन्नविषयिताशून्यवह्न्यभाववज्जलवत्वावच्छिन्नविषयिताशालिनिश्च-यविशिष्टजलवद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयताशून्यवह्न्यभाववज्जलवत्वाव-च्छिन्नविषयिताशून्यजलवद्ध्रदत्वावच्छिन्नविपयिताशालिनिश्चयवृत्तिभेदप्रतियोगि-तावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावो वर्त्तत इति तादृशाऽभावीयाऽवच्छेदकत्व-निष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठाऽवच्छेदकतानि-रूपितभेदवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठाऽवच्छेकरूपावच्छिन्नविषयिता-दकताविशिष्टरूपमुक्तसम्बन्धत्रयेण जलवद्ध्रदत्वं वह्न्यभाववज्जलवत्वञ्चेति तादृशैक-रूपावच्छिन्नविषयितासमानाधिकरणाऽपररूपावच्छिन्नविषयितायाः एव तादृशवि-शिष्टनिश्चये सत्त्वेन नाव्याप्त्यतिव्याप्तीति भावः।

एवं, स्वरूपसम्बन्धरूपावच्छेदकत्वपक्षेऽप्यनुगमः शक्यः तथा हि प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टरूपवत्त्वं लक्षणम् । प्रतिबन्धकतावैशिष्टयञ्च प्रागुक्तोभयसम्बन्धेन, द्वितीयसम्बन्धघटकाभावप्रतियोगितावच्छेदकसम्बन्धश्च, स्ववृत्तिकिञ्चिद्रूपावच्छिन्नविषयिताविशिष्टकिञ्चिद्रूपावच्छिन्नविषयितात्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतावत्त्वरूपः, निरूपकतायां वृत्तित्वञ्च, स्वविशिष्टनिश्चयीयविषयितानिष्ठस्वरूपसम्बन्धरूपावच्छेदकतानिरूपकत्वसम्बन्धेन, निश्चये निरूपकतावैशिष्टय स्वनिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्रूपवत्त्व स्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयताशून्यत्वस्वविशिष्टनिश्चयसामाधिकरण्यैतत्त्रितयसम्बन्धेन । एतत्सम्बन्धघटकनिश्चये स्ववैशिष्टयंञ्च स्वनिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयताशून्यत्वस्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतावद्रूपवत्वोभयसम्बन्धेन । निश्चयद्वये रूपवत्वं स्वावच्छिन्नविषयितावत्त्वस्वावच्छिन्नविषयित्वाधिकरणवृत्तियत्किञ्चिद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयितानिरूपितकिञ्चिद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयितानिरूपितकिञ्चिद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयिता नास्तीति प्रतीतिसिद्धाभावीयप्रतियोगिताशून्यत्वोभयसम्बन्धेनेति । यदि वृत्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वानङ्गीकारेण तादृशसम्बन्धावच्छिन्नप्रतियोगिताकप्रतिबन्धकत्वाभावाऽप्रसिद्धया पूर्वोक्तानुगमद्वयमपि न सङ्गच्छत इत्युच्यते तदा स्वनिष्ठनिरुक्ताभावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकताविशिष्टविषयितानिष्ठप्रकारतानिरूपितविशेष्यत्वनिष्ठप्रमीयविशेष्यत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको योऽभावस्तद्वत् प्रतीतीविषयतानिरूपकतावच्छेदकत्वमनतिरिक्तवृत्तित्वकल्पे द्वितीयः सम्बन्धः ।

स्वरूपसम्बन्धरूपावच्छेदकत्वकल्पे स्ववृत्तिकिञ्चिद्रूपावच्छिन्नविषयिताविशिष्टकिञ्चिद्रूपावच्छिन्नविषयितात्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतानिष्ठप्रकारतानिरूपितविशेष्यतानिष्ठप्रमीयविशेष्यत्वीयस्वरूपेण योऽभावस्तद्वत्प्रतीति -

विषयितानिरूपकतावच्छेदकत्वमेव द्वितीयः सम्बन्धः । तथा च ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावृत्तिनिरुक्ताभावीयावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्व - निष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरू - पितनिश्चयनिष्ठावच्छेदकताविशिष्टविषयिताप्रकारकताहृशविशिष्टविषयकनिश्चयवि - शेष्यकबुद्धेः प्रमात्वेन , ताहृशप्रकारतानिरूपितविशेष्यतायाः प्रमीयविशेष्यत्वीयस्वरूपसम्बन्धेन ताहृशविशिष्टविषयकनिश्चये सत्त्वेन तदभाववती प्रतीतिस्ताहृशविशिष्टाविषयकैवेति नोक्तातिव्याप्तिः ।

बाधप्रतिबन्धकतानिष्ठताहृशाभावाऽप्रसिद्धावपि ताहृशप्रतिबन्धकतावृत्तित्वेन ताहृशाभावावगाहितन्निष्ठताहृशाभावीयावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितपरम्परीयनिश्चयनिष्ठावच्छेदकताविशिष्टविषयितावद्वह्न्यभाववद्ध्रदविषयकं ज्ञानमिति भ्रमसम्भवात्ताहृशभ्रमीयविषयितानिष्ठप्रकारतानिरूपितविशेष्यतायाः प्रमीयविशेष्यताप्रतियोगिकस्वरूपसम्बन्धस्य व्यधिकरणतया तेन सम्बन्धेन दोषज्ञानेऽसत्त्वेन लक्षणसमन्वयः ।

यदि विशेषरूपेण संसर्गता न स्वीक्रियते तदोक्तप्रकारेणानुगमाऽसम्भवेऽपि प्रकृतानुमितित्वव्यापकप्रतिबध्यताविशिष्टरूपवत्त्वं लक्षणम् । रूपे प्रतिबध्यतावैशिष्ट्यं स्वनिरूपितप्रतिबन्धकतावृत्तिकिञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिता - शून्ययद्रूपावच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावीयावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानि - रूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठाव - च्छेदकताविशिष्टत्वस्त्रावच्छेदकधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्ति - किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशून्य - किञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयविशिष्टकिञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावीयावच्छेदकतानिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपित -

वृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकताविशिष्टविषयिता नास्तीति प्रतीतिसिद्धाभाववत्प्रतीतिविषयितानिरूपकतावच्छेदकत्वोभयसम्बन्धेन। अवच्छेदकतावैशिष्ट्यञ्च रूपे स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वस्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितपरम्परीयावच्छेदकतावत्त्वोभयसम्बधेन। विषयितायामवच्छेदकतावैशिष्ट्यं स्वविशिष्टरूपावच्छिन्नत्वस्वविशिष्टरूपावच्छिन्नविषयितासामानाधिकरण्योभयसम्बन्धेन। प्रथमरूपे स्ववैशिष्ट्यम् उक्तत्रितयसम्बन्धेन। द्वितीयरूपे स्ववैशिष्ट्यम् उक्तोभयसम्बधेन। द्वितीयरूपे स्ववैशिष्ट्यघटकद्वितीयसम्बन्धघटकावच्छेदकतावत्त्वं चोक्तोभयसम्बन्धेनेति।

एवञ्चेदानीं बाधनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकधर्मावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतामादाय द्वितीयसम्बन्धोऽपि दोषतावच्छेदकरूपेऽस्तीति न व्यधिकरणसम्बन्धावच्छिन्नाभावो वक्तव्यः। असंग्राहृयविशिष्टविषयकनिश्चये ज्ञावैशिष्ट्यावच्छिन्नप्रतिबन्धकतावृत्तितादृशाभावीयावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितपरम्परीयनिश्चयनिष्ठावच्छेदकताविशिष्टविषयितासामान्याभावस्यासत्त्वेन नातिव्यप्तिः

एवं स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशपक्षेऽपि प्रतिबध्यताविशिष्टरूपवत्वं लक्षणम्, वैशिष्ट्यघटकप्रथमसम्बन्धः प्रागुक्त एव, द्वितीयसम्बन्धश्च स्वावच्छेदकावच्छिन्नप्रतिबध्यतानिरुपितप्रतिबन्धकतावृत्तिकिञ्चिद्रूपावच्छिन्नविषयितात्वावच्छिन्नप्रतियोगिताकाभाववत्प्रतीतिविषयतानिरूपकतावच्छेदकत्वरूपः। अभावस्य प्रतिबन्धकतावृत्तित्वञ्च स्वप्रतियोगिताविशिष्टविषयितात्वावच्छिन्नत्वसम्बन्धेन। प्रतियोगितावैशिष्ट्यञ्च प्रागुक्तस्वरूपसम्बन्धरूपावच्छेदकत्वपक्षानुगमघटकनिरूपकतावैशिष्ट्यनियामकसम्बन्धेनेति न काचिदनुपपत्तिः।

एवं सति चिकीर्षासामग्र्या एकधर्मावच्छिन्नं प्रत्येव प्रतिबन्धकत्वात् तद्वारणाय विशेषणदलेऽनतिरिक्तवृत्तित्वरूपावच्छेदकतायाः प्रवेश आवश्यक इति। ननु तथापि अभावपक्षकवह्निसाध्यकवह्न्यभाववद्वह्निव्यापकत्ववत्कालीनजलहेतुकस्थले वह्निव्यापकीभूताभावप्रतियोगितादृशजलरूपाऽसाधारण्येऽव्याप्तिः, तत्र व्यापकतारूपाभाव-

स्याऽभावांशे प्रविष्टतया तादृशाऽसाधारण्यस्य वह्न्यभाववद्वह्निव्यापकत्ववत्त्वविशिष्ट-वह्निव्यापकत्ववदभाववत्त्वविशिष्टरूपविशिष्टद्वयघटिततया वह्निव्यापकतावान् वह्न्य-भाववानिति निश्चयविशिष्टवह्निव्यापकतावानभाव इति निश्चयत्वस्याभावो वह्निमानि-त्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तितया तदघटितत्व-स्य तत्राभावात् अथ च प्रतिबन्धकतयोरैक्यादिति चेन्न। हेतुसाध्यभेदेन हेत्वाभास-लक्षणस्य नानात्वेन तादृशस्थलीयलक्षणे तादृशविशिष्टद्वयविषयितायां तादृशाऽसाधा-रण्यविषयकज्ञानीयतादृशविशिष्टद्वयविषयिताभेदस्याऽगत्या निवेशनीयत्वात्।

एतेन प्रतियोगित्वं वह्निमद्वह्न्यभाववद्वह्न्यधिकरणनिष्ठाभावनिरूपितत्वव-त्कालीनजलादित्यत्र वह्निव्यापकीभूताभावप्रतियोगितादृशाऽसाधारण्येऽव्याप्तिः, यथा प्रतियोगितात्वविशिष्टे वह्निवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नं प्रति पक्षे हेतुमत्ताज्ञान-कालीनाऽसाधारण्यविषयकनिश्चयस्य प्रतिबन्धकत्वं तथैव तदवच्छिन्नं प्रत्येव वह्न्य-धिकरणनिष्ठाभावनिरूपितत्ववद्वह्न्यभाववद्वह्न्यधिकरणनिष्ठाभावनिरूपितत्ववच्च प्रतियोगित्वमिति निश्चयविशिष्टनिश्चयस्य प्रतिबन्धकत्वम्। एवञ्च तादृशाऽसाधा-रण्यविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकतायाः प्रथमसम्बन्धस्याऽसाधारण्यतावच्छेद-करूपे सत्त्वेऽपि द्वितीयसम्बन्धो नास्त्येव, तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यताव-च्छेदकपक्षे साध्यवैशिष्टयावगाहिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपिता या उक्तनिश्च-यविशिष्टनिश्चयनिष्ठा प्रतिबन्धकता तद्वृत्तिनिरुक्ताभावीयावच्छेदकत्वनिष्ठप्रतियोगि-तानिरूपितपरम्परीयनिश्चयनिष्ठावच्छेदकताविशिष्टैकविषयिताविशिष्टाऽपरविषयि-तायास्तादृशाऽसाधारण्यविष्यकनिश्चये सत्त्वादिति निरस्तम्।

असाधारण्यविषयकनिश्चयस्य सामानाधिकरण्येनाऽनुमितिम्प्रति अवच्छे-दकावच्छेदेनानुमितिं प्रति च प्रतिबन्धकत्वं, पक्षे हेतुमत्ताज्ञानं यादृशं तादृ-शाऽनुमितिं प्रत्येव तस्य प्रतिबन्धकत्वात्, उक्तनिश्चयविशिष्टनिश्चयस्य तु अवच्छेद-कावच्छेदेनाऽनुमितिं प्रत्येव प्रतिबन्धकत्वम्। असाधारण्यशरीरे व्यापकताघटकत-या प्रतियोगित्वसामानाधिकरण्येनैव वह्न्यधिकरणनिष्ठाभावनिरूपितत्वस्य प्रविष्ट-त्वात्। प्रतियोगितावच्छेदेन तस्य प्रवेशे तादृशधर्मविशिष्टप्रतियोगित्वाऽप्रसिद्ध्या-

विशिष्टदोषस्याऽप्रसिद्धया काऽव्याप्तिः। एवञ्चाऽसाधारण्यविषयकनिश्चयनिष्ठसामानाधिकरण्येनाऽनुमितिप्रतिबन्धकतामादाय लक्षणसमन्वयात्, तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकतापर्याप्त्यधिकरणशुद्धसंयोगेन वह्निमत्प्रतियोगित्वबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतायां तादृशाऽसाधारण्यघटकविशिष्टद्वयविषयिताशालिनिश्चयत्वव्यापकत्वाभावेनाऽन्यविशिष्टद्वयस्यैव तादृशत्वात्तद्विषयिताशून्यत्वस्योक्ताऽसाधारण्यनिश्चये सत्त्वादिति तु न सम्यक्। सामानाधिकरण्येन तन्निश्चयस्यापि सामानाधिकरण्येनानुमितिप्रतिबन्धकत्वात्। अत एव ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतास्थले सामानाधिकरण्येन ज्ञानमपि सामानाधिकरण्येन ज्ञानं प्रतिबध्नाति" इति तर्के मथुरानाथेनोक्तम्, न च प्रतिबन्धकतैक्यविवक्षायामपि अभावो गगनत्ववान् आधेयत्वादित्यत्र गगनत्वव्यापकीभूताभावप्रतियोग्याधेयत्वरूपाऽसाधारण्ये हेतुमत्पक्षघटितेऽव्याप्तिर्दुर्वारैवेति वाच्यम्। तादृशाऽसाधारण्यस्य हेतुमत्पक्षतादृशासाधारण्यरूपविशिष्टद्वयघटितत्वेऽपि असाधारण्ये हेतुमत्पक्षविषयताशून्यत्वाभावेन तादृशविशिष्टद्वयस्य यादृशविशिष्टद्वयपदेन धर्तुमशक्यत्वात्, परस्परविषयिताशून्ययादृशविशिष्टद्वयविषयकनिश्चयत्वं तादृशप्रतिबन्धकताऽनतिरिक्तवृत्ति तादृशविशिष्टद्वयविषयिताशून्यत्वस्य तादृशाऽसाधारण्यनिश्चयेऽक्षतत्वादिति।

एवं घटो गगनाभाववद्भाववत्कालीनगगनवानित्यत्र बाधेऽपि नाव्याप्तिः, तत्र तादृशनिश्चयनिरूपिता या विशिष्टगगनवत्ताबुद्धित्वावच्छिन्नप्रतिबध्यता तस्या उक्तोभयसम्बन्धेन तादृशबाधतावच्छेदके सत्त्वात्, तत्र गगनाभाववदभाववत्कालीनगगनाभावत्त्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितविशिष्टगगनवत्ताबुद्धित्वावच्छिन्नप्रतिबध्यतायाः तादृशानुमितित्वव्यापिकायाः सत्त्वात्, तादृशप्रतिबध्यतानिरूपितप्रतिबन्धकताघटितप्रथमसम्बन्धस्य सत्त्वात्। एवं तदवच्छेदकधर्मावच्छिन्नविशिष्टगगनवत्ताबुद्धित्वावच्छिन्नप्रतिबध्यतायास्तद्व्यक्तित्ववान् गगनाभाववान् तद्व्यक्तित्ववान् घट इति निश्चयत्वावच्छिन्नप्रतिबन्धकतानिष्ठतादृशनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावीयप्रतियोगितानिरूपितनिश्चयनिष्ठाऽवच्छेदकताविशिष्टविषयतायाः उक्तनिश्चयेऽसत्त्वेन द्वितीयसम्बन्धस्य सत्त्वात्। न चाभाववान्

गगनाभाववान् अभाववान् घट इति निश्चयविशिष्टनिश्चयस्यापि तादृशविशिष्टगगनवत्ताबुद्धिप्रतिबन्धकतया तादृशप्रतिबध्यतावच्छेदकधर्मावच्छिन्नप्रतिबध्यतानिरूपितोक्तनिश्चयनिष्ठप्रतिबन्धकतावृत्तितादृशाभावीयप्रतियोगितानिरूपितपरम्परानिश्चय - निष्ठावच्छेदकताविशिष्टविषयताया उक्तबाधज्ञाने सत्त्वेन कथं तत्संग्रह इति वाच्यम्। स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकप्रतिबध्यताया एव तादृशसम्बन्धशरीरे निवेशनीयतया, घटो गगनवानिति तादृशनिश्चयविशिष्टगगनवान् पटकालीनगगनवानित्यादिज्ञानानामेकरूपेण प्रतिबध्यतानिर्वाहाय घटविशेष्यकगगनप्रकारकबुद्धित्वस्यैव निवेशनीयतया तादृशविशिष्टबाधनिश्चयनिरूपितप्रतिबध्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकत्वस्य तादृशविशिष्टगगनत्वादिनिष्ठसमुदायत्वस्योक्तावच्छेदकधर्मदर्शनप्रतिबध्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकत्वाभावेन तादृशनिश्चयविशिष्टनिश्चयनिष्ठप्रतिबन्धकतायाः व्यावर्त्तनात्। न चाभाववान् गगनाभाववानभाववान् घट इति निश्चयकाले घटे तादृशविशिष्टगगनवत्ताबुद्ध्यनुत्पादेन ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकताया आवश्यकत्वात्। अत एव विशिष्टगगनाभाववद्घटवत्तानिश्चयकालेप्यनुमित्युत्पादनिर्वाहसम्भवे ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतायाम्मानाभावादिति वाच्यम्। तथा सति अभाववति गगनाभावोऽव्याप्यवृत्तिरिति निश्चयकाले तादृशबाधनिश्चयानन्तरं तादृशविशिष्टानुमित्यापत्तेः। अवच्छेदकधर्मदर्शनस्यापि व्यापकांशेऽव्याप्यवृत्तित्वज्ञानाभावविशिष्टनिश्चयविशिष्टस्यैव प्रतिबन्धकत्वात्।

एवं, गगनाभाववद्भाववत्कालीनघटो गगनवानित्यत्र गगनाभाववत्तादृशघटरूपबाधे नाव्याप्तिः। तत्र तादृशघटो गगनवानिति बुद्धिं प्रति अभाववान् गगनाभाववानभाववान् तादृशघट इति निश्चययोः परस्पराघटितत्वाभावेन तद्घटितत्वस्याकिञ्चित्करत्वात्।

अभाववान् गगनाभाववान् अभाववान् घट इति निश्चययोः प्रतिबन्धकत्वमेव नास्तीति अभाववान् घट इति निश्चयस्य घटत्वसामानाधिकरण्येन गगना-

वगाहित्वेऽनुमितेरपि घटत्वसामानाधिकरण्येन गगनावगाहितयाऽप्रतिबन्धकत्वात्। अवच्छेदकावच्छेदेन तदवगाहित्वे तादृशघटस्य बाधघटकत्वमेव नास्तीति अतस्तादृशनिश्चयस्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकत्वमन्तरेण स्वतन्त्रविशिष्टनिश्चयत्वावच्छिन्नप्रतिबन्धकताऽसत्त्वेऽपि न क्षतिः।

यद्यपि तादृशविशिष्टपक्षकगगनसाध्यकस्थलेऽभाववत्तादृशघटेऽतिव्याप्तिः। तद्घटकीभूतविशिष्टद्वयस्य परस्परघटितत्वाभावेन यादृशविशिष्टपदेन धर्त्तुमशक्यतया तादृशविशिष्टद्वयाघटितत्वस्याक्षतत्वात्।

एवं रूपं नीलवदित्यत्र नीलरूपाभाववन्नीलेऽतिव्याप्तिः। एवमभावो वह्निमानित्यत्र वह्न्यभाववद्वह्निमत्यतिव्याप्तिः। उभयत्र तद्घटकीभूतविशिष्टद्वयस्य परस्पराऽघटितत्वात्। तथापि वक्ष्यमाणविशिष्टान्तराघटितत्वस्यैतेन परिष्कारेणैव वारणीयतया न दोषः। यद्यत्रापि तादृशदोषोद्धार आवश्यकस्तदा विशेष्यदलघटकविषयितायां तत्तद्विषयिताभिन्नत्वं विशेषणं देयम्। नन्वत्र निश्चयविशिष्टान्तोपादानं व्यर्थम् एकविशिष्टाऽघटितत्वनिवेशादेवोक्तातिव्याप्तिवारणसम्भवात्। तथा हि यद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वं प्रकृतानुमितित्वव्यापकप्रतिवध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्तितद्रूपावच्छिन्नविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयिताव्यापिकाप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतातद्रूपवत्त्वम्। तथा च नोक्तविशिष्टेऽतिव्याप्तिः वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयतादृशजलवद्ध्रदत्वावच्छिन्नविषयिताया ह्रदो वह्निमानित्यनुमितिप्रतिबन्धकतानतिरिक्तवृत्तितया तद्रूपावच्छिन्नविषयिताशून्यत्वस्य तादृशविशिष्टविषयकज्ञानेऽसत्त्वात्।

न च वह्न्यभाववद्ध्रदादिरूपबाधाद्यसंग्रहः, तेषां स्वात्मकविशिष्टघटितत्वात् [ वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वं ह्रदो वह्निमानित्यनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तितादृशवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताशून्यत्वस्य बाधादिज्ञानेऽसत्त्वात् ] इति वाच्यं, यद्रूपावच्छिन्नविषयिताप्रकृतानुमितित्वव्यापकप्रतिवध्यतानिरूपितज्ञानवैशिष्टयावच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्तितद्रूपावच्छिन्नवि-

षयिताशून्यत्वस्य विवक्षणीयत्वात्, तथा च बाधादिविषयिताया ज्ञानवैशिष्ट्याव-च्छिन्नप्रतिबन्धकतानतिरिक्तवृत्तित्वाभावात् यद्रूपावच्छिन्नविषयितापदेन तस्याः ध-र्त्तुमशक्यत्वेन वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वाद्यवच्छिन्नविषयिता एव तादृ-शीति तच्छून्यत्वस्य बाधादिज्ञाने सत्त्वात्, वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदवि-षयकज्ञाने चासत्त्वान्नाऽव्याप्त्यतिव्याप्तीति ।

न चैवमपि घटो गगनाभाववदभाववत्कालीनगगनवानित्यादौ तादृशगगना-भाववद्घटरूपबाधादावव्याप्तिः, तादृशबाधादिज्ञाने ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्ध-कताया अपि सत्त्वेन [ अत्र बाधनिश्चये प्रतिबन्धकताद्वयी एका घटो गगनवा-निति ज्ञाननिरूपिता ज्ञानवैशिष्ट्यावच्छिन्ना, अपरा च घटः तादृशगगनवानिति बुद्धिनिरूपिता ज्ञानवैशिष्ट्यानवच्छिन्ना एवं च तादृशबाधज्ञाने ज्ञानवैशिष्ट्याव-च्छिन्नप्रतिबन्धताया अपि सत्त्वेन ] तद्विषयितायाः तादृशप्रतिबन्धकताऽनतिरिक्त-वृत्तित्वादिति वाच्यम् ।

यादृशविशिष्टविषयिताज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्तिज्ञान-वैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदिका तादृशविषयिताशून्यत्वस्य विवक्षणीय-त्वात् । उक्तबाधनिश्चयीयविषयिताया ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतायाम-प्यवच्छेदकतया तादृशी च विषयिता गगनाभाववदभाववत्कालीनतद्व्यक्तित्ववद्वृ-त्तितद्व्यक्तित्ववद्घटविषयितैवेति तच्छून्यत्वस्योक्तबाधज्ञाने सत्त्वेनाव्याप्तिविरहात् ।

न च गगनवत्प्रतियोगित्वं गगनाभाववद्वह्न्यधिकरणवृत्त्यभावनिरूपितत्व-वत्कालीनवह्निमाञ्जलादित्यत्रावच्छेदकधर्मघटितासाधारण्ये [ तादृशवह्निव्यापकीभू-ताभावप्रतियोगिजलरूपाऽसाधारण्ये ] ऽव्याप्तिः तादृशाऽसाधारण्यनिश्चयस्य वह्न्य-धिकरणवृत्त्यभावनिरूपितत्ववान् गगनाभाववानिति निश्चयविशिष्टवह्न्यधिकरण-वृत्त्यभावनिरूपितत्ववत्प्रतियोगित्वमिति निश्चयत्वेन गगनवत्प्रतियोगित्वमिति बु-द्धिविरोधितया तादृशाऽसाधारण्यविषयितायास्तादृशानुमितित्वव्यापकविशिष्टपक्षग्र-हत्वावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताऽनतिरिक्तवृत्तित-या ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकतया च तादृशाऽसाधारण्यस्य या-दृशविशिष्टपदेन धर्त्तुं शक्यत्वेन तदघटितत्वस्य तत्राऽसत्त्वादिति वाच्यम् । स्व-

मत इवात्रापि प्रतिबन्धकतैक्यस्य विवक्षणीयत्वात्, तथा च विशेष्यदलघटकीभूताया असाधारण्यविषयकनिश्चयत्वव्यापिकायाः पक्षतावच्छेदकावच्छिन्ने साध्यवैशिष्ट्यावगाहिग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतायाः प्रकृताऽसाधारण्यघटकाऽवच्छेदकधर्मदर्शननिष्ठप्रतिबन्धकतायाः विशिष्टपक्षग्रहत्वावच्छिन्ननिरूपितायाः गगनाभाववद्वह्न्यधिकरणनिरूपितत्ववत्त्वविषयकनिश्चयविशिष्टवह्न्यधिकरणवृत्त्यभावनिरूपितत्ववत्प्रतियोगितात्वविशिष्टविषयकनिश्चयत्वावच्छिन्नायाश्चैक्याभावेन न तत्राऽव्याप्तिः।

तथा च प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टरूपवत्त्वं लक्षणम्। रूपे प्रतिबन्धकतावैशिष्ट्यं च स्ववृत्तिर्यः किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्ययद्रूपावच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाऽभावीयावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगीत्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकताविशिष्टत्व। स्वाभाववत्प्रतीतिविषयतानिरूपकतावच्छेदकत्वोभयसम्बन्धेन। रूपे अवच्छेदकतावैशिष्ट्यं स्वनिरूपितविषयित्वनिष्ठाऽवच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व–स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठाऽवच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेन। अभावप्रतियोगितावच्छेदकसम्बन्धश्च स्वतादात्म्यापन्नज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानिष्ठकिञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्य–किञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धो योऽभावस्तन्निरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकताविशिष्टविषयितारूपः। विषयितायामवच्छेदकतावैशिष्ट्यं स्वविशिष्टरूपावच्छिन्नत्वसम्बन्धेन, रूपे स्ववैशिष्ट्यं स्वनिरूपितविषयित्वनिष्ठावच्छेद-

कतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वस्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताऽधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेनेति ।

अथ वा स्वतादात्म्यापन्नज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावृत्त्यभावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठाऽवच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयिताप्रतियोगितावच्छेदकसम्बन्धः । एतन्मते द्वितीयसम्बन्धघटकाऽभावो लघुशरीर इति लाघवमेव ।

एवञ्च गगनवत्प्रतियोगित्वं गगनाभाववद्वह्न्यधिकरणनिष्ठाभावनिरूपितत्ववत्कालीनवह्निमज्जलादित्यत्रासाधारण्ये नाव्याप्तिः । प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितासाधारण्यविषयकत्वावच्छिन्नप्रतिबन्धकताविशिष्टरूपं तादृशासाधारण्यतावच्छेदकं तादृशप्रतिबन्धकतावृत्तिर्यः पक्षे हेतुमत्ताज्ञानकालीनाऽसाधारण्यविषयकनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धोऽभावस्तन्निरूपितप्रतियोगितायाः परम्परया निरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वरूपप्रथमसम्बन्धस्य तत्र सत्त्वात् । एवं, स्वतादात्म्यापन्नज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकत्वं स्वमेव तत्र च यादृशविशिष्टविषयकत्वाव्यापकविषयिताशून्ययादृशविशिष्टविषयकनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाऽभावस्तादृशविशिष्टाऽप्रसिद्ध्या स्वभिन्नपक्षग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितगगनाभाववद्वह्न्यधिकरणनिष्ठाभावनिरूपितत्वविशिष्टविषयकनिश्चयेविशिष्टवह्न्यधिकरणनिष्ठाभावनिरूपितत्ववत्प्रतियोगितात्वविशिष्टविषयकत्वाव्यापकविषयिताशून्यतादृशविषयताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावस्य सत्त्वात्, स्वतादात्म्यापन्नज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावृत्तितादृशाभावघटितसम्बन्धस्य व्यधिकरणत्वेन द्वितीयसम्बन्धस्य च सत्त्वात् ।

एवं, घटो गगनाभाववदभाववत्कालीनगगनवानित्यत्र बाधेनाव्याप्तिः, तत्र ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतायाः द्वितीयसम्बन्धघटकविषयित्वस्य व्यधिकरण-सम्बन्धत्वात्। तथा चैतन्मते गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्राभाववत्ताद्दशघटे, रूपं नीलरूपवदित्यत्र नीलरूपाभाववन्नीले, अभावो वह्निमानित्यत्र वह्न्यभाववद्वह्निमति च नातिव्याप्तिः, तत्र ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतामादायैव लक्षणसत्त्वस्योपपादनीयत्वात्, अभाववत्ताद्दशघटत्वादौ ताद्दशप्रतिबन्धकतायाः प्रथमसम्बन्धस्य सत्त्वेऽपि द्वितीयसम्बन्धस्याभावात्, तत्राऽभाववत्ताद्दशघटत्वावच्छिन्नविषयिताशाल्यव्यापकविषयताशून्यनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावसत्त्वेन तन्निरूपितप्रतियोगिताघटितोक्तविषयित्वाभावस्य ताद्दशविशिष्टविषयकप्रतीतावभावात्।

न चैवं ताद्दशविशिष्टपक्षकगगनसाध्यकस्थले गगनाभावविशिष्टघटात्मकबाधेऽव्याप्तिः, तत्र ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताया एव सत्त्वेन ताद्दशप्रतिबन्धकताया उक्तोभयसम्बन्धेन ताद्दशघटत्वेऽसत्त्वात्। स्वमते ताद्दशबाधघटकगगनाभाववदभाववत्वविशिष्टबाधरूपविशिष्टयोः परस्पराऽघटितत्वाऽभावेन तदुभयघटितत्वं नाव्याप्तिसम्पादकम्।

एवमभावो गगनत्ववानाधेयत्वादित्यत्र गगनत्वव्यापकाभावप्रतियोग्याधेयत्वरूपाऽसाधारण्येऽव्याप्तिः, तत्रापि ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताया एव सत्त्वात्।

एवं वह्न्यभाववद्ध्रदत्वभावव्याप्यवत्कालीनह्रदो वह्निमानित्यत्र वह्न्यभाव्याप्यवद्वह्न्यभाववद्वह्न्यभावव्याप्यवत्कालीनह्रदरूपसत्प्रतिपक्षेऽव्याप्तिः।

एवं, धूमाभाववद्धूमाभावव्याप्यवत्कालीनह्रदो वह्निमान् धूमादित्यत्र धूमाभावव्याप्यवत्ताद्दशह्रदरूपस्वरूपाऽसिद्धावव्याप्तिः।

एवं, धूमवान् धूमाभाववद्वृत्तित्ववद्धूमाभाववद्वृत्तित्वव्याप्यवत्कालीनवह्नेरित्यत्र धूमाभाववद्वृत्तित्वव्याप्यताद्दशवह्निरूपव्यभिचारेऽव्याप्तिः।

एवं, विरोधेऽप्यव्याप्तिः। सर्वत्र ताद्दशदोषज्ञानानां ज्ञानविशिष्टज्ञानत्वेनैव

प्रतिबन्धकत्वात् । स्वमते तु तादृशदोषघटकविशिष्टद्वयस्य परस्पराघटितत्वाभावेन यादृशविशिष्टपदेन तादृशविशिष्टद्वयस्य धर्त्तुमशक्यतया विशिष्टद्वयान्तराघटितत्व-सत्त्वात् नाव्याप्तिरिति वाच्यं स्वमतेऽतिव्याप्तिवारणाय विशेष्यदलघटकविषयितायां विषयिताविशेषभेदो निवेश्यः। एतन्मते उक्ताव्याप्तिवारणाय विशेषणदलघटकवि-षयितायां विषयिताविशेषभेदो निवेश्य इति तुल्यम्। स्वमते लक्षणशरीरे गौरवं पुनरधिकमिति चेन्न, नानाविधावच्छेदकधर्मदर्शनानामेकरूपेण [ निश्चयविशिष्टनि-श्चयत्वेन ] प्रतिबन्धकत्वमते एतन्मते सर्वत्र प्रागुक्तदोषेष्वव्याप्तिः, ज्ञानवैशिष्ट्याव-च्छिन्नप्रतिबन्धकताया उक्तोभयसम्बन्धेन दोषतावच्छेदकेऽसत्त्वात्। तत्र प्रथमस-म्बन्धस्य सत्त्वेऽपि तादृशप्रतिबन्धकतावृत्तिविशिष्टदोषविषयकनिश्चयनिष्ठभेदप्रतियो-गितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपि-तप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छे-दकतानिरूपितनिश्चयनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताव-च्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयित्वाभाववत्प्रतीतिविषयि-तानिरूपकतावच्छेदकत्वाभावात्।

एकरूपेण प्रतिबध्यप्रतिबन्धकभावश्च ह्रदत्वावच्छिन्नविशेष्यकवह्नित्वाव-च्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नं प्रति वह्न्यभावत्वावच्छिन्नप्रकारताविशिष्ट-ह्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन। विशेष्यतायां प्रकारतावैशिष्ट्यं स्व-विशिष्टप्रकारतानिरूपितत्व स्वनिरूपकनिश्चयसमानाधिकरणज्ञानीयत्वोभयसम्बन्धेन, प्रकारतायां स्ववैशिष्ट्यं स्वनिरूपितविशेष्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्वविशि-ष्टरूपावच्छिन्नत्वोभयसम्बन्धेन। रूपे स्ववैशिष्ट्यं स्वनिरूपितविशेष्यतावच्छेदकता-वच्छेदकत्व स्वनिरूपितसंसर्गतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितस्वाश्र-यनिष्ठावच्छेदकतानिरूपितकिञ्चित्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वन्नास्ती-ति प्रतीतिसिद्धाभावनिष्ठावच्छेदकतानिरूपिताऽवच्छेदकत्वनिष्ठावच्छेदकतानिरूपित-प्रतियोगित्वनिष्ठावच्छेदकतानिरूपितप्रतियोगितानिष्ठावच्छेदकतानिरूपितभेदनिष्ठाव-च्छेदकतानिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपि-

ताऽधिकरणनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितधर्मनिष्ठावच्छेदकतानिष्ठावच्छे - दकतानिरूपिताधेयत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेनेति ।

अवच्छेदकधर्मदर्शनानामेकरूपेण प्रतिबन्धकत्वाऽनङ्गीकर्तृमते नीलरूपाभाववन्नीलमित्यादिनिश्चयानां विशिष्टज्ञानत्वेनैव प्रतिबन्धकत्वम्, तादृशज्ञानस्य नियमतो रूपत्वविशिष्टे नीलत्वावगाहितया ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकत्वे मानाभावात्, तथा च तन्मते तत्राऽतिव्याप्तिः। तत्प्रतिबन्धकताया ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावृत्तितादृशाभावघटितविषयितात्मकसम्बन्धस्य व्यधिकरणत्वात् ।

तथा च मतद्वयानुसारेण लक्षणकरणे उक्तस्थलेष्वतिव्याप्तिवारणाय विशेष्यदले विषयितायामुक्तविषयिताभेदः विशेषणदले विषयितायां प्रागुक्तसर्वविषयिताभेदो निवेशनीय इति गौरवम्। स्वमते एकरूपेण प्रतिबन्धकतास्वीकारेऽस्वीकारे वा मतद्वयेऽपि अतिव्याप्तिवारणाय विशेष्यदले विषयितायामेव विषयिताविशेषभेद एव निवेशनीय इति लाघवम् ।

यत्तु कैश्चिदुक्तं ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतालाभायैव तदभिधानमिति तदसत्, उक्तरीत्या निवेशस्याऽऽवश्यकत्वादिति। यत्तु एकविशिष्टाघटितत्वनिवेशे वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदविषयितावद्भेदवह्न्यभाववज्जलवत्कालीनजलवद्ध्रदविषयितावद्भेदादीनां निवेशनीयतया गौरवम्, विशिष्टद्वयाऽघटितत्वनिवेशे न तादृशगौरवम्, वह्न्यभाववज्जलवत्वविशिष्टविषयिताविशिष्टजलवद्ध्रदत्वविशिष्टविषयित्वाभावनिवेशादेव एकावच्छेदकधर्मघटितनानाविशिष्टवारणसम्भवादिति । तदपि नोक्तप्रकारेणानुगमे गौरवाऽप्रसक्तेरिति ।

अपरे तु, यत्र बाधज्ञानं कदाचिद् घटकालीनजलवद्ध्रदविषयकं कदाचित् पटकालीनजलवद्ध्रदविषयकं, तादृशजलवद्ध्रदविषयकज्ञानमपि बाधविषयकमेव न तु कदाचिद् बाधघटकस्वघटकवस्तुज्ञानकालीनं तत्र बाधेऽव्याप्तिः। न च तत्र घटकालीनजलवद्ध्रदेऽतिव्याप्तिः, विशिष्टान्तरबाधघटितत्वादिति प्राहुः ।

ननु तथापि यादृशविशिष्टविषयकनिश्चयविशिष्ट्यादृशविशिष्टविषयकनिश्चयत्वमित्यत्र प्रथमनिश्चयत्वस्थाने ज्ञानत्वमेव निवेशनीयम्। निश्चये ज्ञानवैशिष्ट्यं ता-

दात्म्यसम्बन्धेन। द्वितीयं संशयान्यत्वरूपम्, तथा चैकांशे संशयापरनिश्चयस्य व्यावृत्त्या न तादृशविशिष्टाऽप्रसिद्धिः। न चैवमपि जलवान् वह्न्यभाववान् जातिमद्वान् ह्रदः जातिमद्वान् वह्न्यभाववान् जलवान् ह्रद इति ज्ञानयोः प्रतिबन्धकताविरहेण तादृशविशिष्टद्वयाऽप्रसिद्ध्याऽसम्भवापत्त्याऽव्यापकीभूतविषयताशून्यत्वमवश्यं निवेशनीयम्। एवञ्च समूहालम्बनमादायैव तादृशविशिष्टविषयकनिश्चयत्वेऽनुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वस्योपपादनीयतया समूहालम्बनज्ञाने चाऽव्यापकीभूतविषयिताशून्यत्वस्याऽभावात्। समूहालम्बनज्ञाने वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयितायाः जलवद्ध्रदत्वावच्छिन्नविषयितायाश्च परस्पराऽव्यापकत्वादिति तादृशविशिष्टद्वयाऽप्रसिद्धिर्दुर्वारैव। न च किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानवृत्तित्वोपलक्षितयद्रूपावच्छिन्नविषयितावत्त्वे सति यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञान वृत्तित्वोपलक्षितयद्रूपावच्छिन्नविषयताशालिनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तितद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविषयिताशून्यप्रतीतिर्विषयतावच्छेदकत्वं यद्रूपे निवेशनीयम्। तादृशविषयितावत्वञ्च न खण्डशो ज्ञाने, किन्तु समूहालम्बनज्ञाने एव, तथा च विशिष्टद्वयाऽप्रसिद्ध्या नोक्ताऽतिव्याप्तिः। वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानवृत्तित्वोपलक्षितत्वस्य समूहालम्बनज्ञानीयविषयतायामेव सत्त्वादिति वाच्यम्। यत्र समूहालम्बनज्ञानमेव न भवति किन्तु खण्डशो ज्ञानमेव भवति तत्रत्य बाधादौ तादृशविशिष्टद्वयाऽप्रसिद्ध्याऽव्याप्तेर्दुर्वारत्वात्। न च किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वमेव तादृशज्ञाने निवेशनीयम्। तथा च वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयताशून्यत्वस्य वह्न्यभाववज्जलवत्वविशिष्टविषयकज्ञानात्मकजलवद्ध्रदत्वविशिष्टविषयकनिश्चयत्वे तादृशप्रतिबन्धकताऽनतिरिक्तवृत्तित्त्वसत्वान्न विशिष्टद्वयाऽप्रसिद्धिरितिवाच्यम्। तथा सति वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताशालिज्ञानात्मकतादृशविशिष्टविषयकनिश्चयत्वस्य तादृशप्रतिबन्धकतानतिरिक्तवृत्तितया तादृशविशिष्टविषयिताविशिष्टतद्रूपावच्छिन्नविषयिताशून्यज्ञानविषयत्वरूपविशिष्टद्वयाऽघटितत्वस्याऽभावेन बाधादावव्याप्तिरिति वाच्यम्। ज्ञानवैशिष्ट्यान-



वच्छिन्नप्रतिबन्धकतानवच्छेदकताद्दशविशिष्टद्वयविषयताशून्यत्वस्य विवक्षणीयतयाऽव्याप्तिविरहादिति चेन्न। गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र गगनाभाववत्ताद्दशघटरूपबाधेऽव्याप्तिः, तत्र गगनाभाववद्गगनाभाववदभाववत्कालीनघटत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यगगनाभाववदभाववत्त्वविशिष्टविषयकज्ञानात्मकताद्दशविशिष्टबाधरूपविशिष्टविषयकनिश्चयत्वस्य प्रतिबन्धकताऽनतिरिक्त - वृत्तितया ताद्दशबाधज्ञानस्य ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकतया ताद्दशविशिष्टविषयितायां ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकत्वस्य सत्त्वात्, तथा हि घटधर्मिकगगनवत्ताबुद्धिं प्रति अभावावच्छेदेन गगनाभावप्रकारकनिश्चयविशिष्टघटधर्मिकाऽभावप्रकारकनिश्चयत्वेनं प्रतिबन्धकत्वमावश्यकम्, अन्यथा अभाववान् गगनाभाववान् अभाववांश्च घट इति ज्ञानोत्तरं घटो गगनवानिति बुद्धिप्रसङ्गः। तथा च गगनाभाववदभाववत्कालीनघटो गगनवानिति निश्चयस्यापि अभावावच्छेदेन गगनाभावप्रकारकनिश्चयविशिष्टघटधर्मिकाभावप्रकारकनिश्चयत्वेनैव प्रतिबन्धकत्वम्, तदनन्तरं गगनाभाववदभाववत्कालीनघटो गगनवानिति बुद्धेरुत्पादाऽसम्भवात्, गगनाभाववदभाववत्कालीनघटधर्मिकगगनवत्ताबुद्धिं प्रति ताद्दशघटधर्मिकगगनाभावप्रकारकनिश्चयत्वेन ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतान्तरे मानाभावात्, तथा च विशिष्टविषयिताशून्यत्वस्य ताद्दशबाधज्ञानेऽसत्त्वात्।

एवमभावो गगनत्वावानाधेयत्वादित्यत्राऽसाधारण्ये गगनत्वव्यापकाऽभावप्रतियोग्याधेयत्वरूपेऽव्याप्तिश्च, तस्य चाऽऽधेयत्ववदभावत्वविशिष्टताद्दशाऽसाधारण्यरूपविशिष्टद्वयघटितत्वात्।

न च स्वाभाववज्ज्ञाननिष्ठविषयितानिरूपकतावच्छेदकयद्रूपविशिष्टविषयकज्ञानविशिष्टताद्दशयद्रूपविशिष्टविषयकनिश्चयत्वं प्रतिबन्धकतानतिरिक्तवृत्तिताद्दशविशिष्टद्वयाघटितत्वस्य निवेशनीयतया नोक्तबाधासाधारण्ययोरव्याप्तिः। तत्र यद्रूपपदग्राह्यबाधासाधारण्यतावच्छेदकरूपयोस्ताद्दशप्रतिबन्धकताशून्यज्ञाननिष्ठविषयितानिरूपकतावच्छेदकत्वाभावेन ताद्दशविशिष्टद्वयस्य याद्दशविशिष्टद्वयपदेन धर्तुमशक्यतया तद्व्यक्तित्ववान् गगनाभाववान् तद्व्यक्तित्ववान् ताद्दशघट इत्यादिज्ञानविशिष्टज्ञानयोरेव धर्त्तव्यतया तदघटितत्वस्य ताद्दशबाधादौ सत्त्वादिति वाच्यम्।

तादृशविशिष्टविषयित्वाव्यापकविषयिताशून्यत्वविवक्षणे ह्रदो जलवान् जातिमत्कालीनवह्निमानित्यत्र जलवज्जातिमत्कालीनवह्निमानित्यत्र जलवज्जातिमत्कालीनवह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तेः, तत्र जलवान् जलवज्जातिमत्कालीनवह्न्यभाववान् जातिमानिति समूहालम्बनेऽपि जलवज्जातिमत्कालीनवह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयताशून्यत्वसत्त्वेन तादृशज्ञाने प्रतिबन्धकताविरहेण तादृशविशिष्टद्वयस्य यादृशविशिष्टपदेन धर्त्तुमशक्यतया पङ्कजवान् जलवज्जातिमत्कालीनवह्न्यभाववान् पङ्कजवान् ह्रद इति ज्ञानविषयीभूतविशिष्टद्वयस्यैव यादृशविशिष्टपदेन धर्त्तव्यत्वात्तदघटितत्वस्य तत्र सत्त्वात्।

न च यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वोपलक्षितयद्रूपावच्छिन्नविषयिताशालिज्ञानविशिष्टयद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वोपलक्षितयद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तितादृशविशिष्टद्वयाघटितत्वस्य विवक्षणान्नोक्तातिव्याप्तिः, असमूहालम्बनात्मकप्रत्येकज्ञानीयविषयितायाः समूहालम्बनात्मकज्ञानीयविषयतायाश्चैक्यात्। जलवान् जलवज्जातिमत्कालीनवह्न्यभाववान् जातिमान् इत्याकारकसमूहालम्बने जलवद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यजलवान् ह्रद इति ज्ञानीयत्वोपलक्षितजलवद्ध्रदत्वावच्छिन्नविषयिताया अभावेन तत्र प्रतिबन्धकताविरहेऽपि जलवान् तादृशवह्न्यभाववान् जलवान् ह्रद इति ज्ञाने तादृशविषयितावति प्रतिबन्धकतासत्त्वेन यादृशविशिष्टपदेन तादृशविशिष्टस्यापि धर्त्तुं शक्यतया तदघटितत्वस्य तत्राभावादिति वाच्यम्। पूर्वोक्तबाधादिसंग्रहार्थं यद्रूपे स्वाभाववत्प्रतीतिविषयितानिरूपकतावच्छेदकत्वरूपविशेषणस्यावश्यकतया तद्घटकप्रतीतावनाहार्यत्वाऽप्रामाण्यज्ञानानास्कन्दितत्वनिश्चयत्वादीनां निवेशनीयतया गौरवात्। न च परस्परतादृशविषयताशून्यत्वस्य निश्चयद्वये निवेशेनैवोक्तबाधादिसंग्रहसम्भवः, तथा च न गौरवमपि त्वनुगमशरीरे लघवमेव, तथा हि प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टरूपवत्वं लक्षणम्। रूपे प्रतिबन्धकतावैशिष्ट्यं पूर्वोक्तसम्बन्धद्वयेन। द्वितीयसम्बन्धघटकाभावप्रतियोगितावच्छेदकसम्बन्धश्च स्वनिष्ठो यः किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिता-

शून्यज्ञानीयत्वोपलक्षितकिञ्चिद्रूपावच्छिन्नविषयिताशालिज्ञानविशिष्टकिञ्चिद्रूपाव - च्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशून्यज्ञानीयत्वोप - लक्षितकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्ती - ति प्रतीतिसिद्धाऽभावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेद- कतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनि - ष्ठावच्छेदकताविशिष्टविषयितावत्त्वरूपः। विषयितायामवच्छेदकतावैशिष्टयं स्ववि- ष्टरूपावच्छिन्नत्वस्वविशिष्टरूपावच्छिन्नविषयितासामानाधिकरण्योभयसम्बन्धेन। प्र- थमरूपे स्ववैशिष्टयं स्वनिरूपितविषयित्वनिष्ठावच्छेदकतावत्व,स्वनिरूपिततादात्म्य- सम्बन्धावच्छिन्नज्ञाननिष्ठावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपितवृत्ति- त्वनिष्ठावच्छेदकतानिरूपितज्ञाननिष्ठावच्छेदकतानिरूपितशून्यत्वनिष्ठावच्छेदकतानिरू - पितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्वोभ - यसम्बन्धेन।

रूपेऽवच्छेदकतावत्वञ्च स्वनिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेद - कतावत्व,स्वनिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितज्ञाननिष्ठावच्छेदकतानिरूपित - शून्यत्वनिष्ठावच्छेदकतानिरूपितविषयत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठा- वच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपि - तवृत्तित्वनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठाव - च्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्वोभयसम्बन्धेन। द्विती- यरूपे स्ववैशिष्टयं स्वनिरूपिततादात्म्यसम्बन्धावच्छिन्नज्ञाननिष्ठावच्छेदकतानिरूपित- विषयित्वनिष्ठावच्छेदकतावत्व,स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितवृत्तित्व - निष्ठावच्छेदकतानिरूपितज्ञाननिष्ठावच्छेदकतानिरूपितशून्यत्वनिष्ठावच्छेदकतानिरू - पितविषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्वो - भयसम्बन्धेनेति। एतत्सम्बन्धघटकावच्छेदकतावत्वञ्च प्रागुक्तोभयसम्बन्धेनेति।

यद्यभावप्रतियोगितावच्छेदकत्वशरीरे उपलक्षणविधया प्रवेशो नाङ्गीक्रिय- ते तदा द्वितीयसम्बन्धघटकाऽभावप्रतियोगितावच्छेदकसम्बन्धश्च स्ववृत्तिर्यस्तद्व्य-

क्तिविशिष्टज्ञानविशिष्टतद्व्यक्तिविशिष्टनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धो योऽभावस्तदीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकताविशिष्टविषयितारूपः। अवच्छेदकतायामवच्छेदकतावैशिष्ट्यं स्वतादात्म्यस्वविशिष्टविषयितावृत्त्युभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपकत्वस्वविशिष्टविषयितानिष्ठोभयावृत्तिधर्मावच्छिन्नतद्व्यक्तिनिष्ठावच्छेदकतानिरूपकतादात्म्यसम्बन्धावच्छिन्नज्ञाननिष्ठावच्छेदकतानिरूपकत्वैतत्त्रितयसम्बन्धेन। प्रथमविषयितायां स्ववैशिष्ट्यं स्वनिरूपितावच्छेदकतावद्विषयतानिरूपकतावच्छेदकधर्मावच्छिन्नविषयत्वाव्यापकविषयताशून्यज्ञानीयत्व,स्वनिरूपिततादात्म्यसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदकतावद्विषयतानिरूपकतावच्छेदकधर्मावच्छिन्नविषयताशून्यज्ञानीयत्वोभयसम्बन्धेन। द्वितीयविषयितायां स्ववैशिष्ट्यं स्वनिरूपिततादात्म्यसम्बन्धावच्छिन्नज्ञाननिष्ठावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतावद्विषयतानिरूपकतावच्छेदकधर्मावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्व,स्वनिरूपितावच्छेदकतावद्विषयतानिरूपकतावच्छेदकधर्मावच्छिन्नविषयिताशून्यज्ञानीयत्वोभयसम्बन्धेनेति। विषयतायामवच्छेदकतावैशिष्ट्यं स्वनिरूपितावच्छेदकतावद्विषयतानिरूपकतावच्छेदकधर्मावच्छिन्नत्वस्वनिरूपिततादात्म्यसम्बन्धावच्छिन्नावछेदकतानिरूपकतावच्छेदकतावद्विषयतानिरूपकतावच्छेदकधर्मावच्छिन्नविषयतासामानाधिकरण्योभयसम्बन्धेनेति वाच्यम्।

यादृशस्थलेऽसंग्राह्यविशिष्टविषयकसमूहालम्बनमप्रसिद्धं तादृशविशिष्टेऽतिव्याप्तिवारणाय सामानाधिकरण्यरूपवैशिष्ट्यमेव निवेशनीयम्, तथा चोभयत्र निश्चयत्वनिवेश आवश्यकः, यादृशस्थलेऽसंग्राह्यविशिष्टघटकप्रत्येकविषयकसमूहालम्बनमप्रसिद्धं तत्रातिव्याप्तिरुभयमते इति तुल्येति।

नन्वत्र प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकविषयिताशून्यत्वं निश्चये विशेषणं देयं, तथा चाऽव्यापकविषयताशून्यत्वं विशिष्टद्वयाघटितत्वं विशिष्टान्तराघटितत्वञ्च नोपादेयम्। जातिमान् वह्न्यभाववानिति ज्ञाने प्रतिबन्धकतानवच्छेदकजातित्वविषयताशून्यत्वाभावेन तद्व्युदासात्। मेयत्व-

विशिष्टव्यभिचारनिश्चये तादृशमेयत्वविशिष्टविषयतायाः सत्त्वात् । वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदविषयकनिश्चये तादृशवृत्तित्वविषयतायाश्च सत्त्वात् तयोर्व्युदासात् । न चैवमसम्भवः ह्रदो वह्निमानित्यत्र वह्न्यभाववद्ध्रदरूपदोषविषयकनिश्चये ह्रदत्वप्रकारतानिरूपितनिरवच्छिन्नविशेष्यतायाः तादृशप्रतिबन्धकतानवच्छेदिकायाः सत्त्वेन तच्छून्यत्वाभावादिति वाच्यम् ।

प्रतिबन्धकतानवच्छेदकेत्यनेन प्रतिबन्धकतावच्छेदकविषयिताविशिष्टान्यत्वस्य विवक्षितत्वात् । वैशिष्ट्यं स्वतादात्म्यस्वावच्छिन्नत्वान्यतरसम्बन्धेन । तथा च ह्रदादिनिष्ठनिरवच्छिन्नविषयताया अपि प्रतिबन्धकतावच्छेदकह्रदत्वावच्छिन्नविशेष्यत्वावच्छिन्नत्वसत्त्वान्नासम्भवः ।

न चैवमपि ह्रदो वह्न्यभाववानिति ज्ञानस्यावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नवह्नित्वनिष्ठप्रकारताशालिनिश्चयत्वेन लाघवात् प्रतिबन्धकतामते वह्निनिष्ठविषयतायाः कस्याश्चिदपि प्रतिबन्धकतावच्छेदकत्वाभावेन तद्विषयताशून्यत्वविरहेण बाधेष्वव्याप्तिरिति वाच्यम् । तादात्म्यावच्छेद्यत्वावच्छेद्यनिरूपितत्वान्यतमसम्बन्धेन वैशिष्ट्यस्य विवक्षितत्वात् । तादृशबाधज्ञानीयवह्न्यादिविषयितायाः अपि प्रतिबन्धकतावच्छेदकाभावत्वावच्छिन्नप्रकारतावच्छेद्यतादृशविशेष्यतानिरूपितत्वेन तादृशविषयिताविशिष्टान्यत्वाभावेन नाव्याप्तिः ।

असंग्राह्यविशिष्टविषयकज्ञानीयवृत्तित्वविषयतायाः प्रतिबन्धकतावच्छेदकजलनिष्ठप्रकारतावच्छेद्यविशेष्यतानिरूपितत्वेन तादृशविषयताविशिष्टान्यत्वाभावेऽपि वृत्तितात्वनिष्ठविषयतायाः तादृशत्वेन तच्छून्यत्वाभावान्नातिव्याप्तिः ।

प्रमेयतात्वविषयतामादाय प्रमेयत्वविशिष्टव्यभिचारवारणमिति चेन्न । ह्रदो-वह्न्यभाववानिति ज्ञानस्य संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वह्निप्रकारकतया तादृशप्रतियोगितायास्तादृशावच्छिन्नत्वविशिष्टप्रतियोगितात्वेन सम्बन्धत्वे, केवलप्रतियोगितात्वेन सम्बन्धत्वे वा संयोगसम्बन्धावच्छिन्नत्वप्रतियोगितात्वविषयितयोः प्रतिबन्धकतावच्छेदकविषयितातादात्म्यावच्छिन्नत्वावच्छेद्यत्वनिरूपितत्वादीनां मध्ये कस्याप्यभावेन तत्र तच्छून्यत्वाभावेनाव्याप्तितादवस्थ्यात् ।

यदि प्रागुक्तसम्बन्धत्रयावच्छेद्यनिरूपितनिरूपितत्वान्यतमसम्बन्धेन वैशिष्ट्यं-विवक्ष्यते तदा प्रतियोगितात्वादिविषयिताया अपि प्रतिबन्धकतावच्छेदकाभावत्वाव-च्छिन्नप्रकारत्वावच्छेद्यताद्दशविशेष्यतानिरूपितप्रतियोगितानिष्ठसांसर्गिकविषयतानिरू-पितत्वाभावान्नाव्याप्तिरिति यदि विभाव्यते,तदा वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रद-विषयकज्ञानीयवृत्तितात्वविषयताया अपि •प्रतिबन्धकतावच्छेदकजलत्वाद्यवच्छिन्नप्रका-रत्वावच्छेद्यताद्दशविशेष्यतानिरूपितवृत्तित्वनिष्ठविषयतानिरूपिततया ताद्दशविषयिता-विशिष्टान्यत्वाभावेनातिव्याप्तितादवस्थ्यात्,अतो विशिष्टद्वयाघटितत्वं निवेश्यम्।

वस्तुतस्तु अवच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नवह्नित्वनिष्ठप्रकारता-निरूपितविशेष्यत्वावच्छिन्नाभावनिष्ठप्रकारतानिरुपितह्रदनिष्ठविशेष्यताशालिनिश्चय त्वेन प्रतिबन्धकत्वे वह्नित्ववदभाववद्ध्रदस्यैव बाधतया वह्न्यभाववद्ध्रदविषयक-निश्चयासङ्ग्रहेऽपि न .क्षतिः। अतो वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदरूपविशिष्टे अतिव्याप्तिवारणप्रयोजनं विशिष्टद्वयाघटितत्वस्य न सम्भवति, परन्तु ह्रदो वह्निमान् जलादित्यादौ एकत्र द्वयमिति रीत्या भासमानह्रदवृत्तित्व [विशिष्ट] वह्निव्यापकीभू-ताभावप्रतियोगित्ववत्पङ्कजेऽसाधारण्यसत्प्रतिपक्षाद्यनात्मकेऽतिव्याप्तिः, तज्ज्ञानीय-विषयतायाः कस्या अपि तादात्म्यावच्छिन्नत्वान्यतरसम्बन्धेन प्रतिबन्धकताविशिष्टा-या अप्रसिद्धेः।

एव विशिष्टान्तराघटितत्वविशेषणमप्यावश्यकम्। अन्यथा ह्रदो-वह्निमानित्यत्र वह्न्यभाववद्ध्रदावच्छिन्नेऽतिव्याप्तिस्तत्रापि ह्रदत्वावच्छिन्न-प्रकारताया वह्न्यभावप्रकारतानिरुपितह्रदत्वावच्छिन्नविशेष्यतारूपप्रतिबन्धक-तावच्छेदकविषयित्वावच्छेद्यत्वात्, धर्मिविषयितायाश्च ताद्दशप्रकारतानि-रूपितत्वात्, ताद्दशविषयिताविशिष्टान्यविषयितायास्ताद्दशज्ञानेऽसत्त्वात्। एवं, ह्रदो वह्न्यभाववानिति ज्ञानस्य वह्निनिष्ठप्रतियोगितासम्बन्धावच्छिन्नप्रका-रताशालिज्ञानत्वेन प्रतिबन्धकत्वेपि तद्विशेषणद्वयमावश्यकम्, अन्यथा-तत्कल्पे प्रागुक्तविषयताशून्यत्वमेव निश्चये विशेषणं न तूक्तविशेषणद्वयं, ताद्दशविषयतावैशिष्ट्यञ्च तादात्म्यावच्छिन्नत्वान्यतरसम्बन्धेन। तथा च ह्रदः

वह्न्यभाववानिति ज्ञानीयवह्निप्रकारतायाः तदवच्छेदकप्रतियोगितायास्तन्निष्ठप्रतियोगित्वादिविषयितायाश्च प्रतिबन्धकतावच्छेदकत्वात्, ह्रदादिनिरवच्छिन्नविशेष्यताया-स्तदवच्छिन्नत्वाच्च, तज्ज्ञानीयविषयितापि न तादृशविषयिताविशिष्टान्येति नाव्याप्तिः। असंग्राह्यविशिष्टविषयकज्ञानीयवृत्तित्वादिविषयिता तादृशविषयिताविशिष्टान्येति तद्वारणान्नातिव्याप्तिः।

न च गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र बाधेऽव्याप्तिः, तादृशबाधज्ञानस्य गगनाभाववदभावत्वविशिष्टविषयकज्ञानविशिष्टाभाववद्घटत्वविशिष्टविषयकज्ञानत्वेनैव प्रतिबन्धकतया बाधज्ञानीयपक्षविशेषणतापन्नाभावविशेषणतापन्नगगनगगनत्वविषयतादीनां प्रतिबन्धकतानवच्छेदकतया तच्छून्यत्वस्य तादृशबाधज्ञानेऽसत्त्वादिति वाच्यम्। प्रकृतानुमितित्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतानवच्छेदकत्वस्यापि तादृशविषयिताविशेषणत्वात्, तादृशबाधज्ञानीयगगनादिविषयतानां प्रतिबन्धकतानवच्छेदकत्वेऽपि प्रकृतानुमितेर्गगनाभाववदभाववत्कालीनघटो गगनाभाववानिति बुद्धिं प्रति गगनत्वावच्छिन्नप्रकारतानिरूपिततादृशघटत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकतया तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यतायां गगनगगनत्वादिविषयतानामवच्छेदकतया तदनवच्छेदकविषयिताशून्यत्वस्य तत्र सत्त्वेनाऽव्याप्तिविरहात्।

न चैवमपि वह्न्यभाववज्जलवद्वृत्तिजलाभाववद्वह्निमत्कालीनह्रदो वह्निमानित्यत्र वह्न्यभाववज्जलवद्वृत्तिजलवत्तादृशह्रदेऽतिव्याप्तिः। तादृशविशिष्टविषयकज्ञानीयतादृशविशिष्टह्रदांशे प्रकारतावच्छेदककुक्षिप्रविष्टवृत्तित्वादिविषयितादीनां तादृशानुमितित्वव्यापकविशिष्टपक्षे साध्यवैशिष्ट्यावगाहित्वावच्छिन्नप्रति-बध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानवच्छेदकत्वेऽपि तादृशानुमितेर्वह्निमान् वह्न्यभाववज्जलवद्वृत्तिजलाभाववानिति ज्ञानविशिष्टवह्निमान् तादृशह्रद इति ज्ञानत्वेन तादृशह्रदो वह्न्यभाववज्जलवद्वृत्तिजलवानिति बुद्धित्वावच्छिन्नं प्रति प्रतिबन्धकतया तादृशानुमितित्वव्यापकतादृशप्रतिबन्धकतानिरूपिततादृशप्रतिबध्यतानवच्छेदकत्वस्य तादृशवृत्तित्वादिविषयतायामभावेन तथाविधोदासीनवि-

षयताशून्यत्वस्य तादृशविशिष्टज्ञानेऽक्षतत्वादिति वाच्यम्। प्रकृतानुमितित्वव्यापकप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य निवेशनीयत्वात्। प्रकृते तादृशानुमितित्वव्यापकोक्तप्रतिबन्धकतायाः ज्ञानवैशिष्ट्यावच्छिन्नतया तदन्यबाधबुद्ध्यादिनिरूपितप्रतिबन्धकतानिरूपितप्रतिबध्यतायां तादृशवृत्तित्वादिविषयतानामनवच्छेदकतया तच्छून्यत्वस्य तादृशविशिष्टविषयकज्ञानेऽसत्त्वेनातिव्याप्तिविरहात्।

न चैवमपि कपिसंयोगाभावाऽभाववत्कपिसंयोगवत्कालीनकपिसंयोगाभाववदभाववत्कालीनगुणः कपिसंयोगवानित्यत्र बाधेऽव्याप्तिः, तादृशबाधनिश्चयस्य पक्षे साध्यवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नं प्रति अभाववान् कपिसंयोगाभाववान् अभाववान् तादृशगुण इति ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया तत्प्रतिबन्धकतावच्छेदककुक्षौ पक्षविशेषणतापन्नाभावविशेषणतापन्नबाधज्ञानीयकपिसंयोगत्वादिविषयतानामप्रवेशेन तादृशप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकत्वात्, कपिसंयोगवान् तादृशगुण इत्यनुमितेरपि तादृशबुद्धिं प्रति कपिसंयोगवान् कपिसंयोगाभाववान् कपिसंयोगवान् तादृशगुण इति ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया तादृशानुमितित्वव्यापकज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतानवच्छेदकत्वाच्च तच्छून्यत्वस्य तादृशबाधज्ञानेऽसत्त्वादिति वाच्यम्। प्रकृतानुमितित्वव्यापकप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वमनिवेश्य विशेष्यदलघटकप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकत्वस्य निवेशनीयत्वात्। निश्चये प्रतिबध्यतावैशिष्ट्यं स्वाश्रयत्वस्वनिरूपितमुख्यविशेष्यतानिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्प्रकारताविशिष्टविशेष्यताकाऽव्याप्यवृत्तित्वज्ञानाभाववत्त्वोभयसम्बन्धेन। विशेष्यतायां प्रकारतावैशिष्ट्यं स्वावच्छेदकावच्छिन्नत्वस्वावच्छेदकावच्छिन्नप्रतियोगिताकाभावाभावत्वावच्छिन्नत्वान्यतरसम्बन्धेन। तथा चोक्तस्थले वह्न्यभाववज्जलवद्वृत्तिजलवत्तादृशह्रदे नातिव्याप्तिः, तादृशह्रदो वह्न्यभाववज्जलवद्वृत्तिजलवानिति ज्ञानं प्रति तादृशानुमितेर्या प्रतिबन्धकता तस्यास्तादृशप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकत्वविरहात्। वह्निमति वह्न्यभाववज्जलवद्वृत्तिजलाभावोऽव्याप्यवृत्तिरिति ज्ञानकालीने वह्निमान् तादृशह्रद इति निश्चये निरुक्तोभयसम्बन्धेन प्रतिबध्यतावति तादृशप्रतिबन्धकताया अभावात् तद्व्यापकीभूताऽन्यैव प्रतिबन्धकता तन्निरूपित-

प्रतिबध्यतानवच्छेदकत्वस्य तादृशवृत्तित्वादिविषयितायां सत्त्वात् तच्छून्यत्वस्य तादृशविशिष्टज्ञानेऽसत्त्वेनोक्तातिव्याप्तेर्नावकाशः ।

एवं, कपिसंयोगाभाववत्कपिसंयोगाभावाभाववत्कपिसंयोगवत्कालीनकपिसंयोगाभाववदभाववत्कालीनगुणात्मकबाधे नाव्याप्तिः, कपिसंयोगवति कपिसंयोगाभावाभावोऽव्याप्यवृत्तिरिति ज्ञानकालीनतादृशसाध्यवत्पक्षविषयकनिश्चये निरुक्तोभयसम्बन्धेन विशेष्यदलघटकतादृशगुणत्वावच्छिन्नविशेष्यतानिरूपितकपिसंयोगत्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यता नास्त्येव, तन्निरूपिततादृशगुणत्वावच्छिन्नमुख्यविशेष्यतानिष्ठावच्छेदकतानिरूपितावच्छेदकतावती या कपिसंयोगत्वावच्छिन्नप्रकारता तदवच्छेदककपिसंयोगाभावाभावत्वावच्छिन्नविशेष्यताकाव्याप्यवृत्तित्वज्ञानवत्त्वस्य तत्र सत्त्वात्, अतस्तादृशप्रतिबध्यतावन्निश्चयस्तादृशाव्याप्यवृत्तित्वज्ञानाभावकालीन एवेति, तत्र च तादृशबुद्धिनिरूपितप्रतिबन्धकतायाः सत्त्वात्, तादृशबाधज्ञानीयकपिसंयोगीयविषयतायाः तादृशप्रतिबध्यतावच्छेदकतया तदनवच्छेदकविषयताशून्यत्वस्य तत्राक्षतत्वात् ।

न चैवमपि ह्रदो वह्निमान् वह्न्यभाववज्जलवत्कालीनत्वाभाववज्जलवत्कालीनजलाभावादित्यत्र, वह्न्यभाववज्जलवत्कालीनजलवद्ध्रदेऽतिव्याप्तिः, तादृशविशिष्टज्ञानीयविषयितानां सर्वासामपि प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वात्, तज्ज्ञानीयकालीनत्वविषयताया अपि हेत्वप्रसिद्धिज्ञानीयप्रतिबन्धकतावच्छेदकत्वात् इति वाच्यम् । उक्तान्यतरसम्बन्धेन स्वावच्छेदकविषयताविशिष्टान्या या स्वनिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूता विषयता तच्छून्ययद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापिका प्रकृतानुमितिप्रतिबन्धकतेति लक्षणकरणात्, उक्तातिव्याप्तेरभावात्, तत्र हि साध्यवत्पक्षविषयकबुद्धिनिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतामादाय लक्षणसङ्गमनमुपपादनीयम्, तादृशप्रतिबन्धकतानवच्छेदकत्वस्य तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टवह्न्याद्यव्याप्यवृत्तित्वज्ञानाकालीनह्रदो वह्निमानिति निश्चयत्वव्यापिका या ह्रदो वह्न्यभाववानिति बुद्ध्यादिनिरूपितप्रतिबन्धकता तन्निरूपितप्रतिबध्यतानवच्छेदकत्वस्य कालीनत्वविषयतायां सत्त्वात्, तादृशविषयताशून्य-

त्वस्योक्तज्ञानेऽभावात् । तदनुगमश्च प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टनिश्चयनिष्ठावच्छेदकतानिरूपितविषयतानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मवत्त्वं लक्षणम् । अवच्छेदकतायां प्रतिबन्धकतावैशिष्ट्यं स्ववृत्तिर्यः किञ्चिन्निरूपितावच्छेदकतावद्विषयताविशिष्टान्यकिञ्चिन्निरूपितप्रतिबध्यताविशिष्टनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वाभाववत्प्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकान्यविषयताशून्यकिञ्चिद्रूपावच्छिन्नविषयताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धोऽभावस्तन्निरूपितप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितत्व,—स्वविशिष्टविषयत्वनिष्ठावच्छेदकतानिरूपकशून्यत्वनिष्ठावच्छेदकतानिरूपकत्वोभयसम्बन्धेन, विषयित्वनिष्ठावच्छेदकतायां स्ववैशिष्ट्यं स्वनिष्ठावच्छेदकतानिरूपकनिरूपितत्वनिष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठावच्छेदकतानिरूपकविषयतानिष्ठा [ तादात्म्यावच्छिन्नत्वा ] न्यतरसम्बन्धावच्छिन्नावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकत्वस्वनिष्ठावच्छेदकतानिरूपकनिरूपितत्वनिष्ठावच्छेदकतानिरूपकोक्तोभयसम्बन्धावच्छिन्नप्रतिबध्यतानिष्ठावच्छेदकतानिरूपकनिश्चयनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकाभावनिष्ठावच्छेदकतानिरूपकनिरूपितत्वनिष्ठावच्छेदकतानिरूपकप्रतिबध्यत्वनिष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकत्वोभयसम्बन्धेनेति चेन्न, सर्वं गगनवदित्यत्र गगनाभाववद्घटादावव्याप्तेः,तादृशबाधविषयकज्ञाने प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकीभूतायाः निरुक्तप्रतिबध्यतानवच्छेदकीभूतायाश्च समवायसमवायत्वादिविषयतायाः सत्त्वात् । अवच्छिन्नत्वतादात्म्यावच्छेद्यनिरूपितनिरूपितत्वावच्छेद्यनिरूपितत्वान्यतमसम्बन्धेन प्रतिबन्धकतावच्छेदकविषयताविशिष्टान्यत्वविवक्षणे च तत्संग्रहेऽपि मेयत्वविशिष्टव्यभिचारवारणाय विशिष्टान्तराघटितत्वं वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदवारणाय विशिष्टद्वयाघटितत्वमावश्यकमिति ध्येयम् ।

ननु प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वाऽव्यापकप्रतिबन्धकताशून्यनिश्चयीययद्रूपावच्छिन्नविषयिताव्यापिका तादृशप्रतिबन्धकता तद्रूपवत्त्वं ल-

क्षणमास्ताम्, किं विशिष्टद्वयाघटितत्वविशिष्टान्तराघटितत्वविशेषणाभ्यां, ह्रदो जात्यभाववानित्यत्र जातिमान् जातिमानिति निश्चये तादृशप्रतिबन्धकत्वाऽव्यापकप्रतिबन्धकताशून्ये प्रकृतानुमितिप्रतिबन्धकताविरहेण बाधादावव्याप्तिवारणायाऽव्यापकविषयताशून्यत्वं तु निवेशनीयम्। न चैवमसम्भवः, प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितावच्छेदकधर्मदर्शनादिप्रतिबन्धकत्वान्तराव्यापकतत्तद्दोषविषयकत्वावच्छिन्नप्रतिबन्धकताशून्यत्वस्य तत्तद्दोषविषयकनिश्चयेऽभावादिति वाच्यम्। यादृशप्रतिबन्धकतामादाय लक्षणं सङ्गमनीयम् तादृशप्रतिबन्धकत्वाव्यापकप्रतिबन्धकताशून्यत्वस्य विवक्षितत्वात्। एवञ्च मेयत्वविशिष्टव्यभिचारनिश्चये व्यभिचारविषयकत्वावच्छिन्नप्रतिबन्धकत्वाव्यापकव्यभिचारविशेष्यकमेयत्वाभावप्रकारकबुद्धिनिरूपितप्रतिबन्धकतायाः सत्त्वान्न तत्रातिव्याप्तिः।

एवं ह्रदो वह्निमानित्यनुमितिनिरूपितायाः जलवान् वह्न्यभाववान् इति ज्ञानविशिष्टजलवान् ह्रद इति ज्ञाने वर्त्तमानायाः ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताया अव्यापकीभूता या वह्न्यभाववज्जलवद्वृत्तिजलाभाववान् ह्रद इति ज्ञाननिरूपितप्रतिबन्धकता तच्छून्यत्वस्य तादृशविशिष्टविषयकनिश्चयेऽसत्त्वेन तादृशविशिष्टे नातिव्याप्तिः। न चैवं सर्वं गगनवदित्यत्र गगनाभाववद्घटपटादिरूपबाधेऽव्याप्तिः सर्वं गगनवदिति ज्ञानं प्रति गगनाभाववद्घटपटादिनिश्चयानामेकरूपेणैव प्रतिबन्धकतया तादृशप्रतिबन्धकतायाः गगनाभाववान् घट इत्यादिषु सत्त्वेन तदधिकरणे गगनाभाववान् पट इति निश्चयेऽवर्त्तमानायाः घटो गगनवानिति ज्ञाननिरूपितायाः प्रतिबन्धकतायाः घटो गगनाभाववानिति दोषविषयकनिश्चये सत्त्वादिति वाच्यम्। यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यस्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकीभूतप्रतिबन्धकताशून्ययद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापकत्वस्य प्रतिबन्धकतायां विवक्षणीयत्वात्। तथा च गगनाभाववद्घटत्वावच्छिन्नविषयत्वाऽव्यापकविषयिताशून्यतादृशप्रतिबन्धकताधिकरणे घटो गगनाभाववानिति निश्चयेऽविद्यमाना प्रतिबन्धकता न घटो गगनाभाववानिति ज्ञाननिरूपिताऽपि तु पटो गगनवानिति ज्ञाननिरूपितेति तच्छून्यत्वस्य तादृशबाधनिश्चये सत्त्वात्। अत्रायमनुगमः। प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टावच्छेदकताविशिष्टरूपव-

त्वं लक्षणम्। अवच्छेदकतायां प्रतिबन्धकतावैशिष्ट्यं स्वनिष्ठकिञ्चिद्रूपावच्छिन्न-विषयित्वाव्यापकविषयिताशून्यस्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकप्रतिबन्धकता-शून्यकिञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयताशा-लिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावीयप्रतियोगिता-निरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनि-ष्ठावच्छेदकतानिरूपितत्वस्वनिष्ठावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपक-वृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदक-तानिरूपकावच्छेदकत्वनिष्ठावच्छेदकतानिरूपकप्रतिबन्धकतानिष्ठावच्छेदकतानिरूपक-शून्यत्वनिष्ठावच्छेदकतानिरूपकत्वोभयसम्बन्धेन। रूपेऽवच्छेदकतावैशिष्ट्यं स्वनि-रूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व-स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितप्रतिबन्धकत्वनिष्ठावच्छेदकतानिरूपिता-वच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठाव-च्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतानिरूपितशू-न्यत्वनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छेदकतानिष्ठाव-च्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपित-वृत्तित्वनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठा-वच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्वोभयसम्बन्धेनेति चेन्न।

गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र बाधेऽव्याप्तिः, तत्र बाधनि-श्चये तादृशानुमितिनिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताद्वयी एका अभाववान् गगनाभाववान् इति निश्चयविशिष्टाभाववान् तादृशघट इति निश्चयत्वावच्छिन्ना, अपरा गगनाभाववान् तादृशघट इति निश्चयविशिष्टाभाववान् गगनाभाववानिति निश्चयत्वावच्छिन्ना, तत्र प्रथमप्रतिबन्धकतामादाय लक्षणं सङ्गमनीयम्, तादृशप्र-तिबन्धकतावति अभाववान् गगनाभाववानिति निश्चयविशिष्ट अभाववान् गगनाभा-ववदभाववत्कालीनघट इति निश्चये गगनाभाववत्तादृशघटत्वावच्छिन्नविषयित्वाऽव्या-पकविषयिताशून्येऽवर्त्तमानायाः गगनाभावस्तादृशघटावृत्तिरित्याकारकबुद्धिनिरूपित-

प्रतिबन्धकताया बाधज्ञाने सत्त्वात्, अथाव्यापकप्रतिबन्धकतायां प्रकृतानुमितित्व - व्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टविषयित्वानवच्छिन्नत्वं विशेषणं देयम्, विषयितायां प्रतिबन्धकतावैशिष्ट्यं स्वावच्छेदकत्वस्वनिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वोभयसम्बन्धेन, प्रतिबध्यता - वत्त्वञ्च स्वानवच्छेदकविषयिताशून्यज्ञानीयत्वसम्बन्धेन। तथा च नोक्तदोषेऽव्या - प्तिः, तत्र बाधज्ञाने विद्यमानायाः गगनाभावस्तादृशघटावृत्तिरिति ज्ञाननिरूपितप्रतिबन्धकतायास्तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रति - बन्धकतानिरूपितप्रतिबध्यताविशिष्टतादृशघटविशेष्यकगगनप्रकारकनिश्चयत्वव्यापक - साध्याभाववत्पक्षविषयकबुद्धिनिरूपितप्रतिबन्धकतानिरूपिततादृशप्रतिबध्यतानवच्छे - दकविषयताशून्यगगनाभाववत्तादृशघटत्वावच्छिन्नविषयित्वावच्छिन्नतया तदन्यप्र - तिबन्धकताया एव तादृशत्वात् तच्छून्यत्वस्य तत्र सत्त्वात्।

न च गगनाभाववत्तादृशघटत्वावच्छिन्नविषयितायाः निरुक्तप्रतिबन्धकत्वाभावेन तदवच्छिन्नत्वं नोक्तप्रतिबन्धकताव्यावर्त्तकमिति वाच्यम्। तादृशविषयताया अप्यभाववत्तादृशघटविषयितात्वेन तादृशप्रतिबन्धकतावच्छेदकत्वात्। वह्न्यभाववज्जलवद्वृत्तिजलवान् ह्रद इति ज्ञानीयजलवद्ध्रदविषयितायाः ह्रदो वह्निमानित्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदिकायास्तादृशप्रतिबन्धकत्वाव्यापकीभूततादृशजलाभाववान् ह्रद इति ज्ञाननिरूपितप्रतिबन्धकतावच्छेदकत्वेऽपि तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकपक्षे साध्यवैशिष्ट्यावगाहिबुद्धिनिरूपितप्रतिबन्धकतानिरूपितप्रतिबध्यतानवच्छेदकविषयताशून्यज्ञानीयत्वाभावेन तादृशप्रतिबन्धकतायास्संग्रहः। एवम्, प्रकृतानुमितित्वव्यापकव्याप्तिग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकत्वाऽव्यापकीभूतमेय - त्वाभाववान् व्यभिचार इति ज्ञाननिरूपितप्रतिबन्धकतायास्तादृशप्रतिबन्धकतानिरूपितव्याप्तिग्रहत्वावच्छिन्नप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपित - साध्याभाववद्वृत्तित्वप्रकारकहेतुविशेष्यकबुद्धित्वावच्छिन्नप्रतिबध्यतानवच्छेदकीभूतवि - षयताशून्यशुद्धव्यभिचारविषयकज्ञानीयविषयित्वानवच्छिन्नतया तत्संग्रह इति चेन्न। तथापि अभावो गगनत्ववानाधेयत्वादित्यत्राऽसाधारण्येऽव्याप्तेः, तत्र गगनत्वव्यापकाभा-

वप्रतियोग्याधेयत्वमिति असाधारण्यविषयकनिश्चयोत्तरमाधेयत्ववानभाव इति ज्ञाने तादृशाऽसाधारण्यविषयित्वाऽव्यापकविषयिताशून्ये प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्यवर्त्तमानतया गगनत्वव्यापकाभावप्रतियोगित्वाभाववदाधेयत्वमिति ज्ञाननिरूपितायाः प्रतिबन्धकतायास्तादृशासाधारण्यज्ञाने सत्त्वेन तच्छून्यत्वविरहात् । न चाऽव्यापकप्रतिबन्धकतायामसाधारण्यविषयकत्वानवच्छिन्नत्वमपि विशेषणं विवक्षितम् । वस्तुतस्तत्रापि पक्षधार्मिकहेतुमत्ताज्ञानविशिष्टासाधारण्यविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकतामादाय लक्षणसमन्वयसम्भवः । तादृशप्रतिबन्धकतावानाधेयत्ववानभावः किन्तु पक्षधार्मिकहेतुमत्ताज्ञानविशिष्टासाधारण्यज्ञानं तत्र च न पूर्वोक्तप्रतिबन्धकत्वाभावो वर्त्तत इति नाव्याप्तिरिति वाच्यम् ।

तथापि वह्न्यभाववद्वह्न्यभावव्याप्यवत्कालीनह्रदो वह्निमानित्यत्र सत्प्रतिपक्षेऽव्याप्तेः, तत्र विशिष्टसत्प्रतिपक्षज्ञानोत्तरविपरीतज्ञाने तादृशसत्प्रतिपक्षविषयत्वाऽव्यापकविषयिताशून्ये तादृशह्रदो वह्न्यभावव्याप्यवानिति निश्चयविशिष्टवह्न्यभाववान् वह्न्यभावव्याप्यवानिति ज्ञाने प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्यविद्यमानाया वह्न्यभावव्याप्याभाववान् तादृशह्रद इति ज्ञाननिरूपितायाः प्रतिबन्धकतायाः विशिष्टसत्प्रतिपक्षनिश्चये सत्त्वात् । न च तत्रापि तादृशप्रतिबन्धकतामादाय लक्षणसङ्गमनाऽसम्भवेऽपि प्रतिबन्धकत्वान्तरमादाय लक्षणं सङ्गमनीयम् । तत्र हि कालिकसम्बन्धेन वह्न्यभावाभाववदवृत्तिधर्मवान् समवयादिना वह्न्यभावाभाववद्वृत्तिधर्मवानित्यादिज्ञानानामेकरूपेण प्रतिबन्धत्वं कल्पनीयम्, सम्बन्धभेदेन प्रतिबध्यप्रतिबन्धकभावकल्पने गौरवात्,प्रतिबध्यप्रतिबन्धकभावश्च ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नं प्रति वह्न्यभावाभाववदवृत्तितात्वावच्छिन्नप्रकारताविशिष्टप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकत्वमिति । प्रकारतायां प्रकारतावैशिष्ट्यं स्वनिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्सम्बन्धावच्छिन्नत्वस्वनिरूपिताभावत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नत्वोभयसम्बन्धेन । एतादृशप्रतिबन्धकता च प्रकृतानुमितिनिष्ठप्रतिबध्यतानिरूपिता सत्प्रतिपक्षविषयकनिश्चये एव ,न तु तदुत्तरप्रागुक्तज्ञाने इति तदव्यापकप्रतिबन्धकताशून्यत्वं तत्राक्षतमे-

व । न च नानासम्बन्धावगाहिव्याप्यदर्शनानामेकरूपेण प्रतिबन्धकत्वे संयोगेन धूमाभाववदवृत्तिमानित्यादिनिश्चयत्वावच्छिन्नप्रतिबन्धकताया ऐक्यात् तादृशप्रतिबन्धकतावति संयोगेन तादृशधर्मावगाहिनिश्चये समवायेन तादृशधर्माभावावगाहिज्ञानप्रतिबन्धकताया असत्त्वेन तादृशप्रतिबन्धकताशून्यत्वस्य समवायेन तदवगाहिसत्प्रतिपक्षनिश्चयेऽसत्त्वेन , एवं चालनीयन्यायेन सर्वेषु सत्प्रतिपक्षनिश्चयत्वव्यापक,[तादृशप्रतिबन्धकत्वाव्यापक]प्रतिबन्धकत्वाव्यापकप्रतिबन्धकताशून्यत्वाभावात् कथं लक्षणसमन्वय इति वाच्यम् । यत्र यादृशसम्बन्धघटितसत्प्रतिपक्षः तादृशसत्प्रतिपक्षविषयित्वाव्यापकविषयिताशून्यतत्प्रतिबन्धकतावत्तादृशसम्बन्धघटितसत्प्रतिपक्षनिश्चय एवेति तत्राविद्यमानप्रतिबन्धकतासम्बन्धान्तरेण तादृशधर्माभावावगाहिज्ञाननिरूपितप्रतिबन्धकत्वं तच्छून्यत्वं तत्राक्षतमेवेति लक्षणसमन्वय इति वाच्यम् । तथापि ह्रदो वह्निमानित्यत्र वह्न्यभाववद्वह्न्यभावदह्रदेऽतिव्याप्तिः, तत्र वह्न्यभाववानभाववान् वह्न्यभावद्ध्रद इति निश्चये विद्यमानाया अभाववान् ह्रदो वह्निमानिति ज्ञाननिरूपिता याऽभाववद्वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वावच्छिन्नायाः प्रतिबन्धकताया वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयताशून्यतादृशप्रतिबन्धकतावद्ध्रदो वभाववानिति निश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वेऽपि प्रकृतानुमितित्वव्यापकप्रतिबध्यह्न्यतानिरूपितबाधविषयकत्वावच्छिन्नप्रतिबन्धकतावच्छेदकीभूता या तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टह्रदो वह्निमानिति निश्चयत्वव्यापकप्रतिबन्धकतानिरूपितवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकबुद्धित्वावच्छिन्नप्रतिबध्यतानवच्छेदकविषयशूतान्यवह्न्यभाववानिति निश्चयीयविषयित्वावच्छिन्नत्वाभावेन तत्सत्त्वस्याकिञ्चित्करत्वात्, वह्न्यभाववद्वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयता च बाधप्रतिबन्धकतायां - वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितात्वेनाऽवच्छेदिकैवेति अतो विशिष्टान्तराघटितत्वमावश्यकम् ।

न च तथापि विशिष्टद्वयाघटितत्वाऽनिवेशेन लाघवमपरिहार्यमिति वाच्यम् । एतादृशगुरुविशेषणापेक्षया तस्यैव लघुत्वादिति बोध्यम् ।

ननु अवच्छेदकतासम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेद-

वत्त्वस्वरूपोभयसम्बन्धेन यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापिका प्रकृतानुमितिप्रतिबन्धकता तद्रूपावच्छिन्नत्वं लक्षणमिदानीं विशिष्टद्वयाऽघटितत्वन्न निवेशनीयम्, वह्न्यभाववद्ध्रदाविषयकनिश्चयत्वस्य ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकत्वाभावेन तत्र तादृशप्रतिबन्धकत्वस्यावच्छेदकतासम्बन्धेनाभावात्स्वरूपेण सत्त्वाच्च लक्षणसमन्वयः।

वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदविषयकनिश्चयस्य ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया तत्र ज्ञाने तादृशप्रतिबन्धकतावच्छेदकत्वसत्त्वात् न तादृशह्रदेऽतिव्याप्तिः। प्रथमसम्बन्धमात्रेण व्यापकत्वविवक्षणे, ह्रदो वह्निमानित्यत्र घटादिष्वतिवतव्याप्तिः, तन्निश्चयेऽपि तादृशप्रतिबन्धकतावच्छेदकत्वविरहात्। स्वरूपसम्बन्धमात्रेण व्यापकत्वविवक्षणे वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिरत उभयसम्बन्धेन व्यापकत्वनिवेशः। अथ वा बाधादिज्ञानस्यात्मनि दैशिकव्याप्यवृत्तितया तदभावस्यानुमितिकारणत्वे बाधादिज्ञानकालेऽपि किञ्चिदवच्छेदेनात्मनि तदभावस्य सत्त्वेनानुमितिवारणाय बाधादिज्ञानवदात्मत्वादेरनुमितिप्रतिबन्धकत्वं व्याप्त्यनुगमे मथुरानाथेनोक्तम्, तन्मते बाधादिदोषनिश्चये सर्वत्र प्रतिबन्धकतावच्छेदकत्वसत्वेनासम्भवः।

एवं, साक्षादवच्छेदकताया व्यासज्यवृत्तित्वानङ्गीकर्तृनये ज्ञानविशिष्टज्ञानीयविषयत्वेनैव प्रतिबन्धकतया तादृशज्ञानविशिष्टज्ञाने प्रतिबन्धकतावच्छेदकत्वविरहेणातिव्याप्तिश्च, स्वनिरूपितावच्छेदकतानिरूपितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वरूपोभयसम्बन्धेन व्यापकत्वं विवक्षणीयम्।

तथा च नासम्भवः नवातिव्याप्तिः, बाधादिज्ञानविशिष्टात्मत्वादेः प्रतिबन्धकत्वे प्रतिबन्धकतावच्छेदकतावच्छेदकत्वस्य बाधादिनिश्चयेऽत्रभावात् मतान्तरेऽपि वारणीयविषयकनिश्चये प्रतिबन्धकतानिरूपितविषयतानिष्ठावच्छेदकतानिरूपितावच्छेदकत्वस्यासत्त्वादिति वाच्यम्। निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकतामतेऽतिव्याप्त्यापत्तेः, तादृशनिश्चये ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकतावच्छेदकताया अभावादिति चेन्न। स्वनिरूपिताविशिष्टावच्छेदकतासम्बन्धावच्छिन्नस्व-

निष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वरूपोभयसम्बन्धेन व्यापकत्वस्य विवक्षितत्वात्। वैशिष्ट्यञ्च स्वभिन्नत्वस्वविशिष्टनिरूपितत्वोभयसम्बन्धेन। स्ववैशिष्ट्यञ्च स्वनिरूपकत्वस्वनिरूपितत्वस्वनिरूपकनिरूपितत्वैतदन्यतमसम्बन्धेन। प्रथमसम्बन्धद्वयघटकप्रथमसम्बन्धानुपादाने प्रथममतेऽसम्भवः, बाधादिनिश्चयनिष्ठावच्छेदकतायां द्वितीयवैशिष्ट्यघटकान्यतमघटकस्वनिरूपकत्वसम्बन्धेन स्वविशिष्टप्रतिबन्धकतानिरूपितत्वस्य सत्त्वात्। द्वितीयसम्बन्धानिवेशे प्रकृतानुमितिप्रतिबन्धकत्वान्तरावच्छेदकताभिन्नत्वस्य तत्र सत्त्वात्। एवं द्वितीयसम्बन्धघटकद्वितीयसम्बन्धाऽनिवेशे तृतीयमतेऽतिव्याप्तिः, निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकतया तन्निरूपितनिश्चयत्वादिनिष्ठावच्छेदकताभिन्नत्वस्य निश्चयनिष्ठावच्छेदकतायां सत्त्वेऽपि तन्निरूपितत्वतन्निरूपकनिरूपितत्वयोस्तन्निरूपकेऽभावात्। तन्निवेशे तु तन्निरूपकप्रतिबन्धकतानिरूपितत्वस्य सत्त्वात् तत्संग्रहान्नातिव्याप्तिः। द्वितीयसम्बन्धानिवेशे, द्वितीयमतेऽतिव्याप्तिः, प्राथमिकनिश्चयनिष्ठावच्छेदकतायां विषयतानिष्ठावच्छेदकताभिन्नत्वसत्त्वेऽपि तन्निरूपकनिरूपितत्वस्य चाभावात्। तन्निवेशे द्वितीयनिश्चयनिष्ठावच्छेदकतानिरूपितत्वसत्त्वान्नातिव्याप्तिः। न च द्वितीयनिश्चयनिष्ठावच्छेदकतामादायैव तत्रातिव्याप्तिवारणं शक्यमिति वाच्यम्,एतन्मत एव बाधनिश्चयादौ तादृशप्रतिबन्धकतानिरूपितविषयतानिष्ठावच्छेदकताभिन्नतन्निरूपकनिरूपितत्वस्वनिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतासत्त्वादसम्भववारणायावच्छेदकतायां निरूपितत्वसम्बन्धावच्छिन्नत्वस्य वक्तव्यतया द्वितीयनिष्ठावच्छेदकतायां तादृशत्वाभावात्। तृतीयसम्बन्धानिवेशे प्रथममतेऽतिव्याप्तिः, प्रथमनिष्ठावच्छेदकतायां द्वितीयनिश्चयनिष्ठावच्छेदकतानिरूपितत्वस्य तन्निरूपितत्वस्य चाभावात्। तन्निवेशे तु तन्निरूपकप्रतिबन्धकतानिरूपितत्वात्तत्संग्रह इति नातिव्याप्तिः। एवञ्च न कस्मिंश्चिदपि मते दोष इति गुरुभूतविशिष्टद्वयाघटितत्वनिवेशनार्ङ्कमर्थम्। न च गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र बाधेऽव्याप्तिः,तादृशबाधज्ञानस्य ज्ञानविशिष्टज्ञानत्वेनव प्रतिबन्धकतया तत्र प्रकृतानुमितिप्रतिबन्धकतानिरूपितद्वितीयनिश्चयत्वादिनिष्ठावच्छेदकताविशिष्टावच्छेदकतायाः सत्त्वादिति वाच्यम्। प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टविषयताशून्यज्ञानवृत्तित्वेन द्वितीयावच्छेदकताया विशेषणीयत्वात्। प्रतिबन्धकतावैशिष्ट्यञ्च विषयतायां स्वावच्छेदकत्वस्व-

निरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतानवच्छेद - कीभूतविषयताशून्यज्ञानीयत्वोभयसम्बन्धेन। प्रतिबध्यतानवच्छेदकत्वञ्च प्रतिबध्य- तावच्छेदकविषयताविशिष्टान्यत्वम्, तथा चोक्तबाधज्ञाने ज्ञानवैशिष्ट्यावच्छिन्नप्रति- बन्धकतावच्छेदकीभूता या तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टनिश्चयत्व- व्यापकसाध्यप्रकारतानिरूपितपक्षविशेष्यताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरू - पितसाध्याभाववत्पक्षविषयत्वावच्छिन्नप्रतिबध्यतावच्छेदकविषयिताविशिष्टान्यविषय - ताशून्यतादृशबाधज्ञानीया या विषयता तच्छून्यत्वाभावात्तत्रातिव्याप्तिविरहात्। न चैवमपि अभावो गगनत्ववानाधेयत्वादित्यत्राऽसाधारण्येऽव्याप्तिः, तज्ज्ञानस्य ज्ञान- विशिष्टज्ञानत्वेन प्रतिबन्धकतया तादृशप्रतिबन्धकतानिरूपितावच्छेदकतायास्सत्त्वात्, तादृशप्रतिबन्धकताविशिष्टविषयताशून्यत्वस्य च सत्त्वादिति वाच्यम्। असाधारण्य- विषयताशालिज्ञानावृत्तित्वेनापि विशेषणीयत्वात्। न चैवमपि निरवच्छिन्नसाध्या- भाववत्पक्षस्य बाधत्वमते गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र बाधेऽव्या- प्तिः, तज्ज्ञानीयनिरवच्छिन्नत्वविषयतायाः प्रतिबन्धकतानिरूपितप्रतिबध्यतानवच्छे- दकतया तच्छून्यज्ञानीयविषयताशून्यत्वस्य तादृशबाधज्ञानेऽसत्त्वात्। विषयितायां प्रतिबन्धकतावैशिष्ट्यनियामकसम्बन्धघटकप्रतिबध्यतानवच्छेदकविषयितायां निर- वच्छिन्नत्वघटकविषयिताभेदस्य विषयत्वमङ्गीकृत्य तद्दोषवारणेऽपि गगनमवच्छिन्न- त्ववत् अभाववच्छब्दवद्वृत्तिशब्दाभावादित्यत्र निरवच्छिन्नशब्दवद्गगनेऽतिव्याप्तिः, तत्र साध्यवत्पक्षविषयकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्र- तिबन्धकतायां निरुक्तोभयसम्बन्धेन तादृशनिश्चयत्वव्यापकत्वस्य सत्त्वात् तादृशनिश्च- ये तादृशप्रतिबन्धकतानिरूपितावच्छेदकताविशिष्टावच्छेदकत्वस्य सत्त्वेऽपि तत्र तज्ज्ञानं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टशून्यत्वं त- ज्ज्ञानीयविषयतायां सर्वत्र प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितहेत्वभाव- वत्पक्षविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वस्य तादृशप्रतिबन्धकतानिरू- पितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकहेतुमत्पक्षविषयकनिश्चयत्वावच्छिन्नप्रतिब - न्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयताविशिष्टान्यनिरवच्छिन्नत्वघटकविषयता - भिन्नविषयताशून्यज्ञानीयत्वस्य च सत्त्वात्, तच्छून्यत्वस्य तादृशविशिष्टज्ञाने विरहा-

दिति वाच्यम्, स्वविशिष्टविषयिताशून्यज्ञानवृत्तिस्वनिरूपितावच्छेदकताविशिष्टावच्छेदकतासम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वरूपोभयसम्बन्धेन व्यापकत्वस्य विवक्षितत्वात्। विषयतायां स्ववैशिष्टयञ्च, स्वनिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतानवच्छेदकविषयता-शून्यज्ञानीयत्वसम्बन्धेन। तथा चोक्तविशिष्टे नातिव्याप्तिः, तज्ज्ञाने स्वपदग्राह्यसत्प्रतिपक्षविषयकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्टयावच्छिन्नप्रतिबन्धकतानिरूपिततादृशप्रतिबन्धकताविशिष्टनिश्चयत्वव्यापकसाध्यवत्पक्षविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितसाध्यवत्पक्षविषयकबुद्धित्वावच्छिन्नप्रतिबध्यतानवच्छेदकवृत्तित्वादिविषयताशून्यत्वस्य तत्र सत्त्वात्, तादृशावच्छेदकतासम्बन्धेन निरुक्तप्रतिबन्धकतायास्तत्र सत्त्वादिति चेन्न, विशिष्टद्वयाघटितत्वनिवेशापेक्षया उक्तनिवेशस्यातिगुरुत्वादिति।

एवं निरवच्छिन्नसाध्याभाववत्पक्षस्य बाधत्वमते उक्तसंग्रहाय तादृशप्रतिबन्धकतावैशिष्टयघटकप्रतिबध्यतानवच्छेदकविषयतायां निरवच्छिन्नत्वघटकविषयतायां निरवच्छिन्नत्वघटकविषयताभेदस्य निवेशनीयतया तत्र घटकत्वनिर्वचनस्य गुरुत्वादिति ध्येयमिति।

## गादाधरी

न चैवं तादृशविशिष्टद्वयघटितोक्तसत्प्रतिपक्षेऽव्याप्तिस्तस्य प्रतिहेतुव्यापकसाध्याभावप्रतिहेतुविशिष्टपक्षात्मकनिरुक्तविशिष्टद्वयघटितत्वादिति वाच्यम्, सत्प्रतिपक्षघटकतादृशदलद्वयविषयताभिन्ननिरुक्तविशिष्टद्वयविषयताशून्यप्रतीतिविषयत्वस्य विशिष्टद्वयाघटितत्वार्थकत्वात्।

## विमलप्रभा

शङ्कते न चेत्यादिना। न चेत्यस्य वाच्यमित्यनेनान्वयः। एवं=वह्न्यभाव-जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिवारणाय विशिष्टद्वयाघटितत्वनिवेशे सति। तादृ-

घविशिष्टद्वयघटितोक्तसत्प्रतिपक्षे =प्रतिहेतुव्यापकताविशिष्टसाध्याभाव [ जलव्यापकताविशिष्टवह्न्यभाव]प्रतिहेतुविशिष्टपक्षात्मक [ वह्न्यभावसमानाधिकरणजलवद्ध्रदा]त्मकविशिष्टद्वयघटितजलव्यापकवह्न्यभाव–समानाधिकरणजलवद्ध्रदात्मकसत्प्रतिपक्षे । तस्य =उक्तसत्प्रतिपक्षस्य । तादृशदलद्वयविषयता =प्रतिहेतुव्यापकताविशिष्टसाध्याभाव–साध्याभावसमानाधिकरणप्रतिहेतुविशिष्टपक्षात्मकविषयता । निरुक्तविशिष्टद्वयविषयता =यद्रूपावच्छिन्नविषयताविशिष्टयद्रूपावच्छिन्नविषयता । अयमर्थः। विशिष्टद्वयाघटितत्वविशेषणदानेन वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिवारणसम्भवेऽपि जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदरूपसत्प्रतिपक्षेऽव्याप्तिर्दुर्वारैव, तथा हि जलव्यापकवह्न्यभावत्वावच्छिन्नविषयताशालिजलव्यापको वह्न्यभाव इति निचयविशिष्टवह्न्यभावसमानाधिकरणजलवद्ध्रदत्वावच्छिन्नविषयताशालिवह्न्यभावसमानाधिकरणजलवान् ह्रद इत्याकारकनिश्चयत्वं भवति ह्रदो वह्निमानित्याद्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तितद्रूपावच्छिन्नविषयताविशिष्टतद्रूपावच्छिन्नविषयताशून्यत्वस्य जलव्यापकवह्न्यभावसमानाधिकरणजलवान् ह्रद इति निश्चये विरहेण लक्षणागमनादिति । यद्येतादृशदोषवारणाय सत्प्रतिपक्षविषयिताव्यापकविषयिताकत्वरूपं यत्सत्प्रतिपक्षघटकत्वं तादृशासत्प्रतिपक्षघटकविषयताभिन्नत्वं [जलव्यापकताविशिष्टवह्न्यभावरूपसत्प्रतिपक्षघटकविषयताभिन्नत्वे सति वह्न्यभावसमानाधिकरणजलवद्ध्रदविषयताभिन्नत्वं ]विशिष्टद्वयविषयतायां निवेश्यते तदा यद्रूपावच्छिन्नविषयताशालिनिश्चयविशिष्टयद्रूपावच्छिन्नविषयताशालिनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति सत्प्रतिपक्षघटकदलद्वयविषयताभिन्ना या तद्रूपावच्छिन्नविषयताविशिष्टतद्रूपावच्छिन्नविषयता तच्छून्यानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयताव्यापिका भवति प्रकृतानुमितिप्रतिबन्धकता तद्रूपावच्छिन्नत्वं लक्षणार्थः ।

. . . . . . . . . . . . .

एवञ्च जलव्यापकवह्न्यभावत्वावच्छिन्नविषयतायां वह्न्यभावसमानाधिकरणजलवद्ध्रदत्वावच्छिन्नविषयतायां च सत्प्रतिपक्षघटकदलद्वयविषयताभिन्नत्वाभावेन[स्वस्मिन् स्वभेदविरहेण ]यद्रूपावच्छिन्नविषयतापदेनोक्तविषयतायाः धारणासम्भवेनान्यादृशीं विषयतामादाय लक्षणसङ्गमनसम्भवादिति ।

सत्प्रतिपक्षघटकदलद्वयविषयताभिन्ननिरुक्तविशिष्टद्वयविषयताशू - न्यत्वस्य विशिष्टद्वयाघटितत्वपदार्थत्वादिति भट्टाचार्याः।

तथा च यादृशविशिष्टविषयकनिश्चयविशिष्ट्यादृशविशिष्टविषयकनिश्चयत्वं प्रतिबन्धकतानतिरिक्तवृत्तिसत्प्रतिपक्षघटकदलद्वयविषयताभिन्नतादृशविशिष्टद्वयविषयताशून्यत्वं निश्चये विशेषणम्।

नन्वेवमपि प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षरूपनिरुक्तसत्प्रतिपक्षे कथं लक्षणसमन्वयः, तत्र विशिष्टान्तराघटितत्वस्याभावात्, तथा हि तादृशसत्प्रतिपक्षज्ञानस्य ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया जलव्यापकवह्न्यभावसमानाधिकरणजलवान् ह्रद इति ज्ञानस्येव जलव्यापकवह्न्यभावसमानाधिकरणनिरूपितवज्जलवान् ह्रद इति ज्ञानस्यापि प्रतिबन्धकत्वात्। एवञ्च जलव्यापकवह्न्यभावसमानाधिकरणनिरूपितवज्जलवद्ध्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यज्जलव्यापकवह्न्यभावाधिकरणनिरूपितवज्जलवद्ध्रदत्वं तद्घटितत्वस्यैव तत्र सत्त्वात्।

न च सत्प्रतिपक्षविषयताभिन्नत्वं विशिष्टान्तरविषयतायां विशेषणं देयम् तथा च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकं सत्प्रतिपक्षविषयताभिन्नतद्रूपावच्छिन्नविषयताशून्यत्वं निश्चये विशेषणं देयम्, तथा च नोक्ताव्याप्तिरिति वाच्यम्। मेयत्वविशिष्टतादृशसत्प्रतिपक्षेऽतिव्याप्त्यापत्तेः। शुद्धसत्प्रतिपक्षस्य विशिष्टान्तरत्वेऽपि तद्विषयताभिन्नत्वाभावादिति चेन्न, सत्प्रतिपक्षविषयित्वाऽव्यापकविषयताशून्यज्ञानीयसत्प्रतिपक्षविषयताभेदस्य विशिष्टान्तरविषयतायां विवक्षितत्वात्, मेयत्वविशिष्टसत्प्रतिपक्षविषयकज्ञानीयसत्प्रतिपक्षविषयतायां सत्प्रतिपक्षविषयत्वाव्यापकविषयताशून्यशुद्धतज्ज्ञानीयविषयताभेदस्य सत्त्वान्नातिव्याप्तिः।

यद्वा विशिष्टान्तरविषयतायां साध्याभावानुमितिजनकताविशिष्टान्यत्वं निवेशनीयम्। वैशिष्ट्यञ्च स्वानवच्छेदकविषयिताशून्यज्ञानीयत्वसम्बन्धेनेति।

## गादाधरी

यत्र तादृशसत्प्रतिपक्षाऽप्रसिद्धिस्तत्र भिन्नान्तमनुपादेयमेव, साध्यादिभेदेन लक्षणभेदात्। भ्रमात्मकज्ञानीयतादृशविषयतासाधारणरूपेणैव वा प्रतिहेतुव्यापकताविशिष्टसाध्याभावादिविषयतोपेया।

## विमलप्रभा

यत्र=यत्पक्षसाध्यकदुष्टहेतुकस्थले। सत्प्रतिपक्षाऽप्रसिद्धिः=सत्प्रतिपक्षरूपदोषाऽप्रसिद्धिः। तत्र=तादृशहेतुकस्थले। भिन्नान्तम्=सत्प्रतिपक्षघटकतादृशदलद्वयविषयताभिन्नपर्यन्तम्। अनुपादेयमेव=अनिवेशनीयमेव। साध्यादिभेदेन=पक्षसाध्यहेतुभेदेन। लक्षणभेदात्=हेत्वाभासलक्षणस्य विभिन्नत्वात्। भ्रमात्मकज्ञानीयतादृशविषयतासाधारणरूपेणैव=निरूप्यनिरूपकभावापन्नविषयितात्वेन रूपेण। प्रतिहेतुविषयतानिरूपिताऽधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपितभेदविषयतानिरूपितप्रतियोगित्वविषयतानिरूपिताऽवच्छेदकत्वविषयतानिरूपिताऽभावविषयतानिरूपितसाध्याभावत्वावच्छिन्नविषयतात्वेनेति यावत्। साध्याभावादिविषयतेत्यत्रादिपदेन प्रतिहेतुमत्पक्षविषयतायाः परिग्रहः। अयमर्थः। यदि विशिष्टद्वयविषयतायां सत्प्रतिपक्षघटकविषयताभिन्नत्वं निवेश्यते तदा प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षस्य, अयोगोलकं धूमवद्वह्नेरित्यादावप्रसिद्धतया तत्स्थलीयधूमाभाववद्वृत्तित्वविशिष्टवह्निरूपव्यभिचारेऽव्याप्तिः तथा हि, धूमाभाववदयोगोलकत्वावच्छिन्नविषयताशालिनिश्चयविशिष्टायोगोलकवृत्तिवह्नित्वावच्छिन्नविषयताशालिनिश्चयत्वं भवति प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिः अतः विशिष्टद्वयविषयतापदेन यद्यपि धूमाभाववदयोगोलकत्वावच्छिन्नविषयताविशिष्टायोगोलकवृत्तिवह्नित्वावच्छिन्नविषयतायाः ग्रहणं सम्भवति तथापि सत्प्रतिपक्षस्यैवात्राऽप्रसिद्ध्या सत्प्रतिपक्षघटकविषयताभिन्नत्वं नास्तीति लक्षणागमनात्, इति

चेदत्र ब्रूमः, पक्षसाध्यहेतुभेदेन हेत्वाभासलक्षणस्य विभिन्नतया यत्र सत्प्रतिपक्षाऽप्रसिद्धिस्तत्रत्यलक्षणे सत्प्रतिपक्षघटकदलद्वयविषयताभिन्नत्वन्नोपादेयम्, तथा च नाव्याप्तिसम्भावना। न च साध्यादिभेदेन लक्षणस्य भिन्नत्वेऽननुगमो दोष इति वाच्यम्, साध्यादिभेदेनाननुगमे इष्टापत्तिरेवेति मन्तव्यम्।

अथ वा निरूप्यनिरूपकभावापन्नविषयितात्वेन प्रतिहेतुव्यापकत्वविषयतानिरूपितसाध्याभावविषयिताभिन्नत्वे सति प्रतिहेतुविषयतानिरूपितपक्षविषयताभिन्नत्वं विशिष्टद्वयविषयतायां निवेश्याव्याप्तेर्वारणं विधेयम्, तथा हि धूमाभाववदयोगोलकत्वावच्छिन्नविषयताशालिनिश्चयविशिष्टायोगोलकवृत्तिवह्नित्वावच्छिन्नविषयताशालिनिश्चयत्वं भवति प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तीति तादृशधूमाभाववदयोगोलकत्वावच्छिन्नविषयताविशिष्टायोगोलकवृत्तिवह्नित्वावच्छिन्नविषयतायां भ्रमात्मकजलव्यापकधूमाभावसमानाधिकरणजलवदयोगोलकज्ञानीयजलव्यापकत्वविषयतानिरूपितधूमाभावविषयताभिन्नत्वे सति जलविषयतानिरूपितायोगोलकविषयताभिन्नत्वसत्त्वेन तादृशविषयताशून्यप्रतीतिविषयतावच्छेदकं यद्रूपं तच्च धूमाभाववद्वृत्तित्वविशिष्टवह्नित्वमिति तद्रूपावच्छिन्नत्वस्योक्तव्यभिचारे सत्त्वात्।

एवञ्च लक्ष्यभेदेन लक्षणस्य भेदाऽस्वीकारेऽपि न क्षतिरिति भावः। मान्यास्तु काञ्चनमयपर्वतो वह्निमान् धूमादित्यादौ प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षाऽप्रसिद्ध्या तादृशसत्प्रतिपक्षघटकविषयताभिन्नत्वस्य विशिष्टद्वयविषयतायान्नितरामप्रसिद्धत्वेन काञ्चनमयत्वाभाववत्तद्व्यक्तित्ववत्तद्व्यक्तित्ववत्पर्वतरूपोदासीनेऽतिव्याप्तिः, निरुक्तविशिष्टद्वयविषयतापदेनैतादृशज्ञानीयविषयतायाः धर्त्तुमशक्यतया लक्षणगमनात्। अतः सत्प्रतिपक्षघटकदलद्वयविषयताभिन्नत्वं नैतादृशस्थले निवेशनीयम्। तथा चोक्तोदासीनज्ञानीयविषयताया अपि विशिष्टद्वयविषयतापदेन संगृह्य तादृशविशिष्टद्वयाघटितत्वाभावेन न तत्रातिव्याप्तिः। अथ वा जलव्यापकत्वेन घटावगाहिजलव्यापको वह्न्यभावः जलवान् पर्वत इति भ्रमसाधारणहेतुतावच्छेदकावच्छिन्नविषयतानिरूपितव्यापकत्वावच्छिन्नविषयतानिरूपित-

साध्याभावत्वावच्छिन्नविषयताशालिनिश्चयविशिष्टहेतुतावच्छेदकावच्छिन्नविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताशालिनिश्चयत्वेनैव जलव्यापकवह्न्यभावसमानाधिकरणजलवान् पर्वत इति निश्चयस्यापि प्रतिबन्धकतया विशिष्टद्वयविषयतायां हेतुतावच्छेदकावच्छिन्नविषयतानिरूपितव्यापकत्वविषयतानिरूपितसाध्याभावत्वावच्छिन्नविषयताभिन्नत्वे सति हेतुतावच्छेदकावच्छिन्नविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताभिन्नत्वं विशेषणीयम्। तथा च जलविषयतानिरूपितव्यापकत्वविषयतानिरूपितसाध्याभावविषयताभिन्नत्वे सति जलविषयतानिरूपितपर्वतविषयताभिन्नत्वस्य प्रसिद्धस्य काञ्चनमयत्वाभाववत्तद्व्यक्तित्वावच्छिन्नविषयतायां तद्व्यक्तित्ववत्पर्वतत्वावच्छिन्नविषयतायाञ्च सत्त्वेनैतादृशविषयताया अपि विशिष्टद्वयविषयतापदेन ग्रहीतुं शक्यतया तादृशविशिष्टद्वयविषयताशून्यत्वस्य काञ्चनमयत्वाभाववत्तद्व्यक्तित्ववत्तद्व्यक्तित्ववत्पर्वतविषयकनिश्चये विरहेण लक्षणागमनान्न दोष इति प्राहुः।

## गादाधरी

न च दर्शितविशिष्टस्य सत्प्रतिपक्षरूपता न स्वीक्रियतेऽपि तु हेतुतावच्छेदकाघटितसाध्याभावाभाववदवृत्तिमत्पक्षात्मकविशिष्टस्यैव, व्यापकसामानाधिकरण्यरूपव्याप्तिविशिष्टस्योक्तरीत्या संग्रहे तद्धर्मव्यापकसाध्याभावकालीनतद्धर्मविशिष्टपक्षादिव्यावृत्तिरप्यशक्या स्यादित्यविशेषेण व्यापकताघटितविशिष्टमात्रस्यालक्ष्यताया एव युक्तत्वात् तथा चोक्तप्रयासमपेक्ष्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानिवेशनमेवोचितमिति वाच्यम्। एवमपि प्रकृतहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वघटितस्य मतभेदेनासाधारणविरोधरूपस्य विषयतायाः पक्षधर्मिकप्रकृतहेतुमत्ताज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायामेवावच्छेदकत्वात् प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशासम्भवात्। दर्शितातिप्रसङ्गवारणाय च निरुक्तविशिष्टद्वयाघटितत्वस्यैव निवेशनीयत्वात्।

## विमलप्रभा

आशङ्कते न चेत्यादिना वाच्यमित्यन्तेन। दर्शितविशिष्टस्य=प्रतिहेतु-

व्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षरूपविशिष्टस्य, जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदरूपविशिष्टस्येति यावत्। विशिष्टस्यैव = साध्याभावव्याप्यवत्पक्षरूपविशिष्टस्यैव, हेतुतावच्छेदकाऽप्रवेशेन सत्प्रतिपक्षस्यैकरूपतया लाघवादिति शेषः।

व्यापकसमानाधिकरण्यरूपव्याप्तिविशिष्टस्य = प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षस्य। उक्तरीत्या = सत्प्रतिपक्षघटकदलद्वयविषयताभिन्नत्वं विशिष्टद्वयविषयतायां प्रवेशरूपरीत्या। तद्धर्मव्यापकः = प्रतिहेतुव्यापकः। तद्धर्मविशिष्टपक्षादिः = प्रतिहेतुमत्पक्षादिः। व्यावृत्तिरप्यशक्या = वारणमशक्यमेव। इति = हेतोः। अविशेषेण = एकतरपक्षपातियुक्तिविरहेण। विशिष्टमात्रस्य = प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षात्मकविशिष्टमात्रस्यैव। अलक्ष्यतायाः = लक्ष्यभिन्नत्वस्य। उचितत्वात् = युक्तत्वात्। तथा च = व्यापकताघटितविशिष्टमात्रस्याऽलक्ष्यत्वे च। उक्तप्रयासमपेक्ष्य = विशिष्टद्वयाघटितत्वनिवेशमपेक्ष्य। उचितम् = युक्तम्। एवमपि = व्यापकताघटितविशिष्टमात्रस्याऽलक्ष्यत्वमङ्गीकृत्य प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशेऽपि। मतभेदेन = विभिन्नमतेन। नव्यमतेऽसाधारण्यं, प्राच्यमते विरोध इति मतभेदेनेति यावत्। दर्शितातिप्रसङ्गवारणाय = वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिवारणाय। अयमर्थः। प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षस्य सत्प्रतिपक्षत्वे विनिगमकाभावेन प्रतिहेतुव्यापकसाध्याभावकालीनप्रतिहेतुमत्पक्षादेरपि सत्प्रतिपक्षत्वापत्तिः। न चेष्टापत्तिः, अतथाभूतकालीनत्वाद्यनन्तपदार्थघटितविशिष्टस्य सत्प्रतिपक्षत्वेऽसार्वज्ञ्यदुर्ज्ञेयसत्प्रतिपक्षप्रसङ्गस्यात्,तस्मान्नास्य सत्प्रतिपक्षता, किन्तु साध्याभावव्याप्यवत्पक्षरूपविशिष्टस्यैव सत्प्रतिपक्षत्वम् तथा च वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदादावतिव्याप्तिवारणाय ज्ञानवैशिष्ट्यानवच्छिन्नत्वमेव प्रतिबन्धकतायां निवेश्यम्, तावतैव च पाषाणमयत्ववत्पर्वतादावप्यतिव्याप्तिवारणसम्भवेन स्वरूपसम्बन्धरूपावच्छेदकत्वमेव निवेशनमुचितमिति शङ्काशयः।

प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशे निरुक्तातिप्रसङ्गवारणस-

म्भऽवेपि ह्रदो वह्निमान् जलादित्यत्र वह्निव्यापकीभूताभावप्रतियोगिजलरूपाऽसाधारण्ये मतभेदेन विरोधे चाऽव्याप्तिः। वह्निव्यापकीभूताभावप्रतियोगिजलमिति निश्चयस्य जलवान् ह्रद इति निश्चयविशिष्टस्यैव प्रकृतानुमितिं प्रति प्रतिबन्धकतया तादृशप्रतिबन्धतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वाभावात्। अतो ज्ञानवैशिष्ट्यानवच्छिन्नत्वं प्रतिबन्धकतायां निवेशनं न युक्तिसहम्। एवञ्च स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशे पाषाणमयत्ववत्पर्वतादावतिव्याप्तिस्तदवस्थैवातो न तन्निवेशः। अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशपक्षे वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिप्रसङ्गवारणाय विशिष्टद्वयाघटितत्वविशेषणमावश्यकमेवेति समाधानाशय इति भावः।

## बलदेवी

अथ यद्रूपावच्छिन्नविषयतासामान्यं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदकतावत्तद्रूपवत्त्वमिति लक्षणे प्रतिबन्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्वाऽसाधारण्यविषयत्वानवच्छिन्नत्वोभयाभाव एव "ज्ञानवैशिष्ट्यानवच्छिन्नत्वपदेन" विवक्षणीयः, एवञ्च पर्वतो वह्निमान् धूमादित्यत्र पाषाणमयत्वावच्छेदेन वह्न्यभावप्रकारकनिश्चयविशिष्टपाषाणमयत्वप्रकारकनिश्चयत्वावच्छिन्ना या प्रतिबन्धकता तत्र ज्ञानवैशिष्ट्यावच्छिन्नत्वासाधारण्यविषयित्वानवच्छिन्नत्वोभयोः सत्त्वादुभयाभावविरहेण न तादृशप्रतिबन्धकतामादाय पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिः।

एवं जलावच्छेदेन वह्न्यभावप्रकारकजलवान् वह्न्यभाववानित्याकारकनिश्चयविशिष्टजलवद्ध्रदत्वावच्छिन्नविषयकजलवान् ह्रद इत्याकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकतायां निरुक्तोभयोस्सत्त्वेन तदभावविरहेण न तादृशप्रतिबन्धकतामादाय वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिसम्भावना।

ह्रदो वह्निमान् जलादित्यत्र वह्न्यभाववद्ध्रदरूपबाधनिश्चयनिष्ठप्रतिबन्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्वाऽसाधारणविषयित्वानवच्छिन्नत्वोभयाभावसत्त्वादेव बाधे लक्षणसंगतिः। ह्रदधर्मिकजलप्रकारकनिश्चयविशिष्टवह्निव्यापकीभूताभावप्रति-

योगिजलविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्वसत्त्वेऽपि असाधारण्यविषयित्वानवच्छिन्नत्वविरहादेवोभयाभावसत्त्वात् तादृशप्रतिबन्धकतामादायाऽसाधारण्ये लक्षणसमन्वयः। अनतिरिक्तवृत्तित्वरूपावच्छेदकतानिवेशपक्षेऽसाधारण्ये लक्षणसमन्वयार्थम् प्रकृतानुमित्यप्रतिबन्धकत्वपक्षधर्मिकहेतुमत्तानिश्चयकालीनत्वोभयाभावे यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकत्वं तद्रूपावच्छिन्नत्वमिति लक्षणङ्करणीयम्, तदप्यत्र निष्फलमेव।

न च ह्रदो वह्निमान् वह्न्यभाववज्जलवद्वृत्तिजलाभावादित्यत्र तादृशजलवद्ध्रदरूपासिद्धावव्याप्तिः, तादृशनिश्चयनिष्ठप्रतिबन्धकतायां पक्षे साध्यवत्ताबुद्धिप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नत्वसत्त्वेन तदनवच्छिन्नत्वविरहादिति वाच्यम्। यद्रूपावच्छिन्नविषयतासामान्यज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकत्वाऽसाधारण्यविषयताभिन्नत्वोभयाभावस्तद्रूपवत्त्वमित्यर्थेऽदोषात्। न च ह्रदत्वादिप्रकारतायाः प्रतिबन्धकतानवच्छेदकतया तस्याः वह्न्यभाववद्ध्रदज्ञाने सत्त्वेनाऽसम्भव इति वाच्यम्। प्रतिबन्धकतानवच्छेदकत्वमित्यनेन प्रतिबन्धकतावच्छेदकविषयताविशिष्टान्यत्वस्य विवक्षणात्। वैशिष्ट्यञ्च स्वतादात्म्यस्वावच्छेद्यत्वान्यतरसम्बन्धेनेति चेन्न, जलं वह्निमज्जलादित्यत्र प्रतियोगिजलेऽतिव्याप्तिः, तथा हि प्रतियोगित्वावच्छेदेन वह्न्यभावप्रकारकनिश्चयविशिष्टप्रतियोगित्वप्रकारकजलविशेष्यकनिश्चयत्वावच्छिन्ना या प्रतिबन्धकता तस्याः प्रतियोगित्वप्रकारतानिरूपितजलत्वाववच्छिन्नविशेष्यतात्वेन वह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविशेष्यताया अपि अवच्छेदकत्वात्, तत्प्रतिबन्धकतायामसाधारण्यविषयत्वानवच्छिन्नत्वविरहेण ज्ञानवैशिष्ट्याऽनवच्छिन्नत्वाऽसाधारण्यविषयत्वावच्छिन्नत्वोभयाभावसत्त्वात् तत्प्रतिबन्धकतावच्छेदकत्वस्य प्रतियोगिजलत्वावच्छिन्नविषयतासामान्ये सत्त्वात्। अथाऽसाधारण्यविषयतात्वेनासाधारण्यविषयकत्वानवच्छिन्नत्वज्ञानवैशिष्ट्यानवच्छिन्नत्वैतदुभयाभाववत्त्वं प्रतिबन्धकतायां विवक्षणीयम् प्रतियोगित्वप्रकारतानिरूपितजलविशेष्यताकनिश्चयत्वावच्छिन्ना या प्रतिबन्धकता तस्या अवच्छेदकत्वं नासाधारण्यविषयतात्वेनेति न तत्प्रतिबन्धकतामादाय तत्रातिव्याप्तिरिति चेत् अत्रोच्यते, असाधारण्यविषयतात्वं यदि वह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नं तदा वह्निव्या-

पकीभूताभावप्रतियोगिजलत्वावच्छिन्नविषयतात्वस्य वह्नित्वेन गुञ्जावगाहिभ्रमात्मकवह्निव्यापकीभूताभावप्रतियोगिजलमिति ज्ञानीयविषयतायामवर्त्तमानतया तस्य प्रतिवन्धकत्वानुपपत्तिः यदि च वह्नित्वावच्छिन्नविषयतानिरूपितव्यापकत्वावच्छिन्नविषयतानिरूपितप्रतियोगित्वावच्छिन्नविषयतानिरूपितजलत्वावच्छिन्नविषयतात्वं प्रतिवन्धकतावच्छेदकं, तथापि वह्न्यभाववदवृत्तिजलमिति ज्ञाननिष्ठा या वह्न्यभाववदवृत्तिजलत्वावच्छिन्नविषयता तादृशविषयताशालिनिश्चयविशिष्टह्रदधर्मिकजलप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकतामादाय वह्न्यभाववद्वृत्तिजलेऽप्यसाधारण्यं यत् भट्टाचार्यसम्मतं तस्याऽसंग्रहापत्तिः। एव व्यापकत्वस्यापि अत्यन्तान्योन्याभावभेदेन विभिन्नतया एकरूपेण वक्तुमशक्यत्वात्।

एवम्, प्रतियोग्यसामाधिकरण्यघटितस्य प्रतियोगिसामानाधिकरण्यघटितस्य च भिन्नतयाऽसाधारण्यज्ञानं नानाविधमेकासाधारण्ये लक्षणसमन्वयकालेऽन्यासाधारण्येऽव्याप्तिः। अतः सद्धर्मितावच्छेदककहेतुमत्तानिश्चयकालीनयादृशविशिष्टविषयकनिश्चयसामान्यं स्वसमानकालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदककानुमितिसामान्यविरोधितादृशविषयकत्वानवच्छिन्नत्वमेवासाधारण्यविषयकत्वानवच्छिन्नत्वमित्यस्यार्थो वक्तव्यः, तथा च ह्रदो जलवान् इत्याकारकसद्धर्मितावच्छेदककहेतुमत्तानिश्चयकालीनवह्निव्यापकीभूताभावप्रतियोगिजलमित्याकारकनिश्चयः स्वसमानकालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदककवह्न्यनुमितिसामान्यविरोधी, एवं घटो जलवानिति निश्चयकालीनवह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविषयकनिश्चयोऽपि तत्कालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदककवह्न्यनुमितिसामान्यविरोधीति वह्निव्यापकीभूताभावप्रतियोगिजले एवं तादृशासाधारण्ये च लक्षणसमन्वयः। इत्थञ्च, यद्रूपपदेनान्यस्यैव धारणीयतया जलं वह्निमज्जलादित्यत्र वह्निव्यापकीभूताभावप्रतियोगिजल इव प्रतियोगिजले लक्षणगमनं सम्भवतीति तत्रातिव्याप्तिरतस्तस्योपेक्षा कृता।

केचित्तु, वृक्षः कपिसंयोगवानित्यत्र कपिसंयोगाभाववद्वृक्षो न लक्ष्यः, निरवच्छिन्नस्वरूपसम्बन्धेन कपिसंयोगाभावप्रकारकज्ञानविषयस्यैव दोषत्वात्। तथा

चाऽव्याप्यवृत्तित्वज्ञानस्योत्तेजकतापक्षे स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशे कपिसंयोगाभाववद्वृक्षविषयतासामान्यस्यापि प्रतिबन्धकतावच्छेदकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत्त्वेन कपिसंयोगाभाववद्वृक्षेऽतिप्रसङ्गवारणायाऽनतिरिक्तवृत्तित्वरूपाऽवच्छेदकतानिवेशः। तथा चाऽव्याप्यवृत्तित्वभ्रमानास्कन्दितयद्रूपावच्छिन्नविषयताव्यापिका प्रकृतानुमितिप्रतिबन्धकता तद्रूपवत्त्वमित्युक्तमित्याहुः।

## गादाधरी

न च पक्षवृत्तित्वविशेषितं प्रकृतहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वमेवासाधारण्यादिरूपं वाच्यम्, पक्षवृत्तित्वाऽघटितविशिष्टविषयताया अप्रतिबन्धकज्ञानसाधारणतया प्रतिबन्धकतानवच्छेदकत्वात्, तादृशस्य चासाधारण्यादेः पक्षवृत्तित्वविशिष्टप्रकृतहेतु—साध्यव्यापकाभावप्रतियोगित्वविशिष्टप्रकृतहेत्वादिरूपनिरुक्तविशिष्टद्वयघटिततया निरुक्तविशिष्टद्वयाघटितत्वनिवेशोऽपि न सम्भवतीति वाच्यम्, पक्षवृत्तित्वाघटितविशिष्टस्यैवासाधारण्यादिरूपताया "विरोधोऽपि फलतः प्रतिरोध एव तदन्यत्वेन वा विरोधिविशेषणीयमिति" पंक्तिव्याख्यानावसरे सम्पादनीयत्वात्।

## विमलप्रभा

पुनः शङ्कते न चेत्यादिना। न चेत्यस्याग्रिमवाच्यमित्यनेनान्वयः। पक्षवृत्तित्वविशेषितं=ह्रदादिवृत्तित्वविशिष्टम्। प्रकृतहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वं=जलादिनिष्ठवह्न्यादिव्यापकीभूताभावप्रतियोगित्वम्। पक्षवृत्तित्वाघटितविशिष्टविषयतायाः=केवलवह्निव्यापकीभूताभावप्रतियोगिजलविषयतायाः। अप्रतिबन्धकज्ञानसाधारणतया=ह्रदो वह्निमानित्यनुमित्यप्रतिबन्धकजलवान् ह्रद इत्याकारकज्ञानासमानकालीनकेवलवह्निव्यापकीभूताभावप्रतियोगिजलमित्याकारकज्ञानसाधारणतया। प्रतिबन्धकतानवच्छेदकत्वात्=प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वेन प्रतिबन्धकतानिरूपितावच्छेदकतारहितत्वात्। तादृशस्य चासाधारण्यादेः=पक्षवृत्तित्वविशिष्टप्रकृतहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वरूपाऽसाधारण्यादेः। न स-

म्भवति = असाधारण्येऽव्याप्तिभयादिति शेषः। पक्षवृत्तित्वाघटितविशिष्टस्यैव = पक्षवृत्तित्वाऽविशेषितकेवलवह्निव्यापकीभूताभावप्रतियोगिजलस्यैव। विरोधोऽपि = विरोधनामकदोषोऽपि। फलतः = स्वरूपतः। प्रतिरोध एव = सत्प्रतिपक्ष एव। तदन्यत्वेन = साध्यासामानाधिकरण्यविषयताभिन्नत्वेन। अवसरे = समये। सम्पादनीयत्वात् = सव्यभिचारग्रन्थे स्पष्टतया प्रतिपादनीयत्वात्।

अयमर्थः। ह्रदो वह्निमान् जलादित्यादौ केवलवह्निव्यापकीभूताभावप्रतियोगिजलस्य नासाधारण्यं तस्य तथात्वे तद्विषयतायाः प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तितया तत्र लक्षणागमनेनाव्याप्तिः स्यादिति ह्रदवृत्तित्वविशिष्टवह्निव्यापकीभूताभावप्रतियोगिनो जलस्यैवासाधारण्यमङ्गीकार्यम्। एवञ्च विशिष्टद्वयाघटितत्वनिवेशे उक्तातिव्याप्तिवारणसम्भवेऽपि निरुक्ताऽसाधारण्येऽव्याप्तिप्रसङ्गः, तथा हि वह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविषयताशालिनिश्चयविशिष्टह्रदवृत्तित्वविशिष्टजलत्वावच्छिन्नविषयताशालिनिश्चयत्वव्यापिका भवति ह्रदो वह्निमानित्यादिसमूहालम्बनानुमितिप्रतिबन्धकतेति वह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविषयताविशिष्टह्रदवृत्तित्वविशिष्टजलत्वावच्छिन्नविषयताशून्यत्वं तादृशाऽसाधारण्यविषयकनिश्चये विरहात्। अतो यदि विशिष्टद्वयाघटितत्वन्न निवेश्यते तदा पूर्वोक्तातिप्रसङ्गस्तदवस्थ एवेति केचित्। तन्न पशुपक्षकपशुत्वसाध्यकमनुष्यत्वहेतुकाऽयं पशुः मनुष्यत्वादित्यादिस्थले पक्षवृत्तित्वघटितस्याऽसाधारण्यस्याभावात्, केवलसाध्यव्यापकीभूताभावप्रतियोगित्वमेवासाधारण्यं वाच्यम्, न च वह्निव्यापकीभूताभावप्रतियोगिजलरूपाऽसाधारण्येऽनुमितिप्रतिबन्धकताविरहेण लक्षणागमनाद्धेत्वाभासतैव न स्यादिति वाच्यम्। सव्यभिचारग्रन्थे चिन्तामणिकृन्मते किमासाधारण्यमिति शङ्कायाः परे तु,, मतद्वाराहेतुनिष्ठं साध्यव्यापकीभूताभावप्रतियोगित्वमात्रमसाधारण्यम्, न तु पक्षवृत्तित्वविशेषितमिति समाधानमभिधाय तादृशासाधारण्यविषयकनिश्चयेऽनुमितिप्रतिबन्धकताविरहेण कुतोऽस्य हेत्वाभासत्वमित्याक्षेपे यद्रूपावच्छिन्नविषयताशालिनिश्चये प्रकृतानुमित्यप्रतिबन्धकत्वपक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वोभयाभावस्तद्रूपावच्छिन्नत्वं हेत्वाभासत्वमिति सामान्यलक्षणं विधाय तादृशाऽसाधारण्ये संगतिः कार्येति समाहितम्। एवञ्चात्रापि निरुक्तासाधारण्येऽव्या-

प्तिवारणाय विशिष्टद्वयविषयताशून्यप्रतीतिविषयतावच्छेदकं यद्रूपं तद्रूपावच्छिन्न-विषयकनिश्चयत्वव्यापकः प्रकृतानुमित्यप्रतिबन्धकत्वपक्षधर्मिकहेतुमत्ताज्ञानकालीन-त्वोभयाभावस्तद्रूपावच्छिन्नत्वं हेत्वाभासत्वमिति लक्षणानुसरणमेव वरम्, तथा च तादृशाऽसाधारण्ये च यदा ह्रदादिधर्मिकजलवत्ताज्ञानकालीनत्वं तदा तत्र प्रकृतानु-मितिप्रतिबन्धकतैवास्ति, न तु तदप्रतिबन्धकता, यदा चानुमित्यप्रतिबन्धकत्वं तदा हेतुमत्ताज्ञानकालीनत्वमेव नेति प्रकृतानुमित्यप्रतिबन्धकत्वपक्षधर्मिकहेतुमत्ताज्ञान-कालीनत्वोभयाभावो भवति वह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविषयता-शालिनिश्चयत्वव्यापक इति तद्रूपावच्छिन्नत्वस्योक्तासाधारण्ये सत्त्वात् लक्षणसम-न्वय इति सर्वमवदातम् ।

### दीधितिः

विशेषणीयश्च तादृशविशिष्टान्तराऽघटितत्वेन ।

### गादाधरी

नन्वनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशेऽपि व्यभिचारादिघटितपदार्थान्तरेऽ-तिव्याप्तिस्तद्विषयकत्वस्यापि प्रतिबन्धकतानतिरिक्तवृत्तित्वादत आह—विशेषणीय-श्चेति । तादृशलक्षणमिति शेषः । तादृशविशिष्टेति । अनुमितिप्रतिबन्धक-तायां यद्रूपावच्छिन्नविषयकत्वमवच्छेदकं तद्रूपावच्छिन्नेत्यर्थः । व्यभिचारत्वाद्य-वच्छिन्नस्य व्यभिचारत्वादिरूपतादृशरूपावच्छिन्नघटितत्वादसम्भव इत्यतोऽन्तरेति । स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकावच्छिन्नार्थकम्, अतः शुद्धव्यभिचारादे-र्मेयत्वविशिष्टव्यभिचाराद्यभिन्नत्वेऽपि न क्षतिः । तदघटितत्वं तदविषयकप्रतीतिवि-षयत्वम्, एवञ्चानुमितिप्रतिबन्धकतायां यादृशरूपावच्छिन्नविषयकत्वमवच्छेदकं ता-दृशं यत् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तदवच्छिन्नाविषयकप्रतीतिवि-षयतावच्छेदकं यत् तदवच्छिन्नत्वं समुदितार्थः । यद्रूपावच्छिन्ने लक्षणसङ्गमनीयं तदेव स्वपदार्थः ।

विमलप्रभा

इदानीमनतिरिक्तवृत्तित्वरूपावच्छेदकताघटितपर्यवसितसामान्यलक्षणे पुनर्दोषान्तरमाह–नन्वित्यादिना। व्यभिचारघटितपदार्थान्तरे = मेयत्वविशिष्टव्यभिचारादौ। तद्विषयकत्वस्यापि मेयत्वविशिष्टव्यभिचारविषयकत्वस्यापि। अतः = हेतोः। आह = शिरोमणिरिति शेषः। तादृशलक्षणम् = हेत्वाभाससामान्यलक्षणम्। तादृशविशिष्टं = यद्रूपावच्छिन्नविषयकत्वव्यापकमनुमितिप्रतिबन्धकत्वं तद्रूपावच्छिन्नत्वरूपलक्षणघटकीभूतं यद्रूपम्। तद्रूपावच्छिन्नेत्यर्थः = अनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकावच्छिन्नेत्यर्थः। अनुमितिप्रतिबन्धकतायां = प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतायाम्। अन्तरपदप्रवेशफलमाह–व्यभिचारत्वाद्यवच्छिन्नेति। व्यभिचारत्वाद्यवच्छिन्नस्य = व्यभिचारादेः। तादृशरूपावच्छिन्नघटितत्वात् = व्यभिचारत्वादिरूपं यदनुमितिप्रतिबन्धकतावच्छेदकविषयतानिरूपकतावच्छेदकं तद्विषयकप्रतीतिविषयत्वात् स्वस्यापि स्वघटितत्वादिति यावत्। असम्भवः = लक्ष्यमात्रे लक्षणागमनप्रसङ्गः। इत्यतः = असम्भवतः। अन्तरपदस्य प्रकृतोपयोग्यर्थमाह–स्वावच्छिन्नेत्यादिना। स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकावच्छिन्नार्थकम् = स्वावच्छिन्नाविषयकप्रतीतिविषयतानिरूपकतावच्छेदकं यत्रूपं तदवच्छिन्नार्थकमन्तरपदमिति शेषः। अतः = विशिष्टान्तरशब्दस्यैतादृशार्थविवक्षातः। अभिन्नत्वेऽपि = शुद्धव्यभिचारमेयत्वविशिष्टव्यभिचारयोर्भेदविरहेऽपि। न क्षतिः = न मेयत्वविशिष्टव्यभिचारेऽतिप्रसङ्गः। एवञ्च = एतादृशार्थकरणे च। तादृशं = अनुमितिप्रतिबन्धकतानतिरिक्तवृतिविषयतानिरूपकतावच्छेदकम्। स्वपदार्थः = स्वावच्छिन्नेत्यत्र स्वपदस्यार्थः। लक्ष्यतावच्छेदकपरं स्वपदमिति तु ज्यायः. अयमर्थः। अनतिरिक्तवृत्तित्वरूपावच्छेदकताघटितपर्यवसितलक्षणे पर्वतो धूमवान् वह्नेरित्यादौ मेयत्वविशिष्टो यो धूमाभाववद्वृत्तित्वविशिष्टो वह्निस्तत्र मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः। तथा हि पर्वतो धूमवान् धूमव्याप्यवह्निमांश्चेत्यनुमितिं प्रति यथा धूमाभाववद्वृत्तिर्वह्निविषयकनिश्चयस्य प्रतिबन्धकता तथैव मेयत्वविशिष्टः धूमाभाववद्वृत्तिवह्निरित्याकारकनिश्चयस्यापीति, एवञ्च, यथा धूमाभाववद्वृत्तित्वविशिष्टवह्नित्वावच्छिन्नविषयताप्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिस्तथैव मेयत्वविशिष्टधूमाभाववद्वृत्तिवह्नित्वावच्छिन्नविषयतापीति भवति मेयत्वविशिष्टधूमाभाववद्वृत्तिवह्नित्वा-

वच्छिन्नविषयताव्यापिका प्रकृतानुमितिप्रतिबन्धकतेति तत्त्वं मेयत्वविशिष्टव्यभिचारे सत्त्वात्। अतः लक्षणे विशिष्टान्तराघटितत्वविशेषणन्देयमिति।

न च विशिष्टाऽघटितत्वविशेषणमास्ताङ्किमिति अन्तरपदेनेति वाच्यम्। अन्तरपदानुपादाने विशिष्टाऽघटितत्वमात्रनिवेशेऽसम्भवः व्यभिचारादेरपि व्यभिचारादिविषयकप्रतीतिविषयत्वेन विशिष्टघटिततया स्वस्यापि स्वघटितत्वेन विशिष्टाऽघटितत्वविरहात्। अन्तरपदोपादाने च व्यभिचारादेः व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयतानिरूपकतावच्छेदकावच्छिन्नत्वाभावेन नासम्भवः। न चान्यो विशिष्टो विशिष्टान्तरमिति विग्रहबले स्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकधर्मवानेवान्तरपदार्थ, एवञ्च स्वभिन्नो यस्तादृशविशिष्टस्तदघटितत्वमिति समुदायार्थः। व्यभिचारादौ स्वभेदविरहादेवासम्भववारणमिति कृतं पारिभाषिकार्थेनेति वाच्यम्। पारिभाषिकार्थाकरणे मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः तथा हि विशिष्टस्य शुद्धाभिन्नतया मेयत्वविशिष्टव्यभिचारभिन्नत्वस्य शुद्धव्यभिचारे विरहेण स्वभिन्नो यः विशिष्टस्स च बाधादिस्तदघटितत्वस्य मेयत्वविशिष्टव्यभिचारे सत्त्वात्, अतोऽन्तरपदस्य पारिभाषिकार्थः कार्यः, तथा च यथा तत्रातिव्याप्तिवारणं तथाऽनुपदमेव विवेचयिष्यते। विशिष्टान्तराघटितत्वविशेषणसहितलक्षणस्य पर्यवसितार्थस्तु स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकञ्च यद्रूपं तद्रूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदको यो धर्मस्तद्धर्मावच्छिन्नविषयताशालिनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयताव्यापिका प्रकृतानुमितिप्रतिबन्धकता तद्रूपावच्छिन्नत्वं हेत्वाभासत्वमिति। स्वपदं लक्ष्यतावच्छेदकीभूतव्यभिचारत्वादिपरम्।

## गादाधरी

भवति हि व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकीभूता ये बाधत्वादयस्तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं व्यभिचारत्वादीति तदवच्छिन्ने लक्षणसङ्गतिः।

मेयत्वविशिष्टव्यभिचारत्वादेः स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकव्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वाभावान्न तदवच्छिन्नेऽति - व्याप्तिः ।

## विमलप्रभा

भवतीत्यस्य लक्षणसङ्गतिरित्यनेनान्वयः तदवच्छिन्नाविषयकप्रतीतिः = बाधत्वाद्यवच्छिन्नाविषयकव्यभिचारादिविषयकप्रतीतिः । तदवच्छिन्ने = व्यभिचारत्वावच्छिन्ने । मेयत्वविशिष्टव्यभिचारे प्रसक्तामापत्तिमपनयति मेयत्वविशिष्टेत्यादिना । स्वं = मेयत्वविशिष्टव्यभिचारत्वम् । तदवच्छिन्ने = मेयत्वविशिष्टव्यभिचारत्वावच्छिन्ने । अयमर्थः । अत्र व्यभिचारादौ लक्षणसङ्गमनप्रकारश्चेत्थम्, अयोगोलकपक्षकधूमसाध्यकवह्निहेतुकस्थले धूमाभाववद्वृत्तित्वविशिष्टवह्निरूपव्यभिचारे स्वपदेन धूमाभाववद्वृत्तित्वविशिष्टवह्नित्वरूपव्यभिचारत्वं तदवच्छिन्नो व्यभिचारस्तदविषयकप्रतीतिः बाधविरोधादिविषयकप्रतीतिस्तद्विषयतानिरूपकतावच्छेदकं बाधत्वादिकं तच्चायोगोलकं धूमवत् धूमव्याप्यवह्निमच्चेत्याकारकानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकमपीति तदवच्छिन्नाविषयकप्रतीतिः व्यभिचारविषयकप्रतीतिः तद्विषयतानिरूपकतावच्छेदकं धूमाभाववद्वृत्तित्वविशिष्टवह्नित्वरूपव्यभिचारत्वं तदवच्छिन्नविषयताशालिधूमाभाववद्वृत्तिवह्निरिति व्यभिचारविषयकनिश्चयवृत्तित्व - विशिष्टव्यभिचारत्वावच्छिन्नविषयताव्यापकत्वं प्रकृतायोगोलकं धूमवत् धूमव्याप्यवह्निमच्चेत्याकारकानुमितिप्रतिबन्धकतायामस्तीति तत्त्वं व्यभिचारे सत्त्वात् ।

अनयैव दिशा बाधादावपि लक्षणसङ्गमनं कार्यमिति मेयत्वविशिष्टधूमाभाववद्वृत्तिवह्निरूपव्यभिचारे च मेयत्वविशिष्टव्यभिचारत्वं स्वपदेनोपादाय तदवच्छिन्नाविषयकप्रतीतिः शुद्धव्यभिचारविषयकप्रतीतिः [ शुद्धव्यभिचारविषयकप्रतीतौ मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयता नास्ति ] तादृशप्रतीतिविषयतानिरूपकतावच्छेदकं यद्व्यभिचारत्वं तच्च प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकमपीति तादृशव्यभिचारत्वावच्छिन्नविषयकप्रतीतिर्न मेयत्वविशिष्टव्यभिचारविषय-

कप्रतीतिस्तत्र व्यभिचारत्वावच्छिन्नविषयतासत्त्वात् किन्तु बाधादिविषयकैव प्रतीतिस्तद्विषयतानिरूपकतावच्छेदकतायाः मेयत्वविशिष्टव्यभिचारत्वे विरहेण, तद्रूपावच्छिन्नत्वस्य मेयत्वविशिष्टव्यभिचारे सुतरामभावान्नातिप्रसङ्गसम्भावनेति भावः।

बलदेवी

एवञ्चानुमितिप्रतिबन्धकतायां यादृशरूपावच्छिन्नत्वमवच्छेदकं तादृशं यत् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् स्व तदवच्छिन्नत्वं समुदितार्थ इति भट्टाचार्यः।

अत्र स्वानवच्छिन्नप्रकारतावच्छेदकं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकञ्च यद्यद्रूपं तदनवच्छिन्नप्रकारतावच्छेदकत्वरूपविशिष्टान्तराघटितत्वमिति जगदीशोक्तादरेऽपि मेयत्वविशिष्टव्यभिचारादौ नातिव्याप्तिः, मेयत्वविशिष्टव्यभिचारत्वानवच्छिन्नशुद्धव्यभिचारवानिति ज्ञानीयप्रकारतावच्छेदकव्यभिचारत्वानवच्छिन्नप्रकारतावच्छेदकत्वस्य मेयत्वविशिष्टव्यभिचारत्वेऽसत्वात्। तथापि व्यभिचारकालीनघटादावतिव्याप्तिः, तादृशघटत्वावच्छिन्नप्रकारत्वस्य व्यभिचारत्वानवच्छिन्नत्वात्। स्वानवच्छिन्नप्रकारतावच्छेदकं यत्तादृशरूपं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वविवक्षणे तद्वारणेऽपि, बाधाद्यसंग्रहः, ह्रदो वह्न्यभाववानिति ज्ञाने तुल्यवित्तिवेद्यतया ह्रदवृत्तिवह्न्यभावत्वावच्छिन्नविषयतायाः सत्त्वेन वह्न्यभाववद्ध्रदत्वानवच्छिन्नप्रकारतावच्छेदकह्रदवृत्तिवह्न्यभावत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य वह्न्यभाववद्ध्रदत्वेऽसत्त्वादतः स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वमेव विशिष्टान्तरतावच्छेदकत्वं बोध्यम्।

न च साक्षात्परम्परावच्छेदकत्वं स्वीकृत्यैतल्लक्षणं कर्तव्यमन्यथा ह्रदो-वह्निमानित्यत्र बाधादावव्याप्तिः। तादृशबाधज्ञानीयवह्न्यभाववद्विषयतानिरूपितसाक्षादवच्छेदकतायाः अभाववद्ध्रदत्वमात्रपर्याप्तया तद्गतसमुदायत्वस्य पर्याप्त्यनुयोगितावच्छेदकतया तदवच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकवि-

षयतायाः ह्रदोऽभाववानिति ज्ञानेऽपि सत्त्वेन तत्र प्रतिबन्धकताविरहात्। साक्षात् परम्परावच्छेदकतास्वीकारे तु तादृशविषयतानिरूपकतावच्छेदकविषयताया वह्नित्वाद्यन्तर्भावेण पर्याप्ततया तादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकनिरूपकतावच्छेदकताकविषयितायाः ह्रदो वह्न्यभाववानिति ज्ञानेऽसत्त्वेन तत्संग्रहः।

एवञ्चोक्तविवक्षायामपि न व्यभिचारकालीनघटेऽतिव्याप्तिः, तादृशघटत्वावच्छिन्नप्रकारताया व्यभिचारत्वाद्यवच्छिन्नत्वादिति वाच्यम्। प्रतियोगितानिष्ठावच्छेद्यतातो विषयतानिष्ठावच्छेद्यताया भिन्नतया मेयत्वविशिष्टव्यभिचारत्वानवच्छिन्नप्रकारतावच्छेदकशुद्धव्यभिचारत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगितानिष्ठावच्छेद्यत्वाभाववत्प्रकारतावच्छेदकत्वस्य मेयत्वविशिष्टव्यभिचारत्वे सत्त्वेनातिव्याप्त्यापत्तेरतो विषयितानिष्ठावच्छेद्यत्वाभाव एव निवेश्यः। एवञ्च प्रतियोगितानिष्ठवह्न्यभाववद्ध्रदत्वनिरूपितावच्छेद्यत्वाभाववत्प्रकारतानिरूपितावच्छेदकतावद्धर्मानवच्छिन्नप्रकारतावच्छेदकत्वस्य तत्राभावादिति प्रथमेऽपि विषयितानिष्ठावच्छेद्यत्वाभावो निवेश्य इति सूचनायोक्तविवक्षा जगदीशेनाङ्गीकृतेति बोध्यम्।

यत्र घटविषयकं ज्ञानं नियमतो बाधविषयकमेव भवति बाधज्ञानञ्च स्वतन्त्रमपि भवति तत्र घटेऽतिव्याप्तिः, घटत्वावच्छिन्नविषयकनिश्चयत्वव्यापकतायाः प्रकृतानुमितिप्रतिबन्धकतायां सत्त्वात्, घटत्वानवच्छिन्नप्रकारतावच्छेदकं यद्बाधत्वं तदनवच्छिन्नप्रकारतावच्छेदकत्वस्य घटत्वे सत्त्वात्, अतस्तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वनिवेशः। तथा च तादृशविशिष्टान्तरतावच्छेकं यत् बाधत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य घटत्वे विरहान्नातिप्रसङ्गः।

एवं, स्वानवच्छिन्नप्रकारतावच्छेदकं यत्तादृशरूपं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वविवक्षणे यत्र बाधज्ञानं व्यभिचारज्ञानञ्च समूहालम्बनात्मकमेव भवति तत्र बाधेऽव्याप्तिः, बाधत्वानवच्छिन्नप्रकारतावच्छेदकं यद्व्यभिचारत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य बाधत्वेऽभावात्, अतः स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वनिवेशः। तथा च बाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य व्यभिचारत्वे विरहेण तस्य विशि-

ष्टान्तरतावच्छेदकत्वाभावेन सत्प्रतिपक्षादिरूपविशिष्टान्तरमादाय लक्षणसंगतिसम्भवान्नोक्ताव्याप्तिः। एतादृशाङ्कुरविशेषमस्वीकृत्यैव जगदीशेन तथा निवेशनं कृतमिति। अथ स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्प्रकृतानुमित्यवृत्तिविषयतानिरूपकतावच्छेदकं तदवच्छिन्नाघटितत्वं कथन्न निवेशितमिति चेन्न, यदि चायं वह्निमान् वह्न्यभावव्याप्यवानित्यनुमितिः प्रामाणिकीत्यादिग्रन्थानुसारेण मेयत्वविशिष्टसत्प्रतिपक्षेऽतिव्याप्तिः, विशिष्टान्तरसत्प्रतिपक्षविषयत्वस्य साध्यवान् साध्यव्याप्यहेतुमान् साध्याभावव्याप्यहेतुमांश्च पक्ष इति समूहालम्बनानुमितिवृत्तित्वेन धर्तुमशक्यत्वात्, व्यभिचारादिविषयतानिरूपकतावच्छेदकरूपावच्छिन्नाघटितत्वात्। प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वनिवेशे च विशिष्टान्तरसत्प्रतिपक्षविषयतामादायातिप्रसङ्गवारणसम्भवात्। न च तावतापि अनुमितिप्राक्क्षणवृत्तियज्ज्ञानं तदवृत्तित्वमेव निवेश्यतां तावतैवोक्तदोषवारणसम्भवादिति वाच्यम्। पर्वतः पर्वतीयवह्न्यभाववान् वह्न्यभावव्याप्यादित्यादौ प्रकृतपक्षसाध्यकानुमितिक्षणे तत्प्राक्क्षणे च वह्निमानिति ज्ञानं कदापि नोत्पन्नं तत्र पर्वतीयवह्निमत्पर्वतरूपबाधेऽव्याप्तिः, वह्निमत्पर्वतविषयतायाः प्रकृतानुमित्यवृत्तित्वात्, प्रकृतानुमित्यव्यवहितपूर्वक्षणवृत्तिज्ञानावृत्तित्वाच्च तादृशविशिष्टान्तरवह्निमत्पर्वतविषयतावच्छेदकघटितत्वात्। तन्निवेशे च वह्निमत्पर्वतविषयतायाः प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वेन व्यभिचारादिकमादाय लक्षणसङ्गतिः।

## गादाधरी

मेयत्वविशिष्टव्यभिचारादेरपि मेयत्वादिना व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयत्वात् तद्दोषस्स्यादतस्तादृशरूपाश्रयधर्मिणं तदवच्छिन्नाविषयकप्रतीतिविषयत्वेनाविशिष्य स्वमेव तादृशप्रतीतिविषयतावच्छेदकत्वेन विशेषितम्। मेयत्वविशिष्टव्यभिचारत्वाद्याश्रयाविषयकत्वस्य व्यभिचारत्वाद्यवच्छिन्नविषयकप्रतीतौ दुर्घटत्वात्तद्दोषः स्यादतः स्वाश्रयाविषयकत्वमुपेक्ष्य स्वावच्छिन्नाविषयकत्वनिवेशः।

## विमलप्रभा

सम्प्रति विशिष्टान्तराघटितत्वघटकविशेषणानां सार्थकतामाह मेयत्वविशिष्ट -

व्यभिचारादेरपीत्यादिना । मेयत्वादिना=मेयत्वादिरूपेण । तद्दोषः स्यात्=मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः स्यात् । अतः=अतिप्रसङ्गतः, तद्वारणायेति यावत् । तादृशरूपाश्रयधर्मिणां=लक्ष्यतावच्छेदकीभूतो यो धर्मस्तदाश्रयधर्मिणाम् । तदवच्छिन्नाविषयकप्रतीतिविषयकत्वेन=तादृशप्रकृतानुमितिप्रतिबन्धकतानतिरिक्त-वृत्तिविषयतानिरूपकतावच्छेदकरूपावच्छिन्नाऽविषयकप्रतीतिविषयत्वेन । स्वमेव=लक्ष्यतावच्छेदकीभूतयद्रूपमेव । तादृशविषयतावच्छेदकत्वेन=स्वावच्छिन्नाऽविषय-कप्रतीतिविषयतावच्छेदको यो धर्मस्तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वेन । विशेषितम्=यद्रूपे एव तादृशविशेषणं दत्तम् । दुर्घटत्वात्=अभावात् । तद्दोषः स्यात्=मेयत्वविशिष्टव्यभिचारेऽतिप्रसङ्गः स्यात् । अतः=अतिव्याप्तिभयतः, अति-व्याप्तिवारणायेति यावत् । उपेक्ष्य=अनिवेश्य । निवेशः कृत इति शेषः । अयमर्थः । विशिष्टान्तराघटितत्वस्य यद्रूपविशिष्टे विशेषणादानेनैव[अर्थात् स्वावच्छिन्ना-विषयकप्रतीतिविषयतावच्छेदकमथ च प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषय-तानिरूपकतावच्छेदकं यद्रूपं तद्रूपावच्छिन्नाविषयकप्रतीतिविषययद्रूपावच्छिन्नविषय-ताव्यापिका प्रकृतानुमितिप्रतिबन्धकता तद्रूपावच्छिन्नत्वरूपलक्षणेनैव]सामञ्जस्यसम्भवे-तादृशप्रतीतिविषयतावच्छेदकत्वपर्यन्तनिवेशनमनुचितमेवेति केनचिदुक्तं तन्न समीचीनम्, यतस्तदनिवेशे मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः प्रसङ्गस्स्यात् तथा हि मेयत्व-विशिष्टव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिः केवलव्यभिचारविषयकप्रतीतिस्तादृश-प्रतीतिविषयतावच्छेदकमथ च प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानि-रूपकतावच्छेदकं यत् केवलव्यभिचारत्वं तदवच्छिन्नाविषयकप्रतीतिः प्रमेयमित्याका-रिका प्रतीतिस्तद्विषयत्वस्य प्रमेयत्वेन प्रमेयमात्रे वर्त्तमानतया प्रमेयत्वविशिष्टव्यभि-चारेऽपि सत्त्वात् तथा च भक्षितेऽपि लशुने न शान्तो व्याधिरिति न्यायप्रसरप्रसङ्ग इत्यतस्तादृशप्रतीतिविषयतावच्छेदकत्वपर्यन्तादरः कार्य्यः । एवञ्च तादृशविशिष्टान्तरताव-च्छेदकीभूतं यत् शुद्धव्यभिचारत्वं तदवच्छिन्नाविषयकप्रतीतिर्भवतु नाम प्रमेयमित्याका-रिका प्रतीतिः परन्तु तद्विषयतावच्छेदकं प्रमेयत्वमेव न तु मेयत्वविशिष्टव्यभिचारत्वमिति तस्य यद्रूपपदेन ग्रहणाऽयोगान्नातिप्रसङ्ग इति । ननु तथापि स्वाश्रयाऽविषयक-प्रतीतिविषयतावच्छेदकमित्यादिरीत्या निवेशेनैव सामञ्जस्ये स्वावच्छिन्नाविषयक-

त्वनिवेशनं किमर्थमिति चेन्न, तदनिवेशे मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिस्तदवस्थैव, तथा हि विशिष्टस्य शुद्धाऽभिन्नतया मेयत्वविशिष्टव्यभिचारत्वाश्रयो यथा मेयत्वविशिष्टव्यभिचारस्तथा शुद्धव्यभिचारोऽपि अतः मेयत्वविशिष्टव्यभिचारत्वाऽश्रयाविषयकप्रतीतिविषयतावच्छेदकप्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपतावच्छेदकं बाधत्वादिकमेव तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नत्वस्य मेयत्वविशिष्टव्यभिचारे सत्त्वात् ।

तदुपादाने च मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयता शुद्धव्यभिचारविषयकप्रतीतावभावेनाऽ[पर्याप्तिनिवेशाभिप्रायेणेदम्] विषयकप्रतीतिमध्ये शुद्धव्यभिचाराविषयकप्रतीतेरपि ग्रहीतुं शक्येति तादृशप्रतीतिविषयतावच्छेदकतादृशरूपं शुद्धव्यभिचारत्वं तदवच्छिन्नाविषयकत्वं मेयत्वविशिष्टव्यभिचारविषयकप्रतीतावभावान्नातिप्रसङ्ग इति भावः ।

### बलदेवी

मेयत्वविशिष्टव्यभिचारत्वाश्रयाविषयकत्वस्य व्यभिचारत्वाद्यवच्छिन्नविषयकप्रतीतौ दुर्घटत्वादिति भट्टाचार्यः ।

ननु कथमत्र दुर्घटत्वं व्यभिचारत्वेन घटावगाहिन्यां व्यभिचारत्वावच्छिन्नप्रतीतौ मेयत्वविशिष्टव्यभिचारत्वाश्रयाविषयकत्वस्य सुघटत्वादिति चेन्न, तथा सत्यसम्भवः, बाधत्वाश्रयाविषयकत्वस्य बाधत्वेन घटावगाहिज्ञानस्य सम्भवेन तदघटितत्वस्य बाधादावसत्त्वादतः स्वाश्रयाविषयकप्रतीतिविषयवृत्तिस्वाश्रयाविषयकप्रतीतिविषयतावच्छेकं यत्तादृशं रूपं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वमेव वक्तव्यम्, तथा च बाधत्वस्य बाधत्वेन घटावगाहिप्रतीतिविषयतावच्छेदकत्वेऽपि न तादृशप्रतीतिविषयवृत्तित्वमिति नासम्भव इति । प्रकृते मेयत्वविशिष्टव्यभिचारत्वाश्रयाविषयकप्रतीतिविषयतावच्छेदकं सत्तादृशप्रतीतिविषयवृत्तिव्यभिचारत्वं न संम्भवतीति दुर्घटत्वं, वस्तुतस्तु व्यभिचारत्वं साध्याभाववद्वृत्तित्वविशिष्टहेतुतावच्छेदकं सामानाधिकरण्यात्मकतद्वैशिष्ट्यघटकतया व्यभिचारपदार्थस्यापि व्यभिचारत्वघटकतया दुर्घटत्वाभिधानमिति ध्येयम् ।

अतः स्वाश्रयाविषयकत्वमुपेक्ष्य स्वावच्छिन्नाविषयकत्वनिवेश इति भट्टाचार्यः। ननु चरमोपात्तस्य स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकमित्यस्य प्रयोजनं प्रथममभिधाय तदनन्तरं प्रथमोपात्तस्य स्वावच्छिन्नेत्यस्य प्रयोजनाभिधाने किं बीजमिति चेन्न ।

स्वावच्छिन्नाविषयकेत्यस्योपादानेऽनुपादाने च स्वमेव यदि तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वेन निवेश्यते तदा व्यभिचारकालीनघटादावतिव्याप्तिः तादृशघटत्वावच्छिन्नाविषयकज्ञानीयायां तदाश्रयाविषयकज्ञानीयायां च विषयतायामवच्छेदकं यद्व्यभिचारत्वं तदवच्छिन्नाविषयकप्रतीतिविषयत्वात्। तादृशप्रतीतिविषयतावच्छेदकत्वस्य निवेशे तु तादृशघटत्वस्य स्वपदार्थस्य व्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वाभावेन नातिव्याप्तिः। स्वपदार्थे तादृशप्रतीतिविषयतावच्छेदकत्वानुपादाने स्वावच्छिन्नेत्यस्य व्यावृत्तिर्न सम्भवति, तदनुपादाने मेयत्वविशिष्टव्यभिचारविषयकप्रतीतिविषयतावच्छेदकं यत् घटत्वादिकं तदवच्छिन्नाविषयकप्रतीतिविषयता मेयत्वविशिष्टव्यभिचारेऽपि वर्त्तत इति तादृशव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयताकशुद्धव्यभिचारत्वावच्छिन्नाविषयके प्रमेयत्वादिना तादृशव्यव्यभिचारविषयकज्ञाने मेयत्वविशिष्टव्यभिचारस्य विषयत्वात्।

तन्निवेशे तु स्वावच्छिन्नेत्यस्याऽनिवेश एवाऽयं दोषो न तु तन्निवेश इति सूचनायैव वैपरीत्येन प्रयोजनाभिधानमिति।

## गादाधरी

स्वावच्छिन्नाविषयकप्रतीतिविषयवृत्तित्वस्य तादृशधर्मविशेषणत्वे व्यभिचारत्वादेरपि मेयत्वदिना व्यभिचारत्वाद्यवच्छिन्नाविषयकतप्रतीतिविषये व्यभिचारादौ वर्त्तमानत्वादसम्भव इत्यतस्तादृशविषयतावच्छेदकत्वेन धर्मो विशेषितः।

## विमलप्रभा

तादृशधर्मविशेषणत्वे = प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति-विषयतानिरूपकतावच्छेदकधर्मविशेषणत्वे । विशिष्टान्तरतावच्छेदकधर्मविशे-

षणत्वं इति यावत्। प्रतीतिविषये=प्रमेयमित्याकारकप्रतीतिविषये। असम्भवः=सर्वत्रैव लक्षणागमनप्रसङ्गः। इत्यतः=असम्भवभयतः। तादृशविषयता=स्वावच्छिन्नाविषयकप्रतीतिविषयता। धर्मः=प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकधर्मः। अयमर्थः। स्वावच्छिन्नाविषयकप्रतीतिविषयवृत्तिप्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकं यद्रूपं तद्रूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य यद्रूपविशेषणत्वेनैव सामञ्जस्येऽवच्छेदकत्वपर्यन्तानुधावनमनर्थकमिति चेन्नैतद्भद्रम्, तादृशावच्छेदकत्वपर्यन्ताऽनिवेशे सर्वत्राऽसम्भवप्रसङ्गस्स्यात्,तथा हि व्यभिचारत्वाद्यवच्छिन्नाऽविषयिका या प्रतीतिः सा च प्रमेयमित्याकारिका प्रतीतिस्तद्विषयीभूतव्यभिचाराद्यात्मकप्रमेयवृत्तित्वस्यव्यभिचारादौ सत्त्वेन व्यभिचारत्वादेः विशिष्टान्तरजावच्छेदकतया तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य व्यभिचारत्वादावभावात्। तदुपादाने च व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिर्भवतु नाम प्रमेयमित्याकारिका प्रतीतिः तद्विषयतावच्छेदकं प्रमेयत्वमेव न तु व्यभिचारत्वं प्रमेयत्वे तु प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकत्वमेव नास्ति सुतरां प्रमेयमित्याकारकप्रतीतिर्धर्त्तुं न शक्यते शक्यते च धर्त्तुं बाधादिविषयकप्रतीतिरेवेति तादृशबाधविषयकप्रतीतिविषयतावच्छेदकमुक्तरूपं बाधत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद् व्यभिचारत्वादिकं तदवच्छिन्नत्वं व्यभिचारादौ सत्त्वात् लक्षणसङ्गतिस्तथा च नाऽसम्भव इति।

## बलदेवी

स्वावच्छिन्नाविषयकप्रतीतिविषयवृत्तित्वस्य तादृशधर्मविशेषणत्वे व्यभिचारत्वादेरपि प्रमेयत्वादिना व्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषये व्यभिचारादौ वर्त्तमानतयाऽसम्भव इति भट्टाचार्यः। ननु अत्र स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वापेक्षया तादृशप्रतीतिविषयताश्रयवृत्तित्वस्य गुरुतया तन्निवेशे गौरवमेवेति कथमियमाशङ्का सङ्गच्छत इति चेन्न, विशेष्यदले यद्रूपावच्छिन्नविषयकनिश्चयमित्यत्र यद्रूपपदेन वह्न्यभाववद्ध्रदत्वस्योपादाने तस्य

शुद्धह्रदत्वाऽनतिरेकतयाऽसम्भवः स्यादतः यादृशरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयित्वं निवेश्यम् एवञ्च बह्न्यभाववद्ध्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् ह्रदत्वं तत्प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकमपि विशिष्टस्य शुद्धाऽतिरेकात्,तथा च तदघटितत्वस्य बाधादावसत्त्वादसम्भवोऽतः स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयताशून्यप्रतीतिविषयतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्यत्समुदायत्वं तदवच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयताशून्यप्रतीतिविषयतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य विशेष्यदलघटकसमुदायत्वे निवेश्यतया तदपेक्षया विशिष्टान्तरतावच्छेदकसमुदायत्वे स्वावच्छिन्नाविषयकप्रतीतिविषयवृत्तित्वनिवेशे लाघवानपायादिति ध्येयम् ।

## गादाधरी

प्रमेयं गगनवद्वाच्यत्वादित्यादौ व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् गगनाभाववन्मेयत्वादि तदाश्रयाऽविषयकप्रतीत्यप्रसिद्ध्या व्यभिचारादौ तादृशप्रतीतिविषयत्वस्य दुरुपपादतयाऽव्याप्तिरतस्तदवच्छिन्नाविषयकत्वनिवेशः ।

## विमलप्रभा

तदवच्छिन्नाविषयकेत्यत्र तदाश्रयाऽविषयकत्वमेव लाघवात् कथन्न निवेशितमित्याशङ्कायाः समाधानमाह प्रमेयमित्यादिना । व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिः = गगनाभाववद्वृत्तिवाच्यत्वत्वावच्छिन्नाविषयकगगनाभाववत्प्रमेयमिति प्रतीतिः । तदाश्रयाऽविषयकप्रतीत्यप्रसिद्ध्या = सकलवस्तुविषयकप्रतीतेरेव प्रमेयविषयकत्वेन गगनाभाववत्प्रमेयत्वाश्रयाऽविषयकप्रतीत्यप्रसिद्ध्या । तादृशप्रतीतिविषयत्वस्य = गगनाभाववत्प्रमेयत्वाश्रयाविषयकप्रतीतिविषयत्वस्य । दुरुपपादतया =

उपपादयितुमशक्यतया, असम्भवेनेति यावत् । अतः=अव्याप्तिभयतः । तदवच्छिन्नाविषयकत्वनिवेशः=स्वस्मिन्निति शेषः । अयमर्थः । उत्तरत्र "तदवच्छिन्नाऽविषयक" इत्यत्र तदाश्रयाऽविषयकत्वनिवेशे [ अर्थात् स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकप्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकं यद्रूपं तदाश्रयाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य यद्रूपविशेषणत्वे ] प्रमेयं गगनवद्वाच्यत्वादित्यादौ गगनाभाववद्वृत्तिवाच्यत्वरूपव्यभिचारेऽव्याप्तिः, तथा हि गगनाभाववद्वृत्तिवाच्यत्वत्वावच्छिन्नाऽविषयकप्रतीतिः गगनाभाववत्प्रमेयमित्याकारकबाधविषयकप्रतीतिस्तद्विषयतावच्छेदकप्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकं यत् गगनाभाववत्प्रमेयत्वं तदाश्रयत्वं तादृशप्रमेये इति वस्तुमात्रस्यैव प्रमेयरूपतया प्रमेयाऽविषयकप्रतीत्यप्रसिद्ध्या तादृशप्रतीतिविषयतावच्छेदकधर्मावच्छिन्नत्वस्योक्तव्यभिचारेऽभावात् ।

अतस्तदाश्रयाऽविषयकत्वमुपेक्ष्य तदवच्छिन्नाविषयकत्वनिवेशः । तथा च गगनाभाववद्वृत्तिवाच्यत्वत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकं भवतु नाम गगनाभाववत् प्रमेयत्वं तदवच्छिन्नाविषयकप्रतीतिः निरुक्तव्यभिचारविषयकप्रतीतिस्तादृशप्रतीतिविषयतावच्छेदकं यदुक्तव्यभिचारत्वं तदवच्छिन्नत्वस्योक्तव्यभिचारे सत्त्वान्न दोष इति भावः ।

## बलदेवी

प्रमेयं गगनवद्वाच्यत्वादित्यादावव्याप्तिरिति भट्टाचार्यः ।

ननु ह्रदो वह्निमानित्यत्र वह्न्यभाववद्ध्रदत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यत् ह्रदवृत्तिवह्न्यभावत्वं तदाश्रयाविषयकप्रतीतिविषयतावच्छेदकत्वस्य बाधतावच्छेदकेऽभावेनाऽसम्भव एव कुतो नाभिहितः । न च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यदनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकं तदाश्रयनिष्ठमुख्यविशेष्यताशून्यप्रतीतीयमुख्यविशेष्यतावच्छेदकत्वविवक्षणान्नासम्भवः

इति वाच्यम् । तथापि बाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकसत्प्रतिपक्षतावच्छेदकधर्माश्रयाविषयकप्रतीतिविषयतावच्छेदकत्वस्य बाधत्वेऽसत्त्वेनाऽसम्भवस्य दुर्वारत्वादिति चेन्न, घटो गगनवानित्यादौ सत्प्रतिपक्षाऽप्रसिद्धिस्थले लक्षणसमन्वयादिति ध्येयम् ।

## गादाधरी

अत्र च तादृशविशिष्टान्तराविषयकप्रतीतिविषयतावच्छेदकत्वस्य दोषतावच्छेदकधर्मे विशेषणत्वापेक्षया ज्ञानस्येत्यत्र ज्ञानपदार्थे तादृशविशिष्टान्तराविषयकत्वनिवेश एवोचितः ।

एवञ्च निष्कृष्टवक्ष्यमाणकल्पे यद्विषयकनिश्चयस्येत्यत्र निश्चय एव तन्निवेश्यं लाघवादित्यवध्येयम् ।

## विमलप्रभा

अत्र = एतल्लक्षणे च । तादृशविशिष्टान्तराविषयकप्रतीतिविषयतावच्छेदकत्वस्य = स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकप्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकरूपावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य । दोषतावच्छेदकधर्मे = यद्रूपे । ज्ञानस्येत्यत्र = मूलोक्तस्येति शेषः । ज्ञानपदार्थे = तादृशनिश्चये । तादृशविशिष्टान्तराविषयकत्वनिवेशः = निरुक्तरूपावच्छिन्नाविषयकत्वनिवेशः । उचित इति लाघवादिति शेषः । एवञ्च = निश्चये विशिष्टान्तराघटितत्वनिवेशे च । निष्कृष्टवक्ष्यमाणकल्पे = अत्र वदन्ति कल्पे । तत् = विशिष्टान्तराऽघटितत्वम् । अयमर्थः । दोषतावच्छेदकीभूतयद्रूपे स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकप्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकरूपावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वनिवेशापेक्षया तादृशप्रतीतिविषयतावच्छेदकत्वाऽनिवेशेनाऽऽपाततो लाघवात् निश्चय एव तादृशरूपावच्छिन्नाऽविषयकत्वनिवेशनमुचितम् । तथा च स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकप्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकं यद्रूपं तदव-

च्छिन्नाविषयकाव्यापकीभूतविषयताशून्ययद्रूपावच्छिन्नविषयताशाल्यनाहार्यप्रामाण्य-ज्ञानानास्कन्दितनिश्चयत्वव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपावच्छिन्नत्वं हेत्वाभासत्वमिति विशिष्टाऽन्तराघटितत्वसहितसमुदित-लक्षणार्थः।

अनयैव दिशा निष्कृष्टप्रतिपादनीयात्र वदन्ति कल्पेऽपि यद्विषयकनिश्चय एव विशिष्टान्तराऽघटितत्वं निवेशितमिति भावः।

## बलदेवी

ज्ञानपदार्थे तादृशविशिष्टान्तराऽघटितत्वनिवेश एवोचित इति भट्टाचार्यः। नन्वत्र ज्ञानपदार्थे विशिष्टान्तराऽविषयकत्वनिवेशे लाघवन्न सम्भवति, अनुगमे गौरवात्, तथा हि प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिवन्धकताविशिष्टरूपवत्त्वं लक्षणम्, वैशिष्ट्यञ्च स्ववृत्तिर्यः किञ्चिद्रूपावच्छिन्नविषयतात्वावच्छिन्नप्रतियोगिताकाभाववत्प्रतीतिविषयतावच्छेदकप्रकृतानुमितिप्रतिबन्धकतावृत्तिकिञ्चिद्रूपावच्छिन्नविषयताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धो योऽभावस्तन्निरूपिताऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतावत्त्व-सम्बन्धेन। अवच्छेदकतावत्ता च स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वस्वनिरूपिताऽभावनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितधर्मनिष्ठाऽवच्छेदकतानिरूपिता"ऽवच्छिन्नत्वसम्बन्धावच्छिन्ना"ऽवच्छेदकतानिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठाऽवच्छेदकतानिरूपितप्रतीतिनिष्ठावच्छेदकतानिरूपिताऽभावनिष्ठाऽवच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपिताऽवच्छेदकतावत्त्वोभयसम्बन्धेन अत्र च प्रतिबन्धकतावृत्त्यभावो गुरुशरीरक इति।

रूपे तादृशविशिष्टान्तराऽविषयकप्रतीतिविषयतावच्छेदकत्वनिवेशेऽनुगमस्तु प्र-

कृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिर्यः किञ्चिद्रूपावच्छिन्नवि-षयताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धो योऽभा-वस्तदीयावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभे-दनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतानि-रूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्रू-पविशिष्टरूपवत्त्वम्। रूपवैशिष्ट्यञ्च रूपे, स्वतादात्म्यप्रकृतानुमितित्वव्यापकप्रतिबध्य-तानिरूपितप्रतिबन्धकतावृत्त्यभावीयावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्व-निष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपित-निश्चयनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धा-वच्छिन्नावच्छेदकताविशिष्टस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धे-न। तथा चैतन्मते प्रतिबन्धकतावृत्त्यभावो लघुशरीर इति चेन्न। एतन्मतेऽपि प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिर्यः किञ्चिद्रूपावच्छिन्न-विषयताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धोऽभावस्त-दीयावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनि-ष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकताविशिष्ट-धर्मवत्त्वं लक्षणम्। अवच्छेदकतावैशिष्ट्यञ्च धर्मे, स्वनिरूपितविषयित्वनिष्ठावच्छेद-कतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वस्वसमानाधिकरणो यः कि-ञ्चिद्रूपावच्छिन्नविषयित्वाभाववत्प्रतीतिविषयतावच्छेदकप्रकृतानुमितिप्रतिबन्धकता-वृत्तिकिञ्चिद्रूपावच्छिन्नविषयताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाऽभावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदक-तानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठाव-च्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नाव-च्छेदकतावद्धर्मावच्छिन्नविषयता नास्तीति प्रतीतिसिद्धो योऽभावस्तन्निरूपितविषयिता-त्त्वावच्छिन्नप्रतियोगितानिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितधर्मनिष्ठाऽवच्छे-दकतानिरूपिताऽवच्छेदकत्वनिष्ठाऽवच्छेदकतानिरूपितविषयित्वनिष्ठाऽवच्छेदकतानि-रूपितप्रतीतिनिष्ठावच्छेदकतानिरूपिताऽभावनिष्ठाऽवच्छेदकतानिरूपितविषयित्वनि-

ष्ठाऽवच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेनेति लाघवमस्त्येवेति ।

अथ विशिष्टान्तरतावच्छेदकरूपे स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वं किमिति निवेश्यं किन्तु प्रकृतानुमितिप्रतिबन्धकतायां स्वावच्छिन्नाविषयकयद्रूपावच्छिन्नविषयताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धो योऽभावस्तद्रूपावच्छिन्नविषयताशून्यत्वं दोषज्ञाने निवेश्यतां, तथा सति अनुगमशरीरे लाघवम्, तथा हि प्रकृतानुमितिप्रतिबन्धकताविशिष्टरूपवत्त्वं लक्षणम् । प्रतिबन्धकतावैशिष्ट्यञ्च रूपे स्ववृत्तिर्यः किञ्चिद्रूपावच्छिन्नविषयताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धोऽभावस्तन्निरूपितप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठाऽवच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतावत्त्वसम्बन्धेन । अवच्छेदकतावत्त्वञ्च स्वनिरूपितावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वस्वसमानाधिकरणो यः प्रकृतानुमितिप्रतिबन्धकतावृत्तिकिञ्चिद्रूपावच्छिन्नविषयताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाऽभावीयप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितकिञ्चिद्रूपावच्छिन्नविषयित्वाभावसमानाधिकरणनिश्चयनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयित्वन्नास्तीति प्रतीतिसिद्धोऽभावस्तन्निरूपितप्रतियोगितानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितसमानाधिकरणत्वनिष्ठावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठप्रतियोगितासम्बन्धावच्छिन्नावच्छेदकताकावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेनेति चेन्मैवम् । यादृशस्थलेऽप्रामाण्यज्ञानानास्कन्दितं व्यभिचारज्ञानं नियमेन मेयत्वविशिष्टव्यभिचारविषयकं प्रमेयत्वाविषयकञ्च तज्ज्ञानमप्रामाण्यज्ञानास्कन्दितमेव तत्र प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाविषयकप्रतीतीयव्यभिचारत्वावच्छिन्नविषयताव्यापकत्वस्यानुमि-

तिप्रतिबन्धकतायामसत्त्वात्, तादृशव्यभिचारज्ञानस्य नियमेनाप्रामाण्यज्ञानास्कन्दितत्वेन प्रतिबन्धकताशून्यत्वात्।

स्वमते तु नायन्दोषः व्यभिचारत्वेऽप्रामाण्यज्ञानास्कन्दितज्ञानान्तर्भावेन मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाऽविषयकज्ञानविषयतावच्छेदकत्वसत्त्वादिति दिक्।

अथ यथाश्रुतविशिष्टान्तराघटितत्वलक्षणे ह्रदत्वावच्छेदेन वह्नेः साध्यतायामवच्छेदकावच्छेदेन सामानाधिकरण्येन च वह्न्यभाववद्ध्रदो बाधः तत्र प्रथमेऽव्याप्तिः विशिष्टान्तरं यत्सामानाधिकरण्येन वह्न्यभाववद्ध्रदत्वं तदवच्छिन्ना या अवच्छेदकावच्छेदेन बाधज्ञानीयविषयिता तच्छून्यत्वस्य तत्रासत्त्वादिति चेन्न, दोषघटितदोषेऽव्याप्तिवारणायैव तत्कल्पं परित्यज्य कल्पान्तरानुसरणमेतेनेत्यादिना कृतम्, तथा चाऽस्यापि दोषघटितदोषत्वादिष्टापत्तिरेवेति ध्येयम्।

न चात्रकल्पेऽव्यापकीभूतविषयताशून्यत्वं विशिष्टान्तरतावच्छेदककुक्षौ न निवेश्यं, किन्तु यादृशसमुदायत्ववृत्तिनिरूपकताकविषयताशालिनिश्चयत्वव्यापकप्रतिबन्धकतानिरुक्ततादृशविशिष्टान्तराघटितत्वनिवेशादेव जातित्वेन वह्नित्वाद्यवगाहिव्यभिचारादिविषयकज्ञानवारणसम्भवादिति वाच्यम्। यादृशस्थले बाधान्यव्यभिचारादिनिखिलदोषविषयकविपरीतदोषविषयकज्ञानत्वव्यापकं घटविषयत्वं घटविषयकभिन्नमपि ज्ञानम् तत्र बाधेऽव्याप्तिप्रसङ्गात्, तत्र स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतादृशविशिष्टान्तराऽप्रसिद्धेः। मन्मते व्यभिचारत्वादिकमेव तादृशविशिष्टान्तरमुपादाय लक्षणसमन्वयः। व्यभिचारत्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यसमूहालम्बनज्ञानमादाय विशिष्टान्तरप्रसिद्धिसम्भवादित्यभिप्रायः। प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकमिति ग्रन्थः। अथात्र विशिष्टान्तरविषयतायां स्वरूपसम्बन्धरूपावच्छेदकत्वमेव निवेश्यताङ्किमनतिरिक्तवृत्तित्वनिवेशेन [अर्थात् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकमथ च प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावद्विषयतानिरूपकतावच्छेदकं यद्रूपं तदवच्छिन्नाऽघटितत्वनिवेशेनैव सामञ्जस्ये किमनतिरिक्तवृत्तित्वरूपावच्छेदकत्व-

निवेशेन] न चैवमसम्भवः वह्न्यभाववद्ध्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकह्रदत्वावच्छिन्नविषयतायाः बाधज्ञानीयाया अनुमितिप्रतिबन्धकतावच्छेदकतया तादृशविषयताशून्यत्वस्य बाधज्ञानेऽसत्त्वादिति वाच्यम्। अनतिरिक्तवृत्तित्वनिवेशेऽपि जातित्वादिना वह्नित्वाद्यवगाहिधूमाभाववद्वृत्तिजातिमानित्याकारकव्यभिचारज्ञाने प्रतिबन्धकताविरहेण विशिष्टान्तराऽप्रसिद्ध्याऽसम्भववारणाय विशिष्टान्तरविषयतायामव्यापकीभूतविषयताशून्यत्वन्निवेशनीयम्, तथा च यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयिता प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावती स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतद्रूपावच्छिन्नविषयताशून्यत्वस्य विवक्षणेनासम्भवाभावादिति, बाधाद्येकदेशीयविषयतायां बाधादिज्ञानीयतायामव्यापकीभूतविषयताशून्यज्ञानीयत्वविरहादिति चेन्न। संयोगवज्जलं जलाभावादित्यत्र जलवत्संयोगवज्जलरूपबाधेऽव्याप्त्यापत्तेः। तत्र जलत्वेन घटावगाहिजलवत्संयोगवज्जलमिति बाधज्ञानीयायाः संयोगवज्जलत्वावच्छिन्नविषयितायाः प्रतिबन्धकतावच्छेदकतया तादृशज्ञाने च संयोगवज्जलत्वावच्छिन्नविषयितात्वाव्यापिकायाः कस्या अप्यभावात्, जलवत्संयोगवज्जलत्वावच्छिन्नविषयिताया अव्यापकत्वेऽपि तच्छून्यत्वस्य जलत्वेन घटावगाहितादृशबाधज्ञाने सत्वात्, तथा च संयोगवज्जलत्वावच्छिन्नस्य विशिष्टान्तरतया तदघटितत्वस्य तादृशबाधेऽसत्त्वात्।

एवम्, सयोगः संयोगाभाववान् संयोगाभाववत्पर्वतकालीनधूमादित्यत्र संयोगवत्पर्वतरूपसाधनाऽप्रसिद्धावव्याप्तिश्च, संयोगत्वावच्छिन्नविषयित्वाव्यापकविषयताशून्यसंयोगः संयोगवानिति ज्ञानीयसंयोगत्वावच्छिन्नविषयितायाः प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वात् संयोगवत्संयोगत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकसंयोगत्वावच्छिन्नविषयताशून्यत्वस्य तादृशसाधनाऽप्रसिद्धिविषयकज्ञानेऽसत्त्वात्। न च यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयतास्वावच्छिन्नविषयित्वाऽव्यापिका तद्रूपावच्छिन्नविषयतानिरूपिततद्रूपावच्छिन्नविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयिता तादृशाऽनुमितिप्रतिबन्धकतावच्छेदिका स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतद्रूपावच्छिन्नविषयिताशून्यत्वस्य विवक्षणान्नोक्तदोषः संयोग-

त्वावच्छिन्नविषयित्वाऽव्यापिकायाः संयोगत्वावच्छिन्नविषयितानिरूपितसंयोगत्वा - वच्छिन्नविषयिताया अभावः संयोगः संयोगवानिति ज्ञानेऽसत्त्वात् ।

एवम्, संयोगवज्जलत्वावच्छिन्नविषयित्वाव्यापिकायाः संयोगत्वावच्छिन्न - विषयतानिरूपितसंयोगवज्जलत्वावच्छिन्नविषयताया अभावस्य जलत्वेन घटावगाहि- जलवत्संयोगवज्जलमितिज्ञानेऽसत्त्वाच्चेति वाच्यम् । तथापि गुणो गुणभिन्न इत्यत्र स्वरूपतो गुणत्ववद्गुणरूपबाधेऽव्याप्तिः, गुणत्वावच्छिन्नविषयित्वाव्यापिकायास्तादृ- शविषयितायाः गुणो गुण इति ज्ञानेऽसत्त्वात्, तज्ज्ञानीयगुणत्वावच्छिन्नविषयता- याः प्रतिबन्धकतावच्छेदकत्वात् । एवम्, जलत्वावच्छेदेन जलवज्जलाभावसाधने ज- लवज्जलवज्जलरूपबाधेऽव्याप्तिः, तस्य जलवज्जलघटितत्वात्, जलवज्जलत्वावच्छिन्न- विषयित्वाव्यापकीभूता यद्रूपावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्नविषयिता त- द्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नविषयिताशून्यबाधज्ञानीयजलवज्जल - त्वावच्छिन्नविषयितायास्तादृशानुमितिप्रतिबन्धकतावच्छेदकत्वात् ।

न च यद्रूपावच्छिन्नविषयिता स्वावच्छिन्नविषयित्वाव्यापिका तद्रूपावच्छि- न्नविषयिताशून्यज्ञानीयत्वस्य विवक्षणान्नोक्तदोषः । गुणत्वावच्छिन्नविषयित्वाव्या- पिकायाः गुणत्वद्गुणत्वावच्छिन्नविषयितायाः गुणत्ववद्गुण इति ज्ञाने सत्त्वात् । ए- वम् जलवज्जलत्वावच्छिन्नविषयित्वाव्यापिकायाः जलवज्जलत्वावच्छिन्नविषयिता- याः जलवज्जलवज्जलमिति प्रतिबन्धकज्ञाने सत्त्वाच्चेति वाच्यम् । जलं संयोग- वज्जलाभावादित्यत्र संयोगवज्जलवज्जलरूपबाधेऽव्याप्तिः तस्य संयोगवज्जलवदा - त्मकविशिष्टान्तरघटितत्वात् उक्तबाधज्ञानीयसंयोगवज्जलवत्त्वावच्छिन्नविषयितायाः प्रतिबन्धकतावच्छेदकत्वात्, तादृशविशिष्टविषयिताऽव्यापिका यद्रूपावच्छिन्नविषय- ता तस्याश्च तादृशप्रतिबन्धकज्ञानेऽभावात् ।

न च यद्रूपावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्नविषयता स्वावच्छिन्न- विषयत्वाव्यापिका तद्रूपावच्छिन्नविषयतानिरूपिततद्रूपावच्छिन्नविषयताशून्यत्वं विवक्षणीयम्, तथा च संयोगवज्जलवत्त्वावच्छिन्नविषयित्वाऽव्यापकीभूतायाः जल-

वत्त्वावच्छिन्नविषयतानिरूपितसंयोगवज्जलत्वावच्छिन्नविषयतायाः उक्तप्रतिबन्धकज्ञाने सत्त्वेन तच्छून्यसंयोगवज्जलवदिति ज्ञानीयतद्विषयतायाः प्रतिबन्धकतानवच्छेदकतया नाव्याप्तिरिति वाच्यम्। तथापि स्वरूपं स्वरूपवद्भेदत्ववदित्यत्र स्वरूपवद्भेदत्ववद्भेदत्ववत्स्वरूपात्मकबाधेऽव्याप्तिः स्वरूपवद्भेदत्ववद्भेदवत्त्वावच्छिन्न-विषयित्वाव्यापकीभूता यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयता तच्छून्यतादृशबाधज्ञानीयस्वरूपवद्भेदत्ववद्भेवत्त्वावच्छिन्नविषयितायाः प्रतिबन्धकतावच्छेदकत्वात् तादृशबाधस्य तद्घटितत्वात्। न च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद्रूपावच्छिन्नविषयतासामान्यं प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत् तद्रूपावच्छिन्नाघटितत्वं विवक्षणीयम्, तथाप्यनतिरिक्तवृत्तित्वपक्षीयनिवेशस्याप्रामाण्यज्ञानानास्कन्दितत्वसंशयान्यत्वाद्यनिवेशेन लाघवात्, तथा च न प्रागुक्तदोषाणामवकाश इति वाच्यम्। ह्रदो वह्निमान् जलादित्यत्र वह्न्यभाववद्ध्रदरूपबाधेऽव्याप्तेः, अभाववान् वह्न्यभाववान् अभाववान् ह्रद इति ज्ञानस्य ह्रदो वह्निमानित्यनुमितिप्रतिबन्धकतया समानाकारकज्ञानीयविषयताया ऐक्येनाभाववद्ध्रदत्वावच्छिन्नविषयतासामान्यस्य तादृशानुमितिप्रतिबन्धकतावच्छेदकतया अभाववद्ध्रदत्वावच्छिन्नत्वस्य तादृशविशिष्टान्तरतया बाधे तदघटितत्वाभावात्। अनतिरिक्तवृत्तित्वनिवेशे तु, अभाववद्ध्रदत्वावच्छिन्नविषयतायाः अभाववान् वह्न्यभाववानिति ज्ञानाऽसमानकालीनज्ञानेऽपि सत्त्वेन प्रतिबन्धकतातिरिक्तवृत्तित्वात्।

न च यद्रूपावच्छिन्नविषयतासामान्यं ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतावच्छेदकं तद्रूपावच्छिन्नाऽघटितत्वस्य विवक्षणान्नायं दोष इति वाच्यम्। तथा सति मेयत्वविशिष्टाऽसाधारण्येऽतिव्याप्तेः, मेयत्वविशिष्टाऽसाधारण्यघटकतावच्छेदकशुद्धाऽसाधारण्यविषयतासामान्यस्य ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वेन शुद्धासाधारण्यस्य विशिष्टान्तरत्वाऽसम्भवात्।

न च यद्रूपावच्छिन्नविषयितासामान्यं ज्ञानवैशिष्ट्यावच्छिन्नत्वासाधारण्यविषयकत्वानवच्छिन्नत्वोभयाभाववत् प्रतिबन्धकतावच्छेकं तदवच्छिन्नाऽघटितत्वं वि-

वक्षणीयम् । तथा चासाधारण्यनिश्चयप्रतिबन्धकतायामसाधारण्यविषयकत्वानवच्छिन्नत्वाभावेनोभयाभावसत्त्वेनाऽसाधारण्यस्य विशिष्टान्तरत्वसम्भवेन मेयत्वविशिष्टाऽसाधारण्ये नातिव्याप्तिः ।

न वा बाधेऽव्याप्तिः, उक्तरीत्याऽभाववद्ध्रदविषयकनिश्चयप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वासाधारण्यविषयकत्वानवच्छिन्नत्वोभयस्यैव सत्त्वेनाऽभाववद्ध्रदत्वस्य विशिष्टान्तरत्वाऽसम्भवादिति वाच्यम् । तथापि गगनाभाववद्गगनाभाववदभाववत्कालीनघटात्मकबाधविषयतासामान्यस्य प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायामेवावच्छेदकतया तत्प्रतिबन्धकतायामुक्तोभयसत्त्वेनोभयाभाववत्प्रतिबन्धकतावच्छेदकत्वस्य दोषान्तरविषयतायामेव सत्त्वेन तदघटितत्वस्य मेयत्वविशिष्टबाधेऽक्षतत्वात् । न च यद्रूपावच्छिन्नविषयतासामान्यं ज्ञानवैशिष्ट्यावच्छिन्नत्वाऽसाधारण्यविषयत्वानवच्छिन्नत्वप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टविषयत्वाऽनवच्छिन्नत्वैतत्त्रितयाभाववत्प्रकृतानुमितिप्रतिबन्धकतावच्छेदकं तद्रूपावच्छिन्नाऽघटितत्वं विवक्षणीयम् । विषयतायां प्रतिबन्धकतावैशिष्ट्यं स्वावच्छेदकत्वस्वनिरूपितप्रतिबध्यतावच्छेदकविषयिताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वोभयसम्बन्धेन । तथा च तादृशबाधनिश्चयप्रतिबन्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्वाऽसाधारण्यविषयकत्वानवच्छिन्नत्वोभयसत्त्वेऽपि प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टायागगनाभाववत्तादृशघटविषयिता तदनवच्छिन्नत्वविरहप्रयुक्तत्रितयाभावस्य बाधप्रतिबन्धकतायां सत्त्वेन शुद्धतादृशबाधस्य विशिष्टान्तरत्वसम्भवेन मेयत्वविशिष्टतादृशबाधे नातिव्याप्तिः । तादृशविषयितायां तादृशप्रतिबन्धकतावैशिष्ट्यमपि तत्र तादृशप्रतिबन्धकतावच्छेदकत्वस्य तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकगगनाभाववदभाववत्कालीनघटत्वावच्छिन्नविशेष्यतानिरूपितगगनत्वावच्छिन्नप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतावच्छेदकत्वस्य च सत्त्वादिति वाच्यम् । वह्न्यभाववद्वह्न्यभावव्याप्यवत्कालीन ह्रदो वह्निमानित्यत्र मेयत्वविशिष्टसत्प्रतिपक्षेऽतिव्याप्त्यापत्तेः, वह्न्यभावव्याप्यवत्तादृशह्रदात्मकसत्प्रतिपक्षज्ञानस्य ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया तत्प्रतिबन्धकतायां ज्ञानवैशिष्ट्याव-

च्छिन्नत्वाऽसाधारण्यविषयत्वानवच्छिन्नत्वतादृशप्रतिबन्धकताविशिष्टविषयित्वानव - च्छिन्नत्वैस्त्रितयस्यैव सत्त्वेनैतत्त्रितयाभाववत्प्रतिबन्धकतावच्छेदकविषयितासामान्य-कदोषान्तराऽघटितत्वात् । यदि च प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रति बन्धकतावच्छेदकपक्षविशेष्यतानिरूपितप्रकारतावच्छेदकधर्मावच्छिन्नविधेयताशाल्य - नुमितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयित्वानवच्छिन्नत्वप्रागुक्तत्रित - यैतच्चतुष्टयाभाववत्प्रकृतानुमितिप्रतिबन्धकतावच्छेदकं यद्रूपावच्छिन्नविषयतासामा-न्यं स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतद्रूपावच्छिन्नाऽघटितत्वनिवेशेन ता-दृशातिव्याप्तिर्वार्यते तदाऽनतिरिक्तवृत्तित्वनिवेशापेक्षया न किमपि लाघवं पश्याम इति ।

वस्तुतः अत्र निरवच्छिन्नस्वरूपेण वह्न्यभाववद्ध्रदस्य बाधत्वनयेऽव्याप्य-वृत्तित्वज्ञानस्योत्तेजकत्वेन शुद्धस्वरूपेण वह्न्यभाववद्ध्रदस्यापि विशिष्टान्तरतास-म्भवेन तदघटितत्वस्योक्तबाधेऽभावादव्याप्तिरयादतोऽनतिरिक्तवृत्तित्वनिवेशः । तथा च तादृशविषयित्वस्याऽव्याप्यवृत्तित्वज्ञानास्कन्दितज्ञानसाधारणतया प्रतिबन्धकतान-वच्छेदकत्वात् । तन्मते चाव्याप्यवृत्तित्वज्ञानस्योत्तेजकता नास्त्येवेति विभावनी-यम् ।

## गादाधरी

अथ धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ बाधादेर्व्यभिचारादि-घटिततया तत्राव्याप्तिः । न च यद्रूपावच्छिन्नविषयकत्वं स्वावच्छिन्नविषयकत्वाव-च्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं तादृशरूपान्तरावच्छिन्नाघटितत्वस्य विवक्षित-त्वान्न दोषः । व्यभिचारस्य उक्तबाधविषयकत्वान्यूनवृत्तिव्याप्तिज्ञानप्रतिबन्धकता-वच्छेदकविषयताकत्वेऽपि तादृशबाधविषयकत्वाऽन्यूनवृत्तिप्रतिबन्धकतासामान्यान्तर्ग-तानुमितिप्रतिबन्धकतावच्छेदकविषयिताकत्वविरहेण तादृशघटितत्वस्याकिञ्चित्कर-त्वादिति वाच्यम् ।

[ न च यद्रूपावच्छिन्नविषयकत्वं स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्ध-

कतासामान्यावच्छेदकं तादृशरूपान्तराघटितत्वस्य विवक्षितत्वान्न दोषः। व्यभिचारस्य उक्तबाधविषयकत्वान्न्यूनवृत्तिव्याप्तिज्ञानप्रतिबन्धकतावच्छेदकविषयिताकत्वविरहेण तादृशघटितत्वस्याकिञ्चित्करत्वादिति वाच्यम् ]

व्यभिचारत्वादिविशिष्टविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकस्य तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकस्याऽप्रसिद्ध्याऽसम्भवात्, व्यभिचारत्वमेयत्वविशिष्टव्यभिचारत्वादेरेवं तथाविधविषयतानिरूपकतावच्छेदकत्वात्, तस्य च व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वाभावात् ।

## विमलप्रभा

मेयत्वविशिष्टव्यभिचारेऽतिप्रसङ्गभङ्गाय विशिष्टान्तराऽघटितत्वविशेषणदाने सति व्यभिचारघटितबाधेऽव्याप्तिमाशङ्कते अथेत्यादिना । बाधादेः = धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपबाधादेः । बाधादेरित्यत्रादिपदेन तादृशसत्प्रतिपक्षसंग्रहः । व्यभिचारादिघटिततया = धूमाभाववद्वृत्तिवह्निरूपव्यभिचारघटिततया । तत्र = धूमाभाववद्धूमव्यभिचारादिवह्निमद्रूपबाधे । अव्याप्तिः = विशिष्टान्तराऽघटितत्वविशेषणविशिष्टप्रकृतहेत्वाभासलक्षणागमनप्रसङ्गः । न चेत्यस्य वाच्यमित्यनेनान्वयः । स्वं = लक्ष्यतावच्छेदकम् । तादृशरूपान्तरावच्छिन्नाघटितत्वस्य = स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकप्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकरूपावच्छिन्नाघटितत्वस्य । न दोषः = न व्यभिचारघटितबाधेऽव्याप्तिः । व्यभिचारस्य = धूमाभाववद्वृत्तिवह्निरूपव्यभिचारस्य । उक्तबाधः = धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपबाधः । अन्यूनवृत्तिः = व्यापिका । विषयिताकत्वेऽपि = विषयितानिरूपकत्वेऽपि । तादृशप्रतिबन्धकता = निरुक्तबाधविषयकत्वावच्छिन्नप्रतिबन्धकता । अनुमितिप्रतिबन्धकतावच्छेदकविषयताकत्वविरहेण = अनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकत्वाभावेन । तादृशघटितत्वस्य = व्यभिचारघटितत्वस्य । अकिञ्चित्करत्वात् = अप्रयोजकत्वात् । स्वं = लक्ष्यतावच्छेदकीभूतो धर्मः । तादृशरूपान्त-

राघटितत्वस्य = तादृशयद्रूपात्मकं यत् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकस्वरूपं रूपान्तरं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वरूपविशिष्टान्तराऽघटितत्वस्य । व्यभिचारस्य = व्यभिचारत्वावच्छिन्नस्य । उक्तबाधः = व्यभिचारघटितबाधः । तादृशघटितत्वस्य = धूमव्यभिचारिवह्न्यादिघटितत्वस्य । तदवच्छिन्नाविषयकप्रतीतिः = व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिः । मेयत्वविशिष्टव्यभिचारत्वादेरेवेत्यत्र वकारेण विपरीतव्यभिचारत्वादेर्व्यवच्छेदः । तथाविधविषयिता = स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयता । तस्य = व्यभिचारत्वस्य मेयत्वविशिष्टव्यभिचारत्वस्य च । अयमर्थः । मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिवारणाय यदि विशिष्टान्तराऽघटितत्वविशेषणन्दीयते तदा धूमव्यभिचारिर्वह्निमत्पक्षकधूमसाध्यकवह्निहेतुकधूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपव्यभिचारघटितबाधेऽव्याप्तिर्दुर्वारैव, तथा हि धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वरूपव्यभिचारघटितबाधत्वावच्छिन्नाऽविषयकप्रतीतिः धूमाभाववद्वृत्तिवह्निरूपव्यभिचारविषयकप्रतीतिस्तद्विषयतावच्छेदकमथ च प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकं यत् धूमाभाववद्वृत्तित्वरूपव्यभिचारत्वं तदवच्छिन्नाविषयकप्रतीतिर्न व्यभिचारघटिबाधविषयकप्रतीतिः किन्त्वन्यविषयक एव प्रतीतिरिति तादृशप्रतीतिविषयतावच्छेदकधर्मावच्छिन्नत्वस्य व्यभिचारघटितबाधे विरहेण लक्षणागमनात् ।

न च ह्रदे वह्न्यभावः ह्रदो वह्न्यभाववानिति निश्चययोः एकरूपेण प्रतिबन्धकत्वमिति प्राचीनमतानुसारेण स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकीभूतो यः स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदको धर्मस्तद्धर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्स्वं तद्वत्त्वरूपलक्षणकरणे व्यभिचारघटितबाधे दोषवारणसम्भवात्, तथा हि धूमाभाववद्वृत्तिवह्नित्वरूपशुद्धव्यभिचारत्वे धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वरूपव्यभिचारघटितबाधत्वावच्छिन्नाविषयकशुद्धव्यभिचारविषयकप्रतीतिविषयतावच्छेदकत्वसत्त्वेऽपि तादृशव्यभिचारघटितबाधत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गताऽनुमितिप्रतिबन्धकतावच्छेदकतायाः व्यभिचारत्वावच्छिन्नविषयतायामभावात् [ अर्थात् व्यभिचारघटितबाध-

त्वावच्छिन्नविषयकत्वावच्छिन्ना या प्रतिबन्धकता सा च द्विधा एका व्याप्तिज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपिता, अपरा चानुमितित्वावच्छिन्नप्रतिबध्यतानिरूपिता तत्र व्याप्तिज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकतायाः व्यभिचारत्वावच्छिन्नविषयतायां [ सत्त्वेऽपि प्रतिबन्धकतासामान्यान्तर्गतानुमितिप्रतिबन्धकतावच्छेदकत्वस्य तत्राऽभावेन] तादृशरूपपदेन तस्य धर्तुमशक्यत्वात्, धूमव्यभिचारिवह्निमद्वृत्तिधूमाभाववत्त्वादिरूपविपरीततादृशबाधत्वमेव तादृशं रूपं तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य व्यभिचारघटितबाधत्वे सत्त्वेन तद्वत्त्वस्य तादृशबाधे सत्त्वात् लक्षसङ्गतिः।

एवम् ह्रदो वह्निमान् जलादित्यादौ वह्न्यभाववद्ह्रदादिरूपबाधादावपि लक्षणसमन्वयः, तथा हि वह्न्यभाववद्ध्रदत्वाद्यवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयतानिरूपकतावच्छेदकमथ च वह्न्यभाववद्ध्रदत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् ह्रदवृत्तिवह्न्यभावत्वादिकं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य वह्न्यभाववद्ध्रदादौ सत्त्वात्। मेयत्वविशिष्टव्यभिचारे च मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयतानिरूपकतावच्छेदकमथ च मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् शुद्धव्यभिचारत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य मेयत्वविशिष्टव्यभिचारत्वेऽसत्त्वादतिव्याप्तिवारणमिति वाच्यम्। एवं सत्यसम्भवप्रसङ्गः, व्यभिचारत्वाद्यवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयतानिरूपकतावच्छेदकत्वस्य व्यभिचारत्वादौ प्रसिद्धत्वेऽपि तत्र व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वविरहात्। यत्र च बाधत्वादौ व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वं तत्र च व्यभिचारत्वाद्यवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयतानिरूपकतावच्छेदकत्वमेव नास्तीति विशिष्टाऽन्तराऽप्रसिद्ध्या तदघटितत्वस्य सुतरामप्रसिद्धत्वान्नेदं लक्षणं समीचीनमिति भावः।

## बलदेवी

न च स्वावच्छिन्नविषयकत्वं स्वावच्छिन्नविषयकत्वावच्छिन्नप्र-

तिबन्धकतासामान्यावच्छेदकं तादृशरूपान्तराघटितत्वस्य विवक्षितत्वादि-ति भट्टाचार्यः ।

अत्र ह्रदो वह्न्यभाववान् ह्रदे वह्न्यभाव इति ज्ञानयोरेकरूपेण प्रतिबन्धकत्वमङ्गीकृत्येदं लक्षणम् । प्रतिबध्यप्रतिबन्धकभावश्च, वह्नित्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्नं प्रति स्वरूपसम्बन्धावच्छिन्नवह्न्यभावत्वावच्छिन्नविषयतानिरूपिताऽऽधेयतासम्बन्धातिरिक्तसम्बन्धानवच्छिन्नह्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वेन प्रतिबन्धकतेति ।

यद्वा स्वरूपत्वावच्छिन्नावच्छेदकत्वेतरसंसर्गनिष्ठावच्छेदकत्वानिरूपकवह्न्यभावत्वावच्छिन्नविषयतानिरूपितसांसर्गिकविषयतानिरूपिताधेयत्वावच्छिन्नावच्छेदकत्वेतरसांसर्गिकावच्छेदकत्वानिरूपकह्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वेनेति ।

एवञ्च वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयतानिरूपकतावच्छेदकं वह्न्यभाववद्ध्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् ह्रदवृत्तिवह्न्यभावत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य वह्न्यभाववद्ध्रदत्वे सत्त्वात् लक्षणसङ्गतिः ।

व्यभिचारघटितबाधत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयतानिरूपकतावच्छेदकं तादृशं रूपं न शुद्धव्यभिचारत्वं तादृशविषयत्वस्य तादृशप्रतिबन्धकतासामान्यान्तर्गतबाधप्रतिबन्धकताशून्यव्यभिचारमात्रनिश्चये सत्त्वात्, किन्तु विपरीततादृशबाधत्वमेवेति न तत्राऽव्याप्तिरिति कथमसम्भवाभिधानमिति कश्चित्, तन्न तथा सति अयोगोलकं धूमवद्वह्नेरित्यादौ बाधविशिष्टव्यभिचारेऽतिव्याप्तिस्स्यात्, बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं न शुद्धव्यभिचारविषयकत्वं न वा बाधविषयकत्वं किन्तु व्यभिचारविशिष्टबाधविषयकत्वमेवेति व्यभिचारविशिष्टबाधत्वस्य विशिष्टान्तरतासम्भवेन तदघटितत्वस्य तत्र सत्त्वात् । अतः स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वरूपमेव विशिष्टान्तरत्वं वाच्य-

म्। तथा च विपरीतबाधत्वादिकं न विशिष्टान्तरतावच्छेदकमित्यसम्भवाभिधानं युक्तियुक्तमेवेति। एतेनैकरूपेण प्रतिबन्धकत्वाऽनङ्गीकारेऽपि सर्वं गगनवदित्यत्र गगनाभाववद्घटादिरूपबाधे लक्षणसमन्वयः, तादृशबाधविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकगगनाभाववत्पटत्वावच्छिन्नविषयतानिरूपकतावच्छेदकं तादृशपटत्वादिकं स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकश्च तदवच्छिन्नाऽघटितत्वस्य तत्र सत्त्वादित्यसम्भवाभिधानमसङ्गतमित्यपास्तम्। बाधविशिष्टव्यभिचारेऽतिव्याप्तिवारणाय स्वावच्छिन्नविषयित्वाऽव्यापकविषयताशून्यत्वविवक्षाया आवश्यकतया गगनाभाववत्पटत्वादेर्विशिष्टान्तरतावच्छेदकत्वासम्भवादिति। यत्तु यद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयताव्यापकप्रकृतानुमितिप्रतिबन्धकतासामान्यावच्छेदकविषयतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यत् [मेयत्वविशिष्टदोषतावच्छेदकगतसमुदायत्वं] तद्रूपवृत्तिनिरूपकताकविषयिताशून्यज्ञानावृत्तिविषयतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकम''धिकवारकपर्याप्तिमनिवेश्य'' तद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयिताशून्यज्ञानीयविषयतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्रूपं तद्रूपविशिष्टवत्त्वं लक्षणम्, सर्वत्र दोषतावच्छेदकगतसमुदायत्वमादाय लक्षणं सङ्गमनीयम्।

तत्र विशिष्टान्तरं मेयत्वविशिष्टव्यभिचारादिकं तद्घटकसमुदायगतसमुदायत्वस्य व्यभिचारत्वगतसमुदायत्ववृत्तिनिरूपकताकशुद्धव्यभिचारविषयिताशून्यमेयत्वविशिष्टो व्यभिचार इति ज्ञानीयविषयितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिताकवच्छेदकत्वात्, यद्रूपपदेन मेयत्वविशिष्टव्यभिचारत्वगतसमुदायत्वमुपादाय विशिष्टान्तररूपं शुद्धव्यभिचारत्वगतसमुदायत्वमपीति तदवच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयताशून्यत्वस्य मेयत्वविशिष्टव्यभिचारविषयकप्रतीतावभावान्नातिव्याप्तिः। तत्राधिकवारकपर्याप्त्यनिवेशादिति कथमसम्भव इति तन्न, तथापि बाधविशिष्टव्यभिचारादावतिव्याप्तिवारणाय विशिष्टान्तरताघटकप्रतीतौ यद्रूपवृत्तिनिरूपकताकविषयित्वाव्यापकविषयिताशून्यत्वस्य निवेशनीयतया तादृशविशिष्टान्तरस्याऽप्रसिद्ध्याऽसम्भवस्य दुःपरिहरत्वात्।

यदपि स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं यद्रूपावच्छिन्नविषयकत्वमित्यस्य स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतात्वव्यापकं यद्रूपावच्छिन्नविषयिताव्यापकत्वमित्यर्थः। तथा च बाधविपरीतबाधयोरेकरूपेण प्रतिबन्धकत्वाभावेऽपि लक्षणसमन्वयः सम्भवति। तथा हि स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतायां विशिष्टान्तरत्वेनाभिमतविशिष्टविषयिताव्यापकत्वं न स्वरूपसम्बन्धेन, किन्तु स्वनिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्त्वसम्बन्धेन। एवञ्च ह्रदे वह्न्यभावः ह्रदो वह्न्यभाववानिति निश्चययोरेकरूपेण प्रतिबन्धकत्वाभावेऽपि एकधर्मावच्छिन्नम्प्रत्येव प्रतिबन्धकतया ह्रदवृत्तिवह्न्यभावत्वावच्छिन्नविषयकनिश्चये सर्वत्र वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतायाः सत्त्वेन तस्य विशिष्टान्तरत्वसम्भवात् तदघटितत्वस्य बाधे सत्त्वात्। एवं सर्वं गगनवदित्यत्रापि गगनाभाववद्घटत्वाद्यवच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतात्वव्यापकत्वस्य गगनाभाववत्पटत्वावच्छिन्नविषयिताव्यापकत्वे सत्त्वेन तत्रापि लक्षणसंगतिः। एवं व्यभिचारघटितबाधे च नाव्याप्तिः, तादृशबाधत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकताया उक्तसम्बन्धेन शुद्धव्यभिचारविषयकनिश्चयेऽभावेन तद्विषयिताव्यापकत्वे तादृशप्रतिबन्धकतात्वाभावेन शुद्धव्यभिचारस्य विशिष्टान्तरत्वाभावात् विपरीतव्यभिचारघटितबाध एव तादृशविशिष्टान्तरमिति तदघटितत्वस्य तत्र सत्त्वादिति, तदपि न, बाधविशिष्टव्यभिचारेऽतिव्याप्तिरतो विशिष्टान्तरघटकप्रतीतौ यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वं निवेश्यं तथा चासम्भवो दुर्वार एवेति भाव्यम्। अत्र प्रथमस्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशेऽसम्भवः वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितायाः वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गता या पक्षे साध्यवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपिता प्रतिबन्धकता एवं पक्षे हेतुवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितावच्छेदकधर्मदर्शनप्रतिबन्धकता च तदुभयनिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत्त्वेन तादृशविषयतानिरूपकतावच्छेदकस्य वह्न्यभाववद्ध्रदत्वस्यैव प्रसिद्धत्वात्।

उत्तरत्रैतावन्निवेशे व्यभिचारघटितबाधस्थले तादृशबाधविषयताव्यापकवि-

शिष्टबाधप्रतिबन्धकताशुद्धव्यभिचारप्रतिबन्धकता च तदुभयावच्छेदकत्वं स्वरूपसम्बन्धरूपं न बाधविषयतायाः तस्याः शुद्धव्यभिचारविषयकनिश्चयप्रतिबन्धकतायामनवच्छेदकत्वात्, व्यभिचारविषयतायास्तदुभयावच्छेदकत्वेऽपि स्वरूपसम्बन्धरूपतन्निवेशे बाधादिज्ञानीयैकदेशविषयतामादायासम्भववारणाय यद्विषयतासामान्यस्यैव तादृशावच्छेदकताया वक्तव्यतया जातित्वादिना वह्नित्वाद्यवगाहिज्ञानीयव्यभिचारादिविषयितायास्तत्सामान्यान्तर्गतायास्तदवच्छेदकत्वाभावेनाऽप्रसिद्धिभिया यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयतासामान्यस्य विवक्षणीयतया :व्यभिचारत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयव्यभिचार-विषयिताया बाधप्रतिबन्धकतायामनवच्छेदकत्वात् तदप्रसिद्धिरिति ।

उभयत्र तन्निवेशे तु बाधादिविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकतदविषयकप्रतीतिविषयतावच्छेदकरूपाऽप्रसिद्धिरतोऽन-तिरिक्तवृत्तित्वमेवोभयत्र निविष्टम् । तथा च विपरीतबाधत्वादिकमेव तादृशं प्रसिद्धमिति ध्येयम् ।

व्यभिचारत्वादिरूपस्यावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयतानिरूपकतावच्छेदकस्य तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकस्याऽप्रसिद्ध्येत्यादि गदाधरः ।

नन्वत्र स्वावच्छिन्नविषयकत्वावच्छिन्नाः यावत्यः प्रकृतानुमितित्वव्यापकप्रतिवध्यतानिरूपितप्रतिबन्धकतास्तत्प्रत्येकं यद्रूपावच्छिन्नघटकनिरूपितविषयिताव्यापिकास्तद्रूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वमेवोच्यतां तावतैवाऽसम्भववारणसम्भवात्, घटकतावच्छेदकत्वञ्च, तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वम् ।

व्यापकता च स्वावच्छेदकत्वसम्बन्धेन । तथा च वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वावच्छिन्नाः यावत्यः प्रतिबन्धकताः तत्प्रत्येकं केवलबाधप्रतिबन्धकतैव तदनतिरिक्तवृत्तिमेयत्वविशिष्टबाधादिविषयकत्वमिति नाऽप्रसिद्धिः ।

एवञ्च मेयत्वविशिष्टव्यभिचारादिनिश्चयप्रतिबन्धकतायां मेयत्वविशिष्टव्यभि-

चारत्वादिरूपयद्रूपघटकशुद्धव्यभिचारादिविषयितात्वव्यापकत्वसत्त्वात व्यभिचारे तदघटितत्वसत्त्वेन लक्षणसङ्गतिः ।

मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयिताव्यापकव्याप्तिज्ञाननिरूपितप्रतिबन्धकतायां मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नघटकशुद्धव्यभिचारविषयितात्वव्यापकत्वसत्त्वेन यद्रूपपदेन मेयत्वविशिष्टव्यभिचारत्वस्य धर्तुं शक्यतया स्वस्य स्वाऽघटितत्वाभावान्नातिव्याप्तिः ।

एवं व्यभिचारघटितबाधेऽपि नाऽव्याप्तिः, तादृशबाधत्वावच्छिन्नविषयित्वावच्छिन्नयावत्प्रतिबन्धकतान्तर्गता बाधप्रतिबन्धकता व्यभिचारप्रतिबन्धकता च तत्प्रत्येकं तादृशबाधघटकव्यभिचारविषयिताव्यापकत्वं नास्ति तादृशबाधविषयिताव्यापकत्वस्य सत्त्वेऽपि न तस्य तादृशबाधघटकत्वं किन्तु मेयत्वविशिष्टतादृशबाधघटकतद्विषयिताव्यापकत्वमेवेति तस्य तदघटितत्वात् ।

एवम् बाधविशिष्टव्यभिचारादौ नातिव्याप्तिः, तादृशव्यभिचारविषयिताव्यापकयावत्प्रतिबन्धकतान्तर्गता बाधप्रतिबन्धकता व्यभिचारप्रतिबन्धकता च, तत्प्रत्येकं बाधविशिष्टव्यभिचारघटकशुद्धबाधशुद्धव्यभिचारविषयितात्वव्यापकत्वसत्त्वात् ।

एवञ्च सति विशिष्टद्वयाघटितत्वमपि न निवेशनीयम्, वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयिताव्यापिका प्रकृतानुमितिप्रतिबन्धकता ज्ञानवैशिष्ट्यावच्छिन्नैव, तत्र च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वरूपोक्त-विशिष्टद्वयघटकतावद्वह्न्यभाववज्जलवद्ध्रदविषयितात्वव्यापकत्वस्य सत्त्वेन स्वस्य स्वाऽघटितत्वाभावेन तादृशविशिष्टेऽतिव्याप्तिविरहात् । एवमपि स्वरूपसम्बन्धरूपावच्छेदकत्वसम्बन्धेन प्रतिबन्धकतायां व्यापकत्वमपि विवक्षणीयम् तेन रूपवन्नीलरूपवदित्यादौ नीलरूपाभाववन्नीले नातिव्याप्तिः, तत्र नीलरूपाभाववन्नीलत्वविशिष्टविषयकत्वव्यापकप्रकृतानुमितिप्रतिबन्धकता नीलरूपाभाववन्नीलत्वविशिष्टविषयकनिश्चयवैशिष्ट्यावच्छिन्ननीलत्ववद्रूपावच्छिन्नविषयकनिश्चयप्रतिबन्धकतैव, तत्र नीलरूपाभाववन्नीलत्वविशिष्टघटकनीलत्ववद्रूपत्वविशिष्टविषयताव्यापकत्वस्य सत्त्वात् स्वस्य च स्वाघटितत्वाभावात् । अनुगमस्तु, पदार्थविशिष्टपदार्थवत्त्वम्, वैशिष्ट्यम्

स्वतादात्म्यस्वावच्छिन्नविषयकत्वव्यापकप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपित - प्रतिबन्धकतात्वव्यापकरूपावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धेन । रूपे प्रतिबन्धकताव्यापकता च, स्वविशिष्टरूपवत्त्वसम्बन्धेन, रूपे स्ववैशिष्ट्यञ्च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्वावच्छिन्नविषयित्वाव्यापकविषयिताशू - न्यज्ञानीयविषयितानिरूपकतावच्छेदकत्वोभयसम्बन्धेन । तादृशरूपवत्त्वञ्च, स्वावच्छिन्नविषयिताव्यापकत्वसम्बन्धेनेति ।

न चैवं गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र बाधेऽव्याप्तिः, गगनाभाववत्तादृशघटत्वात्मकबाधतावच्छेदकरूपे स्वतादात्म्यसत्त्वेऽपि द्वितीयसम्बन्धाभावात्, तथा हि तादृशबाधविषयित्वाव्यापकप्रकृतानुमितिप्रतिबन्धकताज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतैव तत्र च तादृशघटत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतदवच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकाऽभाववत्तादृशघटत्वावच्छिन्नविषयितात्वव्यापकत्वस्य सत्त्वात् स्वस्य च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वाभावात् ।

एवम् प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षस्य लक्ष्यत्वे तत्राऽव्याप्तिः, तत्र तादृशसत्प्रतिपक्षनिश्चयप्रतिबन्धकतायां तादृशसत्प्रतिपक्षघटकप्रतिहेतुव्यापकसाध्याभावविषयितात्वव्यापकत्वस्य सत्त्वादिति वाच्यम् । स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतात्वव्यापकरूपावच्छिन्नाऽविषयकप्रतीतिविषय - तावच्छेदकत्वस्वावच्छिन्नविषयकत्वावच्छिन्नतादृशप्रतिबन्धकताविशिष्टविषयितानिरूपकताऽनवच्छेदकत्वस्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयतावच्छेदकधर्माव - च्छिन्नविधेयताशाल्यनुमितित्वावच्छिन्नकार्यतानिरूपितकारणताविशिष्टविषयितानिरूपकतानवच्छेदकत्वैतत्त्रितयाभावस्वतादात्म्योभयसम्बन्धेन पदार्थवैशिष्ट्यस्य विवक्षणीयत्वात्, विषयितायां प्रतिबन्धकतावैशिष्ट्यञ्च स्वविशिष्टविषयितावदन्यत्वस्वनिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वोभयसम्बन्धेनेति । अत्र प्रथमसम्बन्धघटकविषयितायां स्ववैशिष्ट्यञ्च स्वनिरू-

पितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वसम्बन्धेन। तत्सम्बन्धघटकविषयितावत्त्वञ्च, स्वव्याप्यत्वस्वव्यापकत्वोभयसम्बन्धेन, विषयितायां कारणतावैशिष्ट्यञ्च स्वावच्छेदकत्वस्वविशिष्टविषयितावदन्यत्वोभयसम्बन्धेन, विषयितायां स्ववैशिष्ट्यञ्च अवच्छेदकतासम्बन्धेन, विषयितावत्त्वञ्च, स्वव्याप्यत्वस्वाऽव्यापकत्वोभयसम्बन्धेन। अत्र विषयितायां प्रतिबन्धकतावैशिष्ट्यघटकतया स्वविशिष्टविषयितावदन्यत्वविवक्षणात् ह्रदो वह्निमानित्यादौ वह्न्यभाववद्वह्न्यभाववद्ध्रदे नातिव्याप्तिः, अन्यथा तादृशह्रदत्वे स्वतादात्म्यस्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकह्रदो वह्निमानिति निचयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयितानिरूपकतावच्छेदकत्वप्रयुक्तत्रितयाभावस्य च सत्त्वेनाऽतिव्याप्तेः। तन्निवेशे च तादृशप्रतिबन्धकताविशिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताव्याप्यत्वस्य तदव्यापकत्वस्य च सत्त्वेन तादृशविषयिताविशिष्टान्यत्वाभावान्नातिव्याप्तिः।

एवम् विषयितायां कारणतावैशिष्ट्यघटकतया तादृशसम्बन्धनिवेशात् तत्रैव वह्न्यभावव्याप्यवद्वह्न्यभावव्याप्यवद्ध्रदे नातिप्रसङ्गः।

असाधारण्यविषयिताव्यापकत्वस्य प्रकृतानुमितिप्रतिबन्धकतायामसत्त्वादसाधारणतावच्छेदकस्य स्वपदेन धर्त्तुमशक्यतया तादात्म्यघटितोभयसम्बन्धेन कस्यापि पदार्थस्य तादृशदोषतावच्छेदकेऽभावादिति वाच्यम्। द्वितीयसम्बन्धघटकप्रतिबन्धकतायां पक्षधर्मिकहेतुमत्ताज्ञानाऽकालीनत्वाऽसाधारण्यविषयिताशालित्वोभयाभाववत्स्वावच्छिन्नविषयिताशालिनिश्चयत्वव्यापकत्वस्य विवक्षणात्। तथा च निश्चयत्वव्यापकप्रतिबन्धकतात्वव्यापकरूपं मेयत्वविशिष्टवह्निव्यापकीभूताभावप्रतियोगिजलवद्ध्रदत्वं तदघटकाऽसासारण्यत्वावच्छिन्नविषयितामात्रे तादृशप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वस्य सत्त्वात् तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वसत्त्वात् लक्षणसमन्वयः। न चैवमप्यभावो गगनत्ववानाधेयत्वादित्यादौ हेतुघटिताऽसाधारण्येऽव्याप्तिः, तत्र तादृशाऽसाधारण्यविषयित्वावच्छिन्नप्रतिबन्धकतात्वव्यापकत्वस्य तादृशाऽसाधारण्यतावच्छेदके सत्त्वात्, [ तादृशधर्मघटकतदवच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकाऽन्ये-

यत्ववदभावत्वावच्छिन्नविषयतासामान्ये ताद्दशप्रतिबन्धकतावच्छेदकत्वस्य सत्त्वात् ] स्वस्य स्वावच्छिन्नाऽघटितत्वाभावादिति वाच्यम् । रूपनिष्ठप्रतिबन्धकतात्वव्यापकतावच्छेदकीभूतस्वविशिष्टरूपवत्त्वसम्बन्धघटकरूपवत्त्वघटकस्वावच्छिन्नविषयतात्व - व्यापकत्वरूपसम्बन्धघटकविषयतायामसाधारण्यविषयताभिन्नत्वासाधारण्यविषयत्वाद्यवच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयाभावस्य विशेषणीयत्वात् । तथा च ताद्दशप्रतिबन्धकतात्वव्यापकं नासाधारण्यतावच्छेदकं तद्घटकतावच्छेदकाऽऽधेयत्ववदभावत्वावच्छिन्नविषयतायामुभयाभावविरहात् । असाधारणतावच्छेदकं घटकतावच्छेदकं न भवति भवति च मेयत्वविशिष्टताद्दशाऽसाधारण्यतावच्छेदकमेव ताद्दशमिति तदवच्छिन्नाऽघटितत्वस्य सत्त्वान्नाव्याप्तिरिति चेन्न, निरवच्छिन्नवह्न्यभाववद्ध्रदस्य दोषत्वमतेऽसम्भवः, ताद्दशबाधनिश्चयप्रतिबन्धकतायां ताद्दशबाधघटकवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितात्वव्यापकत्वसत्त्वात्, स्वस्य स्वाऽघटितत्वाभावात् ।

यदि चोक्तदोषवारणाय ताद्दशप्रतिबन्धकतायां "स्वरूपसम्बन्धरूपाऽवच्छेदकत्वं परित्यज्य" स्वघटकविषयिताव्यापकत्वं निवेश्यते तदा नाऽसम्भवः, ताद्दशबाधादिज्ञानस्य न निरवच्छिन्नविषयताशालित्वेन प्रतिबन्धकत्वं, किन्तु अव्याप्यवृत्तित्वज्ञानमन्तर्भाव्य विरोधिविषयकत्वेनैवेत्युच्यते, तदाऽसाधारणविशेषसंग्रहार्थं विषयतायामसाधारण्यविषयिताभिन्नत्वघटितोभयाभावस्याऽनिवेशेऽपि मेयत्वविशिष्टाऽसाधारण्येऽतिव्याप्तिवारणाय पक्षधर्मकहेतुमत्ताज्ञानाऽकालीनत्वाऽसाधारण्यविषयिताशालित्वोभयाभाववत्स्वावच्छिन्नविषयताशालिनिश्चयत्वव्यापकत्वसम्बन्धेन ताद्दशरूपविशिष्टरूपवत्त्वं प्रतिबन्धकतायां निवेशनीयम् । एवम् विशिष्टद्वयाघटितत्वमपि निवेशनीयम्, एवम् रूपं नीलरूपवदित्यत्र नीलरूपाभाववन्नीलेऽतिव्याप्तिवारणाय तद्विषयताभेदोऽपि विवक्षणीयः । एवञ्च भट्टाचार्योक्त "एतेन" कल्पापेक्षया गौरवमिति भावः ।

## गादाधरी

न च स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयतानिरूपकतावच्छेदकः कश्चित् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदको यस्य एवं

भूतं यद्यत्स्वं "मेयत्वविशिष्टव्यभिचारत्वादि" स्तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य विवक्षणीयतया न दोष इति वाच्यम्, तथा सति धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ बाधत्वाद्यवच्छिन्नघटकतावच्छेदकस्य धूमव्यभिचारिवह्निमत्वादेः स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकीभूतस्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकव्यभिचारत्वकत्वादव्याप्तेर्दुर्वारत्वात् ।

## विमलप्रभा

प्रतियोगिकुक्षौ सत्त्वं प्रवेश्याऽसम्भवाऽसम्भवसम्पादनाय द्वितीयं न च कल्पमाह न चेत्यादिना। न चेत्यस्य वाच्यमित्यनेनान्वयः। प्रतिबन्धकतासामान्यावच्छेदकं=प्रतिबन्धकतासामान्यानतिरिक्तवृत्ति । तदवच्छिन्नाविषयकः=मेयत्वविशिष्टव्यभिचारत्वाद्यवच्छिन्नाविषयकः। विवक्षणीयतया=विशिष्टान्तराघटितत्वदलेन यद्रूपे निवेशनीयतया। न दोषः=नासम्भवः। द्वितीयं न च कल्पं निषेधयति तथासतीति। तथा सति=उक्तरीत्या लक्षणार्थकरणे सति। बाधत्वाद्यवच्छिन्नघटकतावच्छेदकस्य=धूमाभाववद्वृत्तिव्यभिचारिवह्निमत्त्वरूपबाधादिघटकतावच्छेदकस्य । स्वावच्छिन्नाविषयकप्रतीतिविषयता=धूमव्यभिचारिवह्निमत्त्वावच्छिन्नाविषयकप्रतीतिविषयता । दुर्वारत्वात्=पक्षतावच्छेदकधूमव्यभिचारिवह्निमत्वस्य स्वपदेन धर्त्तुं शक्यतयाऽव्याप्तेर्वारणासम्भवात् । अयमर्थः। प्रतियोगिकुक्षौ स्वत्वं निवेश्य स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्याऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदको यः कश्चित् स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदको यस्य एवम्भूतं यद्यत्स्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद्रूपं तद्रूपावच्छिन्नविषयिताव्यापिका या प्रकृतानुमितिप्रतिबन्धकता तद्रूपावच्छिन्नत्वं लक्षणार्थः। अत्र स्वत्रयं लक्ष्यतानवच्छेदकीभूतप्रमेयत्वविशिष्टव्यभिचारादिपरम्। भवति चात्र अयोगोलकं धूमवद्वह्नेरित्यत्र धूमाभाववद्वृत्तिवह्निरूपव्यभिचारे लक्षणसङ्गतिः, तथा हि स्वं मेयत्वविशिष्टधूमाभाववद्वृत्तिवह्नित्वं तदवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्याऽनतिरिक्तवृत्तिविषयतानिरूपकता -

दच्छेदकम् अथ च मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेद-कं यत् धूमाभाववद्वृत्तिवह्नित्वरूपव्यभिचारत्वं तत्कं यद्यत्स्वं मेयत्वविशिष्टधूमाभाववद्वृत्तिवह्नित्वरूपमेयत्वविशिष्टव्यभिचारत्वं तदवच्छिन्नाविषयकप्रतीतिः=धूमाभाववद्वृत्तिवह्निरूपशुद्धव्यभिचारविषयकप्रतीतिस्तादृशप्रतीतिविषयतावच्छेदकं यत् धूमाभाववद्वृत्तिवह्नित्वरूपव्यभिचारत्वं तदवच्छिन्नविषयताव्यापकत्वम् अयोगोलकं धूमवद्धूमव्याप्यवह्निमच्चेत्याकारकप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितधूमाभाववद्वृत्तिवह्निरूपव्यभिचारविषयकनिश्चयनिष्ठप्रतिबन्धकतायां सत्त्वेन तद्रूपावच्छिन्नत्वस्य धूमाभाववद्वृत्तिवह्निरूपव्यभिचारे सत्त्वात्। एवं धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ व्यभिचारघटितबाधेऽपि लक्षणसंगतिः तथा हि व्यभिचारघटितबाधत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयतानिरूपकतावच्छेदकमथ च व्यभिचारघटितबाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकरूपस्याप्रसिद्धतया स्वपदेन व्यभिचारघटितबाधत्वस्योपादातुमशक्यतया स्वपदेन मेयत्वविशिष्टव्यभिचारघटितबाधत्वमुपादाय मेयत्वविशिष्टव्यभिचारघटितबाधत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयतानिरूपकतावच्छेदकमथ च मेयत्वविशिष्टव्यभिचारघटितबाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं शुद्धव्यभिचारघटितबाधत्वं तत्कं यद्यत् स्वं मेयत्वविशिष्टव्यभिचारघटितबाधत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतायाः व्यभिचारघटितबाधत्वे वर्त्तमानतया यद्रूपपदेन तदुपादाय तदवच्छिन्नविषयताव्यापकत्वं प्रकृतानुमितिप्रतिबन्धकतायां सत्त्वेन तद्रूपावच्छिन्नत्वं व्यभिचारघटितबाधे सत्त्वादिति।

मेयत्वविशिष्टव्यभिचारे च निरुक्तप्रतीतिविषयतावच्छेदकत्वस्य मेयत्वविशिष्टव्यभिचारत्वेऽसत्त्वेन यद्रूपपदेन तस्य धारणाऽयोगान्नातिव्याप्तिसम्भावनेति चेत्तथापि व्यभिचारघटितबाधेऽव्याप्तिस्स्यादेव, तथा हि स्वं धूमव्यभिचारिवह्निमत्त्वं तदवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयतानिरूपकतावच्छेदकमथ च धूमव्यभिचारिवह्निमत्त्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् धूमव्यभिचारिवह्नित्वं तत्कं यद्यत् स्वं धूमव्यभिचारिवह्निमत्त्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वेऽसत्त्वेन यद्रूपपदेन

धूमाभाववद्धृव्यभिचारिवह्निमत्त्वस्योपादानाऽसम्भवेन लक्षणाऽगमनात् । तथा च द्वितीयस्य न च कल्पस्यापि हेयत्वमेवेति भावः ।

## बलदेवी

न च स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयतानिरूपकतावच्छेदको यः कश्चिदित्यादि भट्टाचार्यः ।

अत्र प्रतियोगिनि स्वत्वं निविष्टम् । तथा च स्वं मेयत्वविशिष्टव्यभिचारत्वादिकं तदवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयतानिरूपकतावच्छेदकः स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकः कश्चित् शुद्धबाधत्वादिः तदवच्छिन्नाघटितत्वस्य बाधादौ सत्त्वात् लक्षणसमन्वयः । मेयत्वविशिष्टबाधादौ च तादृशप्रतीतिविषयतावच्छेदकत्वस्याभावात् न मेयत्वविशिष्टबाधादावतिव्याप्तिः ।

एवञ्च व्यभिचारघटितबाधे स्वपदेनोक्तव्यभिचारघटितबाधत्वं न धर्तुं शक्यते तदवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतविषयितानिरूपकतावच्छेदकस्य अथ च तादृशबाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकस्याऽप्रसिद्धेः, किन्तु मेयत्वविशिष्टतादृशबाधत्वमेव धर्त्तव्यमिति नाव्याप्तिः ।

अत्र प्रथमावच्छेदकत्वं यदि स्वरूपसम्बन्धरूपं तदा वह्न्यभाववद्ध्रदादिरूपबाधाद्यसंग्रहः मेयत्वविशिष्टतादृशबाधविषयिताया बाधविषयितात्वेन पक्षे साध्यवत्ताबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतायां, पक्षे हेतुवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतायाश्चाऽवच्छेदकत्वेन तादृशप्रतिबन्धकताद्वयाऽनतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकस्य तादृशस्याऽप्रसिद्धेः । तन्निवेशे च मेयत्वविशिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताव्यापिका प्रतिबन्धकता पक्षे साध्यवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतैवेति नाऽसम्भवः ।

एवं द्वितीयाऽवच्छेदकत्वस्य स्वरूपसम्बन्धरूपत्वे वह्न्यभाववद्ध्रदादिरूपबाधाद्यसंग्रहः स्वपदेन बाधादेर्धर्त्तुं शक्यतया तादृशबाधत्वावच्छिन्नविषयकत्वावच्छि-

न्नप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावद्ध्रदत्वावच्छिन्नविषययिता - निरूपकतावच्छेदकमथ च वह्न्यभाववद्ध्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद्ध्रदत्वं तत्कं यद्यत्स्वं तच्च वह्न्यभाववद्ध्रदत्वादिकं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य वह्न्यभाववद्ध्रदत्वेऽभावात् ।

एवं व्यभिचारघटितबाधाद्यसंग्रहश्च, स्वपदेन व्यभिचारघटितबाधत्वस्य धर्तुं शक्यतया तादृशबाधत्वावच्छिन्नविषयताव्यापकप्रतिबन्धकताद्वयेऽपि तज्ज्ञानीयव्यभिचारविषयिताया अवच्छेदकत्वात्, व्यभिचारत्वस्य तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वात् ।

यद्रूपावच्छिन्नविषयतासामान्य स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकमिति विवक्षणे व्यभिचारविषयतासामान्यान्तर्गतशुद्धव्यभिचारज्ञानीयतद्विषयातायास्तादृशबाधप्रतिबन्धकत्वाभावेन तद्दोषवारणेऽपि बाधाद्यसंग्रहः, मेयत्वविशिष्टबाधत्वावच्छिन्नप्रतिबन्धकतायां जातिमान् वह्न्यभाववानितिज्ञानीयतद्विषयतायाः सामान्यान्तर्गताया अनवच्छेदकत्वादतः स्वावच्छिन्नविषयित्वाव्यापकविषयताशून्यज्ञानीययद्रूपावच्छिन्नविषयतासामान्यमवच्छेदकमिति विवक्षणीयम् । एवञ्च मेयत्वविशिष्टव्यभिचारघटितबाधत्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतासामान्यावच्छेदकबाधत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीय - विषयतानिरूपकतावच्छेदकतदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकरूपाऽप्रसि - द्धेः ।

उभयत्र तन्निवेशे धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यत्र मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, तत्र मेयत्वविशिष्टव्यभिचारविषयितासामान्यावच्छिन्नाप्रतिबन्धकता द्वयी, एका व्याप्तिग्रहनिरूपिताऽपरा साध्यवत्ताग्रहनिरूपिता मेयत्ववान् धूमाभाववान् मेयत्ववान् धूमव्यभिचारिवह्निमान् इति ज्ञानविशिष्टज्ञानत्वावच्छिन्ना तयोर्व्यभिचारविषयतासामान्यस्यावच्छेदकत्वाभावात्, स्वपदेन मेयत्वविशिष्टव्यभिचारत्वस्य धर्तुमशक्यतयाऽन्यस्या एव तादृशतया तदवच्छिन्नाघटितत्वस्य तत्र सत्त्वात्, तथा च पूर्वत्राऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशस्यावश्यकत्वे उत्तरत्रापि तदाः

वश्यकतेति, अत्र स्वावच्छिन्नविषयकत्वव्यापकप्रतिबन्धकतासामान्यानतिरिक्तवृत्तिविषयितायां स्वपदग्राह्यरूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वमपि निवेशनीयम्, अन्यथा सर्वं गगनवदित्यत्र गगनाभाववत्ताहशघटत्वावच्छिन्नविषयित्वव्यापकप्रतिबन्धकतासामान्यानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकं ताहशघटत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं गगनाभाववत् पटत्वादिकमेवं भूतं स्वं गगनाभाववद्घटत्वं तदवच्छिन्नाघटितत्वस्य स्वस्मिन्नसत्त्वात् तत्राव्याप्तेः। एवं यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वमपि निवेशनीयम्, अन्यथा ह्रदो वह्निमानित्यत्र जातिमद्वह्न्यभावत्वावच्छिन्नविषयतामादाय जातिमद्वह्न्यभाववद्ध्रदेऽतिव्याप्तिस्स्यादिति।

नन्वत्र ताहशं यत् विशिष्टान्तरतावच्छेदकं तद्भिन्नत्वं लक्ष्यतावच्छेदके निवेशेनैव सामञ्जस्ये किं तदघटितत्वनिवेशेन, न च व्यभिचारत्वादौ प्रमेयत्वविशिष्टव्यभिचारत्वादिभिन्नत्वविरहेणाऽसम्भव इति वाच्यम्। यद्रूपपदेन याहशसमुदायपर्यन्तनिवेशस्याऽऽवश्यकतया निरुक्तसमुदायत्वभिन्नत्वस्य यद्रूपगतसमुदायत्वे निवेशेनैव दोषवारणसम्भवात्। तथा च स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयताव्यापकप्रतिबन्धकतासामान्याऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदक-ताहशविषयताशून्यज्ञानीयविषयतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्यत्त्वं तद्भिन्नप्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधर्मविशिष्टत्वस्य समुदितार्थत्वम्। एवञ्च मेयत्वविशिष्टव्यभिचारगतसमुदायत्वं स्वपदग्राह्यम्, तद्भिन्नश्च शुद्धव्यभिचारगतसमुदायत्वमिति व्यभिचारादौ लक्षणसमन्वयः।

मेयत्वविशिष्टव्यभिचारादौ च स्वपदग्राह्यमेयत्वविशिष्टव्यभिचारत्वगतसमुदायभिन्नत्वस्य स्वस्मिन्नसत्त्वान्नातिव्याप्तिः। एवम् व्यभिचारघटितबाधेऽपि नाव्याप्तिः, व्यभिचारघटितबाधत्वगतसमुदायत्वस्य धूमव्यभिचारिवह्निमत्त्वगतसमुदायत्व-

भिन्नत्वादिति चेन्न। व्यभिचारविशिष्टबाधेऽतिव्याप्तेः, तत्र हि व्यभिचारविशिष्टबाधत्वगतसमुदायत्वं स्वपदेन धर्तुं न शक्यते, तादृशबाधत्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतासामान्याऽवच्छेदकतदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकरूपाऽप्रसिद्धेः।

स्वपदेन व्यभिचारवैशिष्ट्यगतसमुदायत्वस्य धारणे तादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयिताव्यापकप्रतिबन्धकतासामान्यावच्छेदकतादृशविशिष्टविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकतादृशविषयिताशून्यज्ञानीयविषयितानिरूपकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य शुद्धव्यभिचारत्वगतसमुदायत्वे प्रसिद्धावपि तादृशव्यभिचारवैशिष्ट्यगतसमुदायत्वभेदस्य व्यभिचारविशिष्टबाधत्वगतसमुदायत्वे सत्त्वात्।

अथ वा अघटितत्वशब्दार्थ एव न सम्भवतीति। अथ वा यत्र स्थलविशेषे घटविषयकज्ञानं नियमतो मेयत्वविशिष्टव्यभिचारविषयकं बाधविषयकञ्च तत्र घटेऽतिव्याप्तिः, तत्र घटत्वस्य न स्वपदेन धर्तुं शक्यते तदवच्छिन्नविषयताव्यापकप्रतिबन्धकतावच्छेदकविषयित्वाऽप्रसिद्धेः, शक्यते च धर्तुं मेयत्वविशिष्टव्यभिचारत्वस्यैव तद्गतसमुदायत्वभिन्नत्वस्य तादृशघटत्वगतसमुदायत्वे सत्त्वात्। तन्निवेशे च तदवच्छिन्नविषयताशून्यप्रतीतिविषयतावच्छेदकत्वविरहान्नातिव्याप्तिः।

एतेन तादृशविशिष्टान्तररूपानवच्छिन्नप्रकारतावच्छेदकत्वमेव निवेश्यतां किं तदवच्छिन्नाघटितत्वनिवेशेनेत्यपि परास्तमुक्तदोषतादवस्थ्यात्।

वस्तुतो तदनवच्छिन्नप्रकारतावच्छेदकत्वमित्यस्य तन्निष्ठाऽवच्छेदकतानिरूपितनिरूपकत्वाभाववत्प्रकारतावच्छेदकत्वमित्येवार्थः। तथा च मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, प्रकारतानिष्ठनिरूपकत्वस्य विषयतानिष्ठनिरूपकत्वस्य प्रतियोगित्वादिनिष्ठनिरूपकत्वस्य भिन्नत्वात्, प्रतियोगित्वादिनिष्ठनिरूपकत्वाभाववत्प्रकारतावच्छेदकत्वसत्त्वात्। अतो यदि प्रकारतानिष्ठनिरूपकत्वाभाववत्प्रकारतावच्छेद-

कत्वस्य निवेशः, तदा यथाश्रुतापेक्षया गौरवमेवेति। तदघटितत्वनिवेशे च नायं दोषः, अधिकवारकपर्याप्त्यनिवेशेन तादृशव्यभिचारवैशिष्ट्यगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयिताशून्यत्वस्य व्यभिचारविशिष्टबाधज्ञानेऽसत्त्वात्, अत एव "तथा सतीत्यादिना" व्यभिचारघटितबाधेऽव्याप्तिरपि सङ्गच्छत इति भावः।

ननु स्वावच्छिन्नविषयकत्वव्यापकप्रतिबन्धकतासामान्यावच्छेदकस्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविष्यतानिरूपकतावच्छेदकस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयत्किञ्चिद्रूपकं यत्स्वं तदवच्छिन्नविषयितावत्त्वतदवच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वोभयाभाववत्यद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वव्यापिका प्रकृतानुमितिप्रतिबन्धकता तद्रूपवत्त्वं विवक्ष्यतां, व्यभिचारादिदोषविषयकनिश्चये स्वपदग्राह्यमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयतावत्त्वविरहेणोभयाभावसत्त्वात् व्यभिचारादौ लक्षणसमन्वयः। मेयत्वविशिष्टव्यभिचारनिश्चये चोभयोः सत्त्वान्नातिव्याप्तिः। व्यभिचारघटितबाधेऽपि नाव्याप्तिः, तत्र धूमव्यभिचारिवह्निमत्त्वस्य स्वपदेन धर्तुं शक्यत्वेऽपि तादृशबाधनिश्चये। धूमव्यभिचारिवह्निमत्त्वावच्छिन्नविषयतासत्त्वेऽपि तदवच्छिन्नविषयित्वाव्यापकधूमाभाववद्धूमव्यभिचारिवह्निमत्त्वावच्छिन्नविषयितायाः सत्त्वेनोभयाभावसत्त्वात्।

न चैवम् मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, तादृशव्यभिचारघटोभयविषयकसमूहालम्बननिश्चये मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयितासत्त्वेऽपि तदवच्छिन्नविषयित्वाऽव्यापकघटत्वावच्छिन्नविषयतायाः सत्त्वेनोभयाभावसत्त्वात् इति वाच्यम्। तादृशोभयाभाववत्यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपितनिरूपकतावच्छेदकत्वस्य लक्ष्यतावच्छेदके [यद्रूपे] निवेशेनैव तद्दोषवारणादिति स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वं बाधनिश्चये विशेषणमित्यपि निरस्तम्, व्यभिचारविशिष्टबाधेऽतिव्याप्तेस्तत्र विशिष्टबाधत्वस्य स्वपदेन धर्तुमशक्यत्वात्, व्यभिचारवैशिष्ट्यस्य स्वपदेन धर्तुमशक्यत्वेऽपि तदवच्छि-

न्नविषयित्वाव्यापकबाधविषयतायास्तत्र सत्त्वेनोभयाभावसत्त्वात् । अथ वा यत्र घट-विषयकज्ञानं नियमतो मेयत्वविशिष्टव्यभिचारविषयकं बाधविषयकञ्च तत्र घटेऽति-व्याप्तिः, घटत्वस्य स्वपदेन धर्तुमशक्यत्वात् मेयत्वविशिष्टव्यभिचारत्वमादाय त-दवच्छिन्नविषयतावत्त्वसत्त्वेपि तदवच्छिन्नविषयित्वाव्यापकविषयताशून्यत्वस्यासत्त्वे-न तदुभयाभाववन्निश्चयत्वव्यापकप्रतिबन्धकतासत्त्वात् तद्रूपावच्छिन्नत्वस्य घटे विद्यमानत्वात् । यथा श्रुते तु तदघटितत्वविरहान्नातिव्याप्तिः । यत्तु यद्रूपाव-च्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयिताव्यापकप्रतिबन्धकता-सामान्यानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकं य-त्तादृशं समुदायत्वं तद्वृत्तिविषयिताशून्यज्ञानीयविषयतानिरूपकतावच्छेदकतावत्त्वं लक्ष्यतावच्छेदके निवेशनीयमित्यपि न युक्तं प्रागुक्तदोषतादवस्थ्यादिति ।

बाधत्वावच्छिन्नघटकतावच्छेदकधूमव्यभिचारिवह्निमत्त्वादेरित्या-द्यारभ्याव्याप्तेर्दुर्वारत्वादित्यन्तः भट्टाचार्यग्रन्थः । नन्वत्र पक्षे हेतुमत्ताज्ञा-नकालीनत्वासाधारणविषयतावत्त्वोभयाभाववत्स्वावच्छिन्नविषयिताशालिनिश्चयत्व-व्यापिका यावत्यः प्रतिबन्धकतास्तत्प्रत्येकप्रतिबन्धकतायां स्वघटकीभूतयत्किञ्चि-द्रूपावच्छिन्नायामसाधारण्यविषयिताभिन्नत्वासाधारण्यविषयकत्वावच्छिन्नप्रतिबन्ध-कतावच्छेदकत्वोभयाभाववद्विषयितात्वव्यापकस्वरूपसम्बन्धरूपावच्छेदकत्वमस्ति एवं भूतं यत्स्वं तदवच्छिन्नविषयितावत्त्वतदवच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वो-भयाभाववती या प्रतीतिः स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यतदीयविषय-तानिरूपकतावच्छेदकत्वं लक्ष्यतावच्छेदके निवेशनीयम् । तथा च मेयत्वविशिष्ट-व्यभिचारादौ नातिव्याप्तिः, स्वपदग्राह्यन्तत्र मेयत्वविशिष्टव्यभिचारत्वादिकं तद-वच्छिन्नव्यभिचारविषयकप्रतीतौ तदवच्छिन्नविषयितावत्त्वतदवच्छिन्नविषयित्वा-व्यापकविषयिताशून्यत्वोभयोस्सत्त्वात्, तदवच्छिन्नविषयितावत्त्वाभावादेवोभयाभाव-वत्त्वं शुद्धव्यभिचारविषयकप्रतीतावेवेति व्यभिचारे लक्षणसमन्वयः । एवं, व्य-भिचारविशिष्टबाधे नातिव्याप्तिः, तादृशबाधत्वावच्छिन्नविषयकत्वावच्छिन्नप्रति-

बन्धकता व्यभिचारज्ञानप्रतिबन्धकता, बाधनिश्चयप्रतिबन्धकता च तत्प्रतिबन्धकताव्यक्तौ तादृशबाधत्वघटकीभूतव्यभिचारत्वबाधत्वरूपयत्किञ्चित्रूपावच्छिन्नविषयितात्वव्यापकावच्छेदकताकत्वस्य सत्त्वात् स्वपदेन व्यभिचारत्वविशिष्टबाधत्वस्य धर्त्तुं शक्यत्वात्। एवं व्यभिचारघटितबाधेऽपि नाव्याप्तिः, तत्र धूमव्यभिचारिवह्निमत्त्वस्य धर्त्तुं शक्यत्वेऽपि तदवच्छिन्नविषयित्वाव्यापकधूमाभाववत्तादृशधूमव्यभिचारिवह्निमत्त्वावच्छिन्नविषयितायाः सत्त्वेनाऽव्यापकीभूतविषयताशून्यत्वाभावप्रयुक्तोभयाभावस्य तादृशबाधनिश्चये सत्त्वात्। स्वावच्छिन्नविषयकनिश्चये पक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वघटितोभयाभावसत्त्वादसाधारण्यसंग्रहः।

स्वघटकीभूतयत्किञ्चिद्रूपावच्छिन्नविषयतायामसाधारण्यविषयताभिन्नत्वघटितोभयाभावस्य निवेशादसाधारण्यविशेषसंग्रहः।

स्वावच्छिन्नविषयतावत्त्वघटितोभयाभाववत्प्रतीतौ स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वनिवेशात् मेयत्वविशिष्टव्यभिचारोदासीनसमूहालम्बनमादाय न तत्रातिव्याप्तिः।

अत्रापि सर्वं गगनवदित्यत्र गगनाभाववत् घटपटादिसंग्रहाय स्वघटकीभूतकिञ्चिद्रूपावच्छिन्नविषयितायां स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वं, ह्रदो वह्निमानित्यत्र जातिमान् ह्रद इति ज्ञानमादायाऽव्याप्तिवारणाय यद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयत्वं निवेशनीयम्। एवञ्चेदानीं विशिष्टद्वयाघटितत्वन्न निवेशनीयम्, वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वघटकीभूतवह्न्यभाववज्जलवत्त्वावच्छिन्नविषयितायां तादृशविषयिताव्यापकज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकतासत्त्वात्।

एवं रूपन्नीलरूपवदित्यादौ नीलरूपाभाववन्नीले च नातिव्याप्तिः। अत्रायमनुगमः, पदार्थविशिष्टपदार्थवदन्यप्रतीतिविशिष्टरूपवत्त्वं लक्षणम्। पदार्थवैशिष्ट्यञ्च पदार्थे, स्वतादात्म्यस्वावच्छिन्नविषयताशालिपक्षधर्मिकहेतुमत्ताज्ञानाकालीन-

त्वासाधारण्यविषयतावत्त्वोभयाभाववन्निश्चयत्वव्यापकप्रतिबन्धकतात्वव्यापकत्वोभय - सम्बन्धेन। प्रतिबन्धकतात्वव्यापकता च स्वविशिष्टरूपवत्त्वसम्बन्धेन। रूपे स्ववैशिष्ट्यं स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकत्वोभयसम्बन्धेन। रूपवत्त्वञ्चासाधारण्यविषयिताभिन्नत्वासाधारण्यविषयकत्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभया - भाववत्स्वविशिष्टविषयितात्वव्यापकतावच्छेदकत्वसम्बन्धेन। विषयितायां स्ववैशिष्ट्यञ्च, स्वावच्छिन्नत्वस्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वोभयस - म्बन्धेन।

निरवच्छिन्नसाध्याभाववत्पक्षस्य लक्ष्यत्वमते स्वविशिष्टरूपवत्ता च पक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वघटितोभयाभाववत्स्वावच्छिन्नविषयताशालिनिश्चयत्वव्यापक - तासम्बन्धेन। प्रतीतिविशेषणतापन्नभेदप्रतियोगिनि धर्मवत्त्वञ्च स्वावच्छिन्न - विषयितावत्त्व,स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वोभयसम्बन्धेन। रूपे प्रतीतिवैशिष्ट्यञ्च स्ववृत्तिविषयितानिरूपकतावच्छेदकत्वस्ववृत्तिकिञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिता नास्तीति प्रतीतिसिद्धाऽभावीयप्रतियोगितानिरूपितावच्छेदकतानिरूपितपरम्परयाऽवच्छिन्नत्वसम्बन्धावच्छिन्नाऽवच्छेदकतावत्त्वोभयसम्बन्धेन। गगनाभाववदभाववत्कालीनवटो गगनवानित्यत्र गगनाभाववत्तादृशघटेऽव्याप्तिवार - णार्थं प्रतीतिविशिष्टत्वस्थाने तादृशप्रतीतिमदन्यत्वप्रकृतानुमितिप्रतिबन्धकताविशिष्टविषयितानवच्छेदकत्वविरोध्यनुमितिजनकताविशिष्टविषयितानवच्छेदकत्वैतत्त्रियाभाववत्त्व लक्ष्यतावच्छेदके विवक्षणीयम्। प्रतीतिमत्ता च, स्ववृत्तिविषयितानिरूपकतावच्छेदकत्व,स्ववृत्यभावीयप्रतियोगितानिरूपितपरम्पराऽवच्छिन्नत्वसम्बन्धाव - च्छिन्नाऽवच्छेदकतावत्त्वोभयसम्बन्धेन। विषयतायां प्रतिबन्धकतावैशिष्ट्यञ्च स्वावच्छेदकत्वस्वविशिष्टविषयितावदन्यत्वोभयसम्बन्धेन। विषयतायां स्ववैशिष्ट्यञ्च स्वानतिरिक्तवृत्तित्वस्वनिरूपितप्रतिबन्धकताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपि - तप्रतिबध्यतावच्छेदकत्वोभयसम्बन्धेन। विषयतायां जनकतावैशिष्ट्यञ्च पूर्वोक्तरीत्या बोध्यमिति।

## गादाधरी

न च स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतयत्किञ्चिद्विषयित्वं यादृशयादृशधर्मावच्छिन्नाऽनिरूपितं तादृशतादृशधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्स्वं तद्रूपावच्छिन्नत्वमेव समुदितार्थः ।

मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतायाः शुद्धव्यभिचारत्वाद्यवच्छिन्ननिरूपितविषयितायाः मेयत्वविशिष्टव्यभिचारत्वाद्यवच्छिन्नानिरूपितत्वेन तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य च स्वस्मिन्नसत्त्वेन मेयत्वविशिष्टव्यभिचारत्वादेः स्वपदेनोपादातुमशक्यत्वात्, व्यभिचारत्वादिविशिष्टविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदिकायाः कस्याश्चिदपि विषयितायाः व्यभिचारत्वादिविशिष्टानिरूपितत्वाभावात्, तादृशविषयितायाः यादृशधर्मविशिष्टानिरूपितत्वं घटत्वमेयत्वविशिष्टव्यभिचारत्वादेरेव तादृशत्वात् तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतया व्यभिचारत्वादेः स्वपदेनोपादातुं शक्यत्वान्न कश्चिद्दोषः ।

## विमलप्रभा

पूर्वोक्ताव्याप्तिनिरासाय तृतीयं न चकल्पमाह—स्वावच्छिन्नेत्यादिना । स्वं = यद्रूपावच्छिन्ने लक्षणसङ्गमनीयं तादृशो धर्मः । मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिवारणं व्यभिचारे च लक्षणसङ्गमनं च तृतीयेन न च कल्पेन प्रतिपादयन्नाह-मेयत्वविशिष्टेत्यादि । तदवच्छिन्नाविषयकप्रतीतिः = मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिः । स्वस्मिन् = मेयत्वविशिष्टव्यभिचारत्वे । स्वपदेन = स्वावच्छिन्नेत्यादिलक्षणघटकस्वपदेन । उपादातुमशक्यत्वात् = धारणायोगात् । अस्य न दोष इत्यनेनान्वयः । कस्याश्चिदपि विषयितायाः = व्यभिचारत्वाद्यवच्छिन्नविषयितायाः । तादृशविषयितायाः = व्यभिचारत्वावच्छिन्नविषयितायाः । यादृशयादृशधर्मावच्छिन्नानिरूपितत्वं = मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाऽनिरूपितत्वम् । ता-

दृशत्वात् = यादृशयादृशधर्मपदेन ग्रहीतुं शक्यत्वात् । तदवच्छिन्नाविषयकः = मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाविषयकः । अयमर्थः । तृतीयनचकल्पोक्तविशेष्यदलरहितलक्षणानुसरणे मेयत्वविशिष्टव्यभिचारे नातिव्याप्तिः । तथा हि, मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतं यत्शुद्धव्यभिचारत्वावच्छिन्नयत्किञ्चिद्विषयित्वं तच्च मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नानिरूपितं तादृशमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य मेयत्वविशिष्टव्यभिचारत्वेऽसत्त्वात् स्वपदेन मेयत्वविशिष्टव्यभिचारत्वस्योपादातुमशक्यतया लक्षणागमनात् ।

व्यभिचारे च व्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतव्यभिचारत्वावच्छिन्नविषयित्वं घटत्वावच्छिन्नानिरूपितं तादृशघटत्वावच्छिन्नाविषयकप्रतीतिः शुद्धव्यभिचारविषयकप्रतीतिस्तद्विषयतायाच्छेदकं यत् स्वंव्यभिचारत्वं तदवच्छिन्नत्वस्य व्यभिचारे वर्त्तमानत्वात् लक्षणसङ्गतिः । व्यभिचारघटितबाधे च धूमाभाववद्वृत्त्यव्यभिचारिवह्निमत्त्वरूपं यत् स्वं तदवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गता या धूमाभाववद्वृत्तिवह्निधर्मितावच्छेदककधूमाभावप्रकारकनिश्चयत्वावच्छिन्ना प्रतिबन्धकता तदनतिरिक्तवृत्तित्वरूपावच्छेदकता न केवलव्यभिचारविषयितायां न वा केवलबाधविषयितायां किन्तु धूमाभाववद्वृत्त्यव्यभिचारिवह्निमत्त्वरूपव्यभिचारघटितबाधविषयितायामेव सा च विषयिता घटत्वाद्यवच्छिन्नाऽनिरूपितेति तादृशघटत्वाद्यवच्छिन्नाविषयकप्रतीतिः धूमाभाववद्वृत्त्यव्यभिचारिवह्निमत्त्वावच्छिन्नविषयकप्रतीतिस्तदीयविषयतावच्छेदकं यत् धूमाभाववद्वृत्त्यव्यभिचारिवह्निमत्त्वं तदवच्छिन्नत्वस्य तत्र वर्त्तमानतया लक्षणसमन्वयः ।

## बलदेवी

न च स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतं यत्किञ्चिद्विषयित्वं यादृशयादृशधर्मावच्छिन्नानिरूपितमित्यादिः

भट्टाचार्यग्रन्थः ।

ननु स्वावच्छिन्नविषयिताव्यापकस्वावच्छिन्नविषयितानिष्ठस्वरूपसम्बन्धरूपावच्छेदकताकप्रतिबन्धकतानिवेशेनैव बाधविशिष्टव्यभिचारविषयितायां स्वरूपसम्बन्धरूपावच्छेदकत्वस्यावर्त्तमानतया तावतैवातिप्रसङ्गभङ्गसम्भवे कथन्न तदेव निवेशितमिति चेन्न, वह्निमत्पक्षकावृत्तित्वसाध्यकस्थले वह्निमद्रूपबाधेऽव्याप्तिः, तथां हि तत्र वह्निमत्त्वावच्छिन्नविषयकत्वात् लाघवेन वह्निमत्वावच्छिन्नप्रकारकनिश्चयत्वेनैव प्रतिबन्धकत्वादिति दिक् ।

अत्र स्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतासामान्यानतिरिक्तवृत्तिविषयितात्वसमानाधिकरणयद्रूपावच्छिन्नानिरूपितं तत्तद्रूपावच्छिन्नाघटितत्वं समुदितार्थः । अत्रोभयत्र स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशे पर्वतो वह्निमानित्यत्र पाषाणमयत्वविशिष्टपर्वतेऽतिव्याप्तिः, पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयितासामान्यनिष्ठस्वरूपसम्बन्धरूपाऽवच्छेदकता या प्रकृतसमूहालम्बनानुमितिनिरूपितधर्मिकवह्निप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितपाषाणमयत्वावच्छेदेन वह्न्यभावप्रकारकनिश्चयविशिष्टपर्वतधर्मिकपाषाणमयत्वप्रकारकनिश्चयत्वावच्छिन्नज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकता तस्याः स्वरूपसम्बन्धरूपावच्छेदकतावद्विषयितायां घटत्वावच्छिन्नानिरूपितत्वसत्त्वात् । तादृशघटत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य पाषाणमयत्ववत्पर्वते वर्त्तमानतया लक्षणगमनात् । व्यापकत्वनिवेशे च पाषाणमयत्ववत् पर्वतत्वावच्छिन्नविषयताव्यापकप्रतिबन्धकत्वाऽप्रसिद्ध्या स्वपदेन पाषाणमयत्ववत्पर्वतत्वादेर्धारणासम्भवान्नातिप्रसङ्गः ।

तत्र प्रथमत एव तन्निवेशे [स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशे] ह्रदो वह्निमानित्यादौ वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गता या बाधनिश्चयत्वावच्छिन्नप्रतिबन्धकता या च पक्षे हेतुमत्ताज्ञाननिरूपिता ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धता तदुभयाऽनतिरिक्तवृत्तिविषयित्वाऽप्रसिद्ध्या वह्न्यभाववद्ध्रदत्वस्य स्वपदेन ग्रहीतुमशक्यतया वह्न्यभाववद्ध्रदरूपबाधेऽव्याप्तिस्स्यादिति । प्रतिबन्धकतासामान्यावच्छेदक इत्यादावुभयत्रैव तन्निवेशे व्यभिचा-

रघटितबाधाद्यसंग्रहः, तादृशबाधत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गता या बाधप्रतिबन्धकता व्यभिचारप्रतिबन्धकता तदुभयावच्छेदकविषयित्वाऽप्रसिद्धेः। यद्यपि व्यभिचारघटितबाधज्ञानीयव्यभिचारविषयितायास्तदुभयावच्छेदकत्वमस्ति बाधप्रतिबन्धकतायामपि धर्मितावच्छेदकतया तद्विषयताया अवच्छेदकत्वात्। तथापि सर्वं गगनवद्वाच्यत्वादित्यत्र गगनाभाववद्घटपटादिरूपबाधसंग्रहार्थं तादृशविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वस्य, ह्रदो वह्निमानित्यत्र जातिमद्वह्न्यभाववद्ध्रदवारणाय यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वस्य विवक्षणीयतया बाधज्ञानीयव्यभिचारत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यशुद्धव्यभिचारविषयकज्ञानीयव्यभिचारविषयितायास्तदुभयावच्छेदकत्वं न. सम्भवतीत्यप्रसिद्धिः।

तथा च स्वावच्छिन्नविषयकत्वव्यापकप्रतिबन्धकतानिष्ठाऽभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकैकत्ववदुभयावृत्तिधर्मवान् यो यत्किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धोऽभावस्तन्निरूपितप्रतियोगितानिरूपितावच्छेदकतानिरूपिताऽवच्छेदकतानिरूपिताऽवच्छेदकतानिरूपिताऽवच्छेदकतानिरूपिताऽवच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नस्वावच्छिन्नविषयत्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिष्ठो यः किञ्चिद्रूपावच्छिन्ननिरूपकतानिरूपितत्वन्नास्तीति प्रतीतिसिद्धोऽभावस्तन्निरूपितनिरूपितत्वनिष्ठप्रतियोगितानिरूपितनिरूपकतानिष्ठाऽवच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकधर्मवत्त्वं लक्षणार्थः।

अत्र द्वित्वप्रमेयत्वादिपुरस्कारेण ह्रदत्वावच्छिन्नविषयताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावस्यापि प्रतिबन्धकतावृत्तितया तमादाय वह्न्यभाववद्ध्रदादावव्याप्तिरतः एकत्वेनोभयावृत्तित्वेन च तादृशाभावो विशेषितः।

अत्रायमनुगमः, पदार्थविशिष्टपदार्थवत्त्वम्। वैशिष्ट्यञ्च स्वतादात्म्यस्वविशिष्टविषयितानिष्ठकिञ्चिद्रूपावच्छिन्ननिरूपकतानिरूपितत्वन्नास्तीतिप्रतीतिसिद्धा-

भावस्तन्निरूपितनिरूपितत्वप्रतियोगितानिरूपितनिरूपकतानिष्ठाऽवच्छेदकतानिरूपि-तावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयिताशून्यज्ञानीयविषयिता-निरूपकतावच्छेदकत्वोभयसम्बन्धेन। विषयितायां स्ववैशिष्ट्यञ्च स्वावच्छिन्नविषयि-त्वाव्यापकविषयिताशून्यज्ञानीयत्वस्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यपक्षधर्मि-कहेतुमत्ताज्ञानकालीनत्वाऽसाधारण्यविषयितावत्त्वोभयाभाववत्स्वावच्छिन्नविषयकनि-श्चयत्वव्यापकप्रतिबन्धकतावृत्त्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताक-पर्याप्त्यनुयोगितानवच्छेदकैकत्ववदुभयावृत्तिधर्मवत्यत्किञ्चिद्रूपावच्छिन्नविषयित्वा-व्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयताशालिनिश्चयवृत्तिभेदप्रतियोगिताव-च्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावप्रतियोगितानिरूपितावच्छेदकतानिरूपितावच्छे-दकतायाः परम्परयाऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नत्वसम्बन्धे-न। तद्व्यक्तित्ववानभावश्चाऽसाधारण्यविषयताशालित्वपक्षधर्मिकहेतुमत्ताज्ञानका-लीनत्वोभयाभाववत्किञ्चिद्रूपावच्छिन्नविषयताशालिनिश्चयनिष्ठभेदप्रतियोगिताव-च्छेदकत्वन्नास्तीतिप्रतीतिसिद्धो ग्राह्यः। तेन मेयत्वविशिष्टव्यभिचारे नातिव्याप्तिः।

नन्वेवमपि स्वावच्छिन्नविषयकत्वावच्छिन्ना यावत्यः प्रकृतानुमितिप्रतिबन्ध-कतास्तत्प्रत्येकावच्छेदकतायां यादृशयादृशधर्मावच्छिन्नविषयितात्वव्यापकत्वमस्ति तादृशविषयितायां यद्यद्रूपावच्छिन्नानिरूपितत्वमस्ति तत्तद्रूपावच्छिन्नाघटितं यत्स्वं तद्रूपावच्छिन्नत्वं समुदितार्थः। ह्रदो वह्निमानित्यादौ वह्न्यभाववद्ध्रदत्वावच्छि-न्नविषयकत्वव्यापिका बाधप्रतिबन्धकता तदवच्छेदकतायाम्मेयत्वविशिष्टबाधघटक-बाधत्वात्मकयत्किञ्चिद्रूपावच्छिन्नविषयिताव्यापकत्वमस्ति तद्रूपावच्छिन्नविषयिता-यां मेयत्वविशिष्टबाधत्वावच्छिन्नानिरूपितत्वमस्तीति तद्रूपावच्छिन्नाघटितत्वस्य बाधे सत्त्वात् लक्षणसङ्गतिः।

मेयत्वविशिष्टव्यभिचारादौ च तादृशव्यभिचारत्वावच्छिन्नविषयिताव्यापक-व्याप्तिज्ञानप्रतिबन्धकतावच्छेदकतायां मेयत्वविशिष्टव्यभिचारघटकशुद्धव्यभिचारत्वा-वच्छिन्नविषयितात्वव्यापकत्वस्य वर्त्तमानतया तत्र च मेयत्वविशिष्टव्यभिचारत्वा-वच्छिन्नानिरूपितत्वस्य सत्त्वात् तदवच्छिन्नाऽघटितत्वस्य च स्वावच्छिन्नेऽभावान्ना-तिप्रसङ्गः।

एवम्, बाधविशिष्टव्यभिचारेऽपि नातिव्याप्तिः। तादृशव्यभिचारत्वावच्छिन्नविषयताव्यापकप्रतिवन्धकतायाः प्रत्येकमवच्छेदकतायां बाधविशिष्टव्यभिचारत्वघटकबाधत्वावच्छिन्नविषयितात्वव्यापकत्वस्य व्यभिचारत्वावच्छिन्नविषयितात्वस्य च सत्त्वात् स्वस्य स्वाघटितत्वाभावात्। अथ प्रथमस्वरूपसम्बन्धरूपावच्छेदकतायां यादृशविशिष्टघटकविषयितात्वव्यापकत्वस्य 'विवक्षणात्, वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयिताव्यापकज्ञानवैशिष्ट्यावच्छिन्नप्रतिवन्धकतावच्छेदकतायां तादृशविशिष्टघटकजलवद्ध्रदादिविषयतात्वव्यापकत्वस्य वर्त्तमानतया तदवच्छिन्नाघटितत्वाभावान्न तादृशविशिष्टेऽतिव्याप्तिरतो विशिष्टद्वयाघटितत्वं न निवेशनीयम्। एवम् रूपाभाववन्नीलादौ च नातिव्याप्तिरतोऽत्र तत्तद्विषयताभेदोऽपि न निवेशनीयः।

अत्रायमनुगमः, पदार्थविशिष्टपदार्थवत्त्वं हेत्वाभासत्वम्, वैशिष्ट्यञ्च स्वतादात्म्यस्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतात्वव्यापकधर्मविशिष्टधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धेन। धर्मे प्रतिबन्धकताव्यापकत्वञ्च स्वविशिष्टरूपवत्त्वसमन्धेन। रूपे स्ववैशिष्ट्यञ्च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकत्वोभयसम्बन्धेन। रूपवत्त्वञ्च स्वावच्छिन्नविषयितात्वव्यापकत्वसम्बन्धेन। धर्मे वैशिष्ट्यञ्च स्वविशिष्टरूपावच्छिन्नविषयितानिष्ठकिञ्चिद्रूपावच्छिन्ननिरूपकतानिरूपितत्वन्नास्तीति प्रतीतिसिद्धाभावनिरूपितप्रतियोगितानिरूपितावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वसम्बन्धेन। रूपे वैशिष्ट्यञ्च प्रागुक्तोभयसम्बन्धघटकद्वितीयसम्बन्धेन, अन्यत्सर्वं प्रागुक्तदिशा बोध्यम्।

यद्वा यादृशप्रतिबन्धकतावच्छेदकतायां यादृशयादृशधर्मावच्छिन्नविषयितात्वव्यापकत्वमस्ति तादृशतादृशयत्किञ्चिद्धर्मावच्छिन्नविषयितायां यद्यद्रूपावच्छिन्नानिरूपितत्वमस्ति तद्रूपावच्छिन्नाघटितत्वं समुदितलक्षणम्। तथा च पदार्थविशिष्टपदार्थवत्त्वं लक्षणम्। अत्र वैशिष्ट्य स्वतादात्म्यस्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतात्वव्यापकरूपावच्छिन्नाघटितत्वोभयसम्बन्धेन। रूपे प्रतिबन्धकतात्वव्यापकत्वञ्च, स्वविशिष्टरूपवत्त्वसम्बन्धेन।

रूपे स्ववैशिष्टचञ्च, स्वावच्छिन्नानिरूपितविषयितावच्छेदकत्वस्वावच्छिन्नविषयितात्वव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकत्वोभयसम्बन्धेनेति चेन्नैतन्मनोरमम् प्रागुक्तरीत्या विवक्षणे एतेन कल्पापेक्षया गौरवमेव स्यादिति ।

## गादाधरी

अथ वा यद्धर्मावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतविषयितात्वं यद्धर्मावच्छिन्ननिरूपितत्वव्याप्यम् । तद्धर्मवत्त्वमेव समुदितार्थ इति वाच्यम् । बाधविशिष्टव्यभिचारेऽतिप्रसङ्गात्, तादृशधर्मावच्छिन्नविषयकत्वावच्छिन्नबाधज्ञानप्रतिबन्धकतायां केवलव्यभिचारविषयितायां तादृशव्यभिचारज्ञानप्रतिबन्धकतायां च केवलबाधविषयिताया अनवच्छेदकत्वेन बाधविशिष्टव्यभिचारत्वाद्यवच्छिन्नविषयिताया एव तथाविधप्रतिबन्धकतासामान्यावच्छेदकत्वं, तस्याश्च तादृशधर्मविशिष्टनिरूपितत्वस्यावश्यकत्वात् प्रथमकल्पे स्वपदेन चरमकल्पे च यद्धर्मपदेन तस्योपादानसम्भवात् ।

## विमलप्रभा

लाघवदाह अथ वेति । यद्धर्मावच्छिन्नेत्यत्र यत्पदं लक्ष्यतावच्छेदकीभूतबाधत्वादिपरम् । यद्धर्मावच्छिन्ननिरूपितत्वव्याप्यम् = बाधत्वव्यभिचारत्वादिरूपावच्छिन्ननिरूपितत्वव्याप्यम् । तद्धर्मवत्त्वम् = लक्ष्यतावच्छेदकीभूतबाधत्वादिमत्त्वम् । समुदितार्थः लक्षणस्येति शेषः । तृतीये न च चतुर्थेऽथ वोभयकल्पे दोषसत्त्वेन तयोः हेयत्वमाह बाधविशिष्टेत्यादिना । बाधविशिष्टव्यभिचारत्वावच्छिन्ने = बाधविशिष्टो यो व्यभिचारस्तद्गतं यत् व्यभिचारत्वं तदवच्छिन्ने तादृशधर्मावच्छिन्नविषमकत्वावच्छिन्नबाधज्ञानप्रतिबन्धकतायां = बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्ना या बाधज्ञाननिष्ठाप्रतिबन्धकता तस्याम् । तादृशव्यभिचारज्ञानप्रतिबन्धकतायां = बाधविशिष्टव्यभिचारज्ञानप्रतिबन्धकतायां, बाधविशिष्टव्यभिचारज्ञाननिष्ठानुमितिप्रतिबन्धकतायामिति यावत् । अनवच्छेदकत्वेन = अवच्छेदकत्वाभावेन । तथाविधप्रतिबन्धकता = बाधविशिष्टव्य -

भिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकता । तस्यां=बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयितायाम् । तादृशधर्मविशिष्टनिरूपितत्वस्य=बाधविशिष्टव्यभिचारत्वनिरूपितत्वस्य । प्रथमकल्पे=तृतीये न च कल्पे । स्वपदेन=स्वावच्छिन्नेत्यत्र स्वपदद्वारा । चरमकल्पे=अथ वेत्यादिना प्रतिपादितचतुर्थकल्पे । यत्पदेन=यद्धर्मावच्छिन्नेत्यत्र यत्पदद्वारा । तस्य=बाधविशिष्टव्यभिचारत्वस्य । उपादानसम्भवात्=धारणसम्भवात् । अयमर्थः । तृतीये न च कल्पे चतुर्थेऽथ वा कल्पेचोभयत्र समानदोषस्यैव वर्तमानतया प्रथमं तृतीये न च कल्पे दोषमनभिधायैव लाघवादथ वेत्यादिकल्पानुसरणं कृतं भट्टाचार्येण । तदनुसरणे च सर्वत्रैव सामञ्जस्यम्, तथा हि अयोगोलकं धूमवत्वह्नेरित्यादौ । धूमाभाववद्वृत्तिवह्निरूपव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्ना या अयोगोलकं धूमवत् धूमव्याप्यवह्निमच्चेत्याकारकानुमितित्वव्यापकप्रतिवध्यतानिरूपितधूमाभाववद्वृत्तिवह्निरूपव्यभिचारनिश्चयनिष्ठप्रतिबन्धकता तत्सामान्यावच्छेदकीभूतधूमाभाववद्वृत्तिवह्निरूपव्यभिचारत्वावच्छिन्नविषयितात्वं व्यभिचारत्वावच्छिन्ननिरूपितत्वव्याप्यं न तु मेयत्वविशिष्टव्यभिचारत्वावच्छिन्ननिरूपितत्वव्याप्य [ मेयत्वविशिष्टव्यभिचारत्वावच्छिन्ननिरूपितत्वाभाववति शुद्धव्यभिचारत्वावच्छिन्नविषयितायां तादृशप्रतिबन्धकतासामान्यावच्छेदकीभूतविषयितात्वस्य वर्त्तमानतया न व्याप्यत्वम् ] मिति व्यभिचारत्वस्य यद्धर्मपदेन ग्रहीतुं शक्यतया तद्वत्त्वस्य धूमाभाववद्वृत्तिवह्निरूपव्यभिचारे वर्तमानत्वात्तत्र लक्षणसङ्गतिः ।

मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूता या व्यभिचारत्वावच्छिन्नविषयिता तादृशविषयितात्वे मेयत्वविशिष्टव्यभिचारत्वावच्छिन्ननिरूपितत्वव्याप्यताविरहेण यद्धर्मपदेन मेयत्वविशिष्टव्यभिचारत्वस्योपादानासम्भवात् मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिवारणमिति भावः ।

अत्र तृतीये न चोक्तकल्पेऽथ वेत्यादिचतुर्थकल्पे च, अयोगोलकं धूमवद्वह्नेरित्यादौ धूमाभाववदयोगोलकविशिष्टधूमाभाववद्वृत्तिवह्निरूपबाधविशिष्टव्यभिचारेऽतिव्याप्तिः, तथा हि तृतीये न चोक्तकल्पे स्वपदेन धूमाभाववदयोगोलकविशिष्टधूमाभाववद्वृत्तिवह्नित्वरूपबाधविशिष्टव्यभिचारत्वस्य ग्रहणसम्भवेन तादृशबाधविशिष्ट-

व्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्ना या धूमाभाववदयोगोलकविशिष्टधूमाभाववद्वृत्तिवह्निरूपबाधविशिष्टव्यभिचारत्वावच्छिन्ना प्रतिबन्धकता तदवच्छेदकीभूता या विषयिता सा न केवलबाधविषयिता न वा केवलव्यभिचारविषयिता [बाधज्ञाननिष्ठप्रतिबन्धकतानिरूपितावच्छेदकता व्यभिचारविषयितायां नास्ति, न वा व्यभिचारज्ञाननिष्ठप्रतिबन्धकतानिरूपितावच्छेदकता बाधविषयितायामस्ति] किन्तु बाधविशिष्टव्यभिचारत्वावच्छिन्नैव विषयिता सा च मेयत्वविशिष्टधूमाभाववदयोगोलकविशिष्टधूमाभाववद्वृत्तिवह्निरूपबाधविशिष्टव्यभिचारत्वावच्छिन्नानिरूपितेति मेयत्वविशिष्टबाधविशिष्टव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिः बाधविशिष्टव्यभिचारविषयकप्रतीतिस्तद्विषयतावच्छेदकं यत् बाधविशिष्टव्यभिचारत्वं तदवच्छिन्नत्वस्य बाधविशिष्टव्यभिचारे सत्त्वात्।

एवमथ वा कल्पे यद्धर्मपदेन धूमाभाववदयोगोलकविशिष्टधूमाभाववद्वृत्तिवह्नित्वरूपबाधविशिष्टव्यभिचारत्वस्य ग्रहीतुं शक्यतया तादृशबाधविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्ना या बाधविषयकज्ञाननिष्ठा प्रतिबन्धकता तदवच्छेदकीभूतबाधविशिष्टव्यभिचारत्वावच्छिन्नविषयितात्वं निरुक्तबाधविशिष्टव्यभिचारत्वावच्छिन्ननिरूपितत्वव्याप्यमिति तादृशबाधविशिष्टव्यभिचारत्ववत्त्वस्य बाधविशिष्टव्यभिचारे सत्त्वात्। एवञ्च तृतीये न च चतुर्थेऽथ वेत्यादिकल्पद्वयेऽतिप्रसङ्गभयेन न तयोः निर्दुष्टतेति भावः।

## बलदेवी

अत्रानुगमस्तु धर्मविशिष्टधर्मवत्त्वम्। वैशिष्ट्यञ्च स्वतादात्म्य,स्वविशिष्टविषयितावत्त्वोभयसम्बन्धेन। विषयितायां स्ववैशिष्ट्यञ्च, स्वविशिष्टविषयिताव्यापकप्रतिबन्धकतात्वव्यापकधर्मावच्छिन्नत्वस्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वोभयसम्बन्धेन। प्रतिबन्धकतात्वव्यापकत्वञ्च स्वविशिष्टविषयिताव्यापकत्वसम्बन्धेन। उभयत्र विषयितायां स्ववैशिष्ट्यञ्च, स्वावच्छिन्नत्वस्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वोभयसम्बन्धेनेति। अत्रापि पूर्ववदनतिरिक्तवृत्तित्वरूपावच्छेदकत्वमेव प्रवेश्यम् तन्निवेशप्रयोजनन्तु पूर्ववदेव बोध्यमिति।

## गादाधरी

अथ वह्न्यभाववादिधर्मितावच्छेदककवह्न्यादिप्रकारकबुद्धेरिव धूमव्यभिचारविशिष्टवह्न्यादिधर्मितावच्छेदककस्य धूमव्याप्यतया वह्न्यादिप्रकारकग्रहस्याऽनाहार्यस्याऽसम्भवेन तादृशपक्षतावच्छेदकावच्छिन्नपक्षकसमूहालम्बनानुमितेरप्रसिद्ध्या तादृशानुमितिप्रतिबन्धकताघटितयथाश्रुतलक्षणस्य तद्रूपावच्छिन्नपक्षकवह्न्यादिहेतुकदोषेऽव्याप्तिं स्वयमेव वक्ष्यतीति तद्वारणायाऽऽयासोऽयं वृथेति चेत् ?

## विमलप्रभा

न च चतुष्टयकल्पस्य निर्दुष्टत्वाभावान्न ततो धूमवान् वह्नेरित्यादौ व्यभिचारघटितबाधेऽव्याप्तिवारणं सम्भवति। ननु धूमाभाववद्वृत्तिवह्निधर्मितावच्छेदककधूमाभाववद्वृत्तिर्वह्निरूपसाध्य [धूम] व्याप्यहेतुप्रकारकसमूहालम्बनानुमितेराहार्यतया अनुमितिपदेनैतादृशाहार्यज्ञानस्य धारणासम्भवादनुमितिप्रतिबन्धकताघटितलक्षणे तत्राव्याप्तिवारणासम्भवात्तदर्थमत्र वदन्ति कल्पस्यैवादरणीयतया इदानीमनुमितिप्रतिबन्धकताघटितलक्षणे तत्राव्यातिवारणप्रयासो व्यर्थ इत्युक्तावपि न निस्तार इत्याशयवानाह अथेत्यादि। वह्न्यभावादिधर्मितावच्छेदककवह्न्यादिप्रकारकबुद्धेरिव = वह्न्यभाववान् पर्वतो वह्निमानित्याकारकज्ञानस्येव। धूमव्याप्यतया वह्न्यादिकारकग्रहस्य = धूमाभाववद्वृत्तित्वेन वह्न्यादिप्रकारकज्ञानस्य। अनाहार्यस्याऽसम्भवेन = तादृशज्ञानस्याहार्यतयाऽनाहार्यरूपत्वाभावेन। तादृशपक्षतावच्छेदकावच्छिन्नपक्षकसमूहालम्बनानुमितेः = धूमाभाववद्वृत्तिवह्निमत्त्वावच्छिन्नपक्षकधूमप्रकारधूमाभाववदवृत्तिवह्निप्रकारकधूमव्यभिचारिवह्निमान् धूमवान् धूमव्याप्यवह्निमांश्चेत्याकारकानुमितेः। अप्रसिद्ध्या = प्रसिद्ध्यभावेन। यथश्रुतलक्षणस्य = प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकानुमितिप्रतिबन्धकताघटितपूर्वोक्तलक्षणस्य। तद्रूपावच्छिन्नपक्षकवह्न्यादिहेतुकदोषे = धूमव्यभिचारिवह्निमत्त्वावच्छिन्नपक्षकधूमसाध्यकवह्निहेतुकबाधादिदोषे। स्वयमेव = दीधितिकृता रघुनाथेनैव। वक्ष्यति = अत्र वदन्ति

कल्पे "अथ पर्वतत्वेन पक्षत्वे" इत्यादिना प्रतिपादयिष्यति। तद्वारणाय=अनुमित्यप्रसिद्धिस्थलेऽव्याप्तिवारणाय। आयासः=प्रयासः। वृथा=व्यर्थः। अयमर्थः। यथा वह्न्यभावादिरूपवह्निविरोधिधर्मितावच्छेदककवह्निप्रकारकज्ञानस्य वह्न्यभाववान् पर्वतो वह्निमानित्यादौ नानाहार्यरूपत्वमपि तु स्वविरोधिधर्मधर्मितावच्छेदककस्वप्रकारकज्ञानत्वेनाहार्यरूपत्वम्, तथैव धूमव्यभिचारविशिष्टवह्निधर्मितावच्छेदककधूमव्याप्यवह्निप्रकारकधूमव्यभिचारिवह्निमान् धूमवान् धूमव्याप्यवह्निमांश्चेत्याकारकज्ञानमपि नानाहार्यरूपमपि तु आहार्यरूपमेव। एवञ्चानुमितेः परोक्षज्ञानरूपतया "परोक्षमनाहार्यमसन्दिग्ध" मिति नियमेनानाहार्यरूपतया धूमव्यभिचारिवह्निमत्पक्षकधूमसाध्यकवह्निहेतुकस्थलीयसमूहालम्बनानुमितेरप्रसिद्धया यद्रूपावच्छिन्नविषयताव्यापिका प्रकृतानुमितिप्रतिबन्धकता तद्रूपावच्छिन्नत्वरूपयथाश्रुतलक्षणे धूमाभाववत्धूमव्यभिचारिवह्निमत्रूपबाधेऽव्याप्तिः वरीवर्त्ति तत्प्रतिपादानञ्च "अथ पर्वतत्वेन पक्षत्वे वह्नित्वेन साध्यत्वे" इत्यादिग्रन्थेनात्र वदन्ति कल्पे स्वयं दीधितिकारेणैव विधीयतेऽतः तद्वारणप्रयासः न च चतुष्टयादिरूप इदानीमनावश्यक एवेति शङ्काकर्त्तुराशयः।

## गादाधरी

भवतु तावदेवम्, तथापि विशेषगुणाभाववान् घटो गुणसामान्याभाववानित्यादौ दर्शितसमूहालम्बनानुमितिप्रसिद्धया विशेषगुणवद्घटकरूपाऽऽश्रयासिद्धेर्गुणवद्घटरूपबाधघटिततया तत्संग्रह आवश्यकः।

## विमलप्रभा

एवम्=प्रदर्शितरीत्या। भवतु तावत्=प्रयासो वृथा भवतु। तथापि=उक्तप्रयासस्य वैयर्थ्यसम्भवेऽपि। दर्शितसमूहालम्बनानुमितिप्रसिद्धया=विशेषगुणाभाववान् घटो गुणसामान्याभाववान् गुणसामान्याभावव्याप्यघटत्ववांश्चेत्याकारकज्ञानस्यानाहार्यत्वेनानुमितिप्रसिद्धया। संग्रह आवश्यकः=तादृशापाश्रासिद्धौ लक्षणसंगमनावश्यकम्। अयमर्थः। प्रोक्तव्यभिचारघटितबाधेऽव्याप्तिवारणप्रयासस्य सम्प्रत्यनावश्यकत्वेऽपि मेयत्वविशिष्टव्यभिचारेऽतिप्रसङ्गभङ्गाय विशिष्टान्तरा-

घटितत्वनिवेशेऽनाहार्यस्थलीयबाधघटिताऽऽश्रयासिद्धावव्याप्तिवारणप्रयास आवश्यक एवान्यथा, विशेषगुणाभाववान् घटो गुणसामान्याभाववानित्यादौ विशेषगुणवद्घट-रूपाश्रयासिद्धेः गुणवद्घटरूपबाधघटिततया विशिष्टान्तराऽघटितत्वविशिष्टयथाश्रु-तलक्षणस्य तादृशाऽऽश्रयासिद्धिरूपदोषेऽगमनेनाव्याप्ते र्दुर्वारत्वात्। तथा हि विशेष-गुणवद्घटत्वावच्छिन्नाविषयकप्रतीतिः गुणवद्घटविषयकगुणवान घट इत्याकारक-प्रतीतिस्तद्विषयतावच्छेकं यद्गुणवद्घटत्वरूपबाधत्वं तदवच्छिन्नाविषयकप्रतीतिर्न विशेषगुणवद्घटविषयकप्रतीतिस्तत्र गुणवद्घटत्वावच्छिन्नविषयतासत्त्वात् अतस्ता-दृशप्रतीतिविषयतावच्छेदकत्वस्य विशेषगुणवद्घटत्वेऽसत्त्वेन विशेषगुणवद्घटत्वस्य स्व-पदेनोपादातुमशक्यत्वात्। अतः विशिष्टान्तराऽघटितत्वविशेषणन्न देयमन्यादृशप्रका-रेणैव मेयत्वविशिष्टव्यभिचारेऽव्याप्तिर्वारणीयेति शङ्काशयः।

## गादाधरी

यदि च तत्र घटत्वावच्छेदेन गुणवत्त्वमेव बाधः, आश्रयासिद्धिश्च तत्सामाना-धिकरण्येन, तदवच्छेदेन वा विशेषगुणवत्त्वम्, तस्याञ्च गुणत्वरूपसामान्यधर्मावच्छि-न्ने घत्वटव्यापकताघटितोक्तबाधस्य न प्रवेशः विशेषगुणत्वेन घटत्वव्यापकतायास्तत्र प्रवेशेऽपि सामान्यरूपेण व्यापकतायास्तदनन्तर्भावादिति न तादृशाश्रयाऽसिद्ध्यसंग्रह इत्युच्यते, तदापि विशेषगुणाभाववान् द्वितीयक्षणावच्छिन्नो घटो गुणसामान्याभाववा-नित्यादौ द्वितीयक्षणावच्छिन्ने घटे विशेषगुणवत्वरूपाश्रयासिद्धौ तदवच्छिन्ने घटे गु-णवत्वरूपबाधप्रवेशस्यावश्यकत्वात्, लक्षणे च तत्संग्रहस्यावश्यकतया उक्तविशेषणदा-नानुपपत्तिः। वस्तुतस्तु "अत्रवदन्ती"त्यादिनिष्कृष्टकल्पे मेयत्वविशिष्टव्यभिचारा-दिवारणाय विशिष्टान्तराऽघटितत्वस्य निवेशनीयतया दर्शितबाधाद्यसंग्रहो दोष एव।

## विमलप्रभा

निरुक्ताश्रयासिद्धावव्याप्तिवारणायाशङ्कते यदिचेत्यादिना। तत्र = विशेषगुणाभाववान् घटो गुणसामान्याभाववानित्यत्र घटत्वावच्छेदेन गुणवत्वमेव बाधः = घटत्वव्यापकगुणप्र-

तियोगिकसमवायसम्बन्धेन गुणवत्वमेव बाधः,न तु घटत्वसामानाधिकरण्येन गुणत्वं बाधः। तत्सामानाधिकरण्येन = घटत्वसामानाधिकरण्येन। अस्य विशेषगुणवत्वमाश्रयासिद्धिरिति पूर्वेणान्वयः। तदवच्छेदेन = घटत्वावच्छेदेन,घटत्वव्यापकगुणप्रतियोगिकसमवायसम्बन्धेनेति यावत्। तस्यां = घटत्वसामानाधिकरण्येन, घटत्वावच्छेदेन वा विशेषगुणवद्घटरूपाश्रयासिद्धौ। न प्रवेशः = नाश्रयासिद्धिघटकत्वं बाधस्य। कथन्नाश्रयासिद्धौ बाधस्य प्रवेश इत्येवाह विशेष इत्यादिना। तत्र = तादृशाश्रयासिद्धौ। सामान्यरूपेण व्यापकतायाः = गुणत्वरूपसामान्यधर्मावच्छिन्नव्यापकतायाः। तदनन्तर्भावात् = आश्रयासिद्धावन्तर्भावविरहात्। न तादृशासिद्ध्यसंग्रहप्रसङ्गः = न बाधघटिताऽऽश्रयासिद्धावव्याप्तिप्रसङ्गः। तदापि = उक्तस्थले बाधघटिताऽऽश्रयासिद्धावव्याप्तिविरहेऽपि। तदवच्छिन्ने = विशेषगुणाभाववद्द्वितीयक्षणावच्छिन्ने। आवश्यकत्वात् = देशकालोद्देश्यतावच्छेदकस्थले व्यापकताभानानङ्गीकारेण बाधघटितत्वस्याश्रयासिद्धावनपायात्। तत्संग्रहस्य = बाधघटितविशेषगुणवद्घटरूपाश्रयासिद्धिसंग्रहस्य। उक्तविशेषणदानानुपपत्तिः = विशिष्टान्तराऽघटितत्वरूपविशेषणप्रक्षेपानुपपत्तिः। दर्शितबाधाद्यसंग्रहः = व्यभिचारघटितबाधाद्यसंग्रहः। अयमर्थः। विशेषगुणाभाववान्घटो गुणसामान्याभाववानित्यत्र विशेषगुणवद्घटरूपाश्रयासिद्धित्वस्य विशिष्टान्तराऽघटितत्वात् क्वाव्याप्तिसम्भावना। तथा हि अत्र घटत्वावच्छेदेन गुणवत्वमेव बाधः [तृतीयायाः व्यापकत्वार्थकतया घटत्वव्यापकगुणप्रतियोगिकसमवायसम्बन्धेन गुणवद्घट एव बाधः] घटत्वसमानाधिकरणविशेषगुणवद्घटरूपा घटत्वव्यापकविशेषगुणवद्घटरूपा वाऽऽश्रयासिद्धिः। एवञ्च घटत्वसमानाधिकरणात्यन्ताभावीयगुणत्वतदितरोभयानवच्छिन्नप्रतियोगितानवच्छेदकगुणत्ववद्गुणवद्घटरूपो यो बाधस्तदघटितत्वस्य घटत्वसमानाधिकरणाभावीयविशेषगुणत्वतदितरोभयानवच्छिन्नप्रतियोगितानवच्छेदकविशेषगुणत्ववद्विशेषगुणवद्घटरूपाश्रयासिद्धौ सत्त्वात्। [अर्थात् घटत्वव्यापकगुणवद्घटरूपबाधघटकव्यापकत्वन्नाम घटत्वसमानाधिकरणो यः गुणत्वतदितरोभयानवच्छिन्नप्रतियोगिताकोऽभावः स च न गुणात्यन्ताभावः किन्तु पटाद्यभावस्तदीयप्रतियोगितानवच्छेदकं यत् गुणत्वं तद्वत्वरूपमेव। घटत्वव्यापकविशेषगुणवद्घटरूपाऽऽश्रयासिद्धिघटकव्यापक-

ता च, घटत्वसमानाधिकरणात्यन्ताभावीयविशेषगुणत्वतदितरोभयानवच्छिन्नप्रति-योगिताको यः पटाद्यभावस्तदीयप्रतियोगितानवच्छेदकविशेषगुणत्वरूपो यो धर्मस्तद्व-त्त्वरूपेति व्यापकतायाः परस्परविभिन्नतया विशेषगुणवद्घटरूपाऽऽश्रयासिद्धित्वा-वच्छिन्नाविषयकप्रतीतिविषयतानिरूपकतावच्छेदकं यत् प्रकृतानुमितिप्रतिबन्धकता-नतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकं तच्च भवतु नाम तादृशगुणवद्घटरूपबा-धत्वं किन्तु तादृशबाधत्वावच्छिन्नाविषयकप्रतीतिमध्ये तादृशविशेषगुणवद्घटरूपा-ऽऽश्रयासिद्धिविषयकप्रतीतेरपि ग्रहणसम्भवेन-तादृशप्रतीतिविषयतानिरूपकतावच्छेदकं यन्निरुक्ताऽऽश्रयासिद्धित्वं तदवच्छिन्नत्वस्य तादृशाऽऽश्रयासिद्धौ वर्त्तमानतया काव्या-प्तिसम्भावनेति ]ननु देशकालादीनामुद्देश्यतावच्छेदकस्थले तदवच्छेद्यत्वस्य स्वरूप-सम्बन्धरूपस्यैव भानाभ्युपगमेन व्यापकत्वाऽघटितस्यैव तत्र बाधाश्रयासिद्ध्यादेरभ्यु-पगन्तव्यतया विशेषगुणाभाववद्द्वितीयक्षणावच्छिन्नघटपक्षकगुणसामान्याभावसाध्यक-स्थले विशेषगुणवद्द्वितीयक्षणावच्छिन्नघटरूपाऽऽश्रयासिद्धेर्गुणवत्तादृशघटरूपबाध-घटिततया तत्राऽव्याप्तिर्दुर्वारैव । तथा हि विशेषगुणवद्द्वितीयक्षणावच्छिन्नघट-रूपाऽऽश्रयासिद्धित्वावच्छिन्नाविषयकप्रतीतिमध्ये तादृशगुणवद्घटरूपबाधविषयकप्रती-तेरपि गृहीतुं शक्यतया तदीयविषयतानिरूपकतावच्छेदकं प्रकृतानुमितिप्रतिबन्धकतान-तिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकञ्च यत्तादृशगुणवद्घटरूपबाधत्वं तदवच्छि-न्नविषयत्वस्यैव विशेषगुणवद्द्वितीयक्षणावच्छिन्नघटरूपाश्रयासिद्धिविषयकप्रतीतौ वर्त्तमानतया तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकरूपावच्छिन्नत्वस्य तादृशा-ऽऽश्रयासिद्धौ विरहादिति चेन्नैतन्मनोज्ञम्, शिरोमणिना प्रकृतानुमितिप्रतिबन्धकता-घटितलक्षणस्याग्रे परित्यागः कृतस्तत्र निरुक्ताऽऽश्रयासिद्धिष्वव्याप्तिरपि तत्त्यागबीज-भूतेति चेत्तदापि "अत्र वदन्तीत्यादिवक्ष्यमाणाग्रिमकल्पेऽपि मेयत्वविशिष्टव्यभिचा-रेऽतिप्रसङ्गभङ्गाय विशिष्टान्तराऽघटितत्वनिवेशस्यावश्यकतया तत्रापि व्यभिचारघ-टितबाधादावव्याप्तिस्स्यादेवेति सुतरामिदानीं तद्वारणप्रयासकष्टकल्पनमपेक्ष्येदानीमि-ष्टापत्तिकल्पनमेव तत्र समाधानमिति भावः ।

## गादाधरी

एतेन स्वावच्छिन्ननिरूपितविषयित्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकतावच्छे-

दकविशिष्टनिरूपितविषयितात्वव्यापकस्वावच्छिन्ननिरूप्यताकधर्मवत्त्वं समुदितलक्षणार्थः। मेयत्वविशिष्टव्यभिचारत्वादिकं नैतादृशं स्वं तदवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयिताकशुद्धव्यभिचारादिविषयितात्वस्य तदवच्छिन्ननिरूपितत्वाऽव्याप्यत्वात्। उक्तस्थले विशेषगुणविशिष्टघटादिरूपाऽऽश्रयासिद्ध्यादिविषयकत्वावच्छिन्नविशिष्टपक्षग्रहादिनिरूपितयत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयिताकविशिष्टनिरूपितविषयितात्वस्य तादृशाऽऽश्रयासिद्ध्यादिनिरूपितत्वव्याप्यत्वात् तत्र लक्षणसमन्वयः। प्रतिबन्धकतायां यावत्त्वानिवेशान्नोक्तरीत्या बाधविशिष्टव्यभिचारादावतिप्रसङ्गः।

## विमलप्रभा

एतेन = व्यभिचारघटितबाधेऽव्याप्तिभयेन। स्वं = यद्रूपावच्छिन्ने लक्षणसङ्गमनीयं तदेव। समुदितलक्षणार्थः = विशिष्टान्तराऽघटितत्वविशेषणसहितप्रतिबन्धकताघटितलक्षणस्यार्थः। तदवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकता = मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नमेयत्वविशिष्टव्यभिचारविषयकनिश्चयनिष्ठप्रतिबन्धकता। तदवच्छिन्ननिरूपितत्वाऽव्याप्यत्वात् = मेयत्वविशिष्टव्यभिचारत्वावच्छिन्ननिरूप्यतायां तादृशविषयितात्वव्यापकत्वाभावात्। उक्तस्थले = विशेषगुणाभाववान् घटो गुणसामान्याभाववानित्यादिबाधघटिताऽऽश्रयासिद्धिस्थले। विशिष्टपक्षग्रहादिनिरूपितयत्किञ्चित्प्रतिबन्धकता = पक्षतावच्छेदकविशिष्टपक्षविषयकज्ञाननिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकता। तादृशाऽऽश्रयासिद्धिः बाधघटिताऽऽश्रयासिद्धिः। तत्र = बाधघटिताऽऽश्रयासिद्धौ। उक्तरीत्या = पूर्वोक्ताथवेत्यादिकल्पोक्तरीत्या। अयमर्थः। प्रतिबन्धकताघटितलक्षणे पूर्वोक्ताश्रयासिद्धावव्याप्तिवारणोपायमाह– "एतेन" इत्यादिना। निरुक्ताऽथ वा कल्पस्यैव एतेनेत्यादिना परिष्कारः कृतः, तत्र कल्पे प्रतिबन्धकतायां सामान्यपदमत्र तु यत्किञ्चिद्दलम्, तत्र-यद्धर्मावच्छिन्नविषयकत्वावच्छिन्नत्वमत्र तु स्वावच्छिन्ननिरूपितविषयित्वावच्छिन्नत्वम् तत्र विषयताकेत्युक्तम्, तदर्थश्च स्वनिरूपितविषयिताविशिष्टविषयितात्वमत्र-

तु स्पष्टतया तदेव लिखितम्, अत्र विषयितात्वव्यापकत्वम् स्वावच्छिन्ननिरूपितनिरूप्यतायाम् तत्र तु विषयतायां स्वावच्छिन्ननिरूपितत्वव्याप्यत्वम्। एवञ्च शब्दभेदेन वाक्चातुर्यमेवाविष्कृतम्। तथा च स्वावच्छिन्ननिरूपितविषयित्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयिताकविशिष्टनिरूपितविषयितात्वव्यापकस्वावच्छिन्ननिरूप्यताकत्वमेव लक्षणार्थः कार्यः, तावतैव सर्वसामञ्जस्यसम्भवः। तथा हि ह्रदो वह्निमान् जलादित्यादौ वह्न्यभावविशिष्टह्रदरूपबाधे लक्षणसंगतिः, तत्र स्वं वह्न्यभावविशिष्टह्रदत्वं तदवच्छिन्ननिरूपितविषयित्वावच्छिन्ना या ह्रदो वह्निमान् वह्निव्याप्यजलवानित्याकारकानुमितित्वव्यापकप्रतिबध्यतानिरूपितवह्न्यभाववान् ह्रद इत्याकारकनिश्चयनिष्ठप्रतिबन्धकता तदवच्छेदकविषयिताको यो विशिष्टः स च वह्न्यभावविशिष्टह्रदः तन्निरूपितविषयितात्वव्यापकत्वस्य वह्न्यभाववद्ह्रदत्वावच्छिन्ननिरूप्यतायां सत्त्वेन तादृशनिरूप्यताको यो वह्न्यभाववद्ध्रदत्वरूपो धर्मस्तद्वत्तायाः वह्न्यभाववद्ध्रदे सत्त्वात्।

मेयत्वविशिष्टव्यभिचारेऽपि नातिव्याप्तिः, तथा हि मेयत्वविशिष्टव्यभिचारत्वनिरूपितविषयित्वावच्छिन्ना या मेयत्वविशिष्टो व्यभिचार इति निश्चयनिष्ठा अयोगोलकं धूमवत् धूमव्याप्यवह्निमच्चेत्याकारकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तदवच्छेदकविषयिताको यो विशिष्टस्स च धूमाभावविशिष्टवह्निरूपव्यभिचारस्तन्निरूपितविषयितात्वव्यापकत्वस्य मेयत्वविशिष्टव्यभिचारत्वावच्छिन्ननिरूप्यतायामसत्त्वादिति। विशेषगुणाभाववान् द्वितीयक्षणावच्छिन्नो घटो गुणसामान्याभाववानित्यादौ विशेषगुणवत्तादृशघटरूपबाधघटिताऽऽश्रयासिद्धौ च विशेषगुणवद्द्वितीयक्षणावच्छिन्नघटरूपाऽऽश्रयासिद्धित्वावच्छिन्ननिरूपितविषयित्वावच्छिन्ना या विशेषगुणाभाववान् द्वितीयक्षणावच्छिन्नो घट इति विशिष्टपक्षग्रहनिरूपिता यत्किञ्चित्प्रतिबन्धकता सा च विशेषगुणाभाववान् द्वितीयक्षणावच्छिन्नो घट इत्याकारकनिश्चयनिष्ठैव प्रतिबन्धकता तदवच्छेदकविषयिताको यो विशिष्टस्स च विशेषगुणवद्द्वितीयक्षणावच्छिन्नघटरूप एव विशेषः न तु गुणवद्द्वितीयक्षणावच्छिन्नघटरूपबाधस्तस्य विशिष्टपक्षग्रहनिरूपितप्रतिबन्धकतावच्छेदकविषयिताकत्वाभावादिति तादृशाऽऽश्रयासिद्धिरूपविशिष्टनिरूपितविषयितात्वव्यापकत्वस्य विशेषगुणवद्द्वितीयक्षणावच्छि-

न्नघटरूपाऽऽश्रयासिद्धित्वावच्छिन्ननिरूप्यतायां सत्त्वेन तादृशनिरूप्यताको यो धर्मस्स च विशेषगुणवद्द्वितीयक्षणावच्छिन्नघटरूपतादृशाऽऽश्रयासिद्धित्वमेव तद्वत्वस्य विशेषगुणवत्तादृशघटरूपाऽऽश्रयासिद्धौ सत्त्वात् लक्षणसमन्वयः ।

एवमत्र प्रतिबन्धकतायां यावत्त्वस्याप्रवेशेन यत्किञ्चित्पदस्यैव प्रवेशनीयतया न बाधविशिष्टव्यभिचारेऽपि दोषसम्भावना तथा हि अयोगोलकं धूमवद्वह्नेरित्यादौ धूमाभाववदयोगोलकविशिष्टधूमाभाववद्वृत्तिवह्निरूपबाधविशिष्टव्यभिचारत्वावच्छिन्न विषयकत्वाच्छिन्ना या प्रतिबन्धकता सा चैका व्याप्तिज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपिता, अपरा चानुमितित्वावच्छिन्नप्रतिबध्यतानिरूपिता, तदवच्छेदकविषयिताको यो विशिष्टस्स च शुद्धव्यभिचारः शुद्धबाधो वा तादृशव्यभिचारविषयितात्वस्य बाधविषयितात्वस्य वा बाधविशिष्टव्यभिचारनिरूपितत्वाऽव्याप्यत्वात् ।

न वा व्यभिचारघटितबाधेऽव्याप्तिसम्भावना, तथा हि धूमाभाववद्धूमव्यभिचारिवह्निमत्वावच्छिन्नविषयकत्वावच्छिन्ना याऽनुमितिप्रतिबन्धकता सा च व्यभिचारघटितबाधनिश्चयनिष्ठा प्रतिबन्धकता तदवच्छेदकविषयिताको यो विशिष्टस्स च व्यभिचारघटितबाधरूपविशिष्टस्तदवच्छेदकविषयिताव्याप्यत्वस्य व्यभिचारघटितबाधनिरूप्यतायां सत्त्वेन तादृशनिरूप्यताको यो धर्मस्स च व्यभिचारघटितबाधत्वरूपो धर्मस्तद्वत्त्वस्य व्यभिचारघटितबाधे सत्त्वेन लक्षणसमन्वयात् ।

## बलदेवी

एतेनेत्यादि गदाधरग्रन्थः । अत्रोभयत्र [ विषयत्वनिष्ठावच्छेदकता, प्रतिबन्धकतावच्छेदकविषयितेत्यत्रावच्छेदकता च ] यदि स्वरूपसम्बन्धरूपैवाऽच्छेदकता निवेश्यते तदा अयं कपिसंयोगी एतत् वृक्षत्वादित्यत्र कपिसंयोगाभाववद्वृक्षेऽतिव्याप्तिः । कपिसंयोगाभाववद्वृक्षत्वावच्छिन्नविषयितानिष्टस्वरूपसम्बन्धरूपाऽवच्छेदकतानिरूपक- "साध्यवत्ताबुद्धिनिरूपितप्रतिबन्धकतात्मकयत्किकिञ्चित्प्रतिबन्धकतानिरूपितस्वरूपसम्बधरूपावच्छेदकतावद्विषयताको यो विशिष्टस्स च कपिसंयोगाभाववद्वृक्षरूपस्तन्निरूपितविषयितात्वव्यापकत्वस्य कपिसंयोगाभाववद्वृक्षत्वावच्छिन्ननिरूप्यतायां सत्त्वात् ।

न च स्वावच्छिन्ननिरूपितविषयित्वनिष्ठाऽवच्छेदकत्वमेवानतिरिक्तवृत्तित्वरूपं वाच्यं, तावतैव कपिसंयोगाभाववद्वृक्षेऽपि नातिव्याप्तिः। अव्याप्यवृत्तित्वभ्रमानास्कन्दिताऽनाहार्यत्वादिविशिष्टनिश्चयीयतद्विषयितात्वव्यापकत्वस्य प्रतिबन्धकतायामसत्त्वात्।

एवं चेदानीं विशिष्टद्वयाघटितत्वमपि न निवेशनीयम्, वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयिताव्यापिका ज्ञानवैशिष्ट्यावच्छिन्ना या यत्किञ्चित्प्रतिबन्धकता तन्निरूपितस्वरूपसम्बन्धरूपावच्छेदकतावद्विषयितात्वस्य वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयितायामपि सत्त्वेन तत्र तादृशजलवद्ध्रदत्वावच्छिन्ननिरूप्यताविरहेणातिव्याप्तिविरहात्।

उभयत्रैवाऽनतिरिक्तवृत्तित्वरूपावच्छेदकतानिवेशे कपिसंयोगाभाववद्वृक्षे नातिव्याप्तिः। तादृशप्रतिबन्धकताशून्याऽव्याप्यवृत्तित्वज्ञानकालीनाऽनाहार्यत्वविशिष्टकपिसंयोगाभाववद्वृक्षविषयकनिश्चये कपिसंयोगाभाववद्वृक्षत्वावच्छिन्नविषयितासत्त्वेन प्रतिबन्धकतायां तादृशविषयिताव्यापकत्वविरहात्। परन्तु वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयित्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकतानतिरिक्तवृत्तिविषयितावह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयितैव तद्व्यापकत्वस्य तादृशजलवद्ध्रदत्वावच्छिन्ननिरूप्यतायां सत्त्वेन वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिवारणार्थं विशिष्टद्वयाऽघटितत्वं निवेशनीयमिति गौरवम्। एवञ्च पूर्वमनतिरिक्तवृत्तित्वरूपावच्छेदकत्वमुत्तरत्र च स्वरूपसम्बन्धरूपमेव तदिति विवेकः।

अत्र प्रथमम् स्वावच्छिन्नविषयितायां स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यानाहार्यप्रामाण्याव्याप्यवृत्तित्वज्ञानानास्कन्दितनिश्चयीयत्वं निवेशनीयमन्यथा संशयाहार्यादिज्ञानमादायासम्भवस्स्यात्।

एवम् यत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयितायामपि स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वमपि निवेशनीयम्, अन्यथा सर्वं गगनवदित्यत्र गगनाभाववत्सर्वरूपबाधेऽव्याप्तिः। गगनाभाववत्सर्वत्वावच्छिन्नविषयकत्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयिताकगगनाभाववत्घटविषयितात्वव्यापकत्वस्य गगना-

भाववत्सर्वत्वावच्छिन्ननिरूप्यतायामसत्त्वात् । तदुपादाने च गगनाभाववत्सर्वत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वविरहेण गगनाभाववद्घटविषयितायाः धर्तुमशक्यतया गगनाभाववत्सर्वत्वावच्छिन्नविषयिताया एव तादृशतया तद्व्यापकत्वस्य गगनाभाववत्सर्वत्वावच्छिन्ननिरूप्यतायां सत्वान्नोक्तदोषः ।

न चैवं यत्किञ्चित्प्रतिबन्धकतावच्छेदकेत्यत्र स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशेपि सामान्यपदस्यावश्यकतया ह्रदो वह्निमानित्यत्र जातिमद्वह्न्यभाववद्ध्रदेऽतिव्याप्तिस्तत्र जातिमद्वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताव्यापकयत्किञ्चित्प्रतिबन्धकतासाध्यवत्ताबुद्धिप्रतिबन्धकतैव तदवच्छेदकत्वञ्च जातिमद्वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितासामान्ये नास्ति तत्सामान्यान्तर्गतजातिमान् वह्न्यभाववानिति ज्ञाने तदभावात्, किन्तु जातिमद्वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितायामेव तत्त्वव्यापकत्वस्य तादृशविशिष्टनिरूप्यतायां सत्त्वादिति वाच्यम् ।

द्वितीयविशिष्टविषयितायां यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वस्यापि विवक्षणात् । एवञ्च तादृशयत्किञ्चित्प्रतिबन्धकतावच्छेदकत्वस्य जातिमद्वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयजातिमान् वह्न्यभाववानिति ज्ञानव्यावृत्तवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितासामान्ये सत्त्वेन तत्र च जातिमद्वह्न्यभाववद्ध्रदत्वावच्छिन्ननिरूप्यत्वाभावेन नातिप्रसङ्गः । तथा च स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यानाहार्यप्रामाण्यज्ञानानास्कन्दिताव्याप्यवृत्तित्वभ्रमानास्कन्दितनिश्चयीयस्वावच्छिन्नविषयिताव्यापकप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितयत्किञ्चित्प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत्स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितात्वव्यापकस्वावच्छिन्ननिरूप्यताकधर्मवत्वं पर्यवसितम् । न चात्राऽसाधारण्येऽव्याप्तिः तद्विषयिताव्यापकप्रतिबन्धकत्वाऽप्रसिद्धेरिति वाच्यम् ।

अनाहार्यत्वादिविशिष्टपक्षधर्मिकहेतुमत्ताज्ञानाऽऽकाङ्क्षीनत्वाऽसाधारण्यविषयकत्वोभयाभाववत्स्वावच्छिन्नविषयताशालिनिश्चयत्वव्यापकत्वस्य प्रतिबन्धकतायां वि-

वक्षेणीयत्वात् । न चैवमपि द्वितीयदिशि स्वरूपसम्बन्धरूपावच्छेदकत्वस्य निवेशनीयतया अभावो गगनत्ववानाधेयत्वादित्यत्राऽसाधारण्येऽव्याप्तिः, अनाहार्यत्वादिविशिष्टनिरुक्तोभयाभावविशिष्टतादृशाऽसाधारण्यविषयकनिश्चयत्वव्यापकयत्किञ्चित्प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावति तादृशासाधारण्यविषयकनिश्चयत्वाव्यापकविषयिताशून्ययद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयाऽधेयत्ववदभावत्वावच्छिन्ननिरूपितहेतुमत्पक्षविषयित्वे तादृशाऽसाधारण्यत्वावच्छिन्ननिरूप्यत्वाभावात्। न च यत्किञ्चित्प्रतिबन्धकतायाः साक्षान्निरूपिताऽवच्छेदकतावद्विषयितायामेव तत्तन्निरूपितत्वं विवक्षितम्, हेतुमत्पक्षविषयिता च न तादृशीति वाच्यम् ।

ह्रदो जलवद्ध्रदकालीनवह्निमान् पङ्कजादित्यत्र जलवद्ध्रकालीनवह्निव्यापकीभूताभावप्रतियोगिजलेऽतिव्याप्तिः तद्विषयित्वाव्यापकयत्किञ्चित्प्रतिबन्धकताजलवद्ध्रदविषयकनिश्चयविशिष्टतादृशजलत्वावच्छिन्नविषयकनिश्चयप्रतिबन्धकतैव तत्साक्षादवच्छेदिका तादृशजलत्वावच्छिन्नविषयितैव, तत्र च तादृशजलत्वावच्छिन्ननिरूप्यत्वस्य सत्त्वादिति वाच्यम्। तादृशयत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयितायामसाधारण्यविषयिताभिन्नत्वासाधारण्यविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयाभाववत्त्वस्य विवक्षणीयत्वात्। असाधारण्यघटकहेतुमत्पक्षविषयिता च नोभयाभाववती, किन्तु विशिष्टासाधारण्यविषयितैव, तत्र च तादृशासाधारण्यत्वावच्छिन्ननिरूप्यत्वसत्वान्नाव्याप्तिः।

ह्रदो जलवद्ध्रदकालीनवह्निमान् पङ्कजादित्यत्र जलवद्ध्रदकालीनवह्निव्यापकीभूताभावप्रतियोगिजले नातिव्याप्तिः, असाधारण्यविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वाभावप्रयुक्तनिरुक्तोभयाभाववत्यां तादृशजलत्वावच्छिन्नविषयिताव्यापकयत्किञ्चित्प्रतिबन्धकतावच्छेदिकायां जलवद्ध्रदविषयितायां तादृशजलत्वावच्छिन्ननिरूप्यत्वाभावात् एकरूपेण प्रतिबन्धकत्वे तु असाधारण्यरूपपङ्कजविषयितैव तादृशीति।

प्रथमावच्छिन्नान्तानुपादाने प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितयत्किञ्चित्प्रतिबन्धकतानिरूपितावच्छेदकतावद्वह्न्यभावत्वावच्छिन्नविषयितायां बाधनिरूप्यत्वाभावादसम्भवः।

यद्रूपावच्छिन्नविषयितासामान्यं तादृशप्रतिबन्धकतावच्छेदकं तद्रूपावच्छिन्न-विषयितायां निरूप्यत्वोक्तौ पर्वतो वह्निमानित्यत्र पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिः, तद्विषयितासामान्यस्य तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्याव-च्छि यत्किञ्चित्प्रतिबन्धकतायामवच्छेदकत्वात्। प्रतिबन्धकतायां ज्ञानवैशिष्ट्याव-च्छिन्नत्वासाधारण्यविषयकत्वानवच्छिन्नत्वोभयाभावविवक्षायां कपिसंयोगी एतद्वृ-क्षत्वादित्यत्र कपिसंयोगाभाववद्वृक्षेऽतिव्याप्तिः, तादृशानुमितित्वव्यापकसाध्यवत्ताबु-द्धित्वावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायां कपिसंयोगा-भाववद्वृक्षविषयितासामान्यस्यैवावच्छेदकत्वात्।

अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वविवक्षणे तु वह्न्यभाववज्जलादिमद्वृत्ति-जलवद्ध्रदेऽतिव्याप्तिः। प्रकृतानुमितिनिरूपितयत्किञ्चित्प्रतिबन्धकताज्ञानवैशिष्ट्या-वच्छिन्नप्रतिबन्धकता तदनतिरिक्तवृत्तिविषयिता च तादृशविशिष्टविषयकत्वाव्यापक-विषयिताशून्यज्ञानीया तादृशविषयितैव, तद्वारणाय विशिष्टद्वयाघटितत्वनिवेशे गौरव-म्। प्रतिबन्धकतायामुक्तोभयाभावनिवेशेऽप्यनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशेऽ-साधारण्यासंग्रहः [ जलवद्ध्रदकालीनवह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छि-न्नविषयताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतावच्छेदकशुद्धजलवद्ध्रदत्वावच्छिन्नविष-यितात्वव्यापकस्वावच्छिन्ननिरूपितत्वं न भवतीत्यव्याप्तिः] स्वावच्छिन्ननिरूपितविष-यित्वावच्छिन्नत्वं प्रतिबन्धकतायां निवेशे तु न कोऽपि प्रागुक्तदोषः, तथा च यथाश्रु-तमेव साधुः।

अत्रायमनुगमः, पदार्थविशिष्टपदार्थवत्त्वं हेत्वाभासत्वम्, वैशिष्ट्यञ्च स्वतादा-त्म्यस्वावच्छिन्ननिरूप्यतावृत्तिर्यः किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्याना-हार्यप्रामाण्यज्ञानानास्कन्दिताव्याप्यवृत्तित्वभ्रमानास्कन्दितपक्षधर्मिकहेतुमत्ताज्ञाना-कालीनत्वासाधारण्यविषयिताकत्वोभयाभाववत्किञ्चिद्रूपावच्छिन्नविषयताशालिनि-श्चयत्वव्यापकयत्किञ्चित्प्रतिबन्धकतावच्छेदकत्ववृत्तिकिञ्चिद्रूपावच्छिन्नविषयित्वा-व्यापकविषयिताशून्यज्ञानीयकिञ्चिद्रूपावच्छिन्नविषयतानिष्ठभेदप्रतियोगितावच्छेदक-त्वन्नास्तीति प्रतीतिसिद्धाभावनिरूपितप्रतियोगितानिरूपितावच्छेदकतानिरूपिताव-च्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्रू-

पावच्छिन्नकिञ्चिद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानवृत्त्यसाधारण्य - विषयिताभिन्नत्वासाधारण्यविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयाभाववद्वि- षयितानिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावस्तन्निरूपितावच्छे- दकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदक- तानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतावत्वोभयसम्बन्धे - न, अवच्छेदकतावत्ता च स्वनिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितज्ञाननिष्ठावच्छे- दकतानिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपितव्या - पकत्वनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धा- वच्छिन्नावच्छेदकतावत्व, स्वनिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरू- पिताऽवच्छेदकत्वनिष्ठाऽवच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छे - दकत्वनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितभेदनि- ष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानि- रूपितावच्छेदकतानिष्ठप्रतियोगितानिष्ठावच्छेदकतानिरूपिततादृशाभावनिष्ठावच्छेदक - तानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रति - बन्धकतावृत्त्युभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपि - तावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठाव- च्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकनिरूपितनिश्चयनिष्ठावच्छेदकतानिरूपितविष - यितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्वोभयसम्ब - न्धेन ।

गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र गगनाभाववत्तादृशघटरूपबा- धस्य व्यापकसामानाधिकरण्यरूपव्याप्तिविशिष्टप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षस्य लक्ष्य- त्वे तत्संग्रहाय यत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयितानिष्ठभेदप्रतियोगितावच्छेद- कत्वप्रकृतानुमितिप्रतिबन्धकताविशिष्टविषयित्वाऽवृत्तित्वविरोध्यनुमतिजनकताविशि- ष्टविषयित्वाऽवृत्तित्वैतत्त्रितयावच्छिन्नप्रतियोगिताकाभावो निरूप्यतायां वक्तव्यः, अनु- गमे च द्वितीयसम्बन्धघटकस्त्वावच्छिन्ननिरूप्यतावृत्तित्वाभाव एतत्त्रितयावच्छिन्नप्रति- योगिताको विवक्षणीय इति दिक् ।

## गादाधरी

स्वावच्छिन्नाऽनिरूपितविशिष्टविषयित्वानवच्छिन्नयत्किञ्चित्प्रतिबन्धकताव - च्छेदकस्वावच्छिन्नविषयिताको यो धर्मस्तद्वत्वं समुदितलक्षणार्थः। प्रमेयत्वविशिष्ट-व्यभिचारत्वादिकं नैतादृशं स्वम्, तदवच्छिन्नानिरूपितशुद्धव्यभिचारत्वाद्यवच्छिन्न-विषयित्वावच्छिन्नायामेव प्रतिबन्धकतायां तदवच्छिन्नविषयिताया अवच्छेदकत्वात्। उक्तस्थले चाश्रयासिद्धिविषयकत्वस्य तदनिरूपितबाधविषयित्वानवच्छिन्ना या विशि-ष्टपक्षग्रहप्रतिबन्धकता तदवच्छेदकत्वान् लक्षणसमन्वय इति परास्तम्। यद्विषयकनिश्च-यस्य विरोधिविषयिता प्रयुक्त इत्यादिनिष्कृष्टकल्पेऽनुमितिप्रतिबन्धकताया अघटकत्वात् प्रतिबन्धकतायां विशिष्टान्तरविषयकत्वानवच्छिन्नत्वविशेषणदानस्याऽसम्भवेनयत्प-दार्थस्यैव तादृशपदार्थान्तराऽघटितत्वेन विशेषणीयतयोक्तबाधाऽव्याप्ते रवारणीय - परिहारत्वात्।

## विमलप्रभा

स्वं = लक्ष्यतावच्छेदकबाधत्वादि। स्वावच्छिन्नविषयिता = बाधत्वाद्यव-च्छिन्नविषयिता। मेयत्वविशिष्टव्यभिचारेऽतिप्रसङ्गमपाकरोति मेयत्वविशिष्टेत्या-दिना। नैतादृशं स्वं = न मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नानिरूपितविशिष्टविष-यित्वानवच्छिन्ना या प्रतिबन्धकता तदवच्छेदकमेयत्वविशिष्टव्यभिचारत्वावच्छिन्न-विषयिताकम्। तदवच्छिन्ना = मेयत्वविशिष्टव्यभिचारत्वावच्छिन्ना। तदवच्छि-न्नविषयतायाः = मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयतायाः। अवच्छेदक-त्वात् = व्यभिचारविषयित्वानवच्छिन्ना या प्रतिबन्धकता तदवच्छेदकत्वं मेयत्ववि-शिष्टव्यभिचारविषयिताया न सम्भवतीत्यतः स्वपदेन मेयत्वविशिष्टव्यभिचारत्व-स्योपादानासम्भवात्। उक्तस्थले = विशेषगुणाभाववान् द्वितीयक्षणावच्छिन्नो घटो-गुणसामान्याभाववानित्यादौ। तदनिरुपितबाधविषयित्वानवच्छिन्ना—विशेषगुण-वत्तादृशघटरूपाऽश्रयासिद्धयनिरुपितबाधविषयित्वानवच्छिन्ना। विशिष्टपक्षग्रह-प्रतिबन्धकता = प्रकृतपक्षे प्रकृतपक्षतावच्छेदकवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नप्रति-बध्यतानिरूपितप्रतिबन्धकता। निष्कृष्टकल्पे = अत्र वदन्ति कल्पे। अघटकत्वात्-

=अप्रविष्टत्वात्। यत्पदार्थस्यैव=यद्रूपस्यैव । तादृशपदार्थान्तराघटितत्वेन=-स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकप्रकृतलक्षणाश्रयीभूतरूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वेन । उक्तबाधे = व्यभिचारघटितबाधे । अशक्यपरिहारत्वात् = परिहारासम्भवात् । अयमर्थः । द्वितीयैतेनेति कल्पोक्तलक्ष्यतावच्छेदकत्वेनाभिमतधर्मावच्छिन्नानिरूपिता यद्यद्धर्मावच्छिन्ननिरूपिता विषयिता भवति तत्तद्धर्मावच्छिन्ननिरूपितविषयिताव्यापकप्रतिबन्धकताभिन्ना या प्रकृतानुमितिप्रतिबन्धकता तादृशधर्मावच्छिन्ननिरूपितविषयिताव्यापिका तद्धर्मावच्छिन्नत्वरूपलक्षणार्थस्य पर्यवसितत्वे ह्रदो वह्निमान् जलादित्यादौ वह्न्यभाववद्ध्रदरूपबाधे लक्षणसंगतिः, तथा हि वह्न्यभाववद्ध्रदत्वावच्छिन्नाऽनिरूपिता यादृशयादृशविशिष्टविषयिता सा च व्यभिचारविरोधादिविषयिता तदनवच्छिन्ना या वह्न्यभाववान् ह्रद इत्याकारकबाधनिश्चयनिष्ठप्रतिबन्धकता तदवच्छेदकीभूतवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताको यो धर्मस्स च वह्न्यभाववद्ध्रदत्वरूप एव धर्मस्तद्वत्त्वस्य वह्न्यभाववद्ध्रदे सत्त्वात्। मेयत्वविशिष्टव्यभिचारे च मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकनिश्चयनिष्ठा या प्रतिबन्धकता सा च व्यभिचारत्वावच्छिन्नविषयताशालिनिश्चयत्वावच्छिन्नैवेति वस्तुस्थितिरेवञ्च मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नानिरूपिता यादृशयादृशविशिष्टविषयिता सा च शुद्धव्यभिचारत्वावच्छिन्नविषयिता तदनवच्छिन्नत्वस्य मेयत्वविशिष्टव्यभिचारविषयकनिश्चयनिष्ठप्रतिबन्धकतायामसत्त्वेन तादृशप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयिताकधर्मपदेन मेयत्वविशिष्टव्यभिचारत्वस्य धर्त्तुमशक्यत्वान्न मेयत्वविशिष्टव्यभिचारेऽतिप्रसङ्ग इति। एवम् बाधविशिष्टव्यभिचारत्वरूपधर्मावच्छिन्नाऽनिरूपिता या विशिष्टविषयिता सा च केवलबाधविषयिता, केवलव्यभिचारविषयिता च तदवच्छिन्नैव बाधविशिष्टव्यभिचारविषयकनिश्चयनिष्ठा प्रतिबन्धकता न तु तदनवच्छिन्नेति स्वपदेन बाधविशिष्टव्यभिचारत्वस्य धर्त्तुमशक्यतया तादृशधर्मवत्तायाः बाधविशिष्टव्यभिचारेऽभावान्न बाधविशिष्टव्यभिचारेऽतिप्रसङ्गसम्भावनेति भावः।

विशेषगुणाभाववान् घटो गुणसामान्याभाववानित्यत्र विशेषगुणवद्घटरूप-

बाधघटिताऽऽश्रयासिद्धौ च विशेषगुणवद्घटरूपाश्रयासिद्धित्वावच्छिन्नाऽनिरूपिता या विशिष्टविषयिता सा च गुणवद्घटरूपबाधविषयिता तदनवच्छिन्ना या पक्षे पक्षतावच्छेदकावगाहिग्रहनिरूपितविशेषगुणाभाववान् घट इति निश्चयनिष्ठप्रतिबन्धकता तदवच्छेदकविशेषगुणवद्घटत्वावच्छिन्नविषयिताको यो धर्मस्स च विशेषगुणवद्घटत्वरूप एव तद्वत्त्वस्य तादृशाऽऽश्रयासिद्धौ सत्त्वात् लक्षणसमन्वयः।

परन्तु निरुक्तरीत्या लक्षणार्थनिर्वचनसम्भवेऽपि अत्र वदन्ति कल्पोक्तलक्षणे यद्यनुमितिप्रतिबन्धकतायाः प्रवेशस्स्यात् स्याच्च तदा तादृशप्रतिबन्धकतायां विशिष्टान्तरविषयकत्वानवच्छिन्नत्वप्रवेशसम्भावना, परन्तु तादृशकल्परयानुमितिप्रतिबन्धकत्वाऽघटिततया तत्र तादृशविशेषणादानासम्भवेन यद्विषयकनिश्चय एव तादृशविशिष्टान्तराघटितत्वविशेषणस्य दीयमानतया तादृशविशेषणविशिष्टलक्षणादपि धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ व्यभिचारघटितबाधस्थलीयाव्याप्तेर्वारणासम्भवात् "एतेन" कल्पस्यापि न निर्दुष्टतेति विभावनीयम्।

## बलदेवी

स्वावच्छिन्नाऽनिरूपितेत्यादि भट्टाचार्यः। अत्र स्वावच्छिन्नानिरूपितयत्किञ्चिद्विशिष्टविषयित्वावच्छेद्यतावदन्यप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यत्स्वं तद्वत्त्वं लक्षणार्थः। मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नानिरूपितशुद्धव्यभिचारविषयित्वावच्छेद्यतावदन्यप्रतिबन्धकता न मेयत्वविशिष्टव्यभिचारप्रतिबन्धकता, किन्त्वन्यैव तत्प्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वस्य स्वस्मिन्नसत्त्वान्नातिप्रसङ्गः।

व्यभिचारघटितबाधत्वावच्छिन्नानिरूपितव्यभिचारविषयितासामान्यावच्छेद्यतावदन्या तादृशबाधप्रतिबन्धकता भवति तदनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वस्य स्वस्मिन् सत्त्वात् लक्षणसङ्गतिः।

व्यभिचारविशिष्टबाधत्वावच्छिन्नानिरूपितशुद्धबाधविषयिता, शुद्धव्यभिचा-

रविषयितावच्छेद्यतावदन्यप्रतिबन्धकता न तदुभयप्रतिबन्धकता किन्त्वन्यैव तदनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वस्य व्यभिचारविशिष्टबाधत्वेऽसत्त्वान्नातिप्रसङ्गः ।

अत्र सर्वं गगनवदित्यत्र गगनाभाववत्सर्वत्वावच्छिन्नानिरूपितगगनाभाववद्घटादिविषयित्वावच्छेद्यतावदन्यप्रतिबन्धकता च न तादृशप्रतिबन्धकता भवति किन्त्वन्यैव तदनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वस्य गगनाभाववत्सर्वत्वेऽसत्त्वादव्याप्तिरतः स्वावच्छिन्नानिरूपितविषयितायां स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वं विवक्षणीयम् । तथा च तादृशबाधत्वावच्छिन्नानिरूपिततादृशबाधत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयिता तादृशबाधैकदेशविषयिता तत्सामान्यावच्छेद्यतावदन्या च बाधप्रतिबन्धकता तदनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वस्य तादृशबाधत्वे सत्त्वात् लक्षणसङ्गतिः ।

एवम् तत्रैव यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वमप्यावश्यकमन्यथा ह्रदो वह्निमानित्यत्र जातिमद्वह्न्यभावत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयतदवच्छिन्नानिरूपित [वह्न्यभाववद्ध्रदत्वावच्छिन्नानिरूपित] वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितासामान्यावच्छेद्या न तादृशबाधनिश्चयप्रतिबन्धकता जातिमान् वह्न्यभाववानिति ज्ञानीयतादृशविषयितायां तादृशप्रतिबन्धकतावच्छेदकत्वाभावात् किन्त्वन्यैव किञ्चिद्विषयिता तद्वदन्या च तादृशबाधप्रतिबन्धकता तदवच्छेदिका तादृशजातिमद्वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितेति तत्रातिव्याप्तिः । तन्निवेशे तु वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयजातिमान् वह्न्यभाववानिति ज्ञानव्यावृत्तनिरुक्तविषयितासामान्यावच्छेद्या बाधप्रतिबन्धकतेति तदन्यप्रतिबन्धकताया मुक्तविशिष्टविषयिताया अनवच्छेदकत्वान्नातिप्रसङ्गः । अत्र प्रथमम् स्वरूपसम्बन्धरूपावच्छेदकतायाः निवेशात् वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदे नातिव्याप्तिस्तादृशह्रदत्वावच्छिन्नानिरूपितवह्न्यभाववज्जलवत्त्वावच्छिन्नविषयितानिष्ठस्वरूपसम्बन्धरूपावच्छेदकतानिरूपिकान्या या प्रतिबन्धकता तदवच्छेदकत्वस्य तादृशविशिष्टविषयितायामभावात् । अतो न

विशिष्टद्वयाघटितत्वस्य निवेशः। एवं नीलरूपाभाववन्नीले नातिव्याप्तिरतस्त-द्विषयताभेदोऽपि न निवेशनीयः।

नचैवमपि हेतुमत्पक्षघटिताऽसाधारण्येऽव्याप्तिस्तादृशासाधारण्यत्वावच्छिन्ना-निरूपिततद्विषयित्वाव्यापकविषयिताशून्यज्ञानीयहेतुमत्पक्षविषयितासामान्यानवच्छेद्य-प्रतिबन्धकतायां तादृशासाधारण्यविषयिताया अनवच्छेदकत्वादिति वाच्यम्। स्वा-वच्छिन्नानिरूपितविषयितायामसाधारण्यविषयिताभिन्नत्वासाधारण्यविषयित्वावच्छि-न्नप्रतिबन्धकतावच्छेदकत्वोभयाभाववत्त्वस्य विवक्षणीयत्वात्। तथा च हेतुमत्प-क्षविषयिता न तादृशोभयाभाववती किन्त्वसाधारण्यघटकपदार्थान्तरविषयितैव तत्सा-मान्यानवच्छेद्या च तादृशासाधारण्यविषयित्वावच्छिन्नप्रतिबन्धकतेति नाव्याप्तिः।

एवम् प्रतिबन्धकतावच्छेदकविषयताशालिनिश्चये पक्षधर्मिकहेतुमत्ताज्ञानका-लीनत्वासाधारण्यविषयकत्वाभावो विवक्षणीयः। तेन ह्रदो वह्निमान् जलादि-त्यत्रासाधारण्यस्य नासंग्रहः।

तथा च स्वावच्छिन्नानिरूपितस्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञा-नीयतादृशविशिष्टविषयित्वाव्यापकविषयिताशून्यज्ञानीयासाधारण्यविषयिताभिन्नत्वा-साधारण्यप्रतिबन्धकतावच्छेदकत्वोभयाभाववद्विशिष्टविषयितासामान्यानवच्छिन्नप्रति-बन्धकता प्रकृतपक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वासाधारण्यविषयकत्वोभयाभाववदना-हार्याप्रामाण्यज्ञानानास्कन्दितत्वादिविशिष्टयद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्या-पिका तद्रूपावच्छिन्नत्वं समुदितपर्यवसितलक्षणम्। अत्रायमनुगमः, पदार्थविशिष्ट-पदार्थवत्त्वम् लक्षणम्। वैशिष्ट्यञ्च स्वतादात्म्यस्वविशिष्टविषयितावदन्यप्रतिबन्ध-कतावृत्तित्वोभयसम्बन्धेन। विषयितायां स्ववैशिष्ट्यञ्च, स्वावच्छिन्नानिरूपितत्वस्वा-वच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वोभयसम्बन्धेन। विषयितावत्ता च, स्वनिरूपकतावच्छेदकधर्मविशिष्टासाधारण्यविषयताभिन्नत्वघटितोभयाभाववद्विषयि-तात्वव्यापकतावच्छेदकतानिरूपितावच्छेद्यतासम्बन्धेन। विषयितायां धर्मवैशिष्ट्यञ्च स्वावच्छिन्ननिरूपकताकत्वस्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वोभयस-म्बन्धेन। धर्मे प्रतिबन्धकतावृत्तित्वञ्च, पक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वासाधारण्य-

विषयकत्वोभयाभाववदनाहार्यत्वादिविशिष्टस्वविशिष्टनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन। स्ववैशिष्ट्यञ्च निश्चये स्वावच्छिन्नविषयितावत्त्वस्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वोभयसम्बन्धेनेति दिक्।

न च गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र बाधे प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षे च दोषतादवस्थ्यमिति वाच्यम्, द्वितीयसम्बन्धघटकविषयितावदन्यत्वघटकधर्मविष्टशिविषयितायां बाधत्वसत्प्रतिपक्षत्वाद्यवच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकतत्तद्विषयिताभिन्नत्वोभयाभावस्यापि निवेशनीयत्वात्।

तथा च बाधैकदेशीयसत्प्रतिपक्षैकदेशीयविषयितायामुभयस्यैव सत्त्वान्नातिव्याप्तिः।

## गादाधरी

अत्र केचित्। स्वसजातीयविशिष्टान्तराऽघटितत्वमेव यत्पदार्थे विशेषणं देयम्। साजात्यञ्च हेत्वाभासविभाजकरूपेण। तच्च रूपं बाधत्वव्यभिचारत्वादि, तेन रूपेण व्यभिचारादेर्न बाधादिसाजात्यमिति व्यभिचारघटितबाधादौ नाऽव्याप्तिः।

## विमलप्रभा

इदानीं प्रतिबन्धकत्वाऽघटितनिष्कृष्टवक्ष्यमाणकल्पानुगतविशिष्टान्तराऽघटितत्वनिवेशप्रणालीं प्राचीनैरङ्गीकृतान्दूषयितुमाह अत्र केचिदित्यादि। अत्र=व्यभिचारघटितबाधेऽव्याप्तिशङ्कायां केचिदित्यस्याहुरिति परेणान्वयः। केचिद्=प्राचीनाः। स्वं=लक्ष्याभिमतबाधादि। तत्सजातीयम्=तद्वृत्तिनिरुक्तान्यतमप्रतिबन्धकतावत्तत्सदृशमिति यावत्। विशिष्टान्तरं=स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकम्। तदघटितत्वम्=तदविषयकप्रतीतिविषयत्वम्। यत्पदार्थे=लक्ष्यीभूतपदार्थे। एवकारात् शुद्धविशिष्टान्तराघटितत्वनिवेशाभावः सूचितः। साजात्यञ्च=स्वसजातीयेत्यत्र साजात्यम्। हेत्वाभासविभाजकरूपेण=बाधव्यभिचारादि-

रूपहेत्वाभासानां विभाजकीभूताः ये बाधत्वादयो धर्मास्ताहशधर्मेण। तच्च रूपम् =हेत्वाभासविभाजकश्च रूपम्। तेन रूपेण=हेत्वाभासविभाजकबाधत्वव्यभिचार-त्वादिरूपेण। अयमर्थः। व्यभिचारघटितबाधे प्रसक्ताव्याप्तिपरिहाराय स्वसजातीयवि-शिष्टान्तराऽघटितत्वं यद्रूपावच्छिन्ने विशेषणं देयम्, तत्र साजात्यम् हेत्वाभासविभा-जकीभूतबाधत्वव्यभिचारत्वसत्प्रतिपक्षत्वविरोधत्वासिद्धत्वाद्यन्यतमरूपेण वाच्यम्। एवञ्च स्ववृत्तिहेत्वाभासविभाजकधर्मविशिष्टो यः स्वाविषयकप्रतीतिविषयस्तदवि-षयकप्रतीतिविषयत्वम्, स्वसजातीयविशिष्टान्तराऽघटितत्वम्, तच्च यत्पदार्थे वि-शेषणन्देयम्। तत्रानुयोगिनि स्वत्वकल्पे स्वसजातीयविशिष्टान्तराघटितत्वाभाववत्य-त्स्वं तन्निष्ठनिरुक्तविषयिताव्यापिका या ताहशप्रतिबन्धकता ताहशप्रतिबन्धकताव-च्छेदकीभूतधर्मावच्छिन्नत्वम् हेत्वाभासत्वम्। प्रतियोगिनि स्वत्वकल्पे च स्वसजा-तीयविशिष्टान्तरघटितं यत्स्वं तदघटितत्वमित्यादिरीत्या लक्षणार्थः कार्यः। के-चित्तु स्वसजातीयेत्यत्र स्वपदं न लक्ष्यीभूतपदार्थपरम्, किन्तु लक्ष्यतावच्छेदकत्वे-नाभिमतधर्मपरम्। तथा च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकः स्वाश्रय-वृत्तिर्यो हेत्वाभासविभाजको धर्मस्तद्विशिष्टं यद्रूपं तद्रूपावच्छिन्नाऽविषयकप्रतीति-विषयतावच्छेदकं यत् स्वं तद्वत्त्वं हेत्वाभासत्वमिति पर्यवसितार्थ इत्याहुः। भवति च ह्रदो वह्निमान् जलादित्यादौ वह्न्यभाववद्ध्रदादौ लक्षणसमन्वयः, तथा हि वह्न्यभाववद्ध्रदवृत्तिबाधत्वरूपहेत्वाभासविभाजकीभूतधर्मेणोक्तबाधसजातीयः वह्-न्यभाववद्ध्रदत्वावच्छिन्नाविषयकप्रतीतिविषयश्च ह्रदवृत्तिवह्न्यभावस्तदविषयकप्र-तीतिः वह्न्यभाववान् ह्रद इत्याकारिका तदीयविषयतावच्छेदकीभूतो यः वह्-न्यभाववद्ध्रदत्वरूपो धर्मस्तद्वत्त्वस्य वह्न्यभाववद्ध्रदादौ सत्त्वात्।

व्यभिचारघटितबाधे च—व्यभिचारघटितबाधवृत्तिबाधत्वरूपहेत्वाभासविभाज-कीभूतधर्मेण बाधसाजात्यं व्यभिचारे नास्तीति स्वजातीयविशिष्टान्तरपदेन व्यभि-चारस्य धर्त्तुमशक्यतयोक्तरूपेण ताहशबाधसजातीयस्ताहशबाधत्वावच्छिन्नाविषय-कप्रतीतिविषयश्च विपरीतताहशबाधस्तदविषयकप्रतीतिः व्यभिचारघटितबाधविषय-कप्रतीतिस्तद्विषयतावच्छेदकव्यभिचारघटितबाधत्वरूपधर्मावच्छिन्नत्वस्य ताहशबाधे सत्त्वात् लक्षणसङ्गतिः।

मेयत्वविशिष्टव्यभिचारे च मेयत्वविशिष्टव्यभिचारवृत्तियद्धेत्वाभासवि - भाजकतावच्छेदकरूपं तच्च शुद्धव्यभिचारत्वं तेन रूपेण तत्सजातीयस्तदेव तदवच्छिन्नाविषयकप्रतीतिर्न मेयत्वविशिष्टव्यभिचारविषयकप्रतीतिः किन्तु बाधादिविषयकैवेति तद्विषयतावच्छेदकधर्मवत्त्वस्य मेयत्वविशिष्टव्यभिचारे विरहात् नातिप्रसङ्ग इति भावः ।

बलदेवी

अत्र केचित् स्वसजातीयविशिष्टान्तराघटितत्वमेव यत् पदार्थे विशेषणं देयम्, साजात्यञ्च स्ववृत्तिहेत्वाभासविभाजकरूपेण, तच्च रूपं बाधत्वव्यभिचारत्वादीति भट्टाचार्याः ।

अत्र स्ववृत्तियद्धेत्वाभासविभाजकतावच्छेदकं तद्वत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्स्वं तद्वत्त्वं विशिष्टान्तराघटितत्वमिति फलितम् । नन्वत्र स्वं वह्न्यभाववद्ध्रदत्वादिरूपबाधत्वादि तद्वृत्तिहेत्वाभासविभाजकतावच्छेदकरूपवत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकाऽप्रसिद्धिः, बाधत्वविपरीतबाधत्वादौ यादृशैकत्वं वर्त्तते तादृशैकैकस्याभावात् इति चेन्न, अथात्र बाधत्वत्वव्यभिचारत्वत्वादिकमेव तादृशं, तत्र बाधत्वन्नाम पक्षे पक्षतावच्छेदकविशिष्टग्रहत्वाऽव्यापकसाध्ये साध्यतावच्छेदकविशिष्टग्रहत्वाऽव्यापकविशिष्टपक्षे [पक्षतावच्छेदकविशिष्टपक्षे] साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यानाहार्यप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्ति - त्वाभाववत्त्वम् । वृत्तिता च स्वावच्छिन्ननिरूपकताकविषयतासम्बन्धावच्छिन्ना ग्राह्या । साध्याऽप्रसिद्धिपक्षाऽप्रसिद्धिद्वयोर्बाधत्वादिवृत्तितादृशरूपवारणायाव्यापकान्तद्वयम् । तदसत्त्वेऽवृत्तिजलं ह्रदावृत्तीत्यत्र ह्रदवृत्तिजलात्मकबाधस्य पक्षाऽसिद्धिना वृत्तिजलेन घटितस्याऽसंग्रहापत्तिः । जलपक्षकाऽवृत्तिजलकालीनह्रदावृत्तित्वसाध्य - कस्थले बाधस्य साध्याऽप्रसिद्धिघटितस्यासंग्रहापत्तिश्च ।

एवम् सत्प्रतिपक्षत्वञ्च विशिष्टपक्षग्रहत्वाव्यापकविशिष्टसाध्यग्रहत्वाव्यापकवि-

शिष्टपक्षे विशिष्टसाध्यग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यानाहार्यत्वा-दिविशिष्टनिश्चयवृत्तित्वाभाववत्त्वे सति तादृशप्रतिबन्धकतावच्छेदकविषयिताघटित-धर्मावच्छिन्नजन्यतानिरूपितजनकताशून्यतादृशनिश्चयवृत्तित्वाभाववत्त्वरूपम्। अत्राप्यव्यापकान्तद्वयं तादृशरूपस्य पक्षाप्रसिद्धिसाध्याप्रसिद्धित्ववारणाय, अन्यथाऽवृत्तिरूपं द्रव्यवृत्तित्वाभाववदित्यत्र द्रव्यवृत्तित्वव्याप्यगुणत्ववद्रूपात्मकस्य सत्प्रतिपक्षस्य वृत्तित्वव्याप्यगुणत्ववद्रूपात्मकपक्षाप्रसिद्धिघटितस्यासंग्रहापत्तेः।

एवम् रूपमवृत्तिरूपकालीनद्रव्यवृत्तित्वाभाववदित्यत्र रूपकालीनद्रव्यत्वव्याप्यगुणत्ववद्रूपात्मकसाध्याप्रसिद्धिघटितस्यासंग्रहापत्तेः।

अत्र द्वितीयदलघटकप्रतिबध्यतायामव्यापकान्तद्वयन्नोपादेयम्। प्रथमदले तद्विशेषणादेव पक्षाप्रसिद्धित्वादिसाधारण्याभावात्। प्रथमदलमात्रस्य बाधत्वसाधारण्यात् द्वितीयोपादानम्। तथासत्याधेयत्वं निरूपितत्वाभाववदित्यत्र बाधघटितसत्प्रतिपक्षस्य संग्रहः वस्तुतो द्वितीयदलमात्रस्यैव सत्प्रतिपक्षत्वं तावतैव बाधत्वादिसंग्रहाभावात्, तदानीं तत्रैवाव्यापकान्तद्वयं विशेषणीयम्।

स्वरूपासिद्ध्यादिकं द्विविधम्. तत्र स्वरूपासिद्धित्वं विशिष्टपक्षग्रहत्वव्यापकविशिष्टहेतुग्रहत्वाव्यापकविशिष्टपक्षे विशिष्टहेतुवैशिष्ट्यावगाहि—ग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वाभाववत्त्वरूपम् प्रथमम्। अत्राव्यापकान्तद्वयानुपादानेऽवृत्तिजलं वह्निमद्ध्रदावृत्तित्वादित्यत्र ह्रदवृत्तिजलात्मकस्वरूपासिद्धेर्वृत्तिजलात्मकपक्षाप्रसिद्धिघटितायाः जलं वह्निमद्वृत्तिजलकालीनह्रदावृत्तित्वादित्यत्र जलकालीनह्रदवृत्तिजलात्मकस्वरूपासिद्धेः वृत्तिजलात्मकसाधनाप्रसिद्धिघटितायाश्चासंग्रहापत्तिः। द्वितीयं स्वरूपासिद्धित्वं [हेत्वभावव्याप्यवत्पक्षत्वरूप] विशिष्टहेतुपक्षग्रहत्वाव्यापकविशिष्टहेतुपक्षवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयितावच्छेदकधर्मावच्छिन्नविधेयताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकताशून्यानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वाभाववत्त्वरूपम्। अत्र व्यापकान्तानुपादाने उक्तस्थलयोरेव ह्रदवृत्तित्वव्याप्यवज्जलात्मकस्वरूपासिद्धेः वृत्तित्वव्याप्यवज्जलात्मकपक्षाप्रसिद्धि-

घटितायाः जलकालीनह्रदवृत्तित्वव्याप्यवज्जलात्मकस्वरूपासिद्धे र्वृत्तित्वव्याप्यवज्जलात्मकसाधनाप्रसिद्धिघटितायाश्चासंग्रहापत्तिः । अत्र व्यभिचारत्वं विशिष्टसाध्यसाधनग्रहत्वाव्यापकविशिष्टसाधनधर्मिकसाध्य·याप्तिवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यतादृशनिश्चयवृत्तित्वाभाववत्त्वरूपम् । अत्राव्यापकान्तानुपादाने अभाववदवृत्तिवह्निकालीनधूमवान् वह्नेरित्यादौ वह्निकालीनधूमाभाववद्वृत्तिवह्न्यात्मकसाध्याप्रसिद्धिघटितस्य वह्निमान् भाववदवृत्तिद्रव्यत्वादित्यत्र वह्न्यभाववद्वृत्तिद्रव्यत्वात्मकसाधनाप्रसिद्धिघटितस्यासंग्रहापत्तिः ।

द्वितीयव्यभिचारत्वं मुक्तप्रतिबन्धकतावच्छेदकविषयितावच्छेदकधर्मावच्छिन्नविधेयताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकताशून्यतादृशनिश्चयवृत्तित्वाभावव - त्त्वरूपम् । अत्रापि प्रतिबध्यतायामव्यापकान्तानुपादाने उक्तस्थलयोर्वह्निकालीनधूमाभाववद्वृत्तित्वव्याप्यवद्वह्निरूपव्यभिचारस्याभाववद्वृत्तित्वव्याप्यवह्निरूपसाध्याप्रसिद्धिघटितस्य वह्न्यभाववद्वृत्तित्वव्याप्यवद्द्रव्यत्वरूपव्यभिचारस्याभाववद्वृत्तित्वव्याप्यद्रव्यत्वरूपसाधनाप्रसिद्धिघटितस्य चासंग्रहापत्तेः ।

विशिष्टसाध्यसाधनग्रहत्वाव्यापकसाधनधर्मिकसाध्यसमानाधिकरण्यप्रकारकग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यतादृशनिश्चयवृत्तित्वाभावःप्रथमविरोधित्वत्वम् ।अत्राव्यापकान्तानुपादाने गोत्वाधिकरणवृत्तित्वाभाववदभाववत्कालीनगोत्ववानश्वत्वादित्यत्राभावकलीनगोत्वाधिकरणनिरूपितवृत्तित्वाभाववदश्वत्वरूपविरोधस्य गोत्वाधिकरणनिरूपितवृत्तित्वाभावरूपसाध्याप्रसिद्धिघटितस्य गोत्ववानश्वत्वाधिकरणनिरूपितवृत्तित्वाभाववदभावकालीनअश्वत्वादित्यत्र गोत्वाधिकरणनिरूपितवृत्तित्वाभाववदश्वात्मकविरोधस्य गोत्वाधिकरणनिरूपितवृत्तित्वाभावरूपसाधनाप्रसिद्धिघटितस्यासंग्रहापत्तिः ।

अत्र साध्यसाधनतावच्छेदककुक्षौ अभावत्वावच्छेदेन गोत्वाधिकरणनिरूपितवृत्तित्वाभावः प्रविष्टः स चाभावः प्रतियोगितासम्बन्धावच्छिन्नो ग्राह्यः । अन्यथा गोत्वाधिकरणनिरूपितवृत्तित्वाभावस्य न साधनाप्रसिद्धित्वसम्भावना । [प्रतियोगि·

त्वसम्बन्धेन गोत्वाधिकरणनिरूपितवृत्तित्वाभाववानभाव इति बुद्धिम्प्रति स्वरूप-सम्बन्धेन गोत्वाधिकरणनिरूपितवृत्तित्ववानभाव इति निश्चयस्याप्रतिबन्धकत्वान्न-साधनाप्रसिद्धिता तस्य सम्भवतीत्यतोऽत्रापि प्रतियोगित्वसम्बन्धो वाच्य :]निरुक्त-प्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकधर्मावच्छिन्नजन्यतानिरूपितजनकताशून्य-तादृशनिश्चयवृत्तित्वाभावोऽपरविरोधित्वम् । अत्र प्रतिबध्यतायामव्यापकान्तानु-पादाने वृत्तिगगनकालीनवह्निमान् गगनादित्यत्र वह्न्यधिकरणनिरूपितवृत्तित्वा-भावव्याप्यवद्गगनरूपविरोधस्य वृत्तित्वाभावव्याप्यवद्गगनरूपत्वघटितस्य, वह्नि-मान् वृत्तिगगनादित्यत्र तादृशसाधनाप्रसिद्धिघटितस्य तादृशविरोधस्य चासंग्रहाप-त्तिः विशिष्टपक्षग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यतादृशनिश्चयवृत्ति-त्वाभाव एकमाश्रयासिद्धत्वम् । तादृशप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदक-प्रकारतावच्छेदकधर्मावच्छिन्नविधेयताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकता-शून्यतादृशनिश्चयवृत्तित्वाभावः अपरम् । एवमेव साध्याप्रसिद्धिताद्वयं साधना-प्रसिद्धिताद्वयम् ग्राह्यम् । विशिष्टसाध्यग्रहत्वाव्यापकसाध्यधर्मिकात्यन्ताभावप्रति-योगित्वप्रकारकग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यतादृशनिश्चयवृत्ति-त्वाभावोऽनुपसंहार्यत्वम् । अत्र व्यापकान्तानुपादान निरूपितत्वाभाववत्प्रतियोगि-त्वकालीनमेयत्ववानित्यत्र मेयत्ववृत्त्यभावप्रतियोगित्वरूपानुपसंहार्यस्य निरूपितत्व-वत्प्रतियोगित्वरूपसाध्याप्रसिद्धिघटितस्यासंग्रहापत्तिः । विशिष्टसाधनग्रहत्वाव्या-पकविशिष्टसाधनधर्मिकात्यन्ताभावप्रतियोगित्वप्रकारकग्रहत्वव्यापकप्रतिबध्यतानिरू-पितप्रतिबन्धकताशून्यतादृशनिश्चयवृत्तित्वाभावोऽन्यानुपसंहार्यत्वम् ।

अत्रापि अव्यापकान्तानुपादाने निरूपितत्वाभाववत्प्रतियोगित्वकालीनप्रमेयहे-तुकस्थलीयोक्तानुपसंहारित्वाऽसंग्रहापत्तिः ।

एवमपरविधमनुपसंसहार्यत्वमुह्यम् । तथा च बाधत्वादिवृत्तित्वैतादृशाभावो वि-परीतबाधसाधारणः एवञ्च स्ववृत्तितादृशान्यतमवत्स्वावच्छिन्नाविषयकप्रतीतिविषयता-वच्छेदकं यत्तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् स्वं तद्वत्त्वं स्वसजातीयवि-ष्टान्तराघटितत्वं, तथा च न मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिरिति । चेन्मैवम्,त-थापि व्यभिचारघटितबाधाद्यसंग्रहः, तत्र बाधत्वे व्याप्तिज्ञानप्रतिबन्धकताशून्यनिश्च-

यद्वृत्तित्वभावस्य व्यभिचारत्वस्य पक्षे साध्यवत्ताज्ञानप्रतिबन्धकताशून्यतादृशनिश्चयवृत्तित्वाभावरूपबाधत्वस्य च सत्त्वात्। स्ववृत्तितावदभावान्यतमवद्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकशुद्धव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयताव - च्छेदकत्वस्य तादृशबाधत्वे सत्त्वात्। न च स्ववृत्तितादृशाभावान्यतमर्यात्किञ्चिदभाववद्विशिष्टान्तराऽघटिततत्त्वस्य विवक्षणात् बाधत्वरूपयत्किञ्चिदभाववद्विपरीतबाधत्वाघटितस्य तादृशबाधत्वे सत्त्वेन लक्षणसमन्वय इति वाच्यम्। तथापि वह्न्यभाववज्जलादिमत्कालीनजलवद्ध्रदेऽतिव्याप्तिस्तत्र पक्षे साध्यवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यतादृशनिश्चयवृत्तित्वाभावो यस्तादृशह्रदत्ववृत्तिस्तद्वत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद्वह्न्यभावज्जलादिमद्वृत्तिजलवद्ध्रदत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य तत्र सत्त्वात्। न च तादृशप्रतिबन्धकताशून्यनिश्चयवृत्तित्वाभावमपहाय तादृशप्रतिबन्धकतावच्छेदकविषयिताशून्यनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयीयविषयितावृत्तित्वाभावो विवक्षणीयः। वृत्तित्वञ्चावच्छिन्ननिरूपकतावत्त्वसम्बन्धेन। एवञ्च वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्ववति तादृशाभाववज्जलवत्त्वमपीति तादृशतदवच्छिन्नाघटितत्वाभावेन तादृशविशिष्टे नातिव्याप्तिः। तादृशपाषाणमयत्वविशिष्टपर्वतत्वस्य धारणे न विशेष्यदलसार्थक्यम् सम्भवतीति वाच्यम्। तथापि गगनभाववदभाववत्कालीनघटो गगनवानित्यत्र बाधेऽव्याप्तिः, तादृशबाधत्ववृत्तिज्ञानवैशिष्ट्यावच्छिन्नतादृशप्रतिबन्धकतावच्छेदकताशून्यतादृशविषयतावृत्तित्वाभावस्य तादृशबाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकाभाववत्तादृशघटत्वसाधारणतया तदघटितत्वस्य तत्राभावात्। एवमाहार्यस्थलीयदोषासंग्रहश्च तत्र प्रतिबन्धकत्वादिनिर्वचनासम्भवात् इति चेन्न, बाधत्वघटकप्रतिबन्धकतावच्छेदकत्वाभावश्च न स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकोऽपि तु स्वरूपत्वनिरूपकप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टविषयत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः। प्रतिबन्धकतावैशिष्ट्यञ्च, स्वाश्रयत्वस्वनिरूपितमुख्यविशेष्यतावृत्त्यवच्छेदकतानिरूपितावच्छेदकतावत्प्रकारताविशिष्टविशेष्यतानिरूपकाव्याप्यवृत्तित्वप्रकारकज्ञानाभाववत्त्वोभयसम्बन्धेन।

तथा च तादृशवाधत्ववृत्तेरेतादृशवृत्तित्वाभावस्य लाभात् तादृशघटत्वसाधारणतदवच्छिन्नविषयितायां तादृशोभयसम्बन्धावच्छिन्ननिरुक्तप्रतिबन्धकतावच्छेदकत्वाभावसत्त्वेन तत्राभाववत्तादृशघटत्वरूपधर्मस्यावच्छिन्ननिरूपकताकत्वसम्बन्धेन सत्त्वात् ।

एवम् गगनाभाववदभाववत्कालीनघटो वह्निमान् गगनादित्यत्र गगनाभाववत्तादृशघटत्वरूपस्वरूपासिद्ध्यादिष्वव्याप्तिवारणाय विशिष्टहेतुग्रहत्वाव्यापकविशिष्टपक्षधर्मिकविशिष्टहेतुमत्ताग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वनिष्ठनिरुक्तसम्बन्धावच्छिन्नप्रतियोगिताकाभाववद्विषयतावृत्तित्वाभावः स्वरूपासिद्धितावृत्तिर्विवक्षणीयः ।

गगनाभाववदभाववकालीनघटस्य यत्र साध्यता पक्षता च तत्र साध्याप्रसिद्धिहेत्वप्रसिद्धिसंग्रहाय साध्याप्रसिद्धित्वादिकमप्येवमेव वाच्यम् । सत्प्रतिपक्षत्वन्तु विशिष्टपक्षसाध्यग्रहत्वाव्यापकविशिष्टपक्षसाध्यवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टविषयिताघटितधर्मावच्छिन्नकार्यताप्रतियोगिककारणतावच्छेदकताशून्यानाहार्यज्ञानीयविषयितावृत्तित्वाभावः । अत्रावच्छेदकत्वाभावश्च स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताक एव ग्राह्यः । विषयितायां प्रतिबन्धकतावैशिष्ट्यञ्च स्वावच्छेदकत्वस्वनिरूपितप्रतिबध्यतावशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वोभयसम्बन्धेन ।

अन्यविधं स्वरूपासिद्धित्वादिकमपि सत्प्रतिपक्षत्ववदेव निर्वाच्यम् । तेन गगनाभावव्याप्यवद्गगनाभाववदभाववत्कालीनघटस्य स्वरूपासिद्ध्यादिरूपस्याभावव्याप्यवत्तादृशघटघटितत्वेऽपि नासंग्रहः ।

नन्वत्र किन्तावदसाधारणत्वम् ? न तावत् विशिष्टपक्षसाध्यग्रहत्वाव्यापकविशिष्टपक्षसाध्यवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकताशून्यानाहार्यज्ञानीयविषयितावृत्तित्वाभावः । अत्राव्यापकान्तविशेषणम् निरूपितत्वाभाववत्प्रतियोगित्वं गगनवदाधेयत्वादित्यादौ गगनत्वव्यापकीभूताभावनिरूपितप्रतियोगितावदाधेयत्वरूपासाधारण्यस्य पक्षाऽप्रसिद्धिघटितस्य निरूपितत्वाभाववत्प्रतियोगित्वकालीनगगन-

त्ववानाधेयत्वादित्यत्र साध्याप्रसिद्धिघटितस्य च नासंग्रह इति वक्तुं शक्यम्, तस्याभावस्यावच्छेदकधर्मसाधारणतया ह्रदो वह्न्यभाववज्जलवत्कालीनवह्निमान् जलादित्यत्र तादृशवह्निव्यापकीभूताभावप्रतियोगिजलात्मकाऽसाधारण्येऽव्याप्तिः, तादृशासाधारण्यनिश्चयस्य जलवान् ह्रद इति निश्चयकालीनस्येव जलवान् वह्न्यभाववानिति निश्चयस्यापि तादृशनिश्चयकालीनस्य तादृशवह्निविशेषणावगाह्यनुमितिप्रतिबन्धकतया तादृशग्रहप्रतिबन्धकतावच्छेदकताशून्यविषयतावृत्तित्वाभावस्य तादृशासाधारण्यत्ववद्वह्न्यभाववज्जलवत्त्वसाधारणतयाऽसाधारण्यस्य वह्न्यभाववज्जलवत्त्वावच्छिन्नघटितत्वात् । यद्वा जलं वह्निमज्जलादित्यत्राऽसाधारण्येऽव्याप्तिः, प्रतियोगित्ववद्वह्न्यभाववत्प्रतियोगित्ववज्जलमिति निश्चययोर्ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकतया तादृशप्रतिबन्धकतावच्छेदकताशून्यतादृशविषयतावृत्तित्वाभावस्य प्रतियोगित्ववज्जलेऽपि सत्त्वेनासाधारण्यस्य तद्घटितत्वादिति चेन्न, निरुक्तप्रतिबध्यतानिरूपितप्रतिबन्धकतावन्निश्चयविशिष्टनिश्चयत्वानवच्छिन्नप्रतिबन्धकतावच्छेदकत्वाभाववत्तादृशविषयत्ववृत्तित्वाभावस्य विवक्षणीयत्वात् । निश्चये वैशिष्ट्यम्, स्वसामानाधिकरण्यस्वीयप्रकारताविशिष्टप्रकारतानिरूपितविशेष्यतावत्त्वोभयसम्बन्धेन । अवच्छेदकधर्मदर्शनप्रतिबन्धकता च तादृशनिश्चयत्वावच्छिन्नैव, असाधारण्यनिश्चयप्रतिबन्धकता च निश्चयविशिष्टनिश्चयत्वानवच्छिन्ना, असाधारण्यनिश्चये हेतुमत्तानिश्चयस्य स्वीयप्रकारताविशिष्टप्रकारतानिरूपितविशेष्यत्वसम्बन्धेनाभावात्, उक्तस्थलेऽसाधारण्यत्वस्य प्रतियोगित्ववज्जलत्वावृत्तितयाऽव्याप्त्यनवकाशात् । तादृशासाधारण्यत्वस्य बाधत्वसाधारणवारणाय तादृशाऽवच्छेदकत्वाभावः स्वरूपस्वनिरूपकप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतानवच्छेदकविषयितात्वोभयसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः ।

न चेदानीं विशेष्यदलवैयर्थ्यम्, पाषाणमयत्ववत्पर्वतत्वादौ निरुक्तबाधत्वस्याभावात् तदवच्छिन्नविषयितायां स्वरूपसम्बन्धेन पक्षसाध्यवैशिष्ट्यावगाहिग्रहप्रतिबन्धकतावच्छेदकत्वस्य सत्त्वेऽपि द्वितीयसम्बन्धाभावेन तादृशावच्छेदकत्वाभाववद्विषयितावृत्तित्वाभावस्य निरुक्तधर्मेऽभावादिति वाच्यम् ।

तथापि कपिसंयोग्येतद्वृक्षत्वादित्यादौ कपिसंयोगाभाववद्वृक्षेऽतिव्याप्तिवारणाय तदावश्यकत्वात्। न चैवं विरोधिविषयताप्रयुक्तत्वदलवैयर्थ्यमिति वाच्यम्, कपिसंयोगिधूमान्यधूमादित्यत्र कपिसंयोगाभाववद्वृक्षस्य विशिष्टान्तराघटितत्वस्य सत्त्वेन तदुत्तरानुमितिसामान्ये निरुक्तोभयाभावस्य सत्त्वेन तद्वारणाय तत्सार्थक्यादिति चेत्, अत्र केचित्, वैयर्थ्यमित्यस्यानतिप्रयोजनकत्वमित्यर्थः। आहार्यस्थले घटादिवारणरूपं प्रयोजनं न सम्भवतीति भावः। अत एव तादृशप्रयोजनसिद्ध्यर्थं प्रतियोगिनि स्वत्वमन्तर्भाव्य शङ्कते न चेत्यादिनेति वदन्ति।

एवम् प्रतिबन्धकताघटितबाधत्वादिकमाहार्यस्थलीयदोषसाधारणमित्यपि न वक्तुं शक्यम्। प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यप्रकारताव्यापकयद्रूपावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारत्वं तद्रूपावच्छिन्नविशेष्यतानिरूपिततद्रूपावच्छिन्नप्रकारताशालिग्रहत्वव्यापकत्वं प्रतिबध्यतायान्निवेश्य बाधत्वत्वस्यैवमेव दोषान्तरतावच्छेदकरूपान्तरतावच्छेदकधर्मवृत्तिरूपस्यापि वक्तुं शक्यत्वात्।

अत्रायमनुगमः, पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावनिष्ठो यः किञ्चिद्रूपावच्छिन्नविषयताशालिनिश्चयोत्तरानुमितिनिष्ठाभावनिरूपितविरोधिविषयताप्रयुक्तत्वविशिष्टस्वनिष्ठनिरूपकतानिरूपिताधिकरणतासम्बन्धावच्छिन्नप्रतियोगित्वन्नास्तीति प्रतीतिसिद्धाभावस्तन्निरूपितप्रतियोगितानिरूपिताभावनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितानुमितिनिष्ठावच्छेदकतानिरूपितोत्तरत्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्रूपविशिष्टरूपवत्त्वं लक्षणम्। रूपे वैशिष्ट्यञ्च स्वतादात्म्यस्वविशिष्टावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकविषयितात्वावच्छिन्नप्रतियोगिताकाभाववत्प्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धेन। अवच्छेदकतायां स्ववैशिष्ट्यञ्च स्वनिष्ठावच्छेदकत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकविषयितानिष्ठप्रतियोगित्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकप्रतीतिनिष्ठावच्छेदकतानिरूपकविषयितानिष्ठावच्छेदकतानिरूपकविषयितानिष्ठावच्छे-

दकतानिरूपकनिरूपितत्वनिष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठावच्छेदकतानिरूप-कत्वस्वनिष्ठविधेयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकताहशाभावान्यतरत्वसामा-नाधिकरण्योभयावृत्तिधर्मविशिष्टनिरवच्छिन्नावच्छेदकतानिरूपकत्वोभयसम्बन्धेनेति । न च तथाप्यवृत्तिजलकालीनजलाभाववान् ह्रदो वह्निमानित्यत्राश्रयासिद्धावव्याप्तिः, तत्र ह्रदवृत्तिजलकालीनजलरूपाश्रयासिद्धेवृत्तिजलात्मकस्वसजातीयविशिष्टान्तरघटितत्वादिति वाच्यम् । आहार्यस्थलीयदोषसाधारण्ययोक्तविवक्षायां प्रकृतपक्षतावच्छेदकविशिष्टपक्षग्रहनिष्ठकिञ्चिद्रूपावच्छिन्नविशेष्यतानिरूपितकिञ्चिद्रूपावच्छिन्नप्रकारता नास्तीति प्रतीतिसिद्धाभावाप्रतियोगि यत्किञ्चित्प्रकारताविशिष्टग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकताशून्यविषयितावृत्तित्वाभावरूपमाश्रयासिद्धित्वं वक्तव्यम् । अत्र ताहशप्रकारतावैशिष्ट्यं स्वविशिष्टविशेष्यतावत्त्वसम्बन्धेन, विशेष्यतायां स्ववैशिष्ट्यं स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वस्वावच्छेदकसम्बन्धावच्छिन्नप्रकारतानिरूपकत्वोभयसम्बन्धेन । अत्र प्रकारतायां यत्किञ्चित्वमभावप्रतियोगितावच्छेदककोटावप्यन्यतमत्वघटकप्रथमभेदप्रतियोगितावच्छेदककुक्षौ सामान्यरूपेणैव प्रकारतायां निवेश इति । तथा च ताहशस्थले पक्षतावच्छेदकविशिष्टपक्षग्रहनिष्ठयत्किञ्चित्प्रकारताह्रदत्वावच्छिन्नविशेष्यतानिरूपितजलकालीनजलाभावत्वावच्छिन्नप्रकारताऽऽश्रयासिद्ध्यन्तरनिश्चयप्रतिबध्यतावच्छेदकयत्किञ्चित्प्रकारताजलत्वावच्छिन्नविशेष्यतानिरूपिताऽवृत्तित्वत्वावच्छिन्नप्रकारता च, अत्र प्रथमप्रकारताविशिष्टग्रहत्वव्यापकप्रतिबध्यताघटिताऽऽश्रयासिद्धित्वत्वन्न वृत्तिजलरूपाश्रयासिद्धित्वस्य वृत्तिजलमित्याकारकनिश्चयस्य जलकालीनजलाभाववान् ह्रद इति ज्ञानं प्रत्यप्रतिबन्धकत्वात् । द्वितीयप्रकारताघटिताश्रयासिद्धित्वत्वस्य जलकालीनजलवद्ध्रदरूपाऽश्रयासिद्धित्वे सत्त्वेऽपि न तद्घटकमिति तत्र नाव्याप्तिः । नचैवं सति ह्रदो वह्निमानित्यादौ दोषेऽव्याप्तिः तत्र विशिष्टपक्षग्रहनिष्ठोक्तोभयाभावाप्रतियोगिनी या प्रकारता उक्तोभयसम्बन्धेन तद्विशिष्टविशेष्यतावद्ग्रहाऽप्रसिद्धेरिति चेत् मैवम्, सर्वत्राश्रयासिद्धित्वत्वस्य पक्षतावच्छेदकाभाववद्विषयितावृत्तित्वाभावरूपस्य विवक्षितत्वात्, तदभावनिरूपितपक्षतावच्छेदकनिष्ठप्रतियोगितावच्छेदकसम्बन्धश्च स्वविशिष्टग्रहवृत्तियत्किञ्चित्रूपावच्छिन्नविशेष्यतानिरूपितकिञ्चिद्रूपावच्छिन्नप्रका-

ता नास्तीति प्रतीतिसिद्धाभावनिरूपितप्रतियोगित्वाभाववत्यत्किञ्चित्प्रकारताविशिष्टग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वसम्बन्धेन, प्रकारतावैशिष्ट्यञ्च प्रागुक्तसम्बन्धेन, अवच्छेदकतावत्त्वञ्च,प्रागुक्तप्रतियोगितावच्छेदकतयोक्तस्वरूपस्वनिरूपकप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धतावच्छेदकत्वोभयसम्बन्धेन। एवञ्चायं सम्बन्धो निरवच्छिन्नपक्षतावच्छेदकस्थले तस्य व्यधिकरणसम्बन्ध एव, तेन तदभावः केवलान्वयीति तद्वद्वृत्तित्वाभावस्याऽप्रसिद्ध्याऽसिद्धिप्रसिद्धिरेवाश्रयासिद्धिघटिताऽश्रयासिद्धौ च नाव्याप्तिरिति ध्येयम्। वस्तुस्तु अन्यतमत्वं न तद्भिन्नभिन्नत्वम् किन्तु प्रत्येकं तावद्वृत्तिधर्मशून्यत्वम्, तथा चात्रैवं विशेषः पक्षतावच्छेदकविशिष्टग्रहत्वव्यापकप्रकारतानिष्ठोभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपकावच्छेदकतायाःपरम्परया निरूपकावच्छिन्ननिरूपकताकत्वसम्बन्धावच्छिन्नवृत्तित्वनिष्ठप्रतियोगिताकाभावनिरूपितवृत्तितावानित्याकारकप्रतीतिनिरूपितस्य पक्षतावच्छेदकविशिष्टपक्षग्रहत्वव्यापकप्रकारतानिष्ठोभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकताप्रकारतानिष्ठस्वविशिष्टविशेष्यतावत्त्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकग्रहनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगितानिष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठप्रतियोगितासम्बन्धावच्छिन्नावच्छेदकतानिरूपकाभाववनिष्ठावच्छेदकतानिरूपकप्रतिबध्यतानिष्ठावच्छेदकतानिरूपकप्रतिबन्धकतानिष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठस्वरूपघटितप्रागुक्तोभयसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नावच्छेदकतानिरूपकाभावनिष्ठावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपकावच्छिन्नवृत्तितात्वावच्छिन्नप्रतियोगिताकाभावनिरूपितवृत्तितात्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वस्य प्रमीयविशेष्यताप्रतियोगिकस्वरूपसम्बन्धेन योऽभावस्तद्वत्त्वे सति विशिष्टसाध्यग्रहत्वव्यापकयत्किञ्चित्प्रकारताघटिततादृशाभाववत्त्वे सतीत्येवं रीत्या यावद्दोषविभाजकतावच्छेदकीभूताभावनिरूपितवृत्तित्वप्रकारतानिरूपितविशेष्यतात्वस्य प्रमीयविशेष्यताप्रतियोगिकस्वरूपसम्बन्धेनाभाववान् यस्तत् शून्यत्वमन्यतमत्वमिति। तथा च यत्र यो दोषः प्रसिद्धस्तत्र तादृशदोषतावच्छेदकनिष्ठाभाववृत्तिधर्मे तादृशज्ञानीयतादृशप्रकारतानिरू-

पितविशेष्यत्वस्य प्रमीयविशेष्यताप्रतियोगिकस्वरूपसम्बन्धेनाभावो नास्तीति तद्वान्य एव तच्छून्यत्वञ्च तादृशदोषतावच्छेदकवृत्त्यभावे वर्तत इति सर्वत्र प्रसिद्धिर्बोध्या ।

## गादाधरी

न चैवं यद्विषयकनिश्चयस्य विरोधिविषयिताप्रयुक्तोभयाभावस्तत्त्वमित्यत्र विरोधिविषयिताप्रयुक्तत्वदलस्य वैयर्थ्यम्, घटादेस्तादृशरूपेण सजातीयत्वाऽप्रसिद्ध्यैव तत्र नातिप्रसङ्ग इति वाच्यम् ।

स्वसजातीयविशिष्टान्तराघटितं यद्यत्स्वं तदविषयकप्रतीतिविषयत्वस्य विवक्षयाऽनुयोगिनि स्वत्वानन्तर्भावेण पदार्थान्तरेष्वतिप्रसङ्गवारकतया तद्दलसार्थक्यात् ।

## विमलप्रभा

शङ्कते न चेत्यादिना । न चेत्यस्य वाच्यमित्यनेनान्वयः । एवम् = स्वसजातीयविशिष्टान्तराऽघटितत्वविशेषणघटकस्वपदस्य लक्ष्यतावच्छेदकत्वेनाभिमतधर्मपरत्वे । तादृशरूपेण = स्ववृत्तिहेत्वाभासविभाजकरूपेण । सजातीयत्वाऽप्रसिद्ध्यैव = घटवृत्तिहेत्वाभासविभाजकरूपस्याऽप्रसिद्धितयैव । नातिप्रसङ्गः = न घटादावतिव्याप्तिः । स्वसजातीयेत्यत्र स्वपदं = लक्ष्यतानवच्छेदकप्रमेयत्वविशिष्टबाधत्वादिपरम् । अनुयोगिनि स्वत्वानन्तर्भावेण = अनुयोगिनि स्वत्वस्यान्वयास्वीकारेण । प्रतियोगिनि स्वत्वस्यान्तर्भावेणेति यावत् । पदार्थान्तरेषु = दोषभिन्नघटपटादिषु । अतिप्रसङ्गवारकतया = अतिव्याप्तिवारकत्वेन । तद्दलसार्थक्यात् = विरोधिविषयिताप्रयुक्तत्वदलस्य सार्थकतासम्भवात् ।

अयमर्थः । अनुयोगिनि स्वत्वमन्तर्भाव्य हेत्वाभासविभाजकरूपेण स्वसजातीयविशिष्टाऽन्तराघटितत्वनिवेशे "अत्र वदन्ति कल्पे" उभयाभावे विरोधिविषयिताप्रयुक्तत्वदलस्य सार्थकता निर्वह्निः पर्वतो वह्निमान् धूमादित्यत्रोदासीने घटादावतिव्याप्तिवारकतया या प्रतिपादयिष्यति सा न स्यात् हेत्वाभासविभाजकबाधत्वादिरूपेण सजात्यविरहेण घटादेः स्वपदेनोपादातुमशक्यतया [ घटवृत्तिहेत्वाभासविभाजकरूपाऽप्रसिद्ध्या ] घटादावतिप्रसङ्गाभावेन तद्वाग्कविशेषणस्य विरोधि-

विषयिताप्रयुक्तत्वदलस्य वैयर्थ्यमिति शङ्काकर्तुराशयः। अनुयोगिनि स्वत्वान्तर्भावे तत्रातिव्याप्तिविरहेऽपि, स्वसजातीयविशिष्टान्तरघटितं यद्यत्स्वं तदविषयकप्रतीतिविषयत्वरूपप्रतियोगिस्वत्वकल्पे स्वपदेन मेयत्वविशिष्टबाधत्वादिकमुपादाय तत्सजातीयविशिष्टान्तरभूतो यः बाधादिस्तद्घटितं स्वं मेयत्वविशिष्टबाधादिस्तदविषयकप्रतीतिमध्ये घटादिविषयकनिश्चयमुपादाय तदुत्तरानुमितौ निरुक्तोभयाभावसत्त्वेन घटादावतिव्याप्तिप्रसक्त्या तद्वारकविरोधिविषयताप्रयुक्तत्वदलन्देयमेवेति क्व वैयर्थ्यसम्भावनेति समाधानमिति। प्रतियोगिनि स्वत्वान्तर्भाव्य विशेषणदाने स्ववृत्तिताहशाभावान्यतमघटकयत्किञ्चिदभाववत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद्रूपं तदवच्छिन्नघटितत्वावच्छेदकं यत्स्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद्रूपं तद्रूपावच्छिन्नत्वं समुदितविशेषणार्थः। भवति चात्र मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिवारणम्, तथा हि स्वपदेन मेयत्वविशिष्टव्यभिचारादिकमुपादाय तत्सजातीयविशिष्टान्तरभूतो यः व्यभिचारादिस्तघटितं स्वं पुनः मेयत्वविशिष्टव्यभिचारादिकमेवेति तदविषयकप्रतीतिमध्ये मेयत्वविशिष्टव्यभिचारविषयकप्रतीतेर्धर्तुमशक्यतया ताहशप्रतीतिविषयतावच्छेदकत्वस्य तत्राभावात्।

व्यभिचारे च हेत्वाभासविभाजकरूपेण व्यभिचारसजातीयविशिष्टान्तरस्याऽप्रसिद्धया स्वपदेन तद्ग्रहणासम्भवेन मेयत्वविशिष्टव्यभिचारादिकं स्वपदेनोपादाय तत्सजातीयविशिष्टान्तरभूतो व्यभिचारः तद्घटितं स्वं मेयत्वविशिष्टव्यभिचारस्तदविषयकप्रतीतिः व्यभिचारविषयिणीति ताहशप्रतीतिविषयतावच्छेदकव्यभिचारत्ववत्तायाः व्यभिचारे सत्त्वात् लक्षणसमन्वयः।

व्यभिचारघटितबाधे च स्वपदेन व्यभिचारघटितबाधग्रहणे तत्सजातीयविशिष्टान्तराऽप्रसिद्धेरतः मेयत्वविशिष्टव्यभिचारघटितबाध एव स्वपदग्राह्य इति तत्सजातीयविशिष्टान्तरभूतो व्यभिचारघटितबाधस्तदविषयकप्रतीतिविषयतावच्छेदकं यत् व्यभिचारघटितबाधत्वं तद्वत्त्वस्य व्यभिचारघटितबाधे सत्त्वात् लक्षणसङ्गतिः।

व्यभिचारविशिष्टबाधे च स्वं बाधविशिष्टो व्यभिचारः व्यभिचारत्वेन तत्सजातीयविशिष्टान्तरभूतः शुद्धव्यभिचारस्तद्घटितं स्वं बाधविशिष्टो व्यभिचारस्तदविषयकप्रतीतिविषयतावच्छेदकधर्मवत्त्वस्य बाधविशिष्टव्यभिचारेऽसत्त्वान्नातिप्रसङ्गः।

## बलदेवी

स्वसजातीयविशिष्टान्तराघटितं यत् स्वं तदविषयकप्रतीतिविषयत्वविवक्षया अनुयोगिनि स्वत्वानन्तर्भावेण पदार्थान्तरेऽतिप्रसङ्गवारकतया तद्दलसार्थक्यात् इति भट्टाचार्यः ।

तथा च स्ववृत्तिताद‍ृशाभावान्यतमघटकयत्किञ्चिदभाववत्त्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद्रूपं तदवच्छिन्नघटितत्वावच्छेदकं यद्यत् स्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वं यद्रूपे विशिष्टान्तराघटितत्वं फलितम् । अत्र स्वपदेन लक्ष्यतावच्छेदकीभूतव्यभिचारत्वादिकं धर्तुं न शक्यते तस्य ताद‍ृशविशिष्टान्तराऽघटितत्वाभावात् किन्तु मेयत्वविशिष्टव्यभिचारत्वादिकं तच्च ताद‍ृशविशिष्टान्तरव्यभिचारत्वावच्छिन्नेन घटितमिति मेयत्वविशिष्टव्यभिचारत्वस्य मेयत्वविशिष्टव्यभिचारत्वाऽघटितत्वाभावात् मेयत्वविशिष्टव्यभिचारे नातिव्याप्तिः शुद्धव्यभिचारत्वस्य तदघटितत्वात् व्यभिचारे लक्षणसङ्गतिः । एवं व्यभिचारघटितबाधे च नाव्याप्तिः, ताद‍ृशबाधत्ववृत्तिरूपवत् एवं ताद‍ृशबाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं न शुद्धव्यभिचारत्वं विपरीतबाधत्वस्य ताद‍ृशत्वेऽपि तदवच्छिन्नघटिततावच्छेदकं न स्वम्, किन्तु मेयत्वविशिष्टताद‍ृशबाधत्वमेव स्वपदग्राह्यम्, तदवच्छिन्नाऽघटितत्वस्य ताद‍ृशबाधत्वे सत्त्वात् लक्षणसङ्गतिः ।

बाधविशिष्टव्यभिचारादौ च नातिव्याप्तिः, ताद‍ृशव्यभिचारत्वनिष्ठव्यभिचारत्ववत् अथ च तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं शुद्धव्यभिचारत्वं तदवच्छिन्नघटिततावच्छेदकं यद्यत् स्वं ताद‍ृशव्यभिचारत्वं तदघटितत्वस्य स्वस्मिन्नभावात् ।

अत्र स्वसजातीयविशिष्टान्तरकं यद्यत्स्वं तदघटितत्वोक्तौ चासम्भवः, बाधत्वादेरपि स्ववृत्तिताद‍ृशान्यतमवत् अथ च स्वावच्छिन्नविषयकप्रतीतिविषयतावाच्छेदकं यत् विपरीतबाधत्वं तत्कत्वस्य बाधत्वे सत्त्वेन स्वपदग्राह्यतया तदवच्छिन्नाघटितत्वस्य [ स्वाऽघटितत्वस्य ] स्वस्मिन्नसत्त्वात्, अतः स्वस्मिन् ताद‍ृशविशिष्टान्तराघटितत्वनिवेशः, घटितपदनिवेश इति फलितार्थः ।

स्वावच्छिन्ने तदघटितत्वोक्तौ च बाधस्य विपरीतबाधघटिततया तस्य स्वपदाऽग्राह्यत्वान्नासम्भवः ।

स्वपदेन मेयत्वविशिष्टविपरीतव्यभिचारत्वमादाय मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिवारणाय यद्यदिति।

तादृशविशिष्टान्तरघटितं यद्यत्त्वं तदघटितत्वमनुक्त्वा तद्भिन्नत्वोक्तौ च मेयत्वविशिष्टव्यभिचारविशिष्टघटेऽतिव्याप्तिः, व्यभिचारतात्वाभावेन तादृशघटत्वस्य स्वपदेन धर्तुमशक्यतया स्वपदग्राह्यमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नभेदस्य तत्र सत्त्वात्। अत एव तद्रूपानवच्छिन्नप्रकारतावच्छेदकत्वमपि नोक्तम्। यद्यपि व्यभिचारविशिष्टमेयत्वेऽतिव्याप्तेर्वक्ष्यमाणतयाऽत्रापीष्टापत्तिरेवेति व्यर्थम् तदघटितत्वम्, तथाप्यणुरपि विशेषोऽध्यवसायकर इति न्यायात्तदुपात्तम्।

## गादाधरी

न च व्यभिचारविशिष्टमेयत्वादेर्हेत्वाभासत्वविरहात् हेत्वाभासविभाजकरूपेण स्वसजातीयाऽप्रसिद्धया तस्य स्वपदेनोपादातुमशक्यत्वात् मेयत्वविशिष्टव्यभिचारत्वादिकमेव स्वपदेनोपादेयम्, तस्य शुद्धव्यभिचाराद्यभिन्नतया व्यभिचारत्वादिरूपहेत्वाभासविभाजकरूपेण तत्सजातीयप्रसिद्धेरिति तदविषयकप्रतीतिविषयत्वस्य व्यभिचारविशिष्टमेयत्वादौ सत्त्वात् तत्रातिप्रसङ्ग इति वाच्यम्।

## विमलप्रभा

पुनश्शङ्कते न चेत्यादिना। नचेत्यस्य वाच्यमित्यनेनान्वयः। स्वसजातीयाऽप्रसिद्धया = व्यभिचारविशिष्टमेयत्वसजातीयाऽप्रसिद्धत्वेन। तस्य = व्यभिचारविशिष्टमेयत्वत्वस्य। स्वपदेन = स्वसजातीयेत्यत्र स्वपदद्वारा। तस्य = मेयत्वविशिष्टव्यभिचारत्वस्य। अभिन्नतया = अनतिरिक्तत्वेन। तत्सजातीयप्रसिद्धेः मेयत्वविशिष्टव्यभिचारसजातीयप्रसिद्धेः। तदविषयकप्रतीतिः = मेयत्वविशिष्टव्यभिचाराऽविषयकप्रतीतिः। तत्र = व्यभिचारविशिष्टमेयत्वे। अतिप्रसङ्गः = अतिव्याप्तिः। अयमर्थः। मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिवारणाय प्रतियोगिनि स्वत्वमन्तर्भाव्य लक्षणार्थनिर्वचनेऽपि व्यभिचारविशिष्टमेयत्वेऽतिव्याप्तिर्दुर्वारैव, तथा हि व्य-

भिचारविशिष्टमेयत्वे हेत्वाभासविभाजकरूपविरहेण तद्धर्मस्य स्वपदेन ग्रहीतुमशक्यतया मेयत्वविशिष्टव्यभिचारत्वस्यैव स्वपदेनोपगृह्य तत्सजातीयविशिष्टान्तरभूतो व्यभिचारस्तद्घटितं स्वं मेयत्वविशिष्टव्यभिचार इति तादृशविशिष्टान्तरतावच्छेदकं यत् मेयत्वविशिष्टव्यभिचारत्वं तदघटितत्वस्य व्यभिचारविशिष्टमेयत्वे वर्त्तमानतया व्यभिचारविशिष्टमेयत्वरूपधर्मावच्छिन्नविषयकनिश्चयत्वव्यापकतायाः प्रकृतानुमितिप्रतिबन्धकतायां सत्त्वात्।

## बलदेवी

अथात्र स्वपदेनोदासीनमेयत्वविशिष्टव्यभिचारत्वस्य धर्त्तव्यतया तत्र च विशिष्टान्तराऽघटितत्वघटितहेत्वाभासविभाजकधर्मविरहेण स्वपदार्थाऽप्रसिद्ध्याऽसम्भवत्सम्भवेऽव्याप्तिदानं कुतो नासङ्गतमिति चेन्न। स्वसजातीयविशिष्टान्तरघटितं यत्स्वमित्यनेन स्वाश्रयवृत्तिहेत्वाभासविभाजकरूपवत् विशिष्टान्तरघटितं यत्स्वमित्यस्यैव विवक्षिततयाऽसम्भवाभावादिति भावः।

नन्वेवं परिष्कारे विशेषगुणाभाववान् घटो गुणसामान्याभाववानित्यत्र विशेषगुणवद्घटरूपाश्रयासिद्धावव्याप्तिसम्भवे व्यभिचारविशिष्टमेयत्वेऽतिव्याप्तिदानं कुतो न सन्दर्भविरुद्धम्। तथा हि विशेषगुणवद्घटत्वावच्छिन्नविषयतायामपि गुणसामान्याभाववद्विशेषगुणाभाववद्घटत्वावच्छिन्नविषयकबुद्धित्वव्यापकघटत्वावच्छिन्नविशेष्यतानिरूपितगुणसामान्याभावत्वावच्छिन्नप्रकारतारूपयत्किञ्चित्प्रकारताविशिष्टग्रहत्वव्यापकविशिष्टपक्षग्रहत्वव्यापकविशिष्टपक्षसाध्यग्रहत्वाव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकताया निरुक्तोभयसम्बन्धेन सत्त्वेन तदभाववद्वृत्तित्वाभावरूपस्य बाधत्वत्वस्य विशेषगुणवद्घटरूपाऽऽश्रयासिद्धित्वे वर्त्तमानतया स्ववृत्तिबाधतात्ववत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकगुणवद्घटत्वावच्छिन्नघटितत्वस्याऽऽश्रयासिद्धौ सत्त्वेन तदघटितत्वस्य स्वस्मिन्नसत्त्वादिति चेन्न। विशिष्टान्तराघटितत्वघटितबाधत्वादिनामेवात्र विवक्षणीयत्वात्। तत्त्वञ्च विशिष्टपक्षसाध्यग्रहत्वाव्यापकपक्षे साध्यवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वाभाववद्वृत्तित्वाभाव एव प्रतिबन्धकतावच्छेद-

कत्त्राभावश्च स्वविशिष्टविषयितानुयोगिकस्वरूपस्वनिरूपकप्रतिबन्धकतानिरूपित-प्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयिता-त्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकः । विषयितायां स्ववैशिष्ट्यम्, स्वनि-रूपकप्रतिबन्धकतावत्त्वसम्बन्धेन । प्रतिबन्धकतावत्त्वञ्च स्वविशिष्टविषयिताभिन्नमु-ख्यविशेष्यताशून्यज्ञानीयत्वसम्बन्धेन । विषयितायां स्ववैशिष्ट्यञ्च स्वावच्छेदक-त्वस्वव्याप्यप्रतिबन्धकतानवच्छेदकत्वोभयसम्बन्धेन । तथा च विशेषगुणवद्घट-त्वावच्छिन्नविषयितायां न गुणसामान्याभावत्वावच्छिन्नप्रकारतात्मकतादृशयत्किञ्चित्-प्रकारताविशिष्टग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकतास्ति, स्वनि-रूपकबाधप्रतिबन्धकताया अभावात्, तादृशविषयितायास्तत्प्रतिबन्धकतावच्छे-दकत्वेऽपि तद्व्याप्याश्रयासिद्धिप्रतिबन्धकतायामनवच्छेदकत्वात्, तादृशोभयसम्बन्धेन तादृशप्रतिबन्धकताविशिष्टागुणवद्घटविषयितैव, तदन्यमुख्यविशेष्यताविशेषगुणवान् घट इति ज्ञानीयविशेष्यता तच्छून्यज्ञानीयविषयिता गुणवद्घटविषयितैव, तदनु-योगिकस्वरूपसम्बन्धेन तादृशावच्छेदकतावती विषयिता तादृशाश्रयासिद्धिविषयि-ता तद्वृत्तित्वाभावश्च नाश्रयासिद्धित्वे इति विशिष्टान्तराऽघटितत्वेन घटितं बाधतात्वं नाश्रयासिद्धिसाधारणमिति नोक्ताश्रयासिद्धावव्याप्तिप्रसक्तिः। मुख्यविशेष्यत्वानुपादाने मेयत्वविशिष्टबाधादावतिव्याप्तिः, तादृशबाधतात्वस्य तत्राभावात्। तथा हि पक्षता-वच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारतारूपकिञ्चित्प्र-कारताविशिष्टग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकता मेयत्वविशिष्ट-बाधविषयतायां नास्ति, स्वनिरूपकप्रतिबन्धकतायास्तत्राभावात्, तदभावश्च वह्न्य-भाववान् ह्रदः प्रमेय इति ज्ञानीयप्रमेयत्वविषयतायां वर्त्तते स्वावच्छेदकत्वस्वव्याप्य-प्रतिबन्धकतानवच्छेदकत्वोभयसम्बन्धेन,तादृशप्रतिबन्धकताविशिष्टा या बाधविषयिता तदन्यप्रमेयत्वविषयितायास्सत्त्वात्, तथा च तादृशबाधत्वस्य वक्तुमशक्यतया स्वपदग्रा-ह्यं यत्तदवच्छिन्नाऽघटितत्वस्य तत्र सत्त्वात्। मुख्यविशेष्यतानिवेशे तु प्रमेयत्व-विषयिता न तादृशीति तादृशप्रतिबन्धकताविशिष्टान्यमुख्यविशेष्यता न बाधः प्रमेय इति ज्ञानीयेति तादृशबाधत्वावच्छिन्नविषयितायां निरुक्तोभयसम्बन्धेन बाधप्रतिब-न्धकतावच्छेदकतायास्सत्त्वेन तच्छून्यविषयितावृत्तित्वाभावस्य सत्वेन तादृशबाधत्व-

स्य स्वपदग्राह्यतया नातिव्याप्तिः। एवमेवासिद्धित्वादिकमपि निर्वाच्यम्।

अत्रायमनुगमः, धर्मविशिष्टधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकप्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावनिष्ठकिञ्चिद्रूपावच्छिन्नविषयताशालिनिश्चयोत्तरानुमितिनिष्ठाभावनिरूपितविरोधिविषयिताप्रयुक्तत्वविशिष्टस्वनिष्ठनिरूपकताकाधिकरणतासम्बन्धावच्छिन्नप्रतियोगित्वन्नास्तीति प्रतीतिसिद्धाभावनिरूपितप्रतियोगितानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मवत्वं लक्षणम्। धर्मवैशिष्ट्यञ्च धर्मे स्वविशिष्टरूपघटितत्वस्वतादात्म्योभयसम्बन्धेन। रूपे स्ववैशिष्ट्यञ्च, स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्ववृत्तितादृशाभावान्यतमवत्त्वोभयसम्बन्धेनेति भावः।

## गादाधरी

विशिष्टान्तराऽघटितत्वेनाऽघटितस्य साध्यसाधनग्रहाऽविरोधिज्ञाननिष्ठविषयितासम्बन्धेन व्याप्तिग्रहप्रतिबन्धकताऽनतिरिक्तवृत्तित्वादिरूपस्य व्यभिचारादिविभाजकस्याऽत्र प्रवेशात्, तादृशरूपस्य च व्यभिचारादिविशिष्टप्रमेयत्वादिसाधारणत्वादित्याहुः।

## विमलप्रभा

समाधत्ते विशिष्टान्तरेत्यादिना। विशिष्टान्तराऽघटितत्वेनाऽघटितस्य = विशिष्टान्तराऽघटितत्वविशेषणशून्यस्य। विशिष्टसाध्यसाधनग्रहाऽविरोधिज्ञाननिष्ठविषयिता सम्बन्धेन = साध्यतावच्छेदकविशिष्टसाध्यहेतुतावच्छेदकविशिष्टहेतुग्रहाऽप्रतिबन्धकनिर्णयनिष्ठविषयितासम्बन्धेन। व्याप्तिग्रहप्रतिबन्धकताऽनतिरिक्तवृत्तित्वादिरूपस्य = व्याप्तिज्ञानत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतायद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापिका तद्रूपस्य। अत्र = प्रतियोगिकोटिप्रविष्टसत्त्वघटितलक्षणे। ता-

दृशरूपस्य = व्याप्तिज्ञानप्रतिबन्धकताऽनतिरिक्तवृत्तित्वरूपस्य । व्यभिचारविशिष्टप्रमेयत्वादिसाधारणत्वात् = व्यभिचारविशिष्टप्रमेयत्वेऽपि वर्त्तमानत्वात् । अयमर्थः । पक्षतावच्छेदकावच्छिन्नपक्षे साध्यतावच्छेदकावच्छिन्नसाध्यहेतुतावच्छेदकावच्छिन्नहेतुवैशिष्ट्यावगाहिपक्षः साध्यवान् हेतुमानित्यादिरूपविशिष्टसाध्यसाधनज्ञानाऽविरोधिव्याप्तिज्ञानप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्तित्वविशिष्टविषयितासम्बन्धावच्छिन्नव्यभिचारज्ञाननिष्ठा या प्रतिबन्धकता तदभाववद्बाधादिविषयकनिश्चयनिरूपितविषयित्वसम्बन्धावच्छिन्नवृत्तित्वाभावरूपस्य, अर्थात् व्याप्तिज्ञानप्रतिबन्धकताऽनतिरिक्तवृत्तित्वरूपस्य व्यभिचारविभाजकीभूतधर्मस्य प्रतियोगिकोटिप्रविष्टस्वत्वघटितलक्षणे प्रविष्टतया व्यभिचारविशिष्टमेयत्वत्वस्यापि व्याप्तिज्ञानप्रतिबन्धकताऽनतिरिक्तवृत्तित्वेन तादृशरूपस्य व्यभिचारविशिष्टमेयत्वसाधारणतया स्वपदेन तस्याप्युपादानसम्भवेन तत्सजातीयविशिष्टान्तरभूतो व्यभिचारस्तद्घटितं स्वं व्यभिचारविशिष्टमेयत्वं तदविषयकप्रतीतिविषयतावच्छेदकत्वस्य व्यभिचारविशिष्टमेयत्वत्वे विरहान्नातिप्रसङ्गसम्भावनेति भावः ।

## बलदेवी

विशिष्टान्तराघटितत्वेनेत्यादि भट्टाचार्यः ।

अत्र बाधतात्वं विशिष्टपक्षगृहत्वाव्यापकविशिष्टसाध्यगृहत्वाव्यापकपक्षे साध्यवैशिष्ट्यावगाहिगृहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वाभाववन्निरूपितवृत्तित्वाभावः । प्रतिबन्धकत्वाभावश्च -स्वरूपस्वनिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयितावत्त्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकः । वृत्तिता च, स्वावच्छिन्ननिरूपितविषयितावत्त्वसम्बन्धावच्छिन्ना ग्राह्या । निश्चये प्रतिबन्धकतावैशिष्ट्यञ्च, स्वाश्रयत्व,—स्वनिरूपितमुख्यविशेष्यतावृत्त्यवच्छेदकतानिरूपितावच्छेदकतावत्प्रकारतानिरूपितविशेष्यतानिरूपकज्ञानाभाववत्त्वोभयसम्बन्धेन ।

एवमेव व्यभिचारत्वं विशिष्टसाध्यसाधनगृहत्वाव्यापकविशिष्टहेतुधर्मिकविशिष्टसाध्यनिरूपितव्याप्तिप्रकारकगृहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वाभावरूपम् । अ-

नयैव रीत्या स्वरूपासिद्धित्वादिकमपि निर्वाच्यम् । तथा चैतादृशव्यभिचारत्वस्य व्यभिचारविशिष्टमेयत्वादिसाधारणतया न तत्रातिव्याप्तिः ।

एवं ह्रदो वह्निमानित्यादौ वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदादौ नातिव्याप्तिः । ह्रदो वह्निमानित्याकारकगृहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताया निश्चयविशिष्टनिश्चये स्वरूपसम्बन्धेन सत्त्वेऽप्यपरसम्बन्धेनाभावेन तादृशसम्बन्धद्वयेन तादृशप्रतिबन्धकत्वाभावस्य तादृशनिश्चये सत्त्वेन तद्वृत्तित्वाभावस्य बाधत्वस्य तादृशविशिष्टगृहत्वे सत्त्वात् ।

अत्रायमनुगमः, धर्मविशिष्टधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभाववद्वृत्तियद्रूपं तादृशरूपावच्छिन्नत्वम् हेत्वाभासत्वम्, धर्मे धर्मवैशिष्ट्यञ्च, स्वतादात्म्य- स्वविशिष्टरूपघटितत्वोभयसम्बन्धेन, रूपे स्ववैशिष्ट्यञ्च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्व—स्ववृत्तिबाधतात्वाद्यन्यतमरूपवत्त्वोभयसम्बन्धेन । रूपे उभयाभाववृत्तित्वञ्च, स्वावच्छिन्नविषयताशाल्यनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयाऽव्यवहितोत्तरानुमितित्वव्यापकतासम्बन्धेन । व्यापकता च, विरोधिविषयिताप्रयुक्तत्वविशिष्टत्वाधिकरणत्वसम्बन्धेनेति ।

## गादाधरी

तन्न, व्यभिचारघटितबाधादावपि विशिष्टान्तराऽघटितत्वाघटितव्यभिचारत्वादिसत्त्वेन तद्घटकव्यभिचारादेर्व्यभिचारत्वादिना तत्सजातीयतया तत्सङ्ग्रहानुपपत्तेः ।

## विमलप्रभा

विशिष्टान्तराऽघटिततत्वेनाऽघटितमेव व्यभिचारत्वं यदि स्यात्तदा बाधविशिष्टव्यभिचारेऽतिव्याप्तिवारणसम्भवेऽपि व्यभिचारघटितबाधेऽव्याप्तिर्दुर्वारैवेत्याशयेनोक्तमतं दूषयितुमाह तन्नेति । विशिष्टान्तराऽघटितेति=स्वाव्यापकीभूता या प्रतिबन्धकता तादृशप्रतिबन्धकताशून्यत्वाऽघटितेति तदर्थः । तद्घटक-

व्यभिचारादेः=तादृशबाधघटकव्यभिचारादेः। तत्सजातीयतया=तादृशबाधसजातीयत्वेन। तत्संग्रहानुपपत्तेः=व्यभिचारघटितबाधादावव्याप्तेः। अयमर्थः। यदि बाधविशिष्टव्यभिचारेऽतिव्याप्तिवारणाय प्रतियोगितावच्छेदकसम्बन्धविधया स्वाव्यापकप्रतिबन्धकताशून्यत्वाऽघटितमेव व्यभिचारत्वं विवक्ष्यते तदा धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपव्यभिचारघटितबाधेऽव्याप्तिर्दुर्वारैव, धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वरूपबाधत्वेऽपि विशिष्टान्तराऽघटितत्वाघटितं तादृशव्यभिचारत्वं वर्त्तत इति तद्धर्मेण तादृशबाधसजातीयविशिष्टान्तरं शुद्धव्यभिचारत्वं तद्घटितं स्वं व्यभिचारघटितबाधत्वमिति तस्यापि स्वपदेनोपादेयतया तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकधर्मवत्त्वस्य धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपव्यभिचारघटितबाधेऽसत्त्वात्। अतो नैतादृशरीत्या व्यभिचारत्वं निर्वाच्यम्, तथा चोक्तदोषस्तदवस्थ एवेति भावः।

## गादाधरी

न[1] च स्ववृत्तियावद्धेत्वाभासविभाजकरूपेण साजात्यं विवक्षणीयम्, तथा च बाधादिघटकव्यभिचारादौ बाधत्वाद्यसत्वान्न तादृशबाधादिसजातीयत्वम्, अतस्तत्संग्रहसम्भव इति वाच्यम्। एवं सति बाधविशिष्टव्यभिचारादौ स्ववृत्तिबाधत्वव्यभिचारत्वादियावद्धर्मेण सजातीयविशिष्टान्तरस्य व्यभिचारविशिष्टबाधादेः प्रसिद्धाव-

---

१ अत्रेदं बोध्यम्; प्रतियोगिनि स्वत्वान्तर्भावेण तादृशलक्षणकरणेऽपि व्यभिचारघटितबाधादावव्याप्तिवारणमशक्यमेव, तत्र सजातीयविशिष्टान्तरघटितं यत्स्वं धूमव्यभिचारिवह्निमत्त्वं तदघटितत्वस्य तद्घटितबाधानावसत्त्वात्। यदि तदघटितत्वं तदपर्याप्तविषयतापर्याप्त्यधिकरणत्वं तच्च तत्र सुघटमेव एकदेशपर्याप्तविषयताया अपि समुदाये पर्याप्तिरित्युच्यते तदाप्यव्याप्तिर्दुर्वारैव, निरुक्तव्यभिचारत्वेन सजातीयविशिष्टान्तरघटितस्तादृशबाध एव तदपर्याप्तविषयतायास्तत्राभावात्। इत्यधिकः पाठः कलिकातामुद्रितपुस्तके।

पि तद्घटितत्वाऽसत्त्वेन तत्रातिव्याप्तेः तस्माद्व्यभिचारघटितबाधादेः संग्रहप्रकारोऽग्रे प्रदर्शनीय एवादरणीयः।

## विमलप्रभा

पुनः शङ्कते न चेत्यादिना। न चेत्यस्य वाच्यमित्यनेनान्वयः। स्ववृत्तियावद्धेत्वाभासविभाजकरूपेण = यावत्पदस्य व्यापकतावाचितया बाधत्वादिवृत्तिहेत्वाभासविभाजकरूपत्वव्यापकत्वेन, स्ववृत्तित्वविशेषितबाधत्वाद्यन्यतमत्वघटकत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नवत्त्वेनेति यावत्। तथा च = एतादृशरूपेण साजात्यविवक्षणे च। अतः = व्यभिचारादौ बाधादिसाजात्यविरहहेतुना। तत्संग्रहसम्भवः = व्यभिचारघटितबाधसंग्रहसम्भवः। एवं सति = स्ववृत्तियावद्धेत्वाभासविभाजकरूपेण साजात्यनिवेशे सति। स्ववृत्तिबाधत्वव्यभिचारत्वादियावद्धर्मेण = स्वं बाधविशिष्टव्यभिचारः। व्यभिचारघटितबाधवृत्तिबाधत्वव्यभिचारत्वादियावद्धर्मेण। तदघटितत्वाऽसत्त्वेन = व्यभिचारविशिष्टबाधघटितत्वस्याऽसत्त्वेन।

तत्र = बाधविशिष्टव्यभिचारे। तस्मात् = अतिप्रसङ्गात् हेतोः। अग्रे = = अत्र वदन्ति कल्पे। आदरणीयः = स्वीकरणीयः। अयमर्थः। स्ववृत्तय यावन्तो हेत्वाभासविभाजकीभूतधर्मास्तेन रूपेण साजात्यविवक्षायां न व्यभिचारघटितबाधे = धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपेऽव्याप्तिसम्भावना, तथा हि व्यभिचारघटितबाधत्ववृत्तिहेत्वाभासविभाजकयावद्धर्मपदेन बाधत्वत्वव्यभिचारत्वत्वादिकमुपादाय तद्वत्त्वं न व्यभिचारघटितबाधत्वे तत्र स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वाभावात्, किन्तु मेयत्वविशिष्टव्यभिचारघटितबाधत्व एव तादृशतदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकधर्मवत्त्वस्य व्यभिचारघटितबाधे सत्त्वादिति यदुक्तं तन्न युक्तिसहं तथा सति अयोगोलकं धूमवद्वह्नेरित्यादौ धूमाभाववदयोगोलकविशिष्टधूमाभाववद्वृत्तिवह्निरूपबाधविशिष्टव्यभिचारेऽतिव्याप्तिर्दुर्वारैव, बाधविशिष्टव्यभिचारत्वरूपस्ववृत्तिबाधत्वादिप्रत्येकधर्मसामानाधिकरण्यं न बाधत्वे न वा व्यभिचारत्वे किन्तु बाधविशिष्टव्यभिचारत्वरूपधर्मावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं व्यभिचारविशिष्टबाधत्वमेव तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य बाध-

विशिष्टव्यभिचारत्वेऽसत्त्वात् । अतः स्वपदेन बाधविशिष्टव्यभिचारत्वस्य ग्रहीतुमशक्यतया मेयत्वविशिष्टबाधविशिष्टव्यभिचारत्वस्यैव स्वपदेनोपादेयतया तत्सजातीयविशिष्टान्तरभूतो यः बाधविशिष्टव्यभिचारस्तदघटितं स्वं मेयत्वविशिष्टबाधविशिष्टव्यभिचारस्तदविषयकप्रतीतिमध्ये बाधविशिष्टव्यभिचारविषयकप्रतीतिमुपादाय तद्विषयतावच्छेदकबाधविशिष्टव्यभिचारत्ववत्त्वस्योक्तबाधविशिष्टव्यभिचारे सत्त्वादिति । अतस्साजात्यं न स्ववृत्तियावद्धेत्वाभासविभाजकरूपेण, तथा च पूर्वोक्तव्यभिचारघटितबाधेऽव्याप्तिस्तदवस्थैवेति चेत्सत्यम् प्रतिबन्धकताघटितलक्षणेऽपि व्यभिचारघटितबाधेऽव्याप्तिवारणाय प्रदर्शनीयात्रावच्छिन्नकल्पोक्तविशिष्टान्तरविषयित्वाप्रयोज्यस्वविषयताप्रयोज्यताद‍ृशोभयाभावप्रयोजकाभावाधिकरणताकत्वरूपविशिष्टान्तराऽघटितत्वरूपविशेषणमत्रापि स्वीकरणीयमतो न कोऽपि दोषः ।

### बलदेवी

व्यभिचारविशिष्टबाधस्य प्रसिद्धावपि तदघटितत्वासत्त्वेनेति भट्टाचार्यः ।

नन्वत्र बाधविशिष्टव्यभिचारेऽतिव्याप्तिकथनमसङ्गतम्, स्वपदेन बाधविशिष्टव्यभिचारत्वस्यधर्तुमशक्यत्वेऽपि बाधवैशिष्ट्यमुपादाय तद्वृत्तिबाधत्वत्ववत् अथ च तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं शुद्धबाधत्वं तदवच्छिन्नघटितं यत्स्वं बाधवैशिष्ट्यं तदघटितत्वस्य बाधविशिष्टव्यभिचारेऽभावादिति चेन्न । न चैवं सति तुल्ययुक्त्या व्यभिचारघटितबाधेऽव्याप्तिः, तत्रापि धूमव्यभिचारिवह्निमत्वं स्वपदेनोपादाय तद्वृत्तिव्यभिचारत्वत्ववत् अथ च तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं धूमव्यभिचारिवह्नित्वं तद्घटितं स्वं धूमव्यभिचारिवह्निमत्त्वं तदघटितत्वस्य धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वे विरहात् । अतोऽत्राघटितत्वं न तदवच्छिन्नाविषयकप्रतीतिविषयत्वम्, किन्तु तदवच्छिन्नविषयतावत्त्वतदवच्छिन्नविषयत्वाव्यापकविषताशून्यत्वोभयाभाववत्प्रतीतिविषयतावच्छेदकत्वं लक्ष्यतावच्छेदकीभूतधर्मे वाच्यम्, तथा च धूमव्यभिचारिवह्निमत्त्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वाभावप्रयुक्तोभयाभावस्य ताद‍ृशविशिष्टबाधप्रतीतौ सत्त्वान्नाव्याप्तिः ।

एवञ्च बाधविशिष्टव्यभिचारेऽपि बाधवैशिष्ट्यमादाय नातिव्याप्तिवारणं कर्त्तुं शक्यते, बाधवैशिष्ट्यावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वाभावप्रयुक्तोभयाभाववत्त्वस्य बाधविषयकप्रतीतौ सत्त्वात्।

न चैवं मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, मेयत्वविशिष्टव्यभिचारो घटश्चेति समूहालम्बनप्रतीतौ मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वाभावप्रयुक्तोभयाभावसत्त्वादिति वाच्यम्।

लक्ष्यतावच्छेदकत्वेनाभिमतयद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वस्य निवेशनीयत्वात्। तथा च तादृशप्रतीतौ मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयित्वाव्यापकघटादिविषयिताशून्यत्वाभावेन न तादृशप्रतीतिमादायाऽतिप्रसङ्ग इति।

अथैवमपि स्ववृत्तीनि यावन्ति हेत्वाभासविभाजकरूपाणि प्रत्येकं तद्वान् यः स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकीभूतो धर्मस्तदवच्छिन्नघटिततावच्छेदकं यत्स्वं तदवच्छिन्नाऽघटितत्वविवक्षणे बाधविशिष्टव्यभिचारे नातिव्याप्तिः।

बाधविशिष्टव्यभिचारत्ववृत्तिहेत्वाभासविभाजकीभूतरूपं बाधत्वत्वं व्यभिचारत्वत्वञ्च प्रत्येकं तद्वत् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं शुद्धबाधत्वं व्यभिचारत्वञ्च तदवच्छिन्नघटिततावच्छेदकञ्च बाधविशिष्टव्यभिचारत्वं स्वपदग्राह्यं भवतीति तदवच्छिन्नाऽघटितत्वस्य तत्राऽभावात्। व्यभिचारघटितबाधे च नाऽव्याप्तिः, तादृशबाधत्ववृत्तिबाधत्वत्ववतो धर्मस्य स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वविरहात्, विपरीतबाधत्वस्य तादृशत्वेऽपि तदवच्छिन्नघटिततावच्छेदकस्य स्वस्मिन्नसत्त्वात्, स्वपदेन तादृशबाधत्वस्य धर्त्तुमशक्यतया मेयत्वविशिष्टबाधत्वमेव स्वपदग्राह्यमिति तदवच्छिन्नाऽघटितत्वस्य तत्र सत्त्वात्। एवम् मेयत्वविशिष्टव्यभिचारादौ नातिव्याप्तिः, मेयत्वविशिष्टव्यभिचारत्ववृत्तिव्यभिचारत्वत्ववत् अथ च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् शुद्धव्यभिचारत्वं तदवच्छिन्नघटिततावच्छेदकं यत् स्वं मेयत्वविशिष्टव्यभिचारत्वं तदवच्छिन्नाऽघटितत्वस्य तत्रान्नऽभावात्।

नचैवमपि ह्रदेऽवच्छेदकावच्छेदेन वह्नेः साधनेऽवच्छेदकावच्छेदेन वह्न्यभाववद्ह्रदरूपबाधेऽव्याप्तिः, तादृशबाधत्ववृत्तिर्यः ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारतारूपकिञ्चित्प्रकारताविशिष्टगृहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तित्वाभावस्तद्वत्तादृशबाधत्वावच्छिन्नविषयिताशून्यशुद्धस्वरूपसम्बन्धेन वह्न्यभाववद्ध्रदत्वावगाहिज्ञानीयविषयतानिरूपकतावच्छेदकं समानाधिकरण्येन बाधत्वं तदवच्छिन्नघटितं स्वावच्छिन्नं भवतीति स्वस्यस्वाघटितत्वाभावादिति वाच्यं, स्ववृत्तितादृशयावद्धेत्वाभासविभाजकरूपेण साजात्यस्यात्र कल्पे विवक्षणीयतया तदानीं स्ववृत्तयो ये यावन्तस्तादृशान्यतमत्वाक्रान्ताऽभावास्तत्प्रत्येकं तत्तदभाववत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकावच्छिन्नघटितत्वावच्छेदकत्वस्य स्वस्मिन् विवक्षिततयावच्छेदकावच्छेदेन बाधत्ववृत्तिस्तादृशान्यतमत्वाक्रान्तोऽभावः ह्रदत्वावच्छिन्नविशेष्यतानिरूपितह्रदत्वव्यापकवह्निप्रतियोगिकसंयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताविशिष्टगृहत्वव्यापकतादृशप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तित्वाभावः ह्रदत्वावच्छिन्नविशेष्यतानिरूपितशुद्धसंयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तित्वाभावश्च, तत्र प्रथमाभावस्य सामानाधिकरण्येन बाधत्वे सत्त्वेऽपि द्वितीयाभावस्यावच्छेदकावच्छेदेन बाधत्वे एव सत्त्वेन तस्य स्वावच्छिन्नाविषयकत्वाभावात्, विपरीतावच्छेदकावच्छेदेन बाधत्वस्य तादृशत्वेऽपि स्वावच्छिन्नस्य तदवच्छिन्नाघटिततया स्वपदेन तादृशबाधत्वस्य धर्त्तुमशक्यतयाऽव्याप्तिविरहादिति चेन्न। यत्र बाधज्ञानं न स्वतन्त्रं व्यभिचारज्ञानश्च स्वतन्त्रमपि जायते तत्रातिव्याप्तेः।

यत्राङ्कुरविशेषसाध्यकस्थले मेयत्वविशिष्टव्यभिचारविषयकं ज्ञानं नियमतो बाधविषयकसमूहालम्बनमेव तत्र मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, तथा हि तत्र मेयत्वविशिष्टव्यभिचारत्वं न स्वपदेन धर्त्तुं शक्यते स्ववृत्तिस्तादृशान्यतमत्वाक्रान्तोऽभावः व्यभिचारतात्वरूपो बाधतात्वरूपश्च, तत्र स्ववृत्तिव्यभिचारतात्ववत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकव्यभिचारत्वावच्छिन्नघटितत्वेऽपि स्वावच्छिन्नस्य स्ववृत्तिबाधतात्ववत् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं न बाधत्वं किन्तु विपरीतबाधत्वम्, अस्तु वा बाधत्वमपि तदवच्छिन्नघटिततावच्छेदकं स्वमि-

त्यतोऽन्यदेव स्वपदग्राह्यम् तदवच्छिन्नाऽघटितत्वस्य मेयत्वविशिष्टव्यभिचारे सत्त्वात् पूर्वोक्तकल्पयोर्नायं दोषः। एतेनकल्पे मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयितान्यापकत्वस्य व्याप्तिज्ञानप्रतिबन्धकतायां साध्यवत्ताज्ञानप्रतिबन्धकतायाश्च सत्त्वेऽपि यत्किञ्चित्प्रतिबन्धकतात्वे व्याप्तिज्ञानप्रतिबन्धकतामुपादाय तादृशप्रतिबन्धकतावच्छेदकव्यभिचारविषयतायां मेयत्वविशिष्टव्यभिचारत्वावच्छिन्ननिरूप्यत्वाभावेनातिव्याप्तिविरहात्। अत्र वदन्तिकल्पे चोभयाभावाधिकरणताप्रयोजकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां स्वावच्छिन्नविषयिताप्रयोज्यत्वाभावाद्,हेतौ व्याप्त्यवगाहित्वाभावाधिकरणतायां विशिष्टान्तरविषयित्वाऽप्रयोज्यत्वाभावाच्च विशिष्टान्तराऽघटित्वाभावेनातिव्याप्तिविरहादिति।

अथ ज्ञानवैशिष्ट्यानवच्छिन्नत्वासाधारणविषयित्वानवच्छिन्नत्वोभयाभाववत्प्रतिबन्धकतावच्छेदकीभूतयद्रूपावच्छिन्नविषयितासामान्यं तद्रूपवत्त्वमिति विवक्षणान्न तद्दोष इति विशिष्टान्तराघटितत्वानतिरिक्तवृत्तित्वनिवेशनमफलमिति।

न च प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षे तादृशस्वरूपासिद्धौ चाव्याप्तिरिति वाच्यम्। तयोर्दोषत्वानभ्युपगमात्।

न च जलवद्ध्रदरूपोदासीनेऽतिव्याप्तिः ,तद्रूपावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतायामसाधारण्यविषयित्वानवच्छिन्नत्वप्रयुक्तोभयाभावसत्त्वादिति वाच्यम्। उभयत्र साक्षादवच्छेदकतानिरूपितत्वस्य विवक्षितत्वात्। वह्निव्यापकीभूताभावप्रतियोगिजलं जलवान् ह्रद इति ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायामुभयाभावासत्त्वेन विपरीतप्रतिबन्धकतायामुभयाभावस्य सत्त्वेऽपि तद्रूपावच्छिन्नविषयितानिष्ठावच्छेदकत्वाभावादेवादोषादिति।

वह्न्यभाववद्वह्निव्यापकीभूताभावप्रतियोगित्ववद्वृत्तिवह्निव्यापकीभूताभावप्रतियोगिजलरूपोदासीनेऽतिव्याप्तिवारणन्तु असाधारण्यविषयित्वाव्यापकीभूतविषयिताभिन्नत्वज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयाभावस्य विषयिता-

यां निवेशेनैव भविष्यतीति । न चवह्न्यभावव्याप्यवान् वह्न्यभावान्वह्न्यभावव्याप्यवांश्च ह्रद इति ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वस्यैव सत्त्वेन सत्प्रतिपक्षेऽव्याप्तिवारणाय ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वाभावघटितोभयाभावस्यावश्यं निवेशनीयत्वात् । ह्रदो वह्निमान् वह्निमज्जलवत्कालीनजलाभावादित्यादौ साधनाप्रसिद्धिद्वयघटितोदासीनेऽतिव्याप्तिरिति वाच्यम् । ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकीभूतविषयिताशून्यज्ञानीयविषयिताभिन्नत्वघटितोभयाभावस्य निवेशेनवारणात् । न च वह्निमज्जलवत्कालीनत्वाभाववज्जलकालीनजलाभाववद्ध्रदपक्षकवह्निसाध्यकवह्न्यभाववज्जलवत्कालीनजलवद्ध्रदेऽतिव्याप्तिः तत्र कस्याप्यनवकत्वाभावादिति वाच्यं ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकत्वमित्यस्यनच्छेदज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकताविशिष्टान्यत्वरूपार्थकरणान्न दोष इति ।

बाधविशेषेऽव्याप्तिवारणाय प्रतिबध्यताविशिष्टान्यत्वघटितत्रितयाभावस्य निवेशः । गगनाभाववद्वृत्तिकपिसंयोगवद्वृत्तिकपिसंयोगवद्वृक्षरूपोदासीनेऽतिव्याप्तिवारणन्तु प्रकृतानुमितित्वव्यापकप्रतिबध्यताविशिष्टान्यत्वनिवेशेन । प्रतिबध्यतावैशिष्ट्यञ्च स्वविशिष्टनिश्चयत्वव्यापकप्रतिबध्यतानिरूपितत्वसम्बन्धेन । निश्चये-स्ववैशिष्ट्यञ्च स्वविशिष्टप्रकारतावच्छेदकधर्मावच्छिन्नधर्मिकाव्याप्यवृत्तित्वभ्रमानास्कन्दितत्व-स्वाश्रयत्वोभयसम्बन्धेन । प्रकारतावैशिष्ट्यञ्च स्वनिरूपकमुख्यविशेष्यतानिरूपितत्वसम्बन्धेन । एवञ्च कपिसंयोगांशेऽव्याप्यवृत्तित्वस्यापि स्वविशिष्टत्वेन तत्र तत्र प्रतिबन्धकताया असत्त्वेन प्रतिबध्यताविशिष्टान्यत्वात् ।

गगने गगनाभाववदभाववत्कालीनघटस्याधेयतासम्बन्धेन साध्यतायां गगनाभाववत्तादृशघटस्यापि बाधत्वेन तादृशबाधविषयताया अपि गगनांशेऽव्याप्यवृत्तित्वज्ञानास्कन्दितज्ञानस्यापि स्वविशिष्टनिश्चयत्वेन तत्र प्रतिबन्धकताया असत्त्वेन प्रतिबध्यताविशिष्टान्यत्वसत्त्वादिति तद्वारणाय स्वनिरूपकमुख्यविशेष्यतावच्छेदकधर्मावच्छिन्नधर्मिकाव्याप्यवृत्तित्वज्ञानानास्कन्दितत्वघटितनिरुक्तत्रितयसम्बन्धेनैव तन्निवेश्यमिति ।

यदि तादृशसत्प्रतिपक्षस्वीकारे भवतामाग्रहस्तदा विरोध्यनुमितिजनकताविशिष्टान्यत्वमपि निवेश्यम् ।

गगनवत्सर्वमित्यादौ गगनाभाववद्घटरूपबाधेऽव्याप्तिरिति तु नाशङ्कनीयम्, समवायत्वावच्छिन्नसंसर्गीयविषयताभेदस्य प्रवेशे तु प्रमेयत्ववत्स्वरूपसम्बन्धेन वह्न्यभाववद्ध्रदेऽतिव्याप्तिवारणायैव विशिष्टान्तराऽघटितत्वं निवेश्यम् ।

निरवच्छिन्नस्वरूपेण बाधत्वस्वीकर्तृमते निरवच्छिन्नविषयताभेदनिवेशनाऽसम्भववारणेऽपि गगनमवच्छिन्नमभाववच्छब्दवद्वृत्तिशब्दाभावादित्यादावेवावच्छिन्नत्वाभाववच्छब्दवद्वृत्तिशब्दवद्गगनेऽतिव्याप्तिः,तत्रैकविषयताया एवावच्छेदकतद्व्यक्तिविषयत्वन्नास्तीति अभावस्य तत्र सत्त्वात् । अतो विशिष्टद्वयाऽघटितत्वं निवेशनीयम् । तत्र च ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतायाःप्रवेशान्न सर्वं गगनवदित्यादौ गगनाभाववद्घटादावव्याप्तिमूलकः प्रतिबध्यताविशिष्टान्यत्वशरीरे संसर्गीयविषयताभेदनिवेशः तथा च न कोऽपि दोषः ।

नच विशेष्यदले स्वरूपसम्बन्धरूपावच्छेदकत्वमेव निवेश्यतां व्यापकत्वनिवेशो व्यर्थः,अस्तु विशिष्टद्वयाऽघटितत्वं विशिष्टान्तराघटितत्वमिति वाच्यम्,कपिसंयोगाभाववद्वृक्षेऽतिव्याप्तिवारकतयैव तत्सार्थकयादिति । नच प्रतिबध्यताविशिष्टान्यत्वशरीरे वैशिष्ट्यघटकसम्बन्धः अव्याप्यवृत्तित्वभ्रमानास्कन्दितत्वघटितस्तथा च न कोऽपि दोष इति वाच्यम् । तथापि एतद्वृक्षत्वव्यापककपिसंयोगाभावसमानाधिकरणैतद्वृक्षत्ववद्वृक्षेऽतिव्याप्तिः,न च जनकताविशिष्टान्यत्वशरीरे संसर्गेऽप्यव्याप्यवृत्तित्वभ्रमानास्कन्दितत्वं प्रवेश्यत इति वाच्यम् । अखण्डाभावघटकतया विशेष्यदले व्यापकत्वसार्थक्यात् । मम तु ज्ञानानास्कन्दितत्वस्यैव प्रवेशात् ।

अनुगमस्तु प्रतिबध्यताविशिष्टरूपवत्त्वम्, रूपे प्रतिबध्यतावैशिष्ट्यञ्च स्ववृत्त्यभावीयपरम्पराऽवच्छेदकतावत्त्वस्वविशिष्टविषयितानिरूपकतावच्छेदकत्वोभयसम्बन्धेन, स्ववैशिष्ट्यञ्च, स्ववृत्त्यभावीयपरम्पराऽवच्छेदकतावत्त्व—स्वनिरूपितप्रति-

बध्यतावच्छेदकधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वाव - च्छिन्नजन्यतानिरूपितजनकताविशिष्टान्यत्वस्वनिरूपितावच्छेदकतावद्धर्मावच्छिन्नप्र - तिबध्यतानिरूपितज्ञानवैशिष्टयानवच्छिन्नप्रतिबन्धकताविशिष्टान्यत्व,—स्वनिरूपि - तप्रतिबध्यताविशिष्टप्रतिबध्यताविशिष्टान्यत्वैतच्चतुष्टयसम्बन्धावच्छिन्नस्वनिष्ठाव - च्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेनेति ध्येयम् ।

## दीधितिः

तेन मेयत्वविशिष्टव्यभिचारादौ नातिप्रसङ्गः ।

## गादाधरी

मेयत्वविशिष्टव्यभिचारादौ = तादृशव्यभिचारत्वाद्यवच्छिन्ने, नातिप्रसङ्गः = न दोषत्वप्रसङ्गः । अत्र मेयत्वविशिष्टव्यभिचारो दोषः इत्यादिव्यवहाराभावान्नेष्टापत्तिः सम्भवति ।

## विमलप्रभा

शिरोमणौ तेनेति । तेन = विशिष्टान्तराऽघटितत्वनिवेशेन । तादृशव्यभिचारत्वाद्यवच्छिन्ने = मेयत्वविशिष्टो यः व्यभिचारादिस्तादृशव्यभिचारत्वा - द्यवच्छिन्ने । अत्र प्रकृतलक्षणेऽयोगोलकं धूमवद्वह्नेरित्यादिस्थले । व्यवहाराभावात् = शब्दप्रयोगाभावात् । नेष्टापत्तिस्सम्भवति = इष्टापत्तिःकर्त्तुं न शक्यते । अर्थात् प्रकृतलक्षणे विशिष्टान्तराऽघटितत्वविशेषणदानमनर्थकमेव मेयत्वविशिष्टव्यभिचारेऽतिप्रसङ्गस्तु तस्य दोषत्वमिष्टमेवेति स्वीकारे नास्त्येवेति । अयमर्थः । प्रकृतलक्षणेऽयोगोलकं धूमवद्वह्नेरित्यादौ मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिवारणाय विशिष्टान्तराघटितत्वविशेषणन्दत्तम् । अत्र मेयत्वविशिष्टव्यभिचारस्य दोषत्वमिष्टमेवेति स्वीकारेणैव निर्वाहे व्यर्थं तद्विशेषणमिति केचित्तत्र ब्रूमः, यद्रूपावच्छिन्नविषयित्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तितादृशसमुदायत्वविशिष्टतद्रूपवतः प्रकृतानुमितिप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयताकधर्मवतश्च

दोषपदार्थतया विशिष्टान्तराऽघटितत्वविशेषणविशिष्टदोषपदार्थस्याभेदसम्बन्धेन मेयत्वविशिष्टव्यभिचारेऽन्वयबोधतात्पर्येण मेयत्वविशिष्टव्यभिचारो दोष इति तान्त्रिकशब्दप्रयोगाभावान्नेष्टापत्तिसम्भावनेति भावः।

## गादाधरी

न च विशिष्टव्यभिचारादौ शुद्धव्यभिचारत्वादिना दोषत्वस्याक्षततयोक्तविशेषणदानेऽपि तादृशव्यवहारापत्तिर्दुर्वारैवेति तत्रेष्टापत्तौ व्यर्थं विशेषणमिति वाच्यम्। दोषादिपदस्य निरुक्तविशेषणावच्छिन्नानुमितिप्रतिबन्धकतावच्छेदकस्वावच्छिन्ननिरूपितविषयिताकत्वेनान्वयितावच्छेदकधर्मबोधकताया व्युत्पन्नतया प्रकृते च मेयत्वविशिष्टव्यभिचारत्वादिरूपस्यान्वयितावच्छेदकस्योक्तविशेषणासत्त्वेनातिप्रसङ्गाभावादिति हृदयम्।

## विमलप्रभा

शङ्कते नचेत्यादिना। न चेत्यस्य वाच्यमिति परेणान्वयः। विशिष्टव्यभिचारादौ = मेयत्वविशिष्टव्यभिचारादौ। आदिना तादृशबाधसत्प्रतिपक्षविरोधाऽसिद्धिपरिग्रहः। उक्तविशेषणदानेऽपि = विशिष्टान्तराऽघटितत्वविशेषणप्रक्षेपेऽपि। तादृशव्यवहारापत्तिः = मेयत्वविशिष्टव्यभिचारो दोष इति तान्त्रिकव्यवहारप्रसङ्गः। तत्रेष्टापत्तौ = तादृशव्यवहारे इष्टापत्तिस्वीकारे। व्यर्थं विशेषणं = विशिष्टान्तराऽघटितत्वविशेषणमनर्थकमेव। निरुक्तविशेषणावच्छिन्नानुमितिप्रतिबन्धकता = विशिष्टान्तराऽघटितप्रकृतानुमितिप्रतिबन्धकता। अन्वयितावच्छेदकधर्मबोधकतायाः = विशेष्यतावच्छेदकधर्मज्ञापकतायाः। प्रकृते = निरुक्तलक्षणे मेयत्वविशिष्टव्यभिचारो दोष इत्यत्र। उक्तविशेषणासत्त्वेन = विशिष्टान्तराऽघटितत्वविशेषणविरहेण। अतिप्रसङ्गाभावात् = मेयत्वविशिष्टव्यभिचारो दोष इति शब्दप्रयोगाभावात्। अयमर्थः। विशिष्टान्तराऽघटितत्वस्य यद्रूपे स्वपदार्थे वा विशेषणत्वेऽपि विशिष्टं शुद्धान्नातिरिच्यत इति नियमेन व्यभिचारस्य मेयत्वविशिष्टव्यभिचारात्मकतया स्वपदेन व्यभिचारत्वरूपमादाय तद्वत्तायाः मेयत्वविशिष्टव्यभिचारे वर्त्त-

मानतया मेयत्वविशिष्टव्यभिचारो दोष इति व्यवहारापत्तिर्दुर्वारैवेति, न चेष्टापत्तिः, मेयत्वविशिष्टव्यभिचारेऽतिप्रसङ्गवारणायैव विशिष्टान्तराऽघटितत्वविशेषणोपादान-प्रयासः दीधितिकारस्य तत्र चेष्टापत्तौ तद्विशेषणदानप्रयासोऽनर्थक एव स्यादित्यल-क्ष्यताया एव तान्त्रिकव्यवहारबलेन दीधितिकाराभिमततया विशिष्टान्तराऽघटित-त्वविशेषणदानेऽपि तत्र दुष्टत्वापत्तिरूपदोषस्तदवस्थ एवेति पूर्वपक्षाशयः। दोषा-दिपदस्य विशिष्टान्तराऽघटितत्वविशेषणविशिष्टप्रकृतानुमितित्वव्यापकप्रतिबध्यतानि-रूपितप्रतिबन्धकतावच्छेदकस्वावच्छिन्ननिरूपितविषयिताकत्वेनान्वयितावच्छेदकधर्म-बोधकतायाः सर्ववादिप्रसिद्धतया मेयत्वविशिष्टव्यभिचारो दोष इति व्यवहा-राभावानुरोधेन धर्मिपारतन्त्र्येणोद्देश्यतावच्छेदके विधेयतावच्छेदकीभूतधर्मस्याऽभेद-सम्बन्धेन भानोपगमस्यावश्यकत्वेन मेयत्वविशिष्टव्यभिचारो दोष इत्यत्रान्वयिता-वच्छेदकीभूतमेयत्वविशिष्टव्यभिचारत्वे विशिष्टान्तराऽघटितत्वरूपविशेषणासत्त्वेन ता-दृशविशेषणविशिष्टानुमितिप्रतिबन्धकतावच्छेदकत्वाभावात् न तथा व्यवहारप्रस-ङ्गः प्रेक्षावतामिति समाधानाशयः।

## दीधितिः

एवञ्च पक्षतावच्छेदकविरहविशिष्टः पक्षः पक्षनिष्ठतद्विरहो वा, साध्याभाववद्वृत्तिसाधनं साधनवद्वृत्तिसाध्याभावो वा हेतुदोषः।

## गादाधरी

नन्वाश्रयासिद्ध्यादिस्थले पक्षतावच्छेदकाभाववत् पक्षकत्वादिकमेव दोष-स्तस्यैव हेतुनिष्ठतया हेतोर्दुष्टत्वव्यवहारनिर्वाहकत्वात् तादृशधर्मस्य च तादृशाऽभाववत्पक्षादिरूपतादृशविशिष्टाऽन्तरघटिततयाऽव्याप्तिरित्यत आह एवञ्चेति। तादृशविशेषणदाने चेत्यर्थः। आदिपदात् साध्यादिपरिग्रहः। पर्वतादिधर्मिककाञ्चन-मयत्वादिविशिष्टबुद्धौ पर्वतः काञ्चनमयत्वाभाववानित्यादिधर्मिविशेष्यकनिश्चय-स्यैव पर्वते काञ्चनमयत्वं नास्तीत्यादिधर्मिविशेषणकनिश्चयस्यापि विरोधित्वमा-

नुभविकमतस्तद्विषयस्यापि दोषत्वमाह पक्षनिष्ठ इति। आधेयतासम्बन्धेन पक्षविशिष्ट इत्यर्थः। समुच्चयार्थको वाकारः। साधनवद्वृत्तिः साध्याभाव इति। साधनधर्मिकसाध्याभाववद्वृत्तित्वप्रकारकज्ञानं, साधनधर्मिकव्याप्तिग्रहप्रतिबन्धकम्। साधनवति साध्याभाव इति ज्ञानेऽपि साधने साध्याभाववद्वृत्तित्वं तुल्यवित्तिवेद्यतया नियमतो भासत इत्यभिप्रायेण। साधनवति साध्याभाव इति ज्ञानस्यासमानविशेष्यकस्यापि प्रतिबन्धकत्वमिति प्राचीनमताभिप्रायेण चेदम्। दोष इति न तु पक्षतावच्छेदकाभाववत्पक्षकत्वादिकमिति शेषः। तथा च लक्ष्यत्वान्न तत्राऽव्याप्तिरिति भावः।

## विमलप्रभा

सम्प्रति मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिवारणायोपन्यस्ते विशिष्टान्तराऽघटितत्वविशेषणे आश्रयासिद्धिप्रभृतिष्वव्याप्तिस्स्यादित्याशङ्कायास्समाधानतयोपन्यस्तदीधितिग्रन्थः आश्रयासिद्ध्यादावव्याप्तिम्प्रदर्श्यावतारयति नन्वित्यादिना। आश्रयासिद्ध्यादिस्थल इत्यादिपदेन सत्प्रतिपक्षस्वरूपासिद्धिपरिग्रहः। पक्षतावच्छेदकाभाववत्पक्षकत्वादिकमेवेत्यत्रादिपदेन पक्षवृत्तिपक्षतावच्छेदकाभावकत्वस्य संग्रहः। एवकारात् पक्षतावच्छेदकाभाववत्पक्षमात्रस्य व्यवच्छेदः। तस्यैव = पक्षतावच्छेदकत्वाभाववत्पक्षकत्वस्यैव। तादृशधर्मस्य = पक्षतावच्छेदकत्वाभाववत्पक्षकत्वस्य। तादृशाभावः = पक्षतावच्छेदकाभावः। अव्याप्तिः = आश्रयासिद्ध्यादौ लक्षणागमनम्। तादृशविशेषणदाने च = विशिष्टान्तराघटितत्वविशेषणदाने च। आदिपदात् = पक्षतावच्छेदकादीत्यत्रादिपदेन। विशिष्टबुद्धौ = काञ्चनमयत्वपर्वतत्वोभयधर्मावच्छिन्नविशेष्यतानिरूपितवह्नित्वाद्यवच्छिन्नप्रकारताशालिबुद्धौ। धर्मिविशेष्यकनिश्चयस्यैव = पर्वतादिविशेष्यककाञ्चनमयत्वाभावप्रकारकनिर्णयस्यैव। धर्मिविशेषणकनिश्चयस्यापि = पर्वतादिविशेषणककाञ्चनमयत्वाद्यभावविशेष्यकनिर्णयस्यापि। विरोधित्वम् = प्रतिबन्धकत्वम्। आनुभविकम् = अनुभवसिद्धम्। अतः = हेतोः। तद्विषयस्य = पक्षतावच्छेदकाभावविशेष्यकपक्षप्रकारकनिश्चयस्य, काञ्चनमयत्वाभावः पर्वते इत्याकारकज्ञानविषयस्येति यावत्। आ-

धेयतासम्बन्धेन = स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन । समुच्चयार्थको वाकारः- = पर्वतविशिष्टकाञ्चनमयत्वाभाव - काञ्चनमयत्वाभावविशिष्टपर्वतयोर्द्वयोरेव दोषत्वमिति सूचनाय दीधितौ वाकार इति । साधनधर्मिकसाध्याभाववद्वृत्तित्वप्रकारकज्ञानं = वह्न्यादिविशेष्यकधूमाद्यभाववद्वृत्तित्वप्रकारकज्ञानम् । साधनधर्मिकव्याप्तिग्रहप्रतिबन्धकम् = वह्न्यादिरूपहेतुविशेष्यकधूमाद्यभाववद्वृत्तित्वादिरूपव्याप्तिप्रकारकज्ञानप्रतिबन्धकम् । साधनवति = वह्न्यादिरूपहेतुमति । साध्याभावः = स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन धूमाद्यभावः । इति ज्ञानेऽपि = इत्याकारनिश्चयसत्त्वेऽपि । साधने = वह्न्यादिरूपहेतौ । साध्याभाववद्वृत्तित्वं = धूमाद्यभावाधिकरणनिरूपितवृत्तित्वम् । तुल्यवित्तिवेद्यतया = तुल्या वित्तिस्तुल्यवित्तिः, समानज्ञानग्राहकसामग्री, तया वेद्य इति तुल्यवित्तिवेद्यस्तया, समानज्ञानग्राहकसामग्रीग्राह्यतयेति यावत् । भासते = ज्ञानविषयो भवति । तदपि = तादृशज्ञानमपि । तादृशज्ञाने = साधननिष्ठसाध्याभाव इति ज्ञाने । नियमतः = व्याप्त्याः । तदभानेऽपि = वह्न्यादिहेतौ धूमाद्यभाववद्वृत्तित्वाऽविषयकत्वेऽपि । तस्य = साधनवति साध्याभाव इति निश्चयस्य । असमानविशेष्यकस्य = समानविशेष्यतारहितस्य । तथा च = पक्षतावच्छेदकविरहविशिष्टपक्षादेर्हेतुदोषतास्वीकारे च । अलक्ष्यत्वात् = लक्ष्यभिन्नत्वात् । तत्र = पक्षतावच्छेदकाभाववत्पक्षकत्वे । अयमर्थः । विशिष्टान्तराऽघटितत्वविशेषणदानेऽपि काञ्चनमयपर्वतो वह्निमान् धूमादित्यादौ काञ्चनमयत्वाभाववत्पर्वतस्याश्रयासिद्धित्वे तस्य प्रकृतधूमरूपहेताववर्त्तमानत्वाद्धूमे दुष्टत्वानुपपत्तिः, यदि धूमहेतौ दुष्टत्वोपपत्त्यर्थं काञ्चनमयत्वाभाववत्पर्वतकत्वस्यैवाश्रयासिद्धिरूपदोषत्वमभ्युपगम्यते तदा तत्राऽव्याप्तिः, तथा हि काञ्चनमयत्वाभाववत्पर्वतकत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकमथच काञ्चनमयपर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकप्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकं यत् काञ्चनमयत्वाभाववत् पर्वतत्वं तदवच्छिन्नविषयतायाः काञ्चनमयत्वाभाववत्पर्वतकत्वावच्छिन्नविषयकप्रतीतावक्षततया तादृशकाञ्चनमयत्वाभाववत्पर्वतत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकरूपावच्छिन्नत्वस्य काञ्चनमयत्वाभाववत्पर्वतकत्वेऽभावात् ।

इति चेन्नैतन्मनोरम्, पक्षतावच्छेदकाभाववत्पक्षकत्वादीनां यदि लक्ष्यता स्यात् स्याच्च तदा विशिष्टान्तराऽघटितत्वप्रयुक्ताऽव्याप्तिसम्भावना, परन्तु पक्षतावच्छेदकाभाववत्पक्ष—पक्षनिष्ठपक्षतावच्छेदकाभावयोरेव लक्ष्यतया पक्षतावच्छेदकाभाववत्पक्षकत्वे लक्ष्यताविरहेण क्वाव्याप्तिसम्भावनेति भावः। न च पक्षनिष्ठपक्षतावच्छेदकाभावस्य दोषत्वे किम्मानमिति वाच्यम् यथा पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितकाञ्चनमयत्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नम्प्रति स्वरूपसम्बन्धावच्छिन्नकाञ्चनमयत्वाभावत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयस्य प्रतिबन्धकत्वम्, तथैव स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धावच्छिन्नपर्वतत्वावच्छिन्नप्रकारतानिरूपितकाञ्चनमयत्वाभावत्वावच्छिन्नविशेष्यताशालिनिश्चयस्यापि प्रतिबन्धकत्वमनुभवसिद्धमतस्तादृशनिश्चयविषयस्यापि दोषत्वमावश्यकमेवेति।

एवम् वह्न्यादिरूपसाधनवत्ययोगोलकादौ धूमाभाव इति ज्ञानेऽपि वह्नौ धूमाभाववद्वृत्तित्वं स्वप्रयोजकसामग्रीजन्यग्रहविषयतया भासतेऽतः निरुक्तज्ञानमपि धूमाभाववदवृत्तिवह्निरिति व्याप्तिज्ञानप्रतिबन्धकमतस्साधनवद्वृत्तिसाध्याभावस्यापि दोषत्वमवश्यं स्वीकरणीयमिति अथ नियन्त्रितविषयताकप्रत्यक्षे तुल्यवित्तिवेद्यतयोभयभानसम्भवेऽपि नियन्त्रितविषयताकानुमित्यादौ तुल्यवित्तिवेद्यतया भानन्नानुभविकं न वा यौक्तिकमित्याशयेनैव प्राचीनमताभिप्रायेणैवेदमिति ग्रन्थकृता प्रतिपादितम्।

## दीधितिः

येन केनापि सम्बन्धेन तद्वांश्च प्रकृतो हेतुर्दुष्टः।

## गादाधरी

ननु पक्षतावच्छेदकाभाववत्पक्षादीनां हेत्ववृत्तित्वात् कथं हेतौ दुष्टताव्यवहार इत्यत आह येन केनापीति। एकज्ञानविषयत्वादिनेत्यादिः। तद्वान्=तद-

वच्छिन्नः । दुष्टः=दुष्टपदप्रतिपाद्यः । तथा च हेतौ तादृशदोषानधिकरणत्वेऽपि न क्षतिः । दुष्ट इत्यादौ सामान्यतः सम्बन्धिन एव निष्ठार्थत्वात् ।

## विमलप्रभा

पक्षतावच्छेदकाभाववत्पक्षादीनामाश्रयासिद्धित्वे तादृशपक्षस्य साधनवृत्तित्वाभावेन कथं दुष्टताव्यवहारस्साधने संगच्छत इत्याशङ्कते नन्वित्यादिना । पक्षतावच्छेदकाभाववत्पक्षादीनामित्यत्रादिपदेन पक्षनिष्ठपक्षतावच्छेदकाभावस्य संग्रहः । हेत्ववृत्तित्वात्=साधननिष्ठत्वाभावात् । कथम्=कस्मात् कारणात् । हेतौ=प्रकृतसाधने । इत्यतः=इति हेतोः । आह=दीधितिकार इति शेषः । तदवच्छिन्नः=दोषावच्छिन्नः । दुष्टपदप्रतिपाद्यः=दुष्टपदजन्यप्रतीतिविषयः । तथा च =येन केनापि सम्बन्धेन दोषवत्त्वस्वीकारे च । हेतौ=साधने । तादृशदोषानधिकरणत्वेऽपि=पक्षतावच्छेदकाभाववत्पक्षादिरूपदोषाधिकरणताविरहेऽपि । न क्षतिः =न हेतौ दुष्टताव्यवहारानुपपत्तिः । सम्बन्धिनः=सम्बन्धिमात्रविशिष्टस्य । निष्ठार्थत्वात्=दुष्धातूत्तरनिष्ठाप्रत्ययार्थत्वात् । दुष्धातूत्तरनिष्ठाप्रत्ययस्यैकज्ञानविषयत्वादिसामान्यसम्बन्धेन सम्बन्धिमात्रबोधकत्वात् । अयमर्थः । यद्यपि काञ्चनमयः पर्वतो वह्निमान् धूमादित्यादौ काञ्चनमयत्वाभाववत्पर्वतरूपाश्रयासिद्धेर्धूमादिरूपहेताववर्त्तमानतया धूमादिसाधने दुष्टताव्यवहारानुपपत्तिस्तथापि काञ्चनमयत्वाभाववत्पर्वतरूपदोषधूमादिरूपहेतूभयविषयकं यदेकं ज्ञानं तादृशैकज्ञानविषयत्वसम्बन्धेनोक्ताश्रयासिद्ध्यादिरूपदोषाणां धूमादिरूपहेतुनिष्ठत्वादेव हेतौ दुष्टताव्यवहारस्तथा च न कोऽपि दोषः । न च दुष्ट इत्यादौ विशेषरूपेण सम्बन्धिन एव दुष्धातूत्तरनिष्ठाप्रत्ययविधानादनुपपत्तिस्तदवस्थैवेति वाच्यम् । प्रकृते सामान्यतस्सम्बन्धविशिष्ट एव निष्ठाविधानान्नानुपपत्तिसम्भावनेति भावः ।

## गादाधरी

न चैकज्ञानविषयत्वादिना वह्न्यभाववद्ध्रदादिरूपदोषस्य धूमादौ सत्त्वेऽपि पर्वतादौ वह्न्यादिसाधने तस्य दुष्टत्वव्यवहारापत्तिरिति वाच्यम्, यतस्तद्रूपा-

वच्छिन्नपक्ष साध्यहेतुवाचकपदसमभिव्याहारस्थले तद्रूपावच्छिन्नपक्षसाध्यहेतुकानुमितिप्रतिबन्धकतावच्छेदकस्वावच्छिन्ननिरूपितविषयिताकधर्मावच्छिन्नसम्बन्धि दुष्ट -पदेन बोध्यते, ईदृशव्युत्पत्त्या पूर्ववद्वारणेऽपि पूर्ववदेव वह्निना धूमसाधने रासभो दुष्ट इत्यादिव्यवहारो निरुक्तदोषमात्रस्य दुष्टत्वव्यवहारविषयतावच्छेदकत्वे दुर्वार इति प्रकृतहेतुतावच्छेदकविशिष्टसम्बन्धो निष्ठार्थतावच्छेदको वाच्यः। एतल्लाभाय प्रकृतो हेतुरित्युक्तम्।

## विमलप्रभा

सम्बन्धिमात्रस्य निष्ठार्थत्वे शङ्कते न चेति। न चेत्यस्य वाच्यमित्यनेनान्वयः। तस्य = धूमादेः। यतः = यस्माद्धेतोः। तद्रूपावच्छिन्नपक्षसाध्यहेतुवाचकपदसमभिव्यवहारस्थले = पक्षतावच्छेदकपर्वतत्वाद्यवच्छिन्नपक्षकसाध्यतावच्छेदकवह्नित्वाद्यवच्छिन्नसाध्यकहेतुतावच्छेदकधूमत्वाद्यवच्छिन्नहेतुकानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकधर्मावच्छिन्नवाचकस्थले। स्वं = दोषतावच्छेदकम्। दुष्टपदेन = दुष्ट इत्यत्र दुष्टपदद्वारा। बोध्यते = ज्ञाप्यते। ईदृशव्युत्पत्त्या = पूर्वोदीरितनियमेन। पूर्ववद्वारणेऽपि = पूर्वोक्तयुक्त्या पूर्वदोषवारणकरणेऽपि। निरुक्तदोषमात्रस्य = हेत्वाभासलक्षणाक्रान्तदोषसमूहस्य। प्रकृतहेतुतावच्छेदकविशिष्टसम्बन्धः = स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धः। एतल्लाभाय = स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धलाभाय। प्रकृतो हेतुरित्युक्तं = शिरोमणिनेति शेषः।

अयमर्थः। एकज्ञानविषयत्वसम्बन्धेन दोषवत्त्वस्य दुष्टत्वव्यवहारनियामकत्वे पर्वते धूमेन वह्निसाधने धूमो दुष्ट इति व्यवहारो दुष्परिहरस्तत्रापि ह्रदो वह्न्यभाववान् धूमश्चेत्याकारकैकसमूहालम्बनात्मकज्ञानविषयताया धूमे सत्त्वात्। न चैकज्ञानविषयत्वसम्बन्धेन वह्न्यभाववद्ध्रदरूपदोषस्य धूमादौ वर्तमानत्वेऽपि पर्वतत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकधर्मस्य सद्धेतावप्रसिद्धतयैव न धूमे

दुष्टताव्यंवहार इति वाच्यम्। तावतापि वह्निना धूमसाधने रासभो दुष्ट इति व्यवहारापत्तिर्दुर्वारैव, पर्वतत्वावच्छिन्नपक्षकधूमत्वावच्छिन्नसाध्यकवह्नित्वाव-च्छिन्नहेतुकानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकधूमाभाव-वद्वृत्तित्वविशिष्टवह्नित्वावच्छिन्नस्य धूमाभाववद्वृत्तिवह्निः रासभश्चेति समूहालम्ब-नैकज्ञानविषयत्वसम्बन्धेन सम्बन्धित्वस्य रासभेऽपि सत्त्वात् अतस्तद्वारणाय प्र-कृतहेतुतावच्छेदकविशिष्टसम्बन्धः अर्थात् एकज्ञानीयप्रकृतहेतुतावच्छेदकवत्त्वरूपसम्ब-न्धः दुष्धातूत्तरनिष्ठार्थतावच्छेदकतया वाच्यः, एवञ्च धूमाभाववद्वृत्तिवह्निरूपव्यभि-चारज्ञानविषयप्रकृतवह्निरूपहेतुतावच्छेदकवत्त्वरूपसम्बन्धस्य रासभादावभावेन न वह्निना धूमसाधने रासभस्य दुष्टत्वापत्तिसम्भावना। सद्धेतौ च तादृशधर्माऽप्रसिद्ध्यैव नापत्तिरित्यभिप्रायेणात्र दीधितिकृता प्रकृतपदोपात्तमिति भावः।

## गादाधरी

ह्रदे वह्नेः साधने धूमो दुष्ट इत्यत्र ह्रदत्वावच्छिन्नपक्षकवह्नित्वावच्छि-न्नसाध्यकधूमत्वावच्छिन्नलिङ्गकानुमितिप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयिता-कधर्मावच्छिन्नसम्बन्धी धूम इत्यन्वयबोधस्तत्र प्रतिबन्धकतावच्छेदकस्वावच्छि-न्नविषयिताकधर्मविशिष्ट एव दुष्धातोरर्थः। साधनपदं लक्षणया धूमत्वावच्छिन्न-हेतुकानुमितिपरम्, तत्र ह्रद इति सप्तम्यन्तार्थह्रदत्वावच्छिन्नत्वस्य वह्नेरिति ष-ष्ठ्यन्तार्थस्य वह्नित्वावच्छिन्नसाध्यकत्वस्य चान्वयः, तादृशानुमित्यन्वितसप्तम्य-र्थनिरूपितत्वस्य दुष्धात्वर्थैकदेशे प्रतिबन्धकत्वेऽन्वयः। एवञ्च पर्वते वह्नेस्सा-धने धूमो दुष्ट इत्यत्र पर्वतत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमवत्त्वाव-च्छिन्नहेतुकाऽनुमितिप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयताकधर्मविशिष्टसम्बन्धी धूम इत्येव प्रतीयते, तत्र तादृशधर्मस्याऽप्रसिद्ध एवेति न तथा व्यवहारः। प-क्षविशेषादिकमनन्तर्भाव्य धूमो दुष्ट इति व्यवहारस्त्वबाधित इष्यत एवेति दिक्।

## विमलप्रभा

पर्वते वह्नेः साधने धूमो दुष्ट इति व्यवहारो न सम्भवति, तत्र दुष्धात्वर्थस्याऽप्रसिद्ध-

त्वादतस्तादृशवाक्ये वैशद्येनाप्रामाण्यं प्रतिपादयति ह्रदेवह्नेरित्यादिना। इत्यत्र=इति वाक्ये। दुषधातोरर्थः=दुष्ट इत्यत्र दुष्तेरर्थ। साधनपदं=साधने इत्यत्र पदं। तत्र=अनुमितौ। ह्रदत्वावच्छिन्नपक्षकत्वस्य=ह्रदत्वावच्छिन्नविशेष्यतानिरूपितत्वस्य। वह्नित्वावच्छिन्नसाध्यकत्वस्य=वह्नित्वावच्छिन्नप्रकारताकत्वस्य। तादृशानुमितिः=ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताकधूमत्वावच्छिन्नहेतुकानुमितिः। दुष्धात्वर्थैकदेशे=अनुमितिप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयिताकधर्मविशिष्टरूपदुष्धात्वर्थैकदेशे। एवञ्च=एतादृशरीत्याऽन्वयबोधस्वीकारे च। तत्र=पर्वते वह्नेः साधने धूमो दुष्ट इति वाक्ये। तादृशधर्मः=प्रकृतानुमितिप्रतिबन्धकतावच्छेदकस्वावच्छिन्ननिरूपितविषयिताकधर्मः। अप्रसिद्धः=वह्न्यभावविशिष्टपर्वतत्वस्याऽप्रसिद्ध्याऽप्रसिद्धः। न तथा व्यवहारः=न पर्वते वह्नेः साधने धूमो दुष्ट इति व्यवहारः। अनन्तर्भाव्य=अप्रवेश्य। इष्यत एव=इष्ट एव। अयमर्थः। ह्रदो वह्निमान् धूमादित्यत्र ह्रदे वह्नेः साधने धूमो दुष्ट इति व्यवहारोपपत्त्यर्थं दुष्धातो अनुमितिप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयिताकधर्मविशिष्टार्थकतया लक्षणया साधनपदस्य धूमत्वावच्छिन्नहेतुकानुमितिपरत्वमङ्गीकृत्य तादृशानुमितौ ह्रद इति सप्तम्यन्तार्थह्रदत्वावच्छिन्नह्रदनिष्ठोद्देश्यताकत्वस्यवह्नेरिति षष्ठ्यर्थवह्नित्वावच्छिन्नवह्निनिष्ठविधेयताकत्वस्य चान्वयमङ्गीकृत्य सप्तम्यर्थनिरूपितत्वस्य दुष्धात्वर्थैकदेशे प्रतिबन्धकत्वे चान्वयमुपगम्य ह्रदत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिनिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयितावच्छेदकवह्न्यभाववद्ध्रदत्वरूपधर्मविशिष्टस्य स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वरूपसम्बन्धवान् धूम इत्यन्वयबोधः। तथा च पर्वते वह्नेः साधने धूमो दुष्ट इत्यत्र पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिधूमलिङ्गकानुमितिप्रतिबन्धकतावच्छेदक—वह्न्यभावविशिष्टपर्वतत्वरूपधर्माऽप्रसिद्ध्या पर्वतत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकस्वावच्छिन्नविषयिताकधर्मविशिष्टसम्बन्धी धूम इत्याकारकबोधानुदयेन त तथा व्यवहार इति।

पर्वतादिरूपपक्षविशेषादिकं परित्यज्य वह्नेः साधने धूमो दुष्ट इति व्यवहारस्तु सर्वथैवेष्ट इति भावः।

न च पर्वतत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकतावच्छेदकविषयतानिरूपकतावच्छेदकधर्माऽप्रसिद्ध्या पर्वते वह्नेः साधने धूमो न दुष्ट इति व्यवहारः कथं स्यादिति वाच्यम्। तत्र दुष्धातोः प्रतिबन्धकत्वमात्रमेवार्थः तस्य च स्वावच्छेदकविषयितानिरूपकतावच्छेदकधर्मावच्छिन्नवत्त्वसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन नञर्थेऽभावेऽन्वयः, धर्मावच्छिन्नवत्ता च, स्वज्ञानविषयप्रकृहेतुतावच्छेदकवत्त्वसम्बन्धेन, क्तप्रत्ययार्थश्चाश्रयत्वम्। तथा च तादृशसम्बन्धेन निरुक्तानुमितिप्रतिबन्धकताविशिष्टो योऽभावस्तदाश्रयो धूम इत्याकारकबोधस्त्वबाधित एव तत्रेति भावः।

## दीधितिः

यादृशधर्मिणि यादृशधर्मवत्ताज्ञानमनुमितिप्रतिबन्धकं तस्य धर्मिणः तादृशधर्मवत्त्वं हेतुदोष इत्यपि कश्चित्।

## गादाधरी

साधननिष्ठसाध्याभाववद्वृत्तित्वादेरेव व्यभिचारतया प्रसिद्धि र्न तु तद्विशिष्टसाधनादेरतो न तस्य दोषत्वमिति कश्चिदाह। व्याचष्टेऽपि लक्षणमन्यथैव, अन्यथाऽतिप्रसङ्गात्। तादृशव्याख्यामुपन्यस्यति यादृशेति। यद्रूपावच्छिन्नेत्यर्थकम्। ज्ञानम्=ज्ञानत्वावच्छिन्नम्। तस्य धर्मिणः=तद्धर्मावच्छिन्नस्य, तेन सम्बन्धेनेति शेषः। तादृशधर्मवत्त्वम्=तद्रूपावच्छिन्नधर्मवत्त्वम्। साधनादिविशेषणकसाध्याभाववद्वृत्तित्वादिविशेष्यकज्ञानस्य व्याप्त्यादिज्ञानप्रतिबन्धकत्वेऽपि साध्याभाववद्वृत्तित्वादेराधेयतासम्बन्धेन साधनीयत्वादिकं न दोषः, साधनादेः साध्याभाववद्वृत्तित्वादिधर्मताविरहात्।

## विमलप्रभा

यादृशधर्मिणीत्यादिशिरोमणयुक्तलक्षणोत्थितौ हेतुमाह साधनेत्यादिना।

साधननिष्ठसाध्याभाववद्वृत्तित्वादेरित्यत्रादिपदेन साधनवद्वृत्तिसाध्याभावादेः परिग्रहः। तद्विशिष्टसाधनादेः = साध्याभाववद्वृत्तित्वविशिष्टसाधनादेः व्यभिचारतया प्रसिद्धिरिति पूर्वेणान्वयः। अतः = साध्याभाववद्वृत्तित्वविशिष्टसाधनादेर्व्यभिचारतया प्रसिद्ध्यभावः। तस्य = साध्याभाववद्वृत्तिसाधनस्य। व्याचष्टेऽपि लक्षणमन्यथैव = हेत्वाभासलक्षणस्य व्याख्यानमप्यन्यादृशमेव। विधीयते। अन्यथा = अन्यादृशव्याख्याया अकरणे पूर्वोक्तव्याख्यानस्यैवादरे इति यावत्। अतिप्रसंगात् = साध्याभाववद्वृत्तित्वविशिष्टसाधनेऽतिव्याप्तिस्यात्।

तादृशव्याख्याम् = हेत्वाभासलक्षणस्यन्यादृशव्याख्याम्। उपन्यस्यति = दर्शयति। दीधितौ यादृशेति। यादृशधर्मिणि = यद्रूपावच्छिन्नधर्मिणि। यादृशधर्मवत्ताज्ञानम् = यद्रूपावच्छिन्नविषयकनिश्चयत्वावच्छिन्नम्। अनुमितिप्रतिबन्धकम् = अनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्। तस्य धर्मिणः = तद्रूपावच्छिन्ने धर्मिणि। तादृशधर्मवत्त्वम् = तद्रूपावच्छिन्नवत्त्वम्। हेतुदोषः = हेतुनिष्ठदोषः। इत्यपि कश्चित् = इत्यादिरूपव्याख्यानमपि प्राचीनस्कस्यचिन्नैयायिकस्यसम्मतम्। ज्ञानत्वावच्छिन्नेति। ज्ञानपदम् निश्चयपरम्, तेन दोषविषयकसंशयादिकमादाय न दोषः। तद्रूपावच्छिन्नधर्मवत्त्वम् = यद्रूपावच्छिन्नविशेष्यकयत्सम्बन्धावच्छिन्नयद्रूपप्रकारकताकनिश्चयत्वेन प्रकृतानुमितिप्रतिबन्धकत्वं तादृशसम्बन्धेन तद्रूपावच्छिन्नवृत्तित्वविशिष्टतद्रूपावच्छिन्नत्वं हेतुदोषत्वम्। साधनादिविशेषणकसाध्याभाववद्वृत्तित्वादिविशेष्यकज्ञानस्य = आधेयतासम्बन्धेन वह्न्यादिविशेषणकधूमाभाववद्वृत्तित्वादिविशेष्यकनिर्णयस्य। व्याप्त्यादिज्ञानप्रतिबन्धकत्वेऽपि = व्याप्तिज्ञानानुमितिप्रभृतिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालित्वेऽपि। साध्याभाववद्वृत्तित्वादेः = धूमाद्यभाववद्वृत्तित्वादेः। आदिना साध्याभावादेः संग्रहः साधनीयत्वादिकम् = आधेयतासम्बन्धेन वह्न्यादिरूपसाधनविशिष्टत्वम्। आदिपदेन ह्रदादिरूपपक्षीयत्वस्य संग्रहः। साधनादेः = वह्न्यादिहेतोः। साध्याभाववद्वृत्तित्वादिधर्मताविरहात् = आधेयतायाः वृत्त्यनियामकतया तेन सम्बन्धेन धूमाद्यभाववद्वृत्तित्वादिधर्मत्वाभावात्। आधेयतया वृत्तिमत्त्वरूपधर्माऽप्रसिद्धेरिति यावत्। अयमः

र्थः। साधननिष्ठत्वविशिष्टसाध्याभाववद्वृत्तित्व—साधनवद्वृत्तिसाध्याभावयोरेव व्यभिचारतया लोके प्रसिद्धिः, न तु साध्याभाववद्वृत्तिसाधन—साधनविशिष्टसाध्याभाववद्वृत्तित्वयोर्व्यभिचारतया प्रसिद्धिरिति न तयोर्दोषत्वमिति केषाञ्चित्प्राचीनानाम्मतम्। तन्मते हेत्वाभाससामान्यलक्षणस्य पूर्वोक्तरीत्याऽर्थकरणे साध्याभाववद्वृत्तित्वविशिष्टसाधनेऽतिप्रसङ्गस्स्यात्। तथा हि यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपावच्छिन्नत्वम् हेत्वाभासत्वमिति पूर्वोदीरितलक्षणेऽयोगोलकं धूमवद्वह्नेरित्यादौ धूमाभाववद्वृत्तित्वविशिष्टवह्नित्वावच्छिन्नविषयकधूमाभाववद्वृत्तित्वविशिष्टो वह्निरित्याकारकनिश्चयत्वव्यापिका भवति अयोगोलकं धूमवत्धूमव्याप्यवह्निमच्चेत्याकारकाव्याप्तिविषयकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतेति तद्रूपावच्छिन्नत्वस्य धूमाभाववद्वृत्तित्वविशिष्टवह्नौ सत्त्वात्।

अतः यद्रूपावच्छिन्नधर्मिणि यद्रूपावच्छिन्नवत्ताज्ञानत्वावच्छिन्नं प्रकृतानुमितिप्रतिबन्धकं तद्रूपावच्छिन्नधर्मिणि तद्रूपावच्छिन्नवत्त्वमर्थात् यद्रूपावच्छिन्नविशेष्यतानिरूपितयत्सम्बन्धावच्छिन्नयद्रूपावच्छिन्नप्रकारताकनिश्चयत्वम् प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपावच्छिन्ने तेन सम्बन्धेन तद्रूपावच्छिन्नवत्त्वं हेतुदोषत्वमिति प्रकारान्तरेण लक्षणार्थो वाच्यः। तथा चाधेयतासम्बन्धेन वह्न्यादिप्रकारकधूमाभाववद्वृत्तित्वविशेष्यकज्ञानस्य यद्यप्यनुमितिप्रतिबन्धकत्वमस्ति तथापि आधेयतासम्बन्धस्य वृत्त्यनियामकतया तेन सम्बन्धेन वृत्तिमत्त्वरूपधर्माऽप्रसिद्ध्या वह्न्यादिमत्त्वस्योपादानाऽयोगान्नातिप्रसङ्गसम्भावनेति। भवति चात्र ह्रदो वह्निमान् जलादित्यत्र ह्रदत्वावच्छिन्नह्रदनिष्ठवह्न्यभावत्वावच्छिन्नवह्न्यभाववत्त्वे लक्षणसंगतिः। तथा हि ह्रदत्वावच्छिन्नह्रदविशेष्यकवह्नित्वावच्छिन्नवह्निविधेयकह्रदो वह्निमान् वह्निव्याप्यजलवानित्याकारकानुमितिम्प्रति ह्रदत्वावच्छिन्ने स्वरूपेण वह्न्यभावप्रकारकनिश्चयस्य प्रतिबन्धकतया तेन सम्बन्धेन ह्रदत्वावच्छिन्ननिष्ठवह्न्यभावत्वावच्छिन्नवत्त्वे लक्षणगमनात्। अनयैव दिशा स्थलान्तरेऽपि लक्षणसंगतिः कार्येति।

## गादाधरी

अत्राप्यवच्छेदकत्वं पूर्ववन्न तु स्वरूपसम्बन्धविशेषः। पक्षतावच्छेदकावच्छिन्ननिष्ठकेवलाभावत्वावच्छिन्नवत्वादावतिप्रसङ्गात्। तदवच्छिन्नधर्मिकतद्रूपावच्छिन्नवत्ताज्ञानत्वस्यापि प्रतिबन्धकतावच्छेदककोटिप्रविष्टत्वात्, अवच्छेदकतापर्याप्ति-विवक्षणे तु ह्रदत्वावच्छिन्ननिष्ठवह्न्यभावत्वाद्यवच्छिन्नवत्त्वेऽव्याप्त्यापत्तेः, वह्नित्वादिना घटाद्यवगाहिनो ह्रदो न वह्निमानित्यादिनिश्चयस्य ह्रदो वह्निमानित्याद्यनुमितिप्रतिबन्धकतया ह्रदत्वावच्छिन्नविशेष्यताकवास्तववह्न्यभावत्वावच्छिन्नप्रकारकनिश्चयत्वेन न प्रतिबन्धकता,अपि तु तद्विशेष्यकवह्नित्वावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारताकनिश्चयत्वेनैवातस्तादृशमेव रूपं प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणं न तु ह्रदत्वावच्छिन्नधर्मिकवह्न्यभावत्वावच्छिन्नप्रकारकत्वमिति यद्रूपपदेन वह्न्यभावत्वाद्युपादानं न सम्भवति, पर्वतो वह्न्यभाववानित्यादौ पर्वतत्वावच्छिन्ननिष्ठवह्नित्वावच्छिन्नरूपबाधादेरसंग्रहभयेन यद्रूपावच्छिन्ने धर्मिणि यद्रूपावच्छिन्नप्रकारतानिरूपितयद्रूपावच्छिन्नप्रकारताकनिश्चयत्वेन प्रतिबन्धकता तद्रूपविशिष्टे तद्रूपावच्छिन्नविशेषिततद्रूपावच्छिन्नवत्त्वं दोष इत्यादि विवक्षाया असम्भवात्।

अत्र साधननिष्ठसाध्याभाववद्वृत्तित्वादेरिव साध्याभाववद्वृत्तिसाधनादेरपि दोषत्वे क्षतिविरहात् एतावानायासोऽनर्थक इत्यस्वरसः कश्चिदित्यनेन सूचितः।

## विमलप्रभा

अत्रापि = यादृशधर्मिणीत्यादिलक्षणेऽपि। पूर्ववत् = द्वितीयलक्षणवत् अनतिरिक्तवृत्तित्वरूपमेव। न तु स्वरूपसम्बन्धविशेषः = स्वरूपसम्बन्धरूपावच्छेदकत्वन्नैतल्लक्षणघटकम्।

पक्षतावच्छेदकावच्छिन्ननिष्ठकेवलाभावत्वावच्छिन्नवत्त्वादौ = ह्रदत्वाद्यवच्छिन्ननिष्ठशुद्धाभावत्वावच्छिन्नवत्त्वादौ।

अतिप्रसंगात् = अतिव्याप्तिस्स्यात् । तदवच्छिन्नधर्मिकतद्रूपावच्छिन्नवत्ताज्ञानत्वस्य = ह्रदत्वाद्यवच्छिन्नविशेष्यकाभावत्वावच्छिन्नवत्त्वनिश्चयस्य । प्रतिबन्धकतावच्छेदककोटिप्रविष्टत्वात् = प्रकृतानुमितिप्रतिबन्धकतावच्छेदककुक्षौ प्रविष्टत्वात्, घटकत्वादिति यावत् । अवच्छेदकतापर्याप्तिविवक्षणे = प्रकृतानुमितिप्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणविवक्षायाम् । अव्याप्तौ युक्तिमाह वह्नित्वादिनेति । यत इत्याध्याहार्यम् । तद्विशेष्यकेत्यत्र तत्पदं ह्रदत्वावच्छिन्नपरम् । तादृशमेव रूपम् = ह्रदत्वावच्छिन्नविशेष्यतानिरूपिताभावत्वावच्छिन्नप्रकारताकनिश्चयत्वरूपम्, निरूप्यनिरूपकभावापन्नविषयताशालिनिश्चयत्वरूपमिति यावत् । न सम्भवति = यादृशधर्मपदेन वह्न्यभावत्वादेर्ग्रहणं न भवति । असंग्रहभयेन = अव्याप्तिभिया । अत्र = अयोगोलकं धूमवद्वह्नेरित्यादौ । क्षतिविरहात् = आपत्त्यनुपपत्त्यादिदोषाभावात् । तद्वारणाय = साध्याभाववद्वृत्तिसाधनादेर्वारणाय । एतावानायासः = यादृशधर्मिणीत्यादिलक्षणान्तरप्रणयनप्रयासः । अनर्थकः = अर्थशून्यः, निरर्थक इति यावत् । इत्यस्वरसः = इत्यरुचिः । सूचितः = दीधितिकृताऽभिहितः । अयमर्थः । यथा द्वितीयलक्षणघटकावच्छेदकता न स्वरूपसम्बन्धरूपा तथैवात्र लक्षणघटकावच्छेदकता न स्वरूपसम्बन्धरूपा किन्त्वनतिरिक्तवृत्तित्वरूपैव, तथा च यद्रूपावच्छिन्नधर्मिणि यद्रूपावच्छिन्नवत्तानिश्चयत्वं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्तितद्रूपावच्छिन्नधर्मिणि तद्धर्मवत्त्वम् हेत्वाभासत्वमिति लक्षणम् । अत्र स्वरूपसम्बन्धरूपावच्छेदकताप्रवेशे ह्रदो वह्निमान् जलादित्यादौ ह्रदनिष्ठाऽभावत्वावच्छिन्नवत्त्वेऽतिव्याप्तिः, तथा हि ह्रदत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकानुमितिप्रतिबन्धकतावच्छेदकतायाः ह्रदत्वावच्छिन्नधर्मिकाभावत्वावच्छिन्नविषयतायामपि वर्त्तमानतयाऽभावत्वावच्छिन्नवत्तायाः ह्रदरूपधर्मिणि सत्त्वात् ।

न चैतद्दोषपरिहाराय यद्रूपावच्छिन्नधर्मिणि यादृशधर्मवत्तानिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणं तस्य धर्मिणस्तादृशधर्मवत्त्वं हेतुदोषत्वमित्येव निवेशनीयम् । तावतैव ह्रदत्वावच्छिन्नधर्मिणि केवलाभावत्वावच्छिन्नवत्ताज्ञानत्वेपर्याप्तिसम्बन्धेन तादृशावच्छेदकताविरहेण लक्षणागमनान्नातिव्याप्ति-

रिति वाच्यम् । तथा सति ह्रदनिष्ठवह्न्यभाववत्वेऽव्याप्तिर्दुर्वारैव, ह्रदत्वावच्छिन्नविशेष्यकवह्न्यभावत्वाद्यवच्छिन्नप्रकारकनिश्चयत्वेन यदि प्रतिबन्धकता स्वीक्रियते तदा तत्रावच्छेदकतापर्याप्त्यधिकरणताघटितलक्षणगमनं स्यात्, तदेव तु भवितुं न शक्यते, यतः तादृशनिश्चयत्वेन प्रतिबन्धकतास्वीकारे वह्नित्वादिना घटावगाहिह्रदो वह्न्यभाववानिति निश्चये तादृशनिश्चयत्वविरहेण प्रतिबन्धकताविरहप्रसङ्गस्स्यादतो नोक्तनिश्चयत्वेन प्रतिबन्धकता किन्तु ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारताकत्वेनैव, तथा च यादृशधर्मपदेन वह्न्यभाववत्त्वादेरुपादानासम्भवप्रयुक्तलक्षणागमनान्न दोष इति । ननु यद्रूपावच्छिन्नधर्मिणि यद्रूपावच्छिन्नप्रकारतानिरूपितयद्रूपावच्छिन्नप्रकारताशालिनिश्चयत्वेन प्रकृतानुमितिप्रतिबन्धकता तद्रूपावच्छिन्नविशेषिततद्रूपावच्छिन्नवत्त्वं तद्रूपविशिष्टे दोषत्वमित्यर्थकरणे, ह्रदत्वावच्छिन्नधर्मिणि वह्नित्वावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारताशालिनिश्चयत्वेन ह्रदधर्मिकवह्न्यनुमितिप्रतिबन्धकतायाः वर्त्तमानतया ह्रदत्वविशिष्टे वह्नित्वावच्छिन्नविशेषिताभावत्वावच्छिन्नवत्तायाः सत्त्वप्रयुक्तलक्षणगमनसम्भवादिति चेन्न, तथा सति पर्वतपक्षकवह्न्यभावसाध्यकस्थले पर्वतत्वावच्छिन्ननिष्ठवह्नित्वावच्छिन्नरूपबाधेऽव्याप्तिः, तत्र वह्नित्वावच्छिन्नैकप्रकारताशालिनिश्चयत्वेनैव प्रतिबन्धकतायाः सर्ववादिसिद्धतया प्रकारतानिरूपितप्रकारताघटितलक्षणागमनात् । अतः पूर्ववदनतिरिक्तवृत्तित्वरूपावच्छेदकतैव निवेश्या तथा च यथा न दोषस्तथोक्तमधस्तादिति दिक् ।

अत्र लक्षणे कश्चिदित्यनेन यादृशधर्मिणीत्यादिलक्षणप्रणयनप्रयासस्य निरर्थकत्वमेव दीधितिकृता संसूचितम् साध्याभाववद्वृत्तिसाधनादेः दोषत्वेऽनुपत्त्यापत्त्यादिदोषविरहादेवश्चोभयोरेव लक्ष्यत्वे पूर्वोक्तलक्षणमेव समीचीनमिति ।

न च यादृशधर्मिणीत्यादिलक्षणे जगदीशेनासम्भवो दत्तः, भट्टाचार्येणाव्याप्तिर्दत्तेति विरुद्धमिति वाच्यम् । जगदीशमते पर्वतो वह्न्यभाववानित्यादौ वह्न्यभावाभाववत्पर्वत एव बाधोऽत एव पक्षताग्रन्थे ह्रदे वह्न्यभावस्यानुमाने ह्रदो वह्न्यभाववान्न वेति संशयस्यैव पक्षतात्वमुक्तम् । सुतरां तन्मतेऽसम्भवो भवत्यत्र । भ-

ट्टाचार्यमते च पर्वतत्वावच्छिन्ननिष्ठवह्नित्वावच्छिन्नवत्त्वरूपबाधेऽवच्छेदकतापर्याप्तिघटितलक्षणस्यापि सत्त्वेन लक्षणसमन्वयसम्भवान्नासम्भवो दत्त इति भावः ।

## दीधितिः

पर्वतत्वेन पक्षत्वे, वह्नित्वेन साध्यत्वे विशिष्टधूमत्वेन च हेतुत्वे पर्वतादेः काञ्चनमयत्वविरहो ह्रदस्य वह्निधूमशून्यत्वम् ।

## गादाधरी

यथाव्याख्यातयथाश्रुतार्थे निर्वह्निः पर्वतो वह्निमानित्यादौ प्रकृतपक्षतावच्छेदकविशिष्टे प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारकानुमितेरप्रसिद्ध्याऽव्याप्तिर्दर्शयिष्यते, तत्र विशिष्य पक्षतावच्छेदकाद्यप्रवेशेनाऽप्रसिद्धिरतस्तन्निवेशे प्रयोजनमाह अथेति । पर्वतादेः काञ्चनमयत्वविरह इत्यादौ सर्वत्र न दोष इति सम्बध्यते । तथा च पक्षतावच्छेदकाद्यप्रवेशे पूर्वोक्तयुक्त्याऽसम्भवात्, तद्वारणाय यत्किञ्चत्धर्मावच्छिन्नपक्षसाध्यहेतुकानुमितिसामान्यप्रतिबन्धकत्वमेव निवेश्यमिति पर्वतो वह्निमान् धूमादित्यादौ पर्वतनिष्ठकाञ्चनमयत्वाभावादावतिव्याप्तिः, तस्यापि काञ्चनमयत्वादिसहितपर्वतत्वादिरूपयत्किञ्चित्धर्मावच्छिन्नपक्षसाध्यहेतुकानुमितिप्रतिबन्धकज्ञानविषयत्वादिति भावः । आदिपदञ्च वस्त्वन्तरसंग्राहकम् ।

## विमलप्रभा

यथाव्याख्यातयथाश्रुतार्थे = प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकेत्यादिना प्रप्रतिपादितपूर्वोदीरितलक्षणे । प्रकृतपक्षतावच्छेदकविशिष्टे = निर्वह्निपर्वतत्वविशिष्टे । प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारकानुमितेः = वह्नित्वावच्छिन्नप्रकारताशालिनिर्वह्निः पर्वतो वह्निमानित्यनुमितेः । अप्रसिद्ध्या = परोक्षमनाहार्यमसन्दिग्धमितिनियमेनाहार्यतया प्रसिद्ध्यभावेन । दर्शयिष्यते = तथा चेत्यादिना दीधितिकृता प्रतिपादयिष्यते । तत्र = तादृशलक्षणघटकानुमितौ । विशिष्य = विशेषरूपेण, पक्ष-

तावच्छेदकतापर्याप्त्यधिकरणत्वेनेति यावत्। अप्रवेशे=अनिवेशे। नाऽप्रसिद्धिः =नानुमित्यप्रसिद्ध्याऽव्याप्तिः। अतः=अस्माद्धेतोः। तन्निवेशप्रयोजनम्=विशेषरूपेण पक्षतावच्छेदकादिनिवेशनफलम्। आह शिरोमणिरिति शेषः। सर्वत्र न दोष इति=पर्वते काञ्चनमयत्वविरहः न दोषः ह्रदस्य वह्निधूमशून्यत्वं न दोष इत्यादिरूपेण सम्बन्धः कार्य इति। तथा च=प्रकृतपक्षतावच्छेदकाद्यप्रवेशे च। पूर्वोक्तयुक्त्या=प्रथमलक्षणोक्तरीत्या। अर्थात् यत्किञ्चिदनुमितिसामान्यप्रतिबन्धकतानिवेशेऽतिव्याप्तिः, अनुमितित्वव्यापकतानिवेशेऽसम्भव इत्यादिपूर्वकथितयुक्त्यनुसारेण। तद्वारणाय=असम्भववारणाय। तस्यापि=पर्वतादिनिष्ठकाञ्चनमयत्वाभावस्यापि। आदिपदं=काञ्चनमयत्वाभावादावित्यत्रादिपदम्। वस्त्वन्तरसंग्राहकम्=घटत्वपटत्वादेः संग्राहकम्। अयमर्थः। प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकेत्यादिना व्याख्यातलक्षणे निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ निर्वह्निपर्वतत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकनिर्वह्निः पर्वतो वह्निमानित्याकारकज्ञानस्याहार्यतयाऽनुमितेरनाहार्यरूपत्वेन निर्वह्निपर्वतत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकानुमितेरप्रसिद्ध्याऽग्रे याऽव्याप्तिर्दास्यति सा यदि प्रकृतपक्षतावच्छेदकादेः लक्षणे प्रवेशो न स्यात्तदा न सम्भवति, पक्षतावच्छेदकादिकमनन्तर्भाव्य केवलपर्वतो वह्निमानित्याद्यनुमितेस्सुप्रसिद्धत्वादतोऽग्रे तथा चेत्यादिना प्रतिपादनीयाव्याप्तेरलग्नतापत्तिपरिहाराय पक्षतावच्छेदकादिनिवेशप्रयोजनमाह दीधितिकारः अथेत्यादिना तथा च प्रकृतपक्षतावच्छेदकाद्यप्रवेशे स्वरूपासिद्ध्यादिदोषाणां प्रकृतपक्षतावच दकाद्यघटितानुमितिप्रतिबन्धकताशालियथार्थज्ञानविषयत्वाभावेनासम्भवः स्यादतस्तदुपादानमावश्यकम्। न चासम्भववारणाय किञ्चिद्धर्मावच्छिन्नपक्षसाध्यहेतुकानुमितिसामान्यप्रतिबन्धकताघटितमेव लक्षणं वाच्यमिति वाच्यम्, तथा सति पर्वतो वह्निमान् धूमादित्यादौ काञ्चनमयत्वाभाववत्पर्वते वह्न्यभाववद्ध्रदे धूमाभाववद्ध्रदे चातिव्याप्तिः, यत्किञ्चिद्धर्मावच्छिन्नपक्षसाध्यहेतुकानुमितिसामान्यान्तर्गता या काञ्चनमयपर्वतो वह्निमान् वह्निव्याप्यधूमवान् काञ्चनमयपर्वत इत्याकारकानुमितिः तत्प्रतिबन्धकतायाः काञ्चनमयत्वाभाववान् पर्वत इति निश्चये ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकानुमितिप्रतिबन्धकताया वह्न्यभाववान् ह्रद इति निश्चये धूमाभाववान् ह्रद इति निश्चये

च सत्त्वेन तादृशप्रतिबन्धकनिश्चयीयविषयतायास्तत्र तत्र सत्त्वात् । अतः प्रकृतपक्षतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यतानिरूपितेत्यादिना निवेशः । तथा च प्रकृते पक्षतावच्छेदकतापर्याप्त्यधिकरणपर्वतत्वरूपधर्मावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकपर्वतो वह्निमान् वह्निव्याप्यधूमवानित्याकारकानुमितिप्रतिबन्धकतायाः काञ्चनमयत्वाभाववान् पर्वतः, वह्न्यभाववान् ह्रदः धूमाभाववान् ह्रद इत्यादिनिश्चये विरहान्न दोषः, अनयैव रीत्या पर्वतो वह्निमान् धूमादित्यादौ काञ्चनमयत्वाभाववद्वह्नौ काञ्चनमयत्वाभाववद्धूमे चातिव्याप्तिवारणाय साध्यतावच्छेदकहेतुतावच्छेदकयोः पर्याप्तिर्निवेशनीयेति भावः ।

## दीधितिः

पर्वतस्य महानसीयवह्निधूमविरहित्वम्, मेयत्वस्य केवलधूमस्य वा वह्निव्यभिचारो, विशिष्टधूमस्य वा पर्वतीयवह्निव्यभिचारो न दोषः । न वा तत्सम्बन्धेन तत्र तस्य हेतोर्दुष्टत्वम्, अतस्तद्धर्मावच्छिन्नतत्पक्षकतद्धर्मावच्छिन्नतत्साध्यकतद्धर्मावच्छिन्नतद्धेतुकानुमितिप्रतिबन्धकत्वम् वाच्यम् ।

## गादाधरी

प्रकृतानुमित्यविषयपदार्थाऽभावेऽतिव्याप्तिं सूचयित्वा तद्विषयसाध्याभावे तां सूचयति ह्रदस्येति । ह्रदनिष्ठं वह्निशून्यत्वं धूमशून्यत्वञ्चेत्यर्थः । ह्रदादिनिष्ठाभावेऽतिव्याप्तिसूचनञ्च प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकत्वरूपसमुदायदलस्यैवानिवेशे बोध्यम् । महानसीयेति । महानसीयवह्न्यभावो महानसीयधूमाभावो वेत्यर्थः । अत्रातिव्याप्तिसूचनञ्च प्रकृतसाध्यतावच्छेदकप्रकृतहेतुतावच्छेदकयोरनिवेशे बोध्यम् । इदमुपलक्षणम्, साध्यहेत्वोरनिवेशेऽपि जलत्वाभावादावतिव्याप्तिर्वोध्या । प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकत्वानिवेशे पक्षधर्मताज्ञानप्रतिबन्धकतामादायातिव्याप्तिं सूचयित्वा व्याप्तिज्ञानप्रतिबन्धकतामादायातिव्याप्तिं सूचयति मेयत्वस्येति । वह्निव्यभिचार इत्यनेनान्वयः । अत्रातिव्याप्तिस्तादृशदलसमुदयस्यैवानिवेशे बोध्या ।

प्रकृतहेतुकत्वनिवेशेऽपि एतद्दोषस्य शक्यवारणतया हेतुतावच्छेदकनिवेशनायाह केवलधूमस्येति। वह्निशून्यदेशान्तरवृत्तिधूमव्यक्तिव्यावर्त्तकविशेषणानवच्छिन्नेत्यर्थः। साध्यतावच्छेदकाऽनिवेशे पूर्वं साध्यवत्ताज्ञानविरोधिन्यतिव्याप्तिर्दर्शिता, इदानीं व्याप्तिज्ञानविरोधिन्यतिव्याप्तिं दर्शयति विशिष्टधूमस्य वा पर्वतीयवह्निव्यभिचार इति। दोषलक्षण इव दुष्टलक्षणेऽपि पक्षतावच्छेदकादिनिवेशस्यावश्यकतां दर्शयति न वा तत्सम्बन्धेनेति। तत्र=पर्वतत्वावच्छिन्ने वह्नित्वावच्छिन्नवह्निसाधने। तस्य=विशिष्टधूमत्वावच्छिन्नस्य। पक्षादौ पक्षतावच्छेदकादेर्याहृशसम्बन्धेन विशेषणत्वं यत्राभिमतं तत्र तत्सम्बन्धेन तदवच्छिन्नत्वं निवेश्यमिति सूचयितुं तत्पक्षकेत्युक्तम्। पक्षतावच्छेदकादिनिवेशे पक्षादिनिवेशस्याप्रयोजकत्वादिति। वाच्यम्=तद्रूपावच्छिन्नपक्षसाध्यहेतुकदोषलक्षणे निवेशनीयम्।

## विमलप्रभा

अनुमित्यविषयपदार्थाभावे=पर्वतो वह्निमान् धूमादित्यत्र पर्वतो वह्निमान् वह्निव्याप्यधूमवानित्याकारकप्रकृतानुमित्यविषयभूतो यः काञ्चनमयत्वरूपपदार्थस्तस्याभावे, कानञ्चमयत्वाभाव इति यावत्। तद्विषयसाध्याद्यभावे=पर्वतो वह्निमानित्यादिप्रकृतानुमितिविषयीभूतं यद्वह्न्यादिकं तदभावे। ताम्=अतिव्याप्तिम्। सूचयति=प्रतिपादयति। दीधितौ ह्रदस्येत्यादि। ह्रदस्येत्यत्र निष्ठत्वं षष्ठ्यर्थः। केवलधूमस्य=विच्छिन्नमूलकधूमस्य। सर्वत्र न दोष इति सम्बध्यते। ह्रदादिनिष्ठाभावे=ह्रदादिनिष्ठवह्न्याद्यभावे। अतिव्याप्तिसूचनम्=अतिव्याप्तिप्रदर्शनम्। अत्र=महानसीयवह्न्यभावविशिष्टपर्वतादौ। अनिवेशे=निवेशाभावे। व्याप्तिज्ञानप्रतिबन्धकतामादायातिव्याप्तिं=व्याप्तिज्ञानप्रतिबन्धकवह्न्यभाववद्वृत्तिप्रमेयत्वमितिव्यभिचारज्ञानमादायातिव्याप्तिम्। अत्रातिव्याप्तिः=व्यभिचारविशिष्टमेयत्वेऽतिव्याप्तिः। तादृशदलसमुदायस्य=हेतुतावच्छेदकावच्छिन्नहेतुकत्वघटितदलसमुदायस्य। एतद्दोषस्य=वह्न्यभाववद्वृत्तिमेयत्वादावतिव्याप्तिरूपदोषस्य। शक्यवारणतया=सुलभनिवारणतया। वह्निशून्यदेशान्तरवृत्तिधूमव्यक्तिव्यावर्त्तकविशेषणानवच्छिन्नस्य=वह्न्यभावाधिकरणाकाशादिवृत्तिधूमव्यक्तिव्यावर्त्तकं यद्विशेषणं पर्वतीयत्वा-

दिस्तदनवच्छिन्नस्य। अनिवेशे = अप्रवेशे। पूर्वं = प्राक्। दुष्टलक्षणेऽपि = दुष्टहेतुनिरुक्तावपि। पक्षादौ = पर्वतादौ। पक्षतावच्छेदकादेः = पर्वतत्वादेः। यादृशसम्बन्धेन = समवायादिना। विशेषणत्वं = प्रकारत्वम्। यत्र = यादृशस्थले। अभिमतम् = अभीष्टम्। तत्र = तादृशस्थले। तत्सम्बन्धेन = समवायादिना। तदवच्छिन्नत्वं = पर्वतत्वाद्यवच्छिन्नत्वम्। सूचयितुम् = प्रतिपादयितुम्। तत्पक्षकेत्युक्तम् = दीधितिकृतेति शेषः। अयमर्थः। प्रकृतपक्षतावच्छेदकावच्छिन्नप्रकृतपक्षकत्वरूपसमुदायदलस्याऽनिवेशे पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभाववद्ध्रदे धूमाभाववद्ध्रदे चातिव्याप्तिः ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारिकानुमितेरपि यत्किञ्चिद्धर्मावच्छिन्नपक्षकानुमितितया तादृशानुमितिप्रतिबन्धकतायाः वह्न्यभाववद्ध्रदविषयकनिश्चये,धूमाभाववद्ध्रदविषयकनिश्चये सत्त्वेन धर्मावच्छिन्नत्वस्य तत्र तत्र सत्त्वात्। तदुपादाने च प्रकृतपक्षतावच्छेदकतापर्याप्त्यधिकरणं यत्पर्वतत्वं तदवच्छिन्नविशेष्यकानुमितिप्रतिबन्धकतायाः ह्रदधर्मिकवह्न्यभावप्रकारकनिश्चये, ह्रदधर्मिकधूमाभावप्रकारकनिश्चये चासत्त्वान्नातिप्रसङ्गः।

एवम् प्रकृतसाध्यतावच्छेदकप्रकृतहेतुतावच्छेदकयोरनिवेशे केवलसाध्यहेतुनिष्ठप्रकारताकानुमितिनिवेशे पर्वतो वह्निमान् धूमादित्यत्र महानसीयवह्न्यभाववत्पर्वते महानसीयधूमाभाववत्पर्वते चातिव्याप्तिः, साध्यहेतुनिष्ठप्रकारताकानुमितिपदेन पर्वतो महानसीयवह्निमान् वह्निव्याप्यमहानसीयधूमवांश्चेत्याकारकानुमितिमादाय तादृशानुमितिप्रतिबन्धकताया महानसीयवह्न्यभाववान् पर्वत इति निश्चये,महानसीयधूमाभाववान् पर्वत इति निश्चये च सत्त्वेन तद्विषयत्वस्य तत्र तत्र सत्त्वात्। तदुपादाने च प्रकृते साध्यतावच्छेदकतापर्याप्त्यधिकरणीभूतो धर्मः केवलवह्नित्वं,हेतुतावच्छेदकतापर्याप्त्यधिकरणञ्च केवलधूमत्वं तदवच्छिन्नसाध्यहेतुकानुमितिः पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्येवाकारिकेति तादृशानुमितिप्रतिबन्धकतायाः महानसीयवह्न्यभाववान् पर्वतः, महानसीयधूमाभाववान् पर्वत इत्याकारकनिश्चये विरहेणातिप्रसङ्गाभावात्।

एवम् साध्यहेत्वोरप्रवेशे यत्किञ्चिद्धर्मावच्छिन्नप्रकारकानुमितिनिवेशे पर्वतो वह्निमान् धूमादित्यत्र यत्किञ्चिद्धर्मावच्छिन्नप्रकारताकानुमितिपदेन पर्वतो जलत्ववान्

वह्निव्याप्यजलत्ववान् वेत्याकारकानुमितिमादाय तादृशानुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतायाः जलत्वाभाववान् पर्वत इत्याकारकनिश्चये सत्त्वेन तद्विषयत्वस्य जलत्वाभावभादौ वर्त्तमानतया जलत्वाभावादावतिव्याप्तिप्रसङ्गात्। तदुपादाने च प्रकृते प्रकृतसाध्यहेतुकानुमितिपदेन पर्वतो जलत्वानित्यनुमितेः ग्रहीतुमशक्यत्वान्नातिप्रसङ्गसम्भावनेति। प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकत्वानिवेशे यथा महानसीयधूमाभाववत्पर्वते वह्निव्याप्यमहानसीयधूमवानित्याकारकानुमितिविरोधिन्यतिव्याप्तिस्तथैव वह्निव्याप्यमेयत्ववान् पर्वत इत्यनुमितिघटकव्याप्तिज्ञानप्रतिबन्धकताशालिनि वह्न्यभाववद्वृत्तिमेयत्वेऽतिव्याप्तिस्स्यादतस्तदुपात्तमिति।

न चोक्तातिव्याप्तिवारणाय प्रकृतहेतुकत्वमात्रमेव निवेश्यम् तावतैव प्रकृतहेतुकानुमितिप्रतिबन्धकतायास्तत्राभावान्नातिप्रसङ्ग इति वाच्यम्। तथा सति वह्न्यभाववद्वृत्तिकेवलधूमविषयकनिश्चयस्यापि तादृशानुमितिप्रतिबन्धकतया वह्न्यभाववद्वृत्तिकेवलधूमेऽतिप्रसङ्गः स्यादतस्तदुपात्तम्। एवम् तत्रैव पर्वतीयवह्निव्याप्यकेवलधूमवान् पर्वतो वह्निमानित्यनुमितिप्रतिबन्धकतायाः पर्वतीयवह्न्यभाववद्वृत्तित्वविशिष्टकेवलधूमविषयकज्ञाने सत्त्वादितिव्याप्तिस्स्यात् तद्वारणायानुमितिघटकव्याप्यत्वांशे साध्यतावच्छेदकप्रवेश आवश्यकः।

दोषलक्षण इव दुष्टलक्षणेऽपि प्रकृतपक्षतावच्छेदकादिप्रवेश आवश्यक एव, अन्यथा पर्वतो वह्निमान् धूमादित्यत्रापि स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन काञ्चनमयत्वाभाववत् पर्वतस्य महानसीयवह्न्यभाववत्पर्वतस्य धूमादौ सत्त्वेन धूमो दुष्ट इति व्यवहारस्स्यात्। दीधितौ तत्पक्षकेत्याद्युपादानप्रयोजनञ्च यादृशयादृशसम्बन्धेन पर्वतत्वादिकं पर्वतादौ विशेषणं तादृशतादृशसम्बन्धेन तादृशतादृशधर्मावच्छिन्नत्वलाभाय। अर्थात् पक्षतावच्छेदकताघटकसम्बन्धेन पक्षतावच्छेदकावच्छिन्नत्वस्य साध्यतावच्छेदकताघटकसम्बन्धेन साध्यतावच्छेदकावच्छिन्नत्वस्य हेतुतावच्छेदकताघटकसम्बन्धेन हेतुतावच्छेदकावच्छिन्नत्वस्य च प्रवेशार्थमेव तदुपादानम्। अन्यथा सम्बन्धान्तरमादाय सर्वत्रैव दोषस्स्यादिति भावः।

## दीधितिः

तथा च निर्वह्निः पर्वतो वह्निमान् पर्वतावृत्तिवह्निमान् वा तद्व्यभिचारिणः पर्वतावृत्तेर्वा धर्मादित्यादौ न कोऽपि हेत्वाभासः स्यात् तादृशाऽनुमितेरप्रसिद्धत्वात् ।

## गादाधरी

तथा चेति । निर्वह्निः पर्वतो वह्निमानित्यत्र पक्षतावच्छेदकनिर्वह्नित्वविशिष्टपर्वते वह्निवैशिष्ट्यावगाहित्वमनुमितेर्न सम्भवति वह्नित्वविरोधिधर्मितावच्छेदककस्वप्रकारकानाहार्यज्ञानस्यानभ्युपगमात् । पर्वतः पर्वतावृत्तिवह्निमान् इत्यत्र पर्वते पर्वतावृत्तित्वरूपसाध्यतावच्छेदकावच्छिन्नप्रकारकत्वमनुमितेर्न सम्भवति स्वस्मिन् स्वावृत्तित्वाद्यवच्छिन्नप्रकारकानाहार्यज्ञानस्यानभ्युपगमात् ।

एवम् पर्वतो वह्निमान् वह्निव्यभिचारिण इत्यत्र वह्निव्यभिचारित्वरूपहेतुतावच्छेदकावच्छिन्ने वह्निव्याप्यत्ववैशिष्ट्यावगाहित्वमनुमितेर्न सम्भवतीति पूर्वोक्तयुक्तेः। पर्वतो वह्निमान् पर्वतावृत्तेरित्यत्र पर्वते पर्वतावृत्तित्वरूपहेतुतावच्छेदकावच्छिन्नवैशिष्ट्यावगाहित्वं नानुमितेः सम्भवति उक्तयुक्तेरिति यथाविवक्षितानुमित्यप्रसिद्धिप्रयोजकभेदेन नानास्थलेऽव्याप्तिकथनम् ।

न कोऽपि हेत्वाभासस्स्यादिति । तथा चापार्थकरूपनिग्रहस्थानत्वेन तथा प्रयोक्तुर्निग्रहोपपत्तावपि, निर्वह्नित्वेन पर्वते वह्नेः साधने धूमो दुष्ट इत्यादिव्यवहारो दुरुपपाद इति भावः। तादृशानुमितेः = तथा विवक्षितानुमितेः । अप्रसिद्धत्वादिति = आहार्यपरोक्षज्ञानानभ्युपगमादिति भावः ।

## विमलप्रभा

दीधितौ तथा चेति । तथा च = प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वादिविशिष्टानुमितिस्वीकारे च । तद्व्यभिचारिणः = वह्निव्यभिचारिणः । इत्यादौ = इत्यादिस्थले । तादृशानुमितेः = प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकानुमितेः । टीकायां तथा चे-

ति । स्वविरोधिधर्मधर्मितावच्छेदककस्वप्रकारकानाहार्यज्ञानानभ्युपगमात् = स्वं वह्न्यादिः । तद्विरोधी धर्मः = वह्न्यभावादिः । तद्धर्मितावच्छेदककवह्न्यभावादिविशेष्यतावच्छेदककवह्न्यादिप्रकारकज्ञानस्य निर्वह्निः पर्वतो वह्निमानित्याकारकज्ञानस्य, अनाहार्यरूपतयाऽस्वीकारात् । स्वस्मिन् = पर्वतादौ । स्वावृत्तित्वाद्यवच्छिन्नेत्यत्र स्वं पर्वतादिः । अननुभविकत्वात् = अनुभवविरुद्धत्वात् । वह्निव्याप्यत्ववैशिष्ट्यावगाहित्वं = वह्निनिरूपितव्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहित्वम् । पूर्वोक्तयुक्तेः = स्वविरोधिधर्मधर्मितावच्छेदककस्वप्रकारकानाहार्यज्ञानानभ्युपगमरूपयुक्तेः । उक्तयुक्तेः = स्वस्मिन् स्वाऽवृत्तित्वावच्छिन्नप्रकारकानाहार्यज्ञानानभ्युपगमरूपयुक्तेः । अनुमित्यप्रसिद्धिप्रयोजकभेदेन = अनुमितेः समूहालम्बनरूपायाः अप्रसिद्धिप्रयोजकस्य साध्यविरोधिसाध्याभावविशेष्यतावच्छेदककसाध्यप्रकारकज्ञानस्य पक्षे पक्षावृत्तित्वाद्यवच्छिन्नप्रकारकज्ञानस्य च विभिन्नत्वेन । नानास्थले = विभिन्नपक्षसाध्यहेतुकस्थले । अव्याप्तिकथनम् = दीधितिकृताऽव्याप्तिदानं कृतम् । तथा च = परोक्षज्ञानानामनाहार्यत्वनियमेनाहार्यानुमितेरस्वीकारे च । अपार्थकत्वरूपनिग्रहस्थानत्वेन = अनुमितिस्वरूपायोग्यत्वरूपं यदपार्थकत्वरूपनिग्रहस्थानं तत्त्वेन । तथा प्रयोक्तुः अपार्थकवाक्यप्रयोक्तुः । दुरुपपादः = अनुमित्यप्रसिद्धिप्रयुक्तानुमितिप्रतिबन्धकतावच्छेदकेत्यादिदूषतेरर्थाऽप्रसिद्ध्या, निर्वह्नित्वेन पर्वते वह्निसाधने धूमो दुष्ट इति व्यवहारः उपपादयितुमशक्यः । तथा विवक्षितानुमितेः = तद्धर्मावच्छिन्नतत्पक्षकतद्धर्मावच्छिन्नतत्साध्यकतद्धर्मावच्छिन्नतद्धेतुकानुमितेः, निर्वह्निः पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याद्याकारकाऽनुमितेरिति यावत् । आहार्यापरोक्षज्ञानानभ्युपगमात् = अनुमितिशाब्दबोधरूपं यदपरोक्षज्ञानं तयोराहार्यत्वास्वीकारात् । अयमर्थः । प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकेत्यादिपर्यवसितलक्षणे निर्वह्निपर्वतपक्षकवह्निसाध्यकधूमहेतुकस्थले वह्निविरोधिनिर्वह्निरूपधर्मितावच्छेदककवह्निप्रकारकनिर्वह्निः पर्वतो वह्निमानित्याकारकज्ञानस्याहार्यतयाऽनुमितेः परोक्षरूपायाः परोक्षज्ञाने इच्छायाः कारणत्वास्वीकारेणाहार्यपरोक्षज्ञानानभ्युपगमप्रयुक्तनिर्वह्निपर्वतत्वावच्छिन्नविशेष्यकसाध्यतावच्छेदकावच्छिन्नप्रकारकाऽनुमितेरप्रसिद्ध्याऽनुमितिप्रतिबन्धकताघटितलक्षणागमनात् वह्निमत्पर्वतरूपाश्रयासिद्ध्यादावव्याप्तिः ।

एवम् पर्वतो वह्निमान् पर्वतावृत्तिधर्मादित्यादौ पर्वते पर्वतावृत्तित्वप्रकारकज्ञा-

नस्यानाहार्यस्याप्रसिद्ध्याऽनुमित्यप्रसिद्धिप्रयुक्तानुमितिप्रतिबन्धकताघटितलक्षणागमनादव्याप्तिः।

तथा, वह्निमान् वह्निव्यभिचारिण इत्यत्रापि वह्निव्याप्यत्वरूपसाध्यवह्निनिरूपितव्याप्तेः वैशिष्ट्यस्य वह्निव्यभिचारित्वरूपहेतुतावच्छेदकावच्छिन्नेऽवगाहिनो ज्ञानस्यापि वह्निव्यभिचारित्वरूपधर्मधर्मितावच्छेदककवह्निव्याप्यत्ववैशिष्ट्यावगाहित्वरूपस्याहार्यतयाऽनुमित्यप्रसिद्ध्या लक्षणागमनादव्याप्तिः।

अत्र प्रथमे पक्षतावच्छेदकांशमादाय, द्वितीये साध्यतावच्छेदकांशमादाय तृतीये हेतुतावच्छेदकांशमादाय चतुर्थे हेतुमादाय ज्ञानानामाहार्यत्वं बोध्यम्। तथा चानेकप्रयोजनवशेनानेकप्रयोगस्थलेऽव्याप्तिप्रदर्शनमिति भावः।

इत्थञ्च यद्धर्मावच्छिन्नविशेष्यकयद्धर्मावच्छिन्नप्रकारकज्ञानत्वव्यापकमाहार्यत्वं तद्धर्मावच्छिन्नविशेष्यकतद्धर्मावच्छिन्नप्रकारकबोधेच्छयोच्चरितं यद्यत्पदं तादृशबोधं प्रति तदपार्थकमिति नियमेन निर्वह्निः पर्वतो वह्निमानितिवाक्यस्यापार्थकतया तादृशवाक्यप्रयोक्तुः निगृहीतत्वेऽपि तथाविधानाहार्यज्ञानाऽप्रसिद्ध्याऽनुमितिप्रतिबन्धकताघटितदुष्टतेरर्थस्याप्यप्रसिद्धिप्रयुक्ततादृशस्थले निर्वह्निपर्वते वह्निसाधने धूमो दुष्ट इति व्यवहारस्यानुपपत्तिरिति। एवञ्चात्र लक्षणेऽव्याप्तितादवस्थ्यप्रयुक्तलक्षणमिदं परित्याज्यमेवेति भावः।

## दीधितिः

अत्र वदन्ति यद्विषयकनिश्चयस्य विरोधिविषयताप्रयुक्तस्तदुत्तरमनुमितावनाहार्यमानसज्ञाने वा पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वस्य साध्यतावच्छेदकविशिष्टसाध्यनिरूपितव्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहित्वस्य च द्वयोर्व्यतिरेकस्तत्त्वं हेतुदोषत्वम्।

## गादाधरी

यद्विषयकनिश्चयस्येति = यद्रूपावच्छिन्नविषयकनिश्चयस्येत्यर्थः। उत्तर-

पदस्योत्तरकालीनार्थकतया तदुत्तरमिति धातूपस्थाप्यानुमितिरूपक्रियाविशेषणमतो द्वितीया। अग्रिमकल्पे तादृशज्ञानरूपक्रियाविशेषणमतो ज्ञानपदमपि सार्थकम्। तत्-पदञ्च तादृशनिश्चयपरामर्शार्थकम्। उत्तरपदञ्चाव्यवहितोत्तरार्थकम्, कालाध्वनोरत्यन्तसंयोगे, इत्यनेन द्वितीया अधिकरणे, उत्तरपदस्योत्तरकालपरत्वादिति तु न युक्तं, व्यापकतात्मकस्यात्यन्तसंयोगस्य प्रकृतेऽविवक्षितत्वादिति। अनुमितौ=अनुमितिसमान्ये। द्वयोर्व्यतिरेक इत्यभिसम्बन्धः। तत्त्वं=तद्रूपावच्छिन्नत्वम्। अत्र च तज्ज्ञानानन्तरज्ञाननिष्ठतादृशोभयाभावे तज्ज्ञानीयाया एव विरोधिविषयितायाः प्रयोजकत्वात् विरोधिविषयितायां तादृशनिश्चयीयत्वकथनं स्वरूपकीर्तनमात्रम्। न तु तल्लक्षणघटकम्। तथा च यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्यस्य विरोधिविषयिताप्रयुक्तोभयाभाववत्त्वं, तादृशरूपावच्छिन्नत्वं दोषत्वमिति समुदितार्थः।

## विमलप्रभा

निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ प्रसक्तामव्याप्तिमपहरति शिरोमणिः अत्र वदन्तीत्यादिना। अत्र=न कोऽपि हेत्वाभासः स्यादित्याशङ्कायाम्। यद्रूपावच्छिन्नविषयकनिश्चयस्य = बाधत्वसत्प्रतिपक्षत्वाद्यवच्छिन्नविषयकनिश्चयस्य। तदुत्तरम्=दोषविषयकनिश्चयोत्तरम्। तदुत्तरम्=उत्तरपदोत्तरम्। धातूपस्थाप्यानुमितिरूपक्रियाविशेषणम्=अनुपूर्वकक्तिन्नन्तमाधातूपस्थाप्यानुमितिरूपा या धात्वर्था क्रिया तत्र विशेषणम्। अतः=क्रियाविशषणत्वाद्धेतोः। द्वितीया=क्रियाविशेषणानां योगे कर्मत्वमित्यनुशासनेन कर्मत्वे, कर्मणि द्वितीया इत्यनेन द्वितीयाविभक्तिः। अग्रिमकल्पे=अनाहार्यमानसज्ज्ञाने वेत्यादौ। तादृशज्ञानरूपक्रियाविशेषणम्=अनाहार्यमानसज्ज्ञानरूपज्ञाधात्वर्थक्रियाविशेषणम्। अतः=उत्तरपदोत्तरद्वितीयाविभक्तिसमर्थनादेव। ज्ञानपदमपि सार्थकम्=उत्तरपदोत्तरद्वितीयायाः साधुत्वार्थकमेव ज्ञानपदमपि सार्थकमन्यथा ज्ञानपदं निरर्थकमेव स्यादनाहार्यमानसे इत्युक्तावपि सर्वसामञ्जस्यसम्भवादिति। तादृशनिश्चयपरामर्शार्थकम्=यद्रूपावच्छिन्नविषयकनिश्चयबोधकम्। अव्यवहितोत्तरार्थकम्=अव्यहितोत्तराधिकरणार्थकम्। इत्यनेन=

इति पाणिनिसूत्रेण । द्वितीया अधिकरणे = अधिकरणार्थे द्वितीयाविभक्तिः। न युक्तं = न समीचीनम् । प्रकृते = लक्षणे । अत्र = प्रकृतलक्षणे । तज्ज्ञानानन्तरज्ञाननिष्ठतादृशोभयाभावे = बाधत्वाद्यवच्छिन्नविषयताशालिनिश्चयोत्तरजायमानानुमित्यात्मकज्ञाननिष्ठप्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावे । तज्ज्ञानीयाया विरोधिविषयतायाः = बाधादिनिश्चयीयविषयतायाः । प्रयोजकत्वात् = प्रयोजकत्वस्वीकारात् । तादृशनिश्चयीयत्वकथनम् = विरोधिविषयितायां यद्रूपावच्छिन्नविषयताशालिनिश्चयनिरूपितत्वप्रतिपादनम् । स्वरूपकीर्त्तनमात्रम् = विरोधिविषयता दोषविषयकनिश्चयीयैवेति कथनम् । न लक्षणघटकम् = विरोधिविषयितायाः निरुक्तनिश्चयीयत्वेन न लक्षणघटकता । तथा च = एतादृशार्थस्वीकारे च । अयमर्थः । अत्यन्तसंयोगे कालवाचकाध्ववाचकपदाद् द्वितीया भवतीत्यर्थक"कालाध्वनोरत्यन्तसंयोगे,, इति पाणिनिसूत्रेणानुपूर्वकक्तिन्नन्तमाधातूपस्थाप्यानुमितिरूपक्रियायां ज्ञाधातूपस्थाप्यज्ञानरूपक्रियायाश्च उत्तरपदस्य विशेषणतया "क्रियाविशेषणानां कर्मत्वमि,, त्यनुशासनात् कर्मत्वे द्वितीया भवतीति, एवञ्च यद्रूपावच्छिन्नविषयकानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकः, अनाहार्यमानसज्ञानत्व[लौकिकसन्निकर्षाऽजन्यदोषविशेषाजन्यज्ञानत्व]व्यापको वा विरोधिविषयिताप्रयुक्तः प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्वप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यनिरूपितव्याप्तिविशिष्टप्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारताकत्वोभयाभावस्तद्रूपावच्छिन्नत्वं हेत्वाभासत्वमिति पर्यवसितलक्षणार्थः ।

एवञ्चायोगोलकं धूमवत् वह्नेरित्यत्र धूमाभाववद्वृत्तिवह्निरूपव्यभिचारे लक्षणसंगतिः, तथा हि धूमाभाववद्वृत्तिवह्निरूपव्यभिचारत्वावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरमयोगोलकं धूमवत् धूमव्याप्यवह्निमच्चेत्याकारकानुमितिर्नोत्पद्यते तां प्रति निरुक्तव्यभिचारनिश्चयस्य प्रतिबन्धकत्वात्, उत्पद्यते च घटवद्भूतलमित्याद्येवानुमितिस्तादृशानुमितिसामान्ये विरोधिविषयताप्रयुक्तः अयोगोलकत्वावच्छिन्नविशेष्यतानिरूपितधूमत्वावच्छिन्नप्रकारताकत्वायोगोलकत्वावच्छिन्नविशेष्यतानिरूपितधूमत्वावच्छिन्नधूमनिरूपितव्याप्तिविशिष्टवह्नित्वावच्छिन्नप्रकारताकत्वोभयाभाव इति तादृशधूमाभाववद्वृत्ति-

वह्नित्वावच्छिन्नत्वस्योक्तव्यभिचारे सत्त्वात्। एवम्, पर्वतो वह्निमान् गगनादित्यत्र गगनाभावविशिष्टपर्वतरूपाश्रयासिद्धौ लक्षणसमन्वयः, तथा हि गगनाभाववत्पर्वतविषयकनिश्चयाव्यवहितोत्तरजायमाना न पर्वतो वह्निमान् वह्निव्याप्यगगनवानित्यनुमितिः किन्तु घटाद्यनुमितिरेव तत्र पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताकत्ववह्नित्वावच्छिन्नवह्निनिरूपितव्याप्तिविशिष्टगगनत्वावच्छिन्नप्रकारताकत्वोभयाभावः विरोधिविषयिताप्रयुक्तः वर्त्तत इति तादृशगगनाभाववत्पर्वतत्वावच्छिन्नत्वस्य तत्र सत्त्वात् एवम् वायुर्गन्धवान् पृथिवीत्वादित्यत्र गन्धाभावविशिष्टवायुरूपबाधे लक्षणसंगतिः,यथा हि गन्धाभाववद्वायुत्वरूपबाधत्वावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरजायमानाऽनुमितिः घटवद्भूतलमित्याकारिकैव न तु वायुर्गन्धवान् गन्धव्याप्यपृथवीत्ववानित्याकारिका तां प्रति निरुक्तबाधनिश्चयस्य प्रतिबन्धकत्वात्,-घटानुमितिसामान्ये विरोधिविषयिताप्रयुक्तः वायुरूपप्रकृतपक्षविशेष्यतानिरूपितगन्धत्वावच्छिन्नप्रकारताकत्वगन्धत्वावच्छिन्नगन्धनिरूपितव्याप्तिविशिष्टपृथिवीत्वावच्छिन्नप्रकारताकत्वोभयाभावसत्त्वेन तादृशगन्धाभावविशिष्टवायुत्वरूपबाधत्वावच्छिन्नत्वस्योक्तबाधे सत्त्वात्। अनयैव दिशा विरोधादिषु लक्षणसंगतिः कार्या। अत्र लक्षणे यद्रूपावच्छिन्नेत्यनुपादाने विशिष्टस्य शुद्धाऽभिन्नतया वह्न्यभावविशिष्टह्रदविषयकनिश्चयस्य शुद्धह्रदविषयकनिश्चयाभिन्नत्वेन तादृशनिश्चयोत्तरानुमितिसामान्ये निरुक्तोभयाभावसत्त्वप्रयुक्तासम्भवप्रसङ्गादतस्तदुपादानम्।

आश्रयासिद्ध्यादावव्याप्तिवारणाय पक्षतावच्छेदकविशिष्टेति। पक्षतावच्छेदकताघटकसम्बन्धेन पक्षतावच्छेदकवैशिष्ट्यलाभाय पक्षपदम्। अन्यथा वह्न्यभाववद्ध्रदविषयकनिश्चयोत्तरं कालिकादिसम्बन्धेन ह्रदत्वविशिष्टे कालादौ वह्नेःतद्व्याव्याप्यधूमस्य चानुमितिसामान्ये निरुक्तोभयाभावविरहेण बाधादावव्याप्तिप्रसङ्गादिति।

साध्यतावच्छेदकविशिष्टेत्यनुपादाने बाधसत्प्रतिपक्षयोरसङ्ग्रहस्स्यादतस्तदुपादानम्।

प्रथमलक्षणोक्तरीत्या द्वितीयदलघटकप्रतिपदव्यावृत्तिर्ज्ञेया। उभयाभावानु-

पादानेऽन्यतराभावमात्रनिवेशे वह्न्यभाववद्ध्रदविषयकनिश्चयोत्तरं ह्रदो जलवान् वह्निव्याप्यधूमवांश्चेत्यनुमितौ निरुक्तावगाहित्वान्यतराभावविरहेणाऽसम्भवस्स्यादतः उभयाभावोपादानम् ।

## बलदेवी

अत्यन्तसंयोगस्य प्रकृतेऽविवक्षिततत्वादिति भट्टाचार्यः । नन्वत्र व्यापकत्वनिवेशेऽव्याप्तिरेव कुतो नाभिहिता, वह्न्यभाववद्ध्रदविषयकनिश्चयोत्तरकालत्वव्यापकत्वस्यानुमितावभावादिति चेन्न, दोषविषयकनिश्चयोत्तरकालत्वव्यापकत्वस्यानुमितौ निवेशनीयत्वात् । तथा च यद्विषयकोत्तरकालवृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धो यः यद्रूपावच्छिन्नविषयकनिश्चयनिष्ठतद्व्यक्तित्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपकनिश्चयनिष्ठावच्छेदकतानिरूपकोत्तरकालनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकावच्छेदकतात्वावच्छिन्नप्रतियोगिताकाभाव एवानुमितौ निवेशनीयः । द्वितीयाभावस्तु यद्रूपनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकोभयावृत्तिधर्मनिष्ठाधेयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपिका सती निरवच्छिन्नत्वनिष्ठावच्छेदकतानिरूपिका यावच्छेदकता तन्निरूपकनिश्चयनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकोत्तरकालनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिष्ठाऽवच्छेदकतानिरूपकावच्छेदकतानिष्ठावच्छेदकतानिरूपिका सती अनुमितित्वनिष्ठावच्छेदकतानिरूपिका याऽनुमितिनिष्ठाऽवच्छेदकता तन्निरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकावच्छेदकतानिरूपकावच्छेदकत्वावच्छिन्नप्रतियोगिताकाभावरूपसामान्याभाव एवोभयाभावः निवेशनीयः । एतादृशसामान्याभावनिवेशान्नाव्याप्तिः । एवञ्चाव्याप्तिविरहादविवक्षिततत्वाभिधानमिति दिक् ।

## गादाधरी

वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयकनिश्चयोत्तरं ह्रदो वह्निमान् वह्निव्या-

प्यधूमवांश्चेत्याकारकानुमितेः कदाचिदप्यनुत्पत्त्या घटाद्यनुमितयः एव तादृशनिश्चया-व्यवहितोत्तरानुमितिसामान्यन्तर्गतास्तासु च ह्रदत्वादिविशिष्टे यत् वह्नित्वाद्यव-च्छिन्नवैशिष्ट्यावगाहित्वं, वह्नित्वावच्छिन्नवह्निव्याप्तिविशिष्टधूमत्वावच्छिन्नवैशिष्ट्या-वगाहित्वञ्च तदुभयाभाववत्त्वमक्षतमेव, तत्र तादृशनिश्चयीयविरोधिविषयिताप्रयुक्त-त्वमपि, स्वनिष्ठप्रतिबन्धकतावच्छेदकधर्मस्य स्वानन्तरोत्पन्नज्ञाननिष्ठप्रतिबध्यतावच्छे-दकधर्माभावप्रयोजकत्वात्, तत्र ह्रदत्वादिविशिष्टविशेष्यकत्वावच्छिन्नवह्नित्वादि-विशिष्टप्रकारकत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतायाः ह्रदत्वा-वच्छिन्नविशेष्यकत्वावच्छिन्नवह्नित्वावच्छिन्नाभावीयप्रकारितायाः तादृशवह्नित्वादिवि-शिष्टप्रकारकत्वघटितोभयाभावे तथात्वात्।

न च तादृशविशिष्टप्रकारकत्वमात्रं न विपरीतनिश्चयप्रतिबध्यतावच्छेदकम्,-अपि तु तद्विशेषितानाहार्यज्ञानत्वं, तत् कथं तत्प्रकारकत्वाभावस्य तथाविधविरोधि-विषयिताप्रयुक्तत्वमिति वाच्यम्। विशिष्टाभावप्रयोजकस्य विशेष्यवन्निष्ठविशेषणा-भावप्रयोजकत्वात् अनाहार्यज्ञानत्वाद्याश्रयानुमितिनिष्ठतादृशविशिष्टप्रकारकत्वाभावस्य विरोधिविषयिताप्रयुक्तत्वाक्षतेरिति ह्रदो वह्निमान् धूमादित्यादौ लक्षणसमन्वयः।

निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ तादृशानुमितेरप्रसिद्धावपि वह्निमत्-पर्वतादिरूपाश्रयासिद्ध्यादिविषयकनिश्चयानन्तरप्रसिद्धघटाद्यनुमितिषु अन्यत्र प्रसिद्ध-पक्षतावच्छेदकविशिष्टविषयकत्वावच्छिन्नसाध्यतावच्छेदकविशिष्टप्रकारकत्वघटितोभ-याभाववत्त्वमक्षतमेवेति लक्षणसमन्वयः।

## विमलप्रभा

ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदरूपबाधादौ लक्षणस-मन्वयमुपदर्शयन्पूर्वोक्तामव्याप्तिमपाकरोति वह्न्यभावविशिष्टेत्यादिना। निश्च-यानन्तरं=वह्न्यभाववान् ह्रद इत्याकारकबाधनिश्चयानन्तरं कदाचिदप्यनुत्पत्त्या ह्रदविशेष्यकवह्न्यनुमितिं प्रति ह्रदविशेष्यकवह्न्यभावप्रकारकनिश्चयस्य प्र-तिबन्धकतया बाधनिश्चयाभाव [ प्रतिबन्धकाभाव ] रूपसामग्र्यभावप्रयु-क्तानुमित्यनुदयेन। घटाद्यनुमितय एव = गृहं घटवत् = घटाव्या-प्यटपटवच्चेत्याद्याकारकानुमितय एव। तासु=तादृशानुमितिषु। तत्र=उभयाभावे

तादृशनिश्चयः = वह्न्यभाववान् ह्रद इति निश्चयः। निश्चयनिष्ठाविरोधिज्ञानीयविषयता। प्रयुक्तत्वमपि = प्रयोज्यत्वमपि। अस्याक्षतमेवेति पूर्वेण सम्बन्धः। स्वनिष्ठप्रतिबन्धकतावच्छेदकधर्मस्य = वह्न्यभाववान् ह्रद इति निश्चयनिष्ठा या प्रतिबन्धकता तदवच्छेदकवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितारूपधर्मस्य स्वानन्तरोत्पन्नज्ञाननिष्ठप्रतिबध्यतावच्छेदकधर्माभावप्रयोजकत्वात् = वह्न्यभाववान् ह्रद इति निश्चयानन्तरजायमानं यत् गृहंघटव्याप्यघटवच्चेत्याकारकं ज्ञानं तन्निष्ठो यः प्रतिबध्यतावच्छेदकह्रदे वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावस्तत्प्रयोजकत्वात्। तत्र = वह्न्यभाववान् ह्रद इति निश्चये। तथात्वात् = प्रयोजकत्वात्। आशङ्कते न चेति। न चेत्यस्य वाच्यमित्यनेनान्वयः। तादृशविशिष्टप्रकारकत्वमात्रम् = ह्रदत्वादिरूपपक्षतावच्छेदकविशिष्टविशेष्यकसाध्यतावच्छेदकवह्नित्वाद्यवच्छिन्नप्रकारकत्वमात्रम्। अत्रत्यमात्रपदमनाहार्यत्वादिव्यावर्त्तकम्। विपरीतनिश्चयः =वह्न्यभाववान् ह्रद इत्यादिनिश्चयः। तद्विशिष्टानाहार्यज्ञानत्वम् = सामानाधिकरण्यसम्बन्धेन ह्रदादिविशेष्यकवह्न्यादिप्रकारकत्वविशिष्टानाहार्यत्वादिव्यावर्त्तकम्। वि[illegible]निश्चयः = वह्न्यभाववान् ह्रद इत्यादिनिश्चयः। तद्विशिष्टानाहार्यज्ञानत्वम् = सामानाधिकरण्यसम्बन्धेन ह्रदादिविशेष्यकवह्न्यादिप्रकारकत्वविशिष्टानाहार्यज्ञानत्व[illegible]। तत् = तस्मात्। तत्प्रकारकत्वाभावस्य = ह्रदत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकत्वाभावस्य। तथाविधविरोधिविषयिता = वह्न्यभाववान् ह्रद इति निश्चयनिष्ठवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिता। विशिष्टाभावप्रयोजकस्य = निरुक्तप्रकारताकत्वविशिष्टानाहार्यज्ञानत्वाभावप्रयोजकस्य। विशेष्यवन्निष्ठविशेषणाभावप्रयोजकत्वात् = अनाहार्यज्ञानत्ववन्निष्ठविशेषणभूततादृशप्रकारताकत्वाभावप्रयोजकत्वात्। विशेष्यवति विशिष्टाभावो विशेषणाभाव एवेति नियमाभिप्रायेणेदम्। तादृशविशिष्टप्रकारकत्वाभावस्य = पक्षतावच्छेदकविशिष्टविशेष्यकत्वावच्छिन्नसाध्यतावच्छेदकविशिष्टप्रकारकत्वाभावस्य। तादृशानुमितेः = पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकावच्छिन्नप्रकारकानुमितेः। अप्रसिद्धावपि = आहार्यतयाऽनुमितेरनाहार्यत्वनियमेनाऽप्रसिद्धत्वेऽपि। अन्यत्र = निर्वह्निः पर्वतो वह्निमानित्याहार्यज्ञाने। तत्र = वह्निमत्पर्वतरूपाश्रयासिद्धौ। अयमर्थः। अत्र

वदन्तिकल्पोक्तलक्षणे ह्रदपक्षकवह्निसाध्यकधूमहेतुकस्थले वह्न्यभाववद्ध्रदरूपबाधे लक्षणासंगतिः, तथा हि वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्यान्तर्गता न ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारिकानुमितिस्तां प्रति वह्न्यभाववद्ध्रदरूपबाधविषयकनिश्चयस्य प्रतिबन्धकत्वात्, किन्तु गृहं घटवत् घटव्याप्यवच्चेत्याकारिकैवानुमितिः तादृशानुमितिसामान्ये ह्रदत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नवह्निवैशिष्ट्यावगाहित्ववह्नित्वावच्छिन्नवह्निनिरूपितव्याप्तिविशिष्टधूमत्वावच्छिन्नधूमवैशिष्ट्यावगाहित्वोभयाभावसत्त्वेन तादृशोभयाभावे च वह्न्यभाववान् ह्रद इति निश्चयनिष्ठवह्न्यभावविशिष्टह्रदविषयितारूपविरोधिविषयिताप्रयुक्तत्वमपीति तद्रूपावच्छिन्नत्वस्य वह्न्यभाववद्ध्रदे सत्त्वात्।

ननु तादृशोभयाभावे विरोधिविषयिताप्रयुक्तत्वं कथमिति चेच्छृणु यतो वह्न्यभाववान् ह्रद इति निश्चयनिष्ठा या प्रतिबन्धकता तदवच्छेदकवह्न्यभावशिष्टह्रदविषयितारूपधर्मस्य वह्न्यभाववान् ह्रद इति निश्चयाव्यवहितोत्तरोत्पन्नघटवद्गृहं घटव्याप्यपटवच्चेत्याकारकानुमितिनिष्ठो यः ह्रदत्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वरूपप्रतिबध्यतावच्छेदकधर्माभावस्तत्प्रयोजकत्वमत एव ह्रदत्वावच्छिन्नविशेष्यकत्वावच्छिन्नवह्नित्वविशिष्टप्रकारकत्वावच्छिन्ना या ह्रदो वह्निमानित्याद्यनुमितिनिष्ठा प्रतिबध्यता तन्निरूपिता या वह्न्यभाववान् ह्रद इति निश्चयनिष्ठा प्रतिबन्धकता तदवच्छेदकीभूता या ह्रदत्वावच्छिन्नविशेष्यकत्वावच्छिन्नवह्न्यभावत्वावच्छिन्नप्रकारता तस्या अपि निरुक्तोभयाभावप्रयोजकत्वमिति।

न च ह्रदत्वविशिष्टे वह्नित्वविशिष्टप्रकारकत्वविशिष्टानाहार्यज्ञानत्वस्येव वह्न्यभावान् ह्रद इति निश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकतया कथं ह्रदत्वविशिष्टविशेष्यकत्वावच्छिन्नवह्नित्वादिविशिष्टप्रकारकत्वाभावे विरोधिविषयिताप्रयुक्तत्वमिति वाच्यम्। विशेष्यवति विशिष्टाऽभावो विशेषणाभाव एवेति नियमेन विशिष्टाभावप्रयोजकस्य विशेषणाभावप्रयोजकतया तादृशप्रकारताकत्वविशिष्टानाहार्यज्ञानत्वाभावरूपविशिष्टाभावप्रयोजकस्य ह्रदत्वविशिष्टविशेष्यकत्वावच्छिन्नवह्नित्वविशिष्टप्रकारताकत्वविशिष्टानाहार्यज्ञानत्वरूपविशेष्यत्वन्निष्ठह्रदत्वविशिष्टविशेष्यकत्वावच्छिन्नवह्नित्वविशिष्टप्रकारकत्वाभावरूपविशेषणाभावप्रयोजकत्वमि-

ति भावः। निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ वह्निमत्पर्वतरूपाऽऽश्रयासिद्धौ लक्षणसमन्वयप्रकारश्चेत्थम्, यद्रूपपदेन वह्निमत्पर्वतत्वमुपादाय तदवच्छिन्नविषयकनिश्चयाव्यवहितोत्तरजायमाना या भूतलं घटवत् घटव्याप्यपटवच्चेत्यनुमितिः तादृशानुमितिसामान्ये निर्वह्नित्वविशिष्टपर्वतत्वावच्छिन्ने वह्नित्वविशिष्टवह्निवैशिष्ट्यावगाहित्ववह्नित्वावच्छिन्नवह्निनिरूपितव्याप्तिविशिष्टधूमत्वावच्छिन्नधूमवैशिष्ट्यावगाहित्वोभयाभावः विरोधिविषयिताप्रयुक्त वर्तते इति तद्रूपवत्त्वस्य वह्निमत्पर्वते सत्त्वादिति भावः।

## वलदेवी

स्वनिष्ठप्रतिबन्धकतावच्छेदकधर्म इत्यारभ्य प्रयोजकत्वादित्यन्तः गदाधरग्रन्थः। प्रतिबन्धकतावच्छेदकविषयितायाः स्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधर्माव - च्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकाभाववत्त्वघटितधर्मावच्छिन्नानिरूपकताकाधिकरणताप्रयोजकत्वनियमः। इत्थञ्च प्रतिबन्धकतावच्छेदकविषयितायाः प्रयोजकत्वं प्रतिबन्धकज्ञानोत्तरज्ञाननिष्ठतादृशोभयाभावाधिकरणतायां प्रतिबन्धकज्ञाननिष्ठाधिकरणतायां तु प्रतिबध्यज्ञानसामान्यभावस्य प्रयोजकत्वमिति निष्कर्षो बोध्यः।

## गादाधरी

न चाहार्यज्ञानमात्रे प्रसिद्धस्य निर्वह्निपर्वतत्वाच्छिन्नविशेष्यकवह्निप्रकारकज्ञानत्वस्य विरोधिविषयकज्ञानप्रतिबध्यतानवच्छेदकतया तादृशधर्मावच्छिन्ने वह्न्यादिप्रकारकत्वस्याभावे विरोधिविषयताप्रयुक्तत्वमप्रामाणिकमिति वाच्यम्। तादृशज्ञानत्वस्य प्रतिबध्यतानवच्छेदकत्वेऽपि तद्व्यापकस्य पर्वतत्वावच्छिन्ने वह्नित्वावच्छिन्नाभावप्रकारकज्ञानत्वस्यैव वह्निविशिष्टपर्वतविषयकज्ञानप्रतिबध्यतावच्छेदकतया व्यापकाभावप्रयोजकस्य सुतरां व्याप्याभावप्रयोजकतया तादृशविशिष्टविशेष्यकत्वावच्छिन्नवह्-

न्यादिप्रकारकत्वाभावे तादृशदोषविषयिताप्रयुक्तत्वस्यावश्यकत्वात् ।

## विमलप्रभा

इच्छाघटितसामग्र्यभावप्रयुक्तत्वमेव तादृशोभयाभाव इति तत्र विषयिताप्रयुक्तत्वमेव नास्ति सुतरां कुतो विरोधिविषयिताप्रयुक्तत्वमित्याशयवानाह न चेति । न चेत्यस्य वाच्यमित्यनेनान्वयः । आहार्यज्ञानमात्रे = निर्वह्निः पर्वतो वह्निमानित्याकारकज्ञानमात्रे । विरोधिविषयकज्ञानप्रतिबध्यता = वह्निमत्पर्वतरूपाश्रयासिद्धिविषयकनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यता । तादृशधर्मावच्छिन्ने = निर्वह्निपर्वतत्वावच्छिन्ने । अप्रामाणिकम् = प्रमाणरहितम् । तादृशज्ञानत्वस्य = निर्वह्निपर्वतत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकज्ञानत्वस्य । प्रतिबध्यतानवच्छेदकत्वेऽपि = आहार्यज्ञाने प्रतिबध्यताविरहेण [ आहार्यज्ञानं न प्रतिबन्धकन्न वा प्रतिबध्यमिति नियमेन तत्र प्रतिबध्यताविरहेण ] तादृशज्ञानत्वे प्रतिबध्यतावच्छेदकत्वाभावेऽपि । तद्व्यापकस्य = निर्वह्निः पर्वतो वह्निमानिति ज्ञानत्वव्यापकस्य । व्यापकाभावप्रयोजकस्य = पर्वतत्वावच्छिन्ने वह्नित्वावच्छिन्नाभावप्रकारकत्वाभावप्रयोजकस्य । व्याप्याभावप्रयोजकतया = निर्वह्निपर्वतविशेष्यकवह्निप्रकारकत्वाभावप्रयोजकत्वेन । तादृशविशिष्टविशेष्यकत्वावच्छिन्नवह्न्यादिप्रकारकत्वाभावे = निर्वह्निपर्वतत्वावच्छिन्नविशेष्यकवह्निप्रकारकत्वाभावे । तादृशदोषविषयिता = वह्निमत्पर्वतरूपदोषविषयिता । अयमर्थः । आहार्यज्ञानन्न कस्यापि प्रतिबन्धकम्, न वा प्रतिबध्यमिति नियमेन प्रकृते निर्वह्निः पर्वतो वह्निमानित्याकारकाऽऽहार्यज्ञाने वह्निमत्पर्वतरूपाश्रयासिद्धिविषयकनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यत्वाभावेन तादृशज्ञानत्वन्नाश्रयासिद्धिविषयकनिश्चयप्रतिबध्यतावच्छेदकमिति निर्वह्निपर्वतत्वावच्छिन्ने वह्नित्वावच्छिन्नप्रकारकत्वादिघटितोभयाभावे विरोधिविषयिताप्रयुक्तत्वाभावेन लक्षणागमनात् काव्याप्तिवारणसम्भावनेति चेन्नैतद्भद्रम् । वह्निमत्पर्वतरूपदोषविषयकनिश्चयोत्तरानुमितिसामान्यनिष्ठा या निरुक्तोभयाभावाधिकरणता सापि निर्वह्निपर्वतत्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वव्यापकीभूतस्य पर्वतत्वावच्छिन्ने वह्न्यभावावगाहित्वस्याभावप्रयोजिका या वह्निमत्पर्वत

विषयिता तत्प्रयोज्या भवत्येव । अर्थात् व्यापकतावच्छेदकरूपावच्छिन्नाभावप्रयोजकस्यैव व्याप्याभावप्रयोजकतया, पर्वतत्वावच्छिन्ने वह्न्यभावावगाहितात्वस्य निर्वह्निपर्वतत्वावच्छिन्ने वह्नित्वावच्छिन्नावगाहितात्वव्यापकतावच्छेदकतया तदवच्छिन्नाभावप्रयोजकवह्निमत्पर्वतविषयकत्वस्य निर्वह्निपर्वतत्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वघटितोभयाभावप्रयोजकत्वमस्त्येवेति विरोधिविषयिताप्रयुक्तोभयाभावसत्त्वाद्भवत्येव लक्षणसङ्गतिरिति भावः ।

## गादाधरी

न च विरोधिज्ञानासत्त्वेऽपि निर्वह्निः पर्वतो वह्निमानित्यादिज्ञानस्यानाहार्यस्यानुत्पत्त्या इच्छादिघटिततादृशाहार्यज्ञानसामग्र्यभावस्यैव निर्वह्नित्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वाभावप्रयोजकत्वं न तु विरोधिविषयत्वस्य, क्वचिदप्यक्लृप्तत्वादिति वाच्यम् । अभावाधिकरणतायामेव विरोधिविषयताप्रयुक्तत्वस्य निवेश्यतया अधिकरणतायाश्चाभावाभेदेऽप्यधिकरणभेदेन भिन्नतया विरोधिज्ञानान्तरोत्पन्नज्ञाने तादृशवैशिष्ट्यावगाहित्वाभावाधिकरणतायां विनिगमनाविरहेण पूर्वज्ञानीयविरोधिविषयिताया अपि प्रयोजकत्वात् ।

## विमलप्रभा

पुनश्शङ्कते न चेति । वाच्यमित्यनेनान्वयः । विरोधिज्ञानाऽसत्त्वेऽपि = वह्निमत्पर्वतरूपाऽऽश्रयासिद्धिविषयकनिश्चयाभावेऽपि । अनाहार्यस्य = इच्छानुत्तरस्य । अनुत्पत्त्या = अनुदयेन । तादृशाहार्यज्ञानसामग्र्यभावस्यैव = निर्वह्निः पर्वतो वह्निमानित्याकारकज्ञानकारणसमूहाभावस्यैव । अक्लृप्तत्वात् = अस्वीकृतत्वात् । अभावाधिकरणतायाम् = तादृशोभयाभावाधिकरणतायाम् । अधिकरणतायाश्च = प्रकृतपक्षतावच्छेदकावच्छिन्ने प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारकत्वप्रकृतसाध्यनिरूपितव्याप्तिविशिष्टप्रकृतहेतुप्रकारकत्वाभावाधिकरणतायाश्च । विरोधिज्ञानानन्तरोत्पन्नज्ञाने = वह्निमत्पर्वतरूपाऽऽश्रयासिद्धिविषयकनिश्चयानन्तरजायमानघटवद्भूतलमित्या-

द्यनुमित्यादौ । तादृशवैशिष्ट्याभावाधिकरणतायाम् = निर्वह्निपर्वतत्वविशिष्टे वह्निवैशिष्ट्याभावाधिकरणतायाम् । विनिगमनाविरहेण = वैकल्पिके वस्तुन्यवधारणशक्त्यभावेन, एकतरपक्षपातियुक्तिविरहेणेति यावत् । पूर्वज्ञानीयविरोधिविषयितायाा अपि = पर्वतो वह्निमानित्याकारकाश्रयासिद्धिज्ञानीयविषयितायाा अपि । अयमर्थः । वह्निमत्पर्वतरूपाश्रयासिद्धिविषयकनिश्चयाभावकाले निर्वह्निपर्वते वह्निज्ञानं जायतामित्याकारकेच्छाविरहदशायाञ्च निर्वह्निःपर्वतो वह्निमानित्याहार्यज्ञानं न जायते तादृशनिश्चयस्य इच्छादेश्चाहार्यज्ञानासामग्रीत्वं स्वीकार्यमिति तादृशाहार्यज्ञानसामग्र्यभाव एव निर्वह्निपर्वतत्वावच्छिन्ने वह्निवैशिष्ट्यावगाहित्वाभावप्रयोजकः, न तु विरोधिविषयितायां निर्वह्निपर्वतत्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वाभावप्रयोजकतेति, [अर्थात् निर्वह्निः पर्वतो वह्निमानित्याकारकज्ञानस्य विरोधिज्ञानप्रयुक्तानुत्पत्तिकत्वे तदसत्त्वदशायामिच्छाद्यसत्त्वेऽपि तदुत्पत्तिस्स्यादतस्तादृशेच्छादेरेव तदुत्पादप्रयोजकतेति तथा चेच्छाघटितसामग्र्यभावस्यैव निर्वह्निपर्वतत्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वाभावप्रयोजकता न तु विरोधिविषयित्वे] इति विरोधिविषयिताप्रयुक्तत्वस्योभयाभावे विरहेणाव्याप्तिस्तदवस्थैवेति चेन्नैतन्मनोरमम्, अभावे विरोधिविषयिताप्रयुक्तत्वनिवेशसत्त्वे सर्वमिदं स्यात्, तदधिकरणतायां विरोधिविषयिताप्रयुक्तत्वनिवेशे तु अभावाभेदेऽप्यधिकरणभेदेनाधिकरणतायाः विभिन्नतया वह्निमत्पर्वतविषयकनिश्चयाव्यवहितोत्तरजायमानगृहं घटवदित्याद्यनुमितिनिष्ठनिर्वह्निपर्वतत्वावच्छिन्नविशेष्यकवह्निप्रकारकत्वतादृशवह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावाधिकरणतायां यथेच्छाघटिततादृशज्ञानसाग्र्यभावस्य प्रयोजकता तथैव पर्वतो वह्निमानितिज्ञानीयवह्निमत्पर्वतविषयिताया अपि विनिगमकाभावेन प्रयोजकत्वमवश्यं वाच्यमिति तादृशोभयाभावाधिकरणतायां विरोधिविषयिताप्रयुक्तत्वस्य वर्त्तमानतया लक्षणसंगतिसम्भवेन नाव्याप्तिशङ्केति भावः। अन्ये तु लक्षणे उभयाभावशब्देनोभयाभावप्रयोजकीभूताभावस्यैवाग्रे विवक्षणीयतयाऽऽश्रयासिद्धिविषयतायाः उभयाभावेऽधिकरणत्वे वाऽप्रयोजकत्वेऽपि उभयाभावप्रयोजकीभूते पक्षे पक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावे प्रयोजकतायामविवादाल्लक्षणसंगतिरिति वदन्ति ।

## गादाधरी

यद्विषयिताप्रयुक्तस्तादृशोभयाभावस्तत्त्वमित्येतावन्मात्रकृते ह्रदो वह्न्यभावा नित्यादिज्ञानीयवह्न्यभावादिविशिष्टह्रदादिविषयितायाः इव तदन्तःपातिवह्न्यभावत्वादिविशिष्टविषयितायाः अपि प्रतिबन्धकतावच्छेदककोटिप्रविष्टतया प्रतिबध्यतावच्छेदकस्य ह्रदत्वादिविशिष्टे वह्न्यादिवैशिष्ट्यावगाहित्वविरहप्रयोजकतया बाधाद्येकदेशे वह्न्यभावादिविशिष्टेऽतिव्याप्तिरिति यद्विषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्यस्य विरोधिविषयिताप्रयुक्तोभयाभाववत्त्वं निवेशितम्।

## विमलप्रभा

इदानीं लक्षणघटकपदानां पदकृत्यमाह यद्विषयितेत्यादिना। इत्येतावन्मात्रे कृते = यद्रूपावच्छिन्नविषयकनिश्चयाऽव्यवहितोत्तरानुमितिसामान्ये इति विशेष्यदलानुपादाने। तदन्तःपातीत्यत्र तच्छब्देन ह्रदो वह्न्यभाववानिति ज्ञानस्य परामर्शः। अयमर्थः। यद्विषयताप्रयुक्तः पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावस्तत्त्वमित्येतावन्मात्रलक्षणकरणे विशेष्यदलानुपादाने ह्रदो वह्निमान् जलादित्यादौ वह्न्यभाववद्ध्रदादिरूपबाधाद्येकदेशे वह्न्यभावादावतिव्याप्तिः, वह्न्यभाववान् ह्रद इति ज्ञानीयवह्न्यभावविशिष्टह्रदविषयतायाः यथोक्तोभयाभावप्रयोजकता तथैव वह्न्यभाववान् ह्रद इति ज्ञानान्तःपातिवह्न्यभावत्वावच्छिन्नविषयितायाः अपि प्रतिबन्धकतावच्छेदककोटिप्रविष्टत्वेन निरुक्तोभयाभावप्रयोजकतेति वह्न्यभावत्वावच्छिन्नविषयिताप्रयुक्तः ह्रदत्वादिविशिष्टे वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावस्तत्त्वस्य वह्न्यभावादौ सत्त्वात्। विशेष्यदलदाने च यद्रूपावच्छिन्नविषयतापदेन वह्न्यभावत्वावच्छिन्नविषयतायाः ग्रहणसम्भवेऽपि तादृशविषयताशालिशुद्धवह्न्यभाव इति निश्चयोत्तरह्रदो वह्निमान् वह्निव्याप्यजलवानित्यनुमितेरुत्पत्त्या तत्र तादृशोभयाभाववविरहान्नातिव्याप्तिरिति भावः।

## बलदेवी

यद्विषयताप्रयुक्तोभयाभाव इत्यादि गदाधरः। नन्वत्र विशेदप्यलसत्त्वेऽपि ह्रदो वह्निमानित्यत्र बाधेऽव्याप्तिः, जातिमान् वह्न्यभाववानित्याकारकवह्न्यभावव-द्ध्रदत्वविशिष्टविषयकनिश्चयोत्तरं ह्रदे वह्न्यवगाहिसमूहालम्बनानुमितेरुत्पत्त्या तत्र चोभयाभावासत्त्वात्।

अतोऽव्यापकीभूतविषयताशून्यत्वं निश्चये निवेश्यम्, तथा च बाधनिश्चयस्य न बाधैकदेशविषयित्वाव्यापकविषयिताशून्यत्वम्, तादृशैकदेशमात्रविषयकनिश्चयीयतद्विषयिताप्रयुक्तो नोभयाभाव इति नैकदेशेऽतिव्याप्तिरिति चेन्न,। गोत्वाभावागोत्वाभाववानित्यादौ गोत्वाभावादावतिव्याप्तेः, उक्तरीत्याऽव्यापकविषयताशून्यत्वदाने च प्रागुक्तरीत्यैव दोषोऽनुसन्धेयः।

## गादाधरी

न च यादृशविशिष्टविषयितासामान्यप्रयुक्तस्तादृशोभयाभावस्तत्त्वमित्येव सम्यक्, ह्रदत्वादिविशिष्टविषयितासामान्यान्तर्गतायां ह्रद इत्यादिज्ञानीयविषयितायामुभयाभावप्रयोजकत्वासत्त्वादतिव्याप्तेरनवकाशादिति वाच्यम्। पाषाणमयो न वह्निमानिति ज्ञानसहितस्य पर्वतः पाषाणमय इति ज्ञानस्य पर्वतो वह्निमानितिज्ञानप्रतिवन्धकतया ज्ञानभेदेन विषयिताभेदाभावात् पाषाणमयत्वविशिष्टपर्वतादिविषयितासामान्यस्यैव उभयाभावप्रयोजकत्वात् पाषाणमयत्वविशिष्टपर्वतादावतिव्याप्तेर्दुर्वारत्वात्।

## बिमलप्रभा

सामान्यपददानेनैव तादृशैकदेशेऽतिप्रसङ्गवारणसम्भवे किं गुरुतरनिवेशेनेत्याशङ्कते न चेत्यादि। न चेत्यस्य वाच्यमित्यनेनान्वयः। तादृशोभयाभावः = पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावः। अतिव्याप्तेः

=एकदेशेऽतिप्रसङ्गस्य । अनवकाशात्=प्रसक्त्यभावात्। अयमर्थः। यद्रूपावच्छिन्नविषयितासामान्यप्रयुक्तः निरुक्तोभयाभावस्तद्रूपावच्छिन्नत्वमित्युक्तावेव शुद्धवह्न्यभाव इति ज्ञानीयवह्न्यभावत्वावच्छिन्नविषयितासामान्ये ह्रदे वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावप्रयोजकताविरहेण वह्न्यभावादावेकदेशेऽतिव्याप्तिवारणसम्भवेन विशेष्यदलोपादामनर्थकमिति शङ्काशयः। तत्र विशेषदलासत्त्वे सामान्यपदघटितलक्षणकरणे पर्वतो वह्निमान् धूमादित्यत्र पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिः पाषाणमयत्ववान् वह्न्यभाववान् पाषाणमयत्ववान् पर्वतः, इत्याकारकनिश्चयस्यापि वह्न्यभाववत्पषाणमयत्वावच्छिन्नविषयिताशालिनिश्चयविशिष्टपाषाणमयत्ववत्पर्वत्वावच्छिन्नविषयताशालिनिश्चयत्वेन पर्वतो वह्निमान् वह्निव्याप्यधूमवानित्यनुमितिप्रतिवन्धकतया ज्ञानभेदेन विषयितायाः भेदास्वीकारेण पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयितासामन्यस्यैव पर्वतो वह्निमानितिबुद्धिप्रतिवन्धकतावच्छेदकतया पाषाणमयत्ववत्पर्वत्वावच्छिन्नविषयिताप्रयुक्तः पर्वते वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभाव इति तादृशपाषाणमयत्ववत्पर्वतत्वावच्छिन्नत्वस्य पाषाणमयत्ववत्पर्वते सत्त्वात्।

विशेष्यदलोपादाने च समानाकारकज्ञानीयविषयितयोरभेदेन प्रतिवन्धकतावच्छेदकत्वेऽपि पाषाणमयो न वह्निमानिति निश्चयासमानकालीनकेवलपर्वतः पाषाणमय इति निश्चयस्यानुमित्यप्रतिबन्धकतया पाषाणमयत्ववत्पर्वतविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्यान्तर्गतायां पर्वतो वह्निमान् वह्निव्याप्यधूमवानित्यकारकानुमितौ पर्वत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारत्ववह्नित्वावच्छिन्ननिरूपितव्याप्तिविशिष्टधूमत्वावच्छिन्नप्रकारकत्वोभयस्यैव विद्यमानतया तादृशोभयाभावासत्त्वेन यद्रूपदेन पाषाणमयत्ववत्पर्वतत्वस्य धर्त्तुमशक्यत्वान्न पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिसम्भावनेति समाधानम्।

बलदेवी

याद्दशविशिष्टविषयितासामान्येत्यादि गदधारः।

नन्वत्र विशेषदलसत्त्वेऽपि, धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ मे-

यत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, तादृशव्यभिचारविषयकनिश्चयोत्तरानुमितिसामान्ये व्यभिचारविषयितारूपविरोधिविषयिताप्रयुक्तोभयाभावस्य सत्त्वात्। विशिष्टान्तराघटितत्वविशेषणेन तद्वारणमशक्यम्। तादृशवह्निर्धूमवानिति ज्ञानं प्रति मेयत्ववान् धूमाभाववान् मेयत्ववान् तादृशवह्निरिति ज्ञानविशिष्टज्ञानस्य प्रतिबन्धकतया तादृशोभयाभावाधिकरणताप्रयोजिकायां पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां तादृशव्यभिचारविषयितायाः प्रयोजकत्वात्,तत्र च शुद्धव्यभिचारविषयिताया अप्रयोजकत्वात् तथाच विशिष्टान्तरविषयित्वाऽप्रयोज्यस्वविषयिताप्रयोज्योभयाभावाधिकरणताप्रयोजकाभावाधिकरणताकत्वरूपविशिष्टान्तराघटितत्वसत्त्वात्। अतस्तद्वारणाय विषयतानिष्ठप्रयोजकतायां ज्ञानवैशिष्ट्यनिष्ठप्रयोजकतानिरूपितप्रयोज्यतावदधिकरणतानिष्ठप्रयोज्यतानिरूपितत्वाऽसाधारण्यविषयित्वावृत्तित्रोभयाभावस्य निवेशः। एवञ्चोक्तस्थले धूमव्यभिचारिवह्नौ धूमवैशिष्ट्याभावाधिकरणतानिष्ठप्रयोज्यतायां ज्ञानवैशिष्ट्यनिष्ठप्रयोजकतानिरूपकत्वस्य सत्त्वेन मेयत्वविशिष्टव्यभिचारविषयितानिष्ठप्रयोजकताया-मुभयाभावाभान्नातिव्याप्तिः। तथा च पाषाणमयत्ववत्पर्वते च नातिव्याप्तिः, तद्विषयितानिष्ठप्रयोजकतायामुक्तोभयाभावासत्त्वादिति चेन्न, कपिसंयोगी एतद्वृक्षत्वादित्यत्र कपिसंयोगाभाववद्वृत्तिऽवृक्षेऽतिव्याप्तिवारणाय विशेष्यदलस्यावश्यकत्वात्, तादृशविशिष्टविषयकनिश्चयोत्तरज्ञाननिष्ठे पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणत्वे कपिसंयोगाभाववद्वृक्षविषयिताया प्रयोजकत्वात्, विशिष्टान्तरविषयिताया अप्रयोजकत्वाच्च, विशिष्टान्तराऽघटितत्वसत्त्वात्, विशेष्यदलसत्त्वे चाऽव्याप्यवृत्तित्वप्रमाकालीनतादृशविशिष्टविषयकनिश्चयोत्तरानुमितौ निरुक्तोभयाभावासत्त्वेनातिव्याप्तिविरहादिति।

## गादाधरी

ह्रदो वह्न्यभाववानित्यादिह्रदादिविषयकनिश्चयानन्तरोत्पन्नघटाद्यनुमितौ विरोधिविषयिताप्रयुक्तोभयाभावसत्त्वात् केवलह्रदादावतिव्याप्तिरतः सामान्यपदं पूरितम्। तथा सति ह्रदादिनिश्चयानन्तरोत्पन्नानुमितिसामान्यान्तर्गतायां ह्रद इत्यादिनिश्चयानन्तरजातह्रदो वह्निमान् वह्निमान्पर्वतश्चेत्याद्यनुमितौ विरोधिविषयिताप्रयुक्ततादृशोभयाभावासत्त्वान्नातिव्याप्तिः।

## विमलप्रभा

तथा सति=सामान्यपदोपादाने सति। तादृशोभयाभावविरहात्=पक्षे साध्यवैशिष्ट्यावगाहित्वसध्याव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावासत्त्वात्। नातिव्याप्तिः=नह्रदाद्येकदेशेऽतिप्रसङ्गः। अयमर्थः। तादृशानुमितिसामान्ये इत्यत्र सामान्यपदानुपादाने ह्रदो वह्निमान् जलादित्यादौ ह्रदाद्येकदेशेऽतिप्रसङ्गो दुर्वारः, वह्न्यभाववान् ह्रद इत्यादिज्ञानीयह्रदत्वावच्छिन्नविषयिताशालिनिश्चयाव्यवहितोत्तरजायमानयत्किञ्चिदनुमित्यन्तर्गतगृहं घटवत् घटव्याप्यपटवच्चेत्यनुमितौ विरोधिविषयिताप्रयुक्तः ह्रदे वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावसत्त्वेन तत्त्वस्य ह्रदाद्येकदेशे सत्त्वात्। सामान्यपदोपादाने च ह्रदत्वाद्यवच्छिन्नविषयताशालिनिश्चयोत्तरानुमितिसामान्यन्तर्गता या ह्रदो वह्निमान् वह्निव्याप्यजलवानित्यनुमितिस्तासु ह्रदे वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयस्यैव वर्त्तमानतया तदभावासत्त्वान्नातिप्रसङ्गः।

## गादाधरी

ह्रदत्वादिना वह्न्यभावविशिष्टह्रदादिविषयकनिश्चयानन्तरमुक्तसमूहालम्बनानुमित्युत्पत्त्या तादृशविशिष्टस्यापि दोषत्वानुपपत्तिरतो यत्पदं यद्रूपावच्छिन्नपरतयोपवर्णितम्। वह्न्यभावविशिष्टह्रदादिविषयकस्य ह्रदो वह्निमान्न वेत्यादिज्ञानस्यानन्तरं तादृशसमूहालम्बनानुमित्युत्पत्त्या तद्दोषतादवस्थ्यमतो निश्चयेति। अनाहार्याप्रामाण्यज्ञानास्कन्दितसंशयान्यज्ञानपरम्। तेनाहार्यस्याप्रामाण्यज्ञानास्कन्दितस्यापि दोषविषयकनिश्चयस्यानन्तरं तादृशानुमित्युत्पत्तावपि न क्षतिः।

## विमलप्रभा

उक्तसमूहालम्बनानुमित्युपत्त्या=ह्रदो वह्निमान् वह्निव्याप्यजलवानित्याकारकसमूहालम्बनानुमितेरुत्पत्तिसम्भवेन। तादृशविशिष्टस्यापि=वह्न्यभावविशिष्टह्रदादेरपि। अतः=हेतोः। यत्पदं=यद्विषयकनिश्चयस्येत्यत्र यत्पदम्। तादृ-

शसमूहालम्बनानुमित्युत्पत्त्या = ह्रदो वह्निमान् वह्निव्याप्यजलवानित्यनुमित्युदयेन। तद्दोषतादवस्थ्यम् = वह्न्यभावविशिष्टह्रदादेर्दोषत्वानुपपत्तिस्तदवस्थैव। तेन = निश्चयपदस्यैतादृशार्थकरणेन। तादृशानुमित्युत्पत्तावपि = ह्रदो वह्निमान् वह्निव्याप्यजलवानित्यनुमित्युदयेऽपि। न क्षतिः = नासम्भवः। अयमर्थः। तद्विषयकनिश्चयस्येत्यत्र यत्पदस्य यद्रूपावच्छिन्नपरत्वरूपार्थकरणे ह्रदो वह्निमान् जलादित्यादौ वह्न्यभावविशिष्टह्रदादेर्दोषत्वानुपपत्तिः, प्रमेयत्वादिना वह्न्यभावविशिष्टह्रदादिविषयकनिश्चये निरुक्तसमूहालम्बनानुमितिप्रतिबन्धकताविरहेण प्रमेयत्वादिना वह्न्यभावविशिष्टह्रदविषयकनिश्चयोत्तरजायमानह्रदो वह्निमान् वह्निव्याप्यजलवानित्यनुमितौ ह्रदे वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावविरहेण लक्षणागमनात्। अतः यत्पदस्य यद्रूपावच्छिन्नपरत्वरूपार्थः कार्यः, तथा च यद्रूपपदेन यादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयिताव्यापिका प्रकृतानुमितिप्रतिबन्धकता तादृशसमुदायत्वस्योपादेयतया प्रकृते यद्रूपपदेन वह्नित्वह्रित्वोभावाभावत्वह्रदत्वगतसमुदायत्वस्यैवोपादेयत्वेन तादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताशालित्वह्न्यभाववान् ह्रद इति निश्चयाव्यवहितोत्तरजायमाना न ह्रदो वह्निव्याप्यजलवानित्यनुमितिः, किन्तु घटाद्यनुमितिरेव तत्र विरोधिविषयताप्रयुक्तः ह्रदे वह्निवैशिष्ट्याऽवगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावस्य वर्त्तमानतया तद्रूपावच्छिन्नत्वस्य वह्न्यभावविशिष्टह्रदादौ सत्त्वात् नानुपपत्तिरिति भावः।

एवम् यद्रूपावच्छिन्नविषयताशालिज्ञानाव्यवहितोत्तरेत्यादिरीत्या निवेशे निश्चयपदानुपादाने वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताशालिह्रदो वह्निमान्न वेत्याकारकज्ञानाव्यवहितोत्तरानुमितिसामान्यान्तर्गतह्रदो वह्निमान् वह्निव्याप्यजलवानित्याकारकानुमितौ ह्रदे वह्निवैशिष्ट्यावगाहित्वव्याप्यजलवैशिष्ट्यावगाहित्वोभयसत्त्वेन तदुभयाभावविरहात्। निश्चयपदोपादाने च संशये ज्ञानत्वसत्त्वेऽपि निश्चयत्वविरहादेव निश्चयपदेन निरुक्तसंशयस्य धारणासम्भवान्न दोषः। न च तथापि वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताशालिनिश्चयपदेन यदि संशयभिन्नज्ञानमेव निवेश्यते तदा वह्निमद्ध्रदो वह्न्यभाववानित्याहार्यज्ञानं, वह्न्यभाववान् ह्रद इदं ज्ञान

मप्रमेत्यप्रामाण्यज्ञानास्कन्दितज्ञानञ्च संशयभिन्नमिति निश्चयपदेन तादृशज्ञानस्यापि परामर्शसम्भवेन तादृशनिश्चयाव्यवहितोत्तरजायमानह्रदो वह्निमान् वह्निव्याप्यजलवानित्यनुमितौ ह्रदे वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यजलवैशिष्ट्यावगाहित्वो-भयसत्त्वेन तदभावासत्त्वात् पुनरसम्भव इति वाच्यम्। निश्चयपदेनानाहार्यप्रामाण्यज्ञानानास्कन्दितसंशयान्यज्ञानस्यैव लक्षणे निवेशनीयतया नोक्तानाऽऽहार्यप्रामाण्यज्ञानास्कन्दितज्ञानमादायासम्भवसम्भावनेति।

## गादाधरी

दोषविषयकनिश्चयनाशे सति तादृशानुमितेरुत्पत्त्या तद्दोषापत्तिरतोऽव्यवधान-निवेशः। एवं दोषविषयकलौकिकनिश्चयाव्यवहितपूर्वमनुमित्युत्पत्त्या तद्दोषः स्यादत उक्तरेति।

## विमलप्रभा

दोषविषयकनिश्चयनाशे सति = वह्न्यभाववद्ध्रदादिरूपबाधादिदोषविषयक-निर्णयस्य विनाशे सति। तादृशानुमितेः = समूहालम्बनानुमितेः। उत्पत्त्या = उदयेन। आद्यक्षणसम्बन्ध उत्पत्तिः, तादृशोत्पत्तिवशेनेति यावत्। तद्दोषापत्तिः = बाधादावव्याप्तिः। अतः = अस्माद्धेतोः। एवम् = अव्यवहितत्वनिवेशे। तद्दोषस्यात् = बाधादावव्याप्तिः स्यात्। अयमर्थः। यद्रूपावच्छिन्नविषयकनिश्चयोत्तरा-नुमितिसामान्ये इत्यादिरीत्या निवेशेऽव्यवधानपदानुपादाने पुनः वह्न्यभाववद्ध्रदा-दिरूपबाधादावव्याप्तिः, वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताशालिवह्न्यभाववान् ह्रद इत्याकारकनिश्चयस्य विनाशकाले प्रतिबन्धकविरहेण ह्रदो वह्निमान् वह्निव्याप्यजलवानित्यनुमितेरुत्पत्तिसम्भवेन तादृशानुमितेरपि निरुक्तानुमितिसामान्यान्त-र्गततया तत्र ह्रदे वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यजलवैशिष्ट्यावगाहित्वोभय-स्यैव वर्तमानतया तदुभयाभावविरहात्।

अव्यवहितोत्तरत्वनिवेशे च वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकनिश्चयाव्य-

वहितोत्तरानुमितिसामान्यान्तर्गता न ह्रदो वह्निमान् वह्निव्याप्यजलवानित्यनुमितिः किन्तु घटाद्यनुमितिस्तत्र ह्रदे वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्य जलवैशिष्ट्यावगाहित्वोभयाभावः विरोधिविषयताप्रयुक्त अस्तीति तादृशवाधादौ नाव्याप्तिसम्भावनेति भावः।

एवम्, यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितानुमितिसामान्ये तादृशोभयाभाव इत्यादिरीत्या निवेशे उत्तरपदानुपादाने तत्रैव पुनः वह्न्यभाववद्ध्रदादिविषयकलौकिकनिश्चयाव्यवहितपूर्वानुमितिसामान्यान्तर्गता ह्रदो वह्निमान् वह्निव्याप्यजलवानित्यनुमितिरपि तत्र निरुक्तोभयसत्त्वेनोभयाभावविरहात्। उत्तरपदोपादाने च, वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्यान्तर्गता नैतादृशानुमितिः किन्तु घटाद्यनुमितिरेव तत्र विरोधिविषयताप्रयुक्तनिरुक्ताभयाभावसत्त्वान्न दोष इति।

## वलदेवी

उत्तरेति गदाधरः। नन्वत्र साध्यतानुमित्यनन्तरं लौकिकान्यदोषज्ञानस्य साध्यानुमितिप्रतिबध्यतयैवोत्पत्त्यसम्भवात् तादृशज्ञानमादायोत्तरपदप्रयोजनन्नयाति, अत एव लौकिकदोषज्ञानपर्यन्तानुधावनं कृतम्। तदसंगतम् दोषविषयकलौकिकान्यज्ञानाव्यवहितप्राक्कालानानुमितौ निरुक्तोभयाभावसत्त्वेऽपि तत्र विरोधिविषयिताप्रयुक्तत्वाभावादेव दोषविषयकनिश्चयाव्यहितोत्तरानुमितिसामान्ये विरोधिविषयिताप्रयुक्तोभयाभावासत्त्वादव्याप्तिरिति तद्वारकतयोत्तरपदप्रयोजनसम्भवे किमर्थं लौकिकनिश्चयानुसरणमिति वाच्यम्। विरोधिविषयिताप्रयुक्तत्वदलसत्त्वाऽसत्वे चोभयथैवाऽव्याप्तिरिति सूचनाय लौकिकत्वानुसरणमिति।

## गादाधरी

तत्सामानाधिकरण्यमनुमितौ निवेश्यमत एकस्य बाधनिश्चयानन्तरमन्यस्यानुमितावपि न क्षतिः ।ऽबाधादिनिश्चयानन्तरपक्षतावच्छेदकावच्छिन्ने साध्यादिप्र-

कारकस्याहार्यस्य लौकिकस्य च प्रत्यक्षस्य उत्पत्त्या ज्ञानसामान्यमुपेक्ष्यानुमितिसामान्यनिवेशः ।

## विमलप्रभा

तत्सामानाधिकरण्यम्=यद्रूपावच्छिन्नविषयकनिश्चयाधिकरणनिरूपितवृत्तित्वम् । एकस्य=एकपुरुषस्य देवदत्तादेः । अन्यस्य=पुरुषान्तरस्य यज्ञदत्तादेः । अनुमितावपि=अनुमितिसत्त्वेऽपि । न क्षतिः=बाधादौ दोषत्वानुपपत्तिः । बाधादिनिश्चयेत्यत्रादिपदेन विरोधादेरुपग्रहः । उपेक्ष्य=अनादृत्य । अयमर्थः । यद्रूपावच्छिन्नविषयक [अर्थात् दोषविषयक] निश्चयाधिकरणनिरूपितवृत्तित्वमनुमितौ वाच्यमन्यथा, देवदत्तस्य वह्न्यभाववद्ध्रदविषयकनिश्चयकाले यज्ञदत्तस्य ह्रदो वह्निमान् वह्निव्याप्यजलवानित्यनुमित्युत्पत्तौ बाधकाभावेन तत्र ह्रदे वह्निवैशिष्ट्यावगाहित्व वह्निव्याप्यजलवैशिष्ट्यावगाहित्वोभयस्यैव वर्त्तमानतयोभयाभावासत्त्वेन वह्न्यभाववद्ध्रदादावव्याप्तिः स्यात् ।

तन्निवेशे च वह्न्यभाववद्ध्रदविषयकनिश्चयसामानाधिकरण्यन्न ह्रदो वह्निव्याप्यजलवानित्यनुमितौ किन्तु घटाद्यनुमितावेवेति विरोधिविषयिताप्रयुक्तः ह्रदे वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यजलवैशिष्ट्यावगाहित्वोभयाभाव अस्तीति नाव्याप्तिः ।

एवम् यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरज्ञानसामान्ये विरोधिविषयिताप्रयुक्तस्तादृशोभयाभाव इत्युक्तावेव सामञ्जस्यसम्भवेऽनुमितिपदानुपादाने ह्रदो वह्निमान् जलादित्यादौ वह्न्यभाववद्ध्रदादावसम्भवः, वह्न्यभाववद्ध्रदादिरूपदोषविषयकनिश्चयाव्यवहितोत्तरोत्पन्नज्ञानसामान्यान्तर्गतवह्निमद्ध्रदो वह्न्यभाववानित्याकारकाहार्यज्ञाने लौकिकसन्निकर्षदोषविशेषजन्यह्रदो वह्निमानिति प्रत्यक्षे च ह्रदे वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यजलवैशिष्ट्यावगाहित्वोभयसत्त्वेनोभयाभावासत्त्वात् । तदुपादाने च वह्न्यभाववद्ध्रदविषयकनिश्चयोत्तरानुमितिसामान्यान्तर्गता न ह्रदो वह्निमान् वह्निव्याप्यजलवानित्यनुमितिस्तां प्रत्युक्तबाधनिश्चयस्य प्रतिबन्धक-

त्वाद् किन्तु घटानुमितिरेव तत्र ह्रदे वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यजलवैशिष्ट्यावगाहित्वोभयाभावः विरोधिविषयिताप्रयुक्तः वर्त्तत इति तद्रूपावच्छिन्नत्वस्य वह्न्यभाववद्ध्रदादौ सत्वान्नाव्याप्तिरिति भावः।

## गादाधरी

यत्पक्षकयत्साध्यकयद्धेतुकस्थले यादृशदोषविषयकनिश्चयानन्तरं कस्याप्यनुमितिर्न जाता तत्र तादृशानुमितेरप्रसिद्धयाऽव्याप्तिरतोऽनुमितिस्थलेऽनाहार्यदोषविशेषाजन्यज्ञानं निवेश्य कल्पान्तरमाहानाहार्येति। तथा च यत्र तादृशाऽनुमित्यप्रसिद्धिस्तत्र तथाविधमानसोपनीतभानादिकमादायैव लक्षणं सङ्गमनीयमिति भावः।

## विमलप्रभा

अनुमितिसामान्ये इति प्रथमकल्पं परित्यज्यानाहार्यमानसज्ञाने वेति द्वितीयकल्पान्तरानुसरणे बीजमाह यत्पक्षकेत्यादिना। यादृशदोषविषयकनिश्चयानन्तरं=बाधादिनिश्चयाव्यवहितोत्तरम्। तत्र=तादृशलक्ष्ये। तादृशानुमितेः=समूहालम्बनानुमितेः। अतः=हेतोः। तथा च=अनाहार्यमानसज्ञाननिवेशे च। यत्र=यादृशस्थले। तादृशानुमितिः=बाधादिदोषविषयकनिश्चयाव्यवहितोत्तरजायमानसमूहालम्बनरूपघटाद्यनुमितिः। तत्र=तादृशस्थले। अयमर्थः। यादृशाङ्कुरविशेषे वायुपक्षकगन्धसाध्यकपृथ्वीत्वहेतुकस्थले गन्धाभाववद्वायुविषयकनिश्चयानन्तरप्रतिबन्धकवशेन सामग्रीविरहेण वा यस्य कस्यापि पदार्थस्यानुमितिर्न जाता तत्रानुमित्यप्रसिद्धिप्रयुक्तानुमितिसामान्ये निरुक्तोभयाभावासत्त्वेनानुमितिघटितलक्षणागमनात्तादृशबाधादावव्याप्तिः स्यादतोऽनुमितिपदं परित्यज्यानाहार्यमानसज्ञाने वेति कल्पान्तरानुसरणं कृतम्। तथा च तत्रानुमित्यनुत्पादेऽपि गन्धाभाववद्वायुरूपबाधविषयकनिश्चयाव्यवहितोत्तरजायमानज्ञानलक्षणसन्निकर्षजन्यघटादिप्रत्यपक्षे शाब्दबोधे वा वायुविशेष्यकगन्धप्रकारकत्वगन्धव्याप्यपृथिवीत्वप्रकारकत्वोभयाभावस्य वर्त्तमानतया तद्धर्मावच्छिन्नत्वस्य गन्धाभाववद्वायुरूपबाधे सत्त्वात् लक्षणसङ्गतिः।

गादाधरी

बाधादिनिश्चयानन्तरमाहार्यसाध्यादिप्रकारकप्रत्यक्षोत्पत्त्याऽसम्भवोऽव्याप्ति-र्वेत्यत आह अनाहार्येति। शङ्खो न पीत इत्यादिनिश्चयानन्तरं शङ्खादौ पीतत्वादिप्रकारकस्य दोषविशेषजन्यचाक्षुषादेरुत्पत्त्या शङ्खः पीतः शङ्खत्वादित्यादिस्थलीयबाधादावव्याप्तिरतो मानसेति। मानसपदं दोषविशेषाजन्यज्ञानपरम्। तेन नाऽहं गौर इत्यादिनिश्चयानन्तरं मिथ्याज्ञानजन्यवासनादिरूपदोषविशेषजन्यात्मविशेष्यकगौरत्वादिप्रकारकमानसज्ञानस्योत्पत्तावपि अहं गौर आत्मत्वादित्यादिस्थलीयबाधादौ नाव्याप्तिः।

विमलप्रभा

बाधादिनिश्चयानन्तरं=साध्यशून्यपक्षरूपबाधादिविषयकनिश्चयाव्यवहितोत्तरम्। आदिना व्यभिचारादेः परिग्रहः। साध्यदिप्रकारकेत्यत्रादिपदेन साध्यव्याप्यहेतुपरिग्रहः। असम्भवः=लक्ष्यमात्रे लक्षणागमनम्। अव्याप्तिः=लक्ष्यैकदेशे लक्षणागमनम्। आह—दीधितिकार इति शेषः। अतः=हेतोः। तेन=मानसपदस्य दोषविशेषाजन्यज्ञानपरत्वरूपार्थकरणेन। अयमर्थः। अनाहार्यमानसज्ञाने इत्यत्र मानसज्ञानपदस्य दोषविशेषाजन्यज्ञानपरत्वानुपादाने अहं गौर आत्मत्वादित्यादौ नाहं गौर इत्याकारकगौरत्वाभावप्रकारकात्मविशेष्यकनिश्चयाव्यवहितोत्तरमिथ्याज्ञानजन्यवासनादिरूपदोषसहकृतात्मविशेष्यकगौरत्वप्रकारकाहं गौर इत्याकारकमानसज्ञानोत्पत्त्या तत्रात्मविशेष्यकगौरत्वप्रकारकत्वगौरत्वव्याप्यात्मत्वप्रकारताकत्वोभयस्यैव वर्त्तमानतया निरुक्तोभयाभावविरहादव्याप्तिर्बाधादौ स्यादतः मानसपदम् दोषविशेषाजन्यज्ञानपरम्। तथा च गौरत्वाभावविशिष्टात्मविषयकनिश्चयानन्तरमिथ्याज्ञानजन्यवासनादिरूपदोषवशात् जायमान अहं गौरः गौरत्वव्याप्यात्मत्वावांश्चेत्याकारकज्ञानस्य दोषविशेषाजन्यज्ञानपदेन धर्त्तुमशक्यतया घटादिज्ञानस्यैव तादृशनिश्चयाव्यवहितोत्तरानाहार्यदोषविशेषाजन्यज्ञानपदेनोपादेयतया तत्र निरुक्तोभयाभावसत्त्वान्न बाधादावव्याप्तिः।

एवम् मानसज्ञानेऽनाहार्यत्वविशेषणानुपादाने सर्वत्रैव लक्षणाऽगमनप्रसङ्गः, लक्ष्यैकदेशे वा लक्षणागमनादव्याप्तिर्वा, तथा हि ह्रदो वह्निमान् जलादित्यादौ वह्न्यभाववद्ध्रदविषयकनिश्चयाव्यवहितोत्तरजायमानमानसज्ञानसामान्यान्तर्गताहार्यह्रदादिविशेष्यकवह्न्यादिप्रकारकवह्निव्याप्यधूमप्रकारकज्ञानस्यापि ग्रहीतुं शक्यतया तत्र तादृशोभयाभावविरहादतः मानसज्ञानेऽनाहार्यत्वविशेषणमदेयम्। तथा चानाहार्यमानसज्ञानपदेन घटादिज्ञानमादाय लक्षणसमन्वयो बोध्यः।

एवमनाहार्यज्ञानसामान्ये इत्युक्तौ मानसपदानुपादाने अयं शङ्खः पीतः शङ्खत्वादित्यत्र पीतत्वाभाववच्छङ्खत्वावच्छिन्नविषयताशालिनिश्चयाव्यवहितोत्तरपीत्तादिदोषजन्यजायमानशङ्खः पीतः पीतत्वव्याप्यशङ्खत्ववांश्चेत्याकारकप्रत्यक्षे शङ्खे पीतत्वावगाहित्वपीतत्वव्याप्यशङ्खत्वत्वावच्छिन्नावगाहित्वोभयसत्त्वेनोभयाभावविरहात् पीतत्वाभाववच्छङ्खरूपबाधेऽव्याप्तिः। मानसपदोपादाने च मानसज्ञानपदेन दोषविशेषाजन्यज्ञानस्यैवोपादेयत्वेन निरुक्तप्रत्यक्षात्मकज्ञानस्य धर्तुमशक्यतया घटादिविषयकमानसज्ञानमादाय लक्षणसंगतिः।

## गादाधरी

एतेन यादृशपक्षसाध्यहेतुकस्थले यद्विषयकनिश्चयानन्तरं विरोधिसामग्र्यादिवशेन मानसज्ञानं कदापि न जातं तत्राव्याप्तिरित्यपि निरस्तम्। तत्राप्यनुमितिशाब्दबोधादिकमादाय लक्षणगमनसम्भवात्। पक्षतावच्छेदकेत्यादिदलद्वयस्य व्यावृत्तिः पूर्वोक्तरीत्या बोध्या। विरोधिविषयिताप्रयुक्तत्वनिवेशप्रयोजनं स्वयमेवाग्रे वक्ष्यति।

## विमलप्रभा

एतेन = मानसपदस्य दोषविशेषाजन्यज्ञानपरत्वरूपार्थकरणेन। विरोधिसामग्र्यादिवशेन = प्रतिबन्धककारणसमुदायद्वारा, मानसज्ञानप्रतिबन्धकचाक्षुषसामग्रीवशेनेति यावत्। तत्र = तादृशस्थले। निरस्तमित्यस्य पूर्वोक्तैतेन सहान्व-

यः। तत्रापि=यादृशसाध्यहेतुकस्थले यद्विषयकनिश्चययानन्तरं मानसज्ञानं न जातं तादृशस्थलेऽपि। पक्षतावच्छेदकेत्यादिदलद्वयस्य=पक्षतावच्छेदकावच्छिन्नसाध्यतावच्छेदकावच्छिन्नसाध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वरूप-दलद्वयस्य। पूर्वोक्तरीत्या=प्रथमलक्षणोक्तप्रकारेण। स्वयमेव=दीधितिकारेणैव। अग्रे=एवञ्चेत्यादिनाऽग्रिमग्रन्थे। वक्ष्यति=प्रतिपादयिष्यति। अयमर्थः। मानसज्ञानपदस्य यदि मानससाक्षात्काररूप एवार्थस्तदा यादृशपक्षकयादृशसाध्यकयादृशहेतुकस्थले दोषविषयकनिश्चयाव्यवहितोत्तरचाक्षुषादिसामग्रीसमवधानवशतः यादृशपक्षसाध्यहेतुकमानसज्ञानं कदापि कस्यापि न जातं तादृशस्थलीयदोषे मानसज्ञानघटितलक्षणागमनादव्याप्तिप्रसङ्गः। अतः मानसपदम् दोषविशेषाजन्यज्ञानपरम्। तथा च तादृशस्थले मानसज्ञानाजननेऽपि दोषविशेषाजन्यज्ञानपदेन तादृशशाब्दबोधानुमित्याद्यात्मकज्ञानमादाय तादृशज्ञाने निरुक्तोभयाभावसत्त्वात् लक्षणसंगतिर्भवत्येव। अत्रानुमितौ तादृशमानसज्ञाने वा पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वाभावं विहाय केवलतादृशपक्षे साध्यनिरूपितव्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहित्वाभावमात्रनिवेशे ह्रदो वह्निमान् जलादित्यादौ वह्न्यभाववद्ध्रदरूपबाधे वह्न्यभावव्याप्यवद्ध्रदरूपसत्प्रतिपक्षे चाऽव्याप्तिः, तादृशबाधसत्प्रतिपक्षादिविषयकनिश्चयाव्यवहितोत्तरजायमानवह्निव्याप्यजलवानित्यनुमितौ ह्रदे वह्निव्याप्यधूमवैशिष्ट्यावगाहित्वस्यैव वर्त्तमानतया तदभावविरहात्। अतः तादृशपक्षे तादृशसाध्यवैशिष्ट्यावगाहित्वरूपप्रथमदलप्रवेशः, तथा च तादृशानुमितौ तादृशह्रदे तादृशवह्निवैशिष्ट्यावगाहित्वविरहप्रयुक्तोभयाभावसत्त्वान्नाव्याप्तिरिति। एवम् केवलपक्षतावच्छेदकावच्छिन्नपक्षे साध्यतावच्छेदकावच्छिन्नसाध्यवैशिष्ट्यावगाहित्वाभावमात्रनिवेशे द्वितीयदलाऽप्रवेशेऽयोगोलकं धूमवद्वह्नेरित्यत्र व्यभिचारेऽयं गौरश्वत्वादित्यत्र गोत्वासमानाधिकरणाश्वत्वरूपविरोधे धूमाभाववद्रूपस्वरूपासिद्धौ चाऽव्याप्तिः, व्यभिचारविरोधस्वरूपासिद्धिविषयकनिश्चयाव्यवहितोत्तरजायमानपक्षस्साध्यवानित्यनुमितौ पक्षे साध्यवैशिष्ट्यावगाहित्वस्यैव वर्त्तमानतया तदभावविरहात्। तदुपादाने च तादृशव्यभिचारादिविषयकनिश्चयोत्तरजायमानपक्षः साध्यवान् साध्यव्याप्यहेतुमांश्चेत्याकारकानुमितौ विरोधिविषयिताप्रयुक्तनिरुक्तोभयाभावसत्त्वेन नाव्याप्तिः।

एवम् द्रव्यत्वादिरूपेणानुमितिमादाय ह्रदो वह्निमान् जलादित्यादौ बाधादावव्याप्तिवारणाय पक्षतावच्छेदकोपादानम्, अन्यथा वह्न्यभाववद्ध्रदविषयकनिश्चयाव्यवहितोत्तरजायमानद्रव्यं वह्निमत् वह्निव्याप्यजलवच्चेत्याकारकानुमितौ द्रव्यात्मकह्रदे वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यजलवैशिष्ट्यावगाहित्वोभयस्यैव सत्त्वेन तदभावविरहात्। तदुपादाने च प्रकृते पक्षतावच्छेदकं यत् ह्रदत्वं तदवच्छिन्नविशेष्यकह्रदो वह्निमान् वह्निव्याप्यजलवानित्यनुमितौ तादृशोभयाभावसत्त्वान्न दोषः। साध्याऽप्रसिद्धिसाधनाऽप्रसिद्ध्यव्याप्तिवारणाय साध्यतावच्छेदकहेतुतावच्छेदकयोः प्रवेश आवश्यकः, अन्यथा ह्रदः काञ्चनमयवह्निमान् काञ्चनमयधूमादित्यादौ काञ्चनमयत्वाभाववद्वह्निकाञ्चनमयत्वाभाववद्धूमविषयकनिश्चयोत्तरजायमानह्रदो वह्निमान् वह्निव्याप्यधूमवानित्यनुमितौ साध्यतावच्छेदकहेतुतावच्छेदकाद्यघटितकेवलसाध्यहेतुप्रकारकत्वोभयाभावविरहात्। तदुपादाने च साध्यतावच्छेदककाञ्चनमयत्वहेतुतावच्छेदककाञ्चनमयत्वघटितोभयाभावस्य तत्र सत्वान्न दोषः।

निर्वह्निः पर्वतो वह्निमान् धूमादित्यत्रोदासीने घटादावतिप्रसङ्गभङ्गाय विरोधिविषयिताप्रयुक्तत्वदलसार्थक्यम् एवञ्चेत्यादिनाऽग्रे विधास्यति दीधितिकार अतस्तदर्थमत्र प्रयासो न कृत इति भावः।

## गादाधरी

यत्र विषयविशेषे समूहालम्बनज्ञानं न कस्यापि जातं तत्र पक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहित्वाभावरूपविशिष्टाभावाऽप्रसिद्ध्याऽव्याप्तिरतो विशिष्टाभावमुपेक्ष्योभयाभावनिवेशः कृतः।

तादृशोभयाभावप्रयोजकविरोधिविषयितावत्त्वं यद्रूपविशिष्टविषयकत्वव्यापकं तद्रूपावच्छिन्नत्वं दोषत्वमित्यस्य सम्यक्त्वेऽपि यथा सन्निवेशे न वैयर्थ्यम्।

## विमलप्रभा

विशिष्टाभावमुपेक्ष्योभयाभावनिवेशे बीजमाह यत्रेति। यत्र=यादृशस्थले। विषयविशेषे=पक्षसाध्यहेतुरूपविषयविशेषे। कस्यापि=जनस्य। तत्र=तादृश-

स्थले । अतः = हेतोः । उपेक्ष्य = परित्यज्य । उभयाभावनिवेशः = तादृशपक्षे तादृश-साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावनिवेशः । कृतः = दीधितिकारेणेति शेषः । तादृशोभयाभावप्रयोजकीभूतविरोधिविषयितावत्त्वं = पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकसाध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकत्वतादृशसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नहेतुप्रकारकत्वोभयाभावप्रयोजकीभूता या विरोधिविषयितातद्वत्त्वम् । तद्रूपावच्छिन्नत्वं = यद्रूपाववच्छिन्ने लक्ष्ये लक्षणं सङ्गमनीयम् तादृशलक्ष्यतावच्छेदकधर्मावच्छिन्नत्वम् । यथा सन्निवेशे = तावतां पदार्थानां यथोक्तरीत्याऽन्वयस्य विवक्षणे । न वैयर्थ्यम = यद्रूपावच्छिन्नविषयकनिश्चयाऽव्यवहितोत्तरानुमितित्वव्यापकत्वयद्रूपावच्छिन्नविषयकत्वव्यापकत्वयोरभावस्वरूपयोर्विभिन्नतया स्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकं यत् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तदवच्छिन्नाविषयकप्रतीतिविषयतानवच्छेदकत्वरूपवैयर्थ्यं प्रकृते न सम्भवति । अयमर्थः । यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्ये पक्षतावच्छेदकावच्छिन्नपक्षे साध्यतावच्छेदकावच्छिन्नसाध्यवैशिष्ट्यावगाहित्वविशिष्टहेतुतावच्छेदकावच्छिन्नहेतुवैशिष्ट्यावगाहित्वाभावस्तद्रूपावच्छिन्नत्वं हेत्वाभासत्वमिति लघुलक्षणेनैव सामाञ्जस्ये उभयाभावघटितगुरुभूतलक्षणप्रणयनप्रयासो निरर्थक इति चेदविचारितरमणीयमिदम, तथा सति यत्राङ्कुरविशेषे पक्षतावच्छेदकावच्छिन्नपक्षे साध्यतावच्छेदकाच्छिन्नसाध्यवैशिष्ट्यावगाहित्वविशिष्टतादृशसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नहेतुवैशिष्ट्यावगाहिज्ञानं कदापि कस्यापि पुंसः न जातम् तत्र तादृशविशिष्टरूपप्रतियोग्यप्रसिद्ध्या विशिष्टाभावस्यापि सुतरामप्रसिद्धत्वादव्याप्तिर्दुर्वारैवातः विशिष्टाभावमपहाय तादृशोभयाभावघटितलक्षणमनुसृतम । तथा च तत्र विशिष्टज्ञानाजननेऽपि प्रत्येकज्ञाने प्रसिद्धस्य पक्षे साध्यवैशिष्ट्यावगाहित्वस्य साध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वस्य च दोषविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्ये उभयाभावस्य प्रसिद्धिसम्भवान्नाव्याप्तिः ।

एवम् , प्रकृतपक्षतावच्छिन्नपक्षे प्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यवैशिष्ट्यावगाहित्वतादृशसाध्यव्याप्यतादृशहेतुवैशिष्ट्यावगाहित्वोभयाभावप्रयोजकविरोधिविषयितावत्त्वं यद्रूपावच्छिन्नविषयकत्वव्यापकं द्रतूपावच्छिन्नत्वम् हेत्वाभासत्वमिति लघु-

लक्षणानुसरणेऽपि यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकत्वयद्रूपावच्छिन्नविषयकत्वव्यापकत्वयोर्विभिन्नतया प्रकृतलक्षणस्वरूपधर्मे उभयाभावघटितलक्षणस्वरूपधर्मसामानाधिकरण्यविरहेण वैयर्थ्यलक्षणसमन्वयाभावप्रयुक्ततावतां पदार्थानाम् यथोक्तरीत्यान्वयविवक्षायां प्रकृतलघुभूतलक्षणस्य लक्षणान्तरतया प्रकृते न वैयर्थ्यसम्भावनेति हृदयम् ।

## बलदेवी

तादृशोभयाभावप्रयोजकेत्यादि भट्टाचार्यः ।

अत्र तादृशोभयाभावप्रयोजकविरोधिविषयितायां यद्रूपविशिष्टविषयकत्वव्यापकत्वमनुक्त्वा तत्सामानाधिकरण्यमात्रोपादाने बाधाद्येकदेशेऽतिव्याप्तिः, बाधादिज्ञानीयह्रदत्वादिविशिष्टविषयकत्वसामानाधिकरण्यस्य तादृशविरोधिविषयितायां सत्त्वात् । तदुपादाने च ह्रद इत्याकारकज्ञाने तदभावान्नातिव्याप्तिः ।

ननु ह्रदो वह्निमानित्यादौ वह्न्यभाववद्ध्रदविषयकजातिमान् वह्न्यभाववानिति ज्ञाने वक्ष्यमाणविरोधिविषयिताया अभावेन बाधाद्यसंग्रहभिया यद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्ययद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकत्वस्य विरोधिविषयितायां विवक्षणीयतया सामानाधिकरण्यमात्रनिवेशेऽपि नैकदेशेऽतिव्याप्तिः तादृशैकदेशमात्रविषयकनिश्चये कुत्रापि तादृशविषयिताया अभावात् । न च तथापि गोत्वाभावो गोत्वाभाववानित्यत्र गोत्वाभावेऽतिव्याप्तिः, गोत्वाभावत्वविशिष्टविषयित्वाव्यापकविषयिताशून्यगोत्वाभावविषयकगोत्वाभावो गोत्ववानिति निश्चयसामानाधिकरण्यस्य तादृशविरोधिविषयितायां सत्त्वादिति वाच्यम् । यद्रूपावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्नविषयिता तादृशविशिष्टविषयित्वाव्यापिका तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नविषयिताशून्यत्वस्य विवक्षणीयत्वादिति चेन्न, कपिसंयोगी एतद्वृक्षत्वादित्यादौ कपिसंयोगाभाववद्वृक्षादावतिव्याप्तेः, अव्याप्यवृत्तित्वज्ञानानास्कन्दिततद्विषयकनिश्चयान्तर्भावेण विरोधिविषयितायां कपिसंयोगाभाववद्वृक्षविषयकत्वसामानाधिकरण्यसत्त्वात् ।

व्यापकत्वनिवेशे नायन्दोषः। लक्षणेऽव्याप्यवृत्तित्वभ्रमानास्कन्दितत्वस्यैव निश्चये निवेशनीयतया वृक्षे कपिसंयोगाभावेऽव्याप्यवृत्तित्वज्ञानस्य प्रमात्वेन तद्भ्रमानास्कन्दिताऽव्याप्यवृत्तित्वप्रमाकालीनतादृशविशिष्टविषयकनिश्चये विरोधिविषयित्वाभावात्।

न च ज्ञानभेदेन विषयितायाः भेदाभावेनाव्याप्यवृत्तित्वज्ञानकालीनकपिसंयोगाभाववद्वृक्षविषयकनिश्चयेऽपि विरोधिविषयितायाः सत्त्वात् व्यापकत्वनिवेशेऽपि नातिव्याप्तिवारणं सम्भवतीति वाच्यम्। विरोधिविषयितावत्त्वमित्यनेन तदधिकरणत्वस्य विशेषणत्वात्, तथा च ज्ञानभेदेन विषयिताभेदाभावेऽपि तदधिकरणत्वस्य विभिन्नतयाऽव्याप्यवृत्तित्वज्ञानास्कन्दितकपिसंयोगाभाववद्वृक्षविषयकनिश्चये विरोधिविषयितासत्त्वेऽपि तादृशोभयाभावप्रयोजकत्वविशिष्टविरोधिविषयिताधिकरणत्वस्याभावेनातिव्याप्तिविरहात्।

अथैवमपि असाधारण्येऽव्याप्तिः, असाधारण्यविषयकत्वव्यापकत्वस्य विरोधिविषयितायामभावादिति चेन्न, साध्यव्यापकीभूताभावप्रतियोगिहेतुमत्ताज्ञानभिन्नत्वाऽसाधारण्यविषयकत्वोभयाभाववद्यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकत्वस्य विरोधिविषयितायां वक्तव्यत्वात्, तथा च तादृशहेतुमत्ताज्ञानमेवासाधारण्यविषयकमुभयाभाववद् भवति तत्र च तादृशहेतुविषयतैव पक्षे साध्याभावव्याप्यविषयितात्वेन तादृशविरोधिविषयितेति तत्संग्रहात्।

अत्र चोभयाभावप्रयोजकाधिकरणतायां विषयितत्रीयत्वानुपादाने ह्रदो जलवद्ध्रदकालीनवह्निमानित्यत्र वह्न्यभाववज्जलवत्यतिव्याप्तिः, वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयकोक्तसाध्यवैशिष्ट्यावगाहिनिश्चयस्याहार्यत्वनियमेन तद्विषयकानाहार्यनिश्चयत्वस्य तादृशोभयाभावप्रयोजकप्रकृतपक्षसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतानियतत्वात्।

न च धूमव्यभिचारिवह्निर्धूमवान् वह्नेरित्यत्र मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः यथाश्रुतविशिष्टान्तराघटितत्वेन न वारयितुं शक्यते, मेयत्ववान् धूमाभाववान् मेयत्ववान् धूमव्यभिचारिवह्निरिति ज्ञानयोर्ज्ञानविशिष्टज्ञानत्वेन पक्षे साध्य-

वैशिष्ट्यावगाहिज्ञानं प्रति प्रतिबन्धकतया तादृशपक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायामुभयाभावप्रयोजिकायां मेयत्वविशिष्टव्यभिचारविषयिताप्रयोज्यायां शुद्धव्यभिचारविषयित्वाऽप्रयोज्यत्वस्य सत्त्वात्। अतो विशिष्टान्तराऽघटितत्वघटकस्व विषयितानिष्ठप्रयोजकतायां ज्ञानवैशिष्ट्यनिष्ठप्रयोजकतानिरूपकप्रयोज्यतावदधिकरणनिष्ठप्रयोज्यतानिरूपितत्वासाधारण्यविषयित्वाऽवृत्तित्वोभयाभावो निवेशनीयः। तथा चोक्तस्थले मेयत्वविशिष्टव्याभिचारविषयितानिष्ठप्रयोजकतायामुभयाभावसत्त्वान्नातिव्याप्तिः। एवञ्चोक्तस्थले वह्न्यभाववज्जलवति नातिव्याप्तिः, पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतानिष्ठप्रयोजकतायाः ज्ञानवैशिष्ट्यनिष्ठप्रयोजकतानिरूपकतया वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयितानिष्ठप्रयोजकतायामुभयाभावाभावेन विशिष्टान्तराऽघटितत्वाभावादिति वाच्यम्। कपिसंयोगाभाववान् वृक्षः कपिसंयोगीत्यत्र कपिसयोगाभाववद्वृक्षेऽतिव्याप्तेः, तद्विषयकानाहार्यनिश्चयत्वव्यापकत्वस्याऽऽहार्यमात्रवृत्तिपक्षे साध्यवैशिष्ट्यावगाहित्वस्य योऽभावस्तदधिकरणतायां सत्त्वात्, अधिकरणतायां विषयित्वीयत्वोपादाने च नातिव्याप्तिरिति दिक्।

## दीधितिः

पक्षतावच्छेदकवैशिष्ट्यादिकञ्च वैज्ञानिकं न तु वास्तविकं ग्राह्यम्।

## गादाधरी

ननु काञ्चनमयः पर्वतो वह्निमान् धूमादित्यादौ पक्षतावच्छेदकविशिष्टपक्षाद्यप्रसिद्धया विशिष्टपक्षे विशिष्टसाध्यादिवैशिष्ट्यावगाहित्वाद्यप्रसिद्धिरित्याश्रयासिद्धयादावव्याप्तिरित्याह पक्षतावच्छेदकेति। आदिपदात् साध्यतावच्छेदकवैशिष्ट्यादिपरिग्रहः। वैज्ञानिकमिति। तत्तत्प्रकारेण ज्ञायमानत्वरूपमित्यर्थः। तथा च पर्वतादेः काञ्चनमयत्वादिवैशिष्ट्यस्य वास्तविकस्य विरहेऽपि तेन रूपेण ज्ञायमानत्वमादाय लक्षणसमन्वय इति भावः।

न च ह्रदो वह्निमानिति निश्चयानन्तरं जायमाने ह्रदो द्रव्यं जलमयो वह्निमानित्याद्याकारकसमूहालम्बने ह्रदत्वादिना ज्ञायमाने वह्न्यादिवैशिष्ट्यावगाहित्व-

सत्त्वादसम्भव इति वाच्यम् । पक्षतावच्छेदकावच्छिन्ना या पक्षनिष्ठविशेष्यता तन्निरूपिता या साध्यतावच्छेदकावच्छिन्ना साध्यप्रकारता या च साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारतानिरूपितव्याप्यत्वप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारता तत्प्रतियोगित्वयोरवगाहित्वान्तद्वयेन विवक्षणात्, विशिष्टविषयाप्रसिद्धावपि पर्वताद्यंशे काञ्चनमयत्वाद्यवगाहिभ्रमविषयताया व्यधिकरणकाञ्चनमयत्वाद्यवच्छिन्नायाः प्रसिद्धया लक्षणसमन्वयात् ।

व्याप्तिप्रकारतास्थले च निरूप्यनिरूपकभावापन्ना व्याप्तिघटकतत्तत्पदार्थप्रकारता निवेशनीया । तेन धूमवान् वह्नेरित्यादौ वह्निव्यापकधूमसामानाधिकरण्यरूपव्याप्तेरप्रसिद्धावपि न क्षतिः ।

## विमलप्रभा

पक्षतावच्छेदकेत्यादिदीधितिग्रन्थोत्थितौ बीजमाह नन्विति । पक्षतावच्छेदकविशिष्टपक्षाद्यप्रसिद्धया = काञ्चनमयत्वादिरूपं यत् पक्षतावच्छेदकं तदवच्छिन्नपर्वतादिरूपपक्षाद्यप्रसिद्धया । विशिष्टपक्षे = काञ्चनमयत्वविशिष्टपर्वते । विशिष्टसाध्यादिः = काञ्चनमयत्वविशिष्टवह्न्यादिः । आदिना विशिष्टसाधनसंग्रहः । आश्रयासिद्धयादावित्यत्रादिपदेन साध्याऽप्रसिद्धिसाधनाऽप्रसिद्धयादिपरिग्रहः । तत्प्रकारेण = पक्षतावच्छेदककाञ्चनमयत्वादिप्रकारेण । ज्ञायमानत्वम् = ज्ञानविषयत्वम् । तथा च = पक्षतावच्छेदकादिवैशिष्ट्यस्य वैज्ञानिकत्वे च । विरहेऽपि = अप्रसिद्धावपि । तेन रूपेण = पक्षतावच्छेदककाञ्चनमयत्वादिरूपेण । ज्ञायमानत्वमादाय = ज्ञानविषयत्वमादाय ।

शङ्कते नचेति । न चेत्यस्य वाच्यमित्यनेनान्वयः । ह्रदत्वादिना ज्ञायमाने = ह्रदत्वादिरूपेण जायमानं यत् समूहालम्बनात्मकं ह्रदो द्रव्यं जलमयो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकं ज्ञानं तद्विषयीभूते जलमय इत्याकारके। विशिष्टविषयाऽप्रसिद्धावपि = काञ्चनमयत्वविशिष्टपर्वतादिरूपपक्षस्याऽप्रसिद्धत्वेऽपि । तेन = निरूप्यनिरूपकभावापन्नव्याप्तिघटकतत्तत्प्रकारतायाः निवेशेन । न क्षतिः = न सव्यभिचारदावव्याप्तिः । अयमर्थः । उभयाभावघटितपर्यवसितलक्षणकरणेऽपि काञ्चनमयपर्वतो वह्निमान् धूमादित्यादौ पक्षतावच्छेदकीभूतकाञ्चनमयत्ववैशिष्ट्यस्य वास्तविकस्य प्र-

कृतपक्षे पर्वतेऽप्रसिद्ध्या प्रकृतपक्षतावच्छेदकावच्छिन्ने प्रकृतसाध्यतावच्छेदकावच्छिन्नवैशिष्ट्यावगाहित्वघटितसमुदायाऽप्रसिद्धिप्रयुक्तताद्दशोभयाभावस्याप्यप्रसिद्धतया काञ्चनमयत्वाभाववत्पर्वतरूपाश्रयासिद्धौ लक्षणागमनादव्याप्तिः। एवम् पर्वतः काञ्चनमयवह्निमान् काञ्चनमयधूमादित्यादौ साध्यतावच्छेदककाञ्चनमयत्ववैशिष्ट्यस्य वह्नौ हेतुतावच्छेदककाञ्चनमयत्ववैशिष्ट्यस्य धूमेऽप्रसिद्धतया काञ्चनमयत्वाभाववद्वह्निरूपसाध्याऽप्रसिद्धौ काञ्चनमयत्वाभाववद्धूमरूपसाधनाऽप्रसिद्धौ च लक्षणागमनादव्याप्तिः, अतः प्रकृते पक्षतावच्छेदकसाध्यतावच्छेदकहेतुतावच्छेदकवैशिष्ट्यं न वास्तविकम्। किन्तु काञ्चनमयत्वादिरूपपक्षतावच्छेदकादिप्रकारेण ज्ञानविषयत्वरूपमेव प्रकृते वाच्यम्। तथा च पर्वतादौ वास्तविककाञ्चनमयत्ववैशिष्ट्यस्याऽप्रसिद्धावपि काञ्चनमयत्वप्रकारेण पर्वतादिविषयकभ्रमात्मकज्ञानस्य प्रसिद्धतया काञ्चनमयत्वादिरूपपक्षतावच्छेदकादिप्रकारेण ज्ञानविषयत्वरूपपक्षतावच्छेदकादिवैशिष्ट्यस्य सुप्रसिद्धत्वात्तदादायैवाश्रयासिद्ध्यादौ लक्षणसमन्वय इति भावः।

ननु पक्षतावच्छेदकादिरूपेण ज्ञानविषयत्वरूपमेव यदि पक्षतावच्छेदकादिवैशिष्ट्यं तदा ह्रदो वह्निमान् जलादित्यादौ वह्न्यभाववद्ध्रदरूपबाधादावसम्भवः, वह्न्यभाववद्ध्रदादिविषयकनिश्चयाव्यवहितोत्तरजायमानह्रदो द्रव्यं जलमयो वह्निमान् वह्निव्याप्यजलवांश्चेत्याकारकसमूहालम्बनानुमितौ ह्रदत्वरूपपक्षतावच्छेदकप्रकारेण समूहालम्बनात्मकज्ञानविषये जलमये वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यजलवैशिष्ट्यावगाहित्वोभयस्यैव वर्त्तमानतया ताद्दशोभयाभावविरहादिति चेन्न, पक्षतावच्छेदकावच्छिन्नपक्षे साध्यतावच्छेदकावच्छिन्नसाध्यवैशिष्ट्यावगाहित्वताद्दशसाध्यनिरूपितव्याप्तिविशिष्टताद्दशहेतुवैशिष्ट्यावगाहित्वरूपदलद्वयेन पक्षतावच्छेदकावच्छिन्ना या पक्षनिष्ठा विशेष्यता तन्निरूपिता या साध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठप्रकारता ताद्दशप्रकारताकत्वसाध्यतावच्छेदकावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नसाध्यप्रकारतानिरूपितव्याप्तित्वावच्छिन्नविशेष्यत्वावच्छिन्नव्याप्तित्वावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नहेतुतावच्छेदकावच्छिन्नप्रकारताकत्वयोरेव शिरोमणिग्रन्थेनोपादेयतया नासम्भवसम्भावना। तथा हि ह्रदो वह्निमान् जलादित्यादौ वह्न्यभाववद्ध्रदादिविषयकनिश्चयोत्तरजायमानह्रदो द्रव्यं जलमयो वह्नि-

मान् वह्निव्याप्यजलवानित्याकारकसमूहालम्बनज्ञाने वह्नित्वावच्छिन्नवह्निनिष्ठप्रकारतानिरूपितव्याप्तिप्रकारतानिरूपितजलत्वावच्छिन्नप्रकारताकत्वरूपद्वितीयदलसत्त्वेऽपि ह्रदत्वावच्छिन्नह्रदनिष्ठविशेष्यतानिरूपिता या वह्नित्वावच्छिन्नवह्निनिष्ठप्रकारता तादृशप्रकारताकत्वरूपप्रथमदलविरहेण तादृशोभयाभावसत्त्वात् वह्न्यभाववद्ध्रदरूपबाधे लक्षणसंगतिः। एवम् काञ्चनमयः पर्वतः काञ्चनमयवह्निमान् काञ्चनमयधूमादित्यादौ काञ्चनमयत्वविशिष्टपर्वतविषयिताया अप्रसिद्धत्वेऽपि पर्वताद्यंशे काञ्चनमयत्वावगाहिभ्रमात्मकज्ञानस्य सुप्रसिद्धतया तादृशभ्रमज्ञानीयकाञ्चनमयपर्वतत्वावच्छिन्नविषयताया अपि प्रसिद्धत्वेन काञ्चनमयत्वाद्यभाववत्पर्वतादिविषयकनिश्चयोत्तरजायमानगृहं घटवत्घटव्याप्यपटवच्चेत्याकारकसमूहालम्बनज्ञाने काञ्चनमयत्वाद्यवच्छिन्नपर्वतनिष्ठविशेष्यतानिरूपिततादृशवह्निप्रकारताकत्वतादृशवह्निप्रकारतानिरूपितव्याप्तिप्रकारतानिरूपिततादृशधूमप्रकारताकत्वोभयाभावसत्त्वेनाश्रयासिद्धिसाध्याऽप्रसिद्धिस्वरूपासिद्धिसाधनाप्रसिद्ध्यादौ लक्षणसंगतिः। एवम् व्याप्तिप्रकारतापदेन निरूप्यनिरूपकभावापन्नव्याप्तिघटकतत्तत्पदार्थप्रकारतायाः प्रवेशे धूमवान् वह्नेरित्यादौ धूमाभाववद्वृत्तिवह्निरूपव्यभिचारेऽव्याप्तिः, तत्र वह्निव्यापकधूमसमानाधिकरण्यरूपायाः व्याप्तेरप्रसिद्ध्या धूमाभाववद्वृत्तिवह्निरूपव्यभिचारविषयकनिश्चयाव्यवहितोत्तरजायमानघटाद्यनुमितौ धूमवैशिष्ट्यावगाहित्वधूमव्याप्यवह्निवैशिष्ट्यावगाहित्वोभयाभावासत्त्वात्। तदुपादाने च परस्परनिरूप्यनिरूपकभावापन्नव्याप्तिघटकीभूतहेतुसाध्यादिघटिततत्तत्प्रकारतायाः प्रसिद्धतया तादृशव्याप्तेरप्रसिद्धावपि भ्रमात्मकज्ञानीयसाध्यनिरूपितव्याप्तिविशिष्टहेतुप्रकारताकत्वस्य सुप्रसिद्धत्वेन धूमाभाववद्वृत्तिवह्निरूपव्यभिचारविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्ये तादृशोभयाभावसत्त्वान्न दोषः।

## दीधितिः

व्याप्तिश्चान्वयतो व्यतिरेकतश्च ग्राह्या, तादृशावगाहित्वप्रसिद्धिराहार्यज्ञान एवाभ्युपेतव्या अनन्यगतिकत्वात्।

## गादाधरी

नन्वत्र व्याप्तिपदेनान्वयव्याप्तिश्चेद्विवक्ष्यते तदा व्यतिरेकव्याप्तिज्ञानविरोधिनि हेत्वादिनिष्ठाभावप्रतियोगित्वादिरूपाऽनुपसंहारित्वेऽव्याप्तिस्तज्ज्ञानस्यान्वयव्याप्तिज्ञानाविरोधित्वात्, व्यतिरेकव्याप्तिविवक्षणे च हेतुनिष्ठसाध्याभाववद्वृत्तित्वसाध्यतावच्छेदकनिष्ठहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वादावव्याप्तिः, तज्ज्ञानस्य ग्राह्याभावाद्यनवगाहितया व्यतिरेकव्याप्तिज्ञानविरोधित्वे मानाभावात्, अत आह= व्याप्तिश्चेति। अन्वयतः =अन्वयनिरूपिता, प्रकृतहेतुनिष्ठा साध्यनिरूपितेति यावत् सा चात्यन्ताभावान्योन्याभावभेदेन भिन्ना, अव्यभिचरितत्वहेतुव्यापकसाध्यसमानाधिकरण्यरूपा नानाविधैव ग्राह्या, अतोऽत्यन्ताभावादिगर्भव्याप्तिज्ञाने अन्योन्याभावगर्भव्यभिचारज्ञानस्य व्यापकत्वादिज्ञाने साध्याभाववद्वृत्तिहेत्वादिज्ञानस्य ग्राह्याभावाद्यनवगाहितया अविरोधित्वेऽपि न क्षतिः। व्यतिरेकतः=व्यतिरेकनिरूपिता, साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपा, ग्राह्या =व्याप्तिपदेन विवक्षणीया, तथा च तत्तद्व्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताप्रतियोगित्वकूटाभावो निवेशनीय इति भावः।

ननु निर्वह्निः पर्वतो वह्निमानित्यादौ पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वमेवाऽप्रसिद्धमिति तत्र कथं लक्षणसमन्वय इत्यत आह तादृशावगाहित्वप्रसिद्धिरिति। आहार्यज्ञान एवेति। निर्वह्नित्वविशिष्टपर्वते वह्निप्रत्यक्षं जायतामित्याकारकेच्छाजन्यप्रत्यक्ष एवेत्यर्थः।

## विमलप्रभा

शङ्कते नन्वत्रेति। अत्र=अत्र वदन्तिकल्पोक्तलक्षणे। घटकत्वमत्रेतिसप्तम्यर्थस्तस्य व्याप्तावन्वयः। व्याप्तिपदेन=एतल्लक्षणघटकव्याप्तिपदद्वारा। अन्वयव्याप्तिः =अव्यभिचरितत्वरूपा व्यापकसामानाधिकरण्यरूपा वा। व्यतिरेकव्याप्तिज्ञानविरोधिनि=साधननिष्ठसाध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्य -

तिरेकव्याप्तिज्ञानप्रतिबन्धकं यत् ज्ञानं तद्विषये। साध्यादिनिष्ठाभावाप्रतियोगित्वादिरूपानुपसंहारित्वे =साध्याभावव्यापकीभूताभावाप्रतियोगित्वरूपं यदनुपसंहारित्वं तत्र। तज्ज्ञानस्य=अनुपसंहारिनिश्चयस्य। अन्वयव्याप्तिज्ञानाविरोधित्वात्=अव्यभिचरितत्वादिरूपव्याप्तिज्ञानाप्रतिबन्धकत्वात्। हेतुनिष्ठसाध्याभाववद्वृत्तित्वसाध्यतावच्छेदकनिष्ठहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वादौ =साधननिष्ठ-साध्याभाववद्वृत्तित्वरूपव्यभिचारे, हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वविशिष्टसाध्यतावच्छेदकरूपव्यभिचारे च। तज्ज्ञानस्य=तादृशव्यभिचारनिर्णयस्य। ग्राह्याभावाद्यनवगाहितया=तदभावाद्यनवगाहितया, =तदभावाद्यविषयकत्वेन,। विरोधित्वे—प्रतिबन्धकत्वे। मानाभावात्=प्रामाणाभावात्। अतः=हेतोः। आह दीधितिकार इति शेषः। सा च=अन्वयव्याप्तिश्च अव्यभिचरितत्वहेतुव्यापकसाध्यसामानाधिकरण्यरूपा= साध्याभाववदवृत्तित्वहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्याधिकरणनिरूपितवृत्तित्वरूपा। नानाविधा=अनेकप्रकारा। अतः=हेतोः,। ग्राह्याभावाद्यनवगाहितया=ग्राह्यीभूततदभावाविषयकत्वेन। अविरोधित्वेऽपि=अप्रतिबन्धकत्वेऽपि। न क्षतिः=नानुपसंहारिव्यभिचारादावव्याप्तिः। तथा च=व्याप्तिपदेनोभयविधव्याप्तिप्रवेशे च। निवेशनीयः=प्रकृतलक्षणे इति शेषः। पक्षतावच्छेदकविशिष्टे=निर्वह्नित्वादिविशिष्टे। साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वं= वह्नित्वविशिष्टवह्निवैशिष्ट्यावगाहित्वम्। अप्रसिद्धम्=आहार्यत्वादनाहार्यज्ञानमप्रसिद्धम्। तत्र=निर्वह्निः पर्वतो वह्निमान् धूमादित्यत्राऽऽश्रयासिद्ध्यादौ। इत्यत आह=इति हेतोराह दीधितिकार इति शेषः। अयमर्थः। अत्र वदन्तिकल्पोक्तलक्षणघटकनिरुक्तोभयाभावप्रतियोगिकोटिप्रविष्टव्याप्तिपदेन यद्यन्वयव्याप्तिरभिधीयते तदा सर्वमनित्यं प्रमेयत्वादित्यादौ अनित्यत्वाभावव्यापकाभावाप्रतियोगित्वविशिष्टप्रमेयत्वरूपानुपसंहारित्वेऽव्याप्तिः; प्रमेयत्वमत्यन्ताभावाऽप्रतियोगीतिनिश्चयस्य साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिज्ञानत्वावच्छिन्नं प्रत्येव प्रतिबन्धकतया अन्वयव्याप्तिज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतायास्तादृशानुपसंहारिविषयकनिश्चयेऽसत्त्वेन तादृशानुपसंहारिविषयकनिश्चयो-

त्तरानुमितिसामान्ये विरोधिविषयिताप्रयुक्तपक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावविरहात् ।

अतो यदि व्याप्तिपदेन व्यतिरेकव्याप्तिरेव विवक्ष्यते तदा प्रमेयत्वमत्यन्ताभावाप्रतियोगीति निश्चयेऽनित्यत्वाभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिज्ञानप्रतिबन्धकतासत्त्वेन तादृशानुपसंहारिविषयकनिश्चयोत्तरघटाद्यनुमितौ विरोधिविषयिताप्रयुक्तनिरुक्तोभयाभावसत्त्वान्न कोऽपि दोष इति चेत्तथापि धूमवान् वह्नेरित्यादौ धूमाभाववद्वृत्तिर्वह्निरूपव्यभिचारेऽव्याप्तिः वह्निसमानाधिकरणाभावप्रतियोगितावच्छेदकं धूमत्वमित्याकारकनिश्चये धूमाभाववद्वृत्तित्वविशिष्टवह्निविषयकनिश्चये च धूमाभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिप्रतिबन्धकताविरहेणोक्तव्यभिचारविषयकनिश्चयोत्तरजायमानधूमवान् धूमाभावव्यापकीभूताभावप्रतियोगित्वरूपधूमनिरूपितव्यतिरेकव्याप्तिविशिष्टवह्निमांश्चेत्याकारकानुमितौ विरोधिविषयिताप्रयुक्तनिरुक्तोभयाभावविरहात् । अतस्तादृशसाध्यनिरूपितव्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहित्वरूपदलघटकव्याप्तिपदेन प्रकृतहेतुनिष्ठप्रकृतसाध्यनिरूपिताऽव्यभिचरितत्वहेतुव्यापकसाध्यसामानाधिकरण्यरूपान्वयव्याप्ति तथा साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिश्चोपादाय तद्घटितमेव लक्षणार्थः कार्यः । एवञ्चान्वयव्याप्तिघटितसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वरूपदलमादाय व्यभिचारे एवम् व्यतिरेकव्याप्तिघटितसाध्यनिरूपितव्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहित्वमादायानुपसंहार्यादिषु लक्षणसमन्वय इति ।

एवमत्रान्वयव्याप्तिपदेन हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यरूपा साध्याभाववदवृत्तित्वादिरूपा साध्यवन्यावृत्तित्वादिरूपाऽन्योन्यात्यन्ताभावभेदेन विभिन्ना व्याप्तिरूपे या । अन्यथा अत्यन्ताभावघटितव्याप्तिज्ञानं प्रति अन्योन्याभावघटितव्यभिचारज्ञानस्य तथाऽन्योन्याभावघटितव्याप्तिज्ञानं प्रत्यत्यन्ताभावघटितव्यभिचारज्ञानस्य प्रतिबन्धकताविरहेणैकतरोपादानेऽन्यत्राऽव्याप्तिर्दुष्परिहरा स्यात् । अन्योन्यात्यन्ताभावघटितोभयव्याप्तिविवक्षायाश्च अत्यन्ताभावघटितव्याप्तिमादायात्यन्ताभावघटितव्यभिचारेऽन्योन्याभावघटितव्याप्तिमादायान्योन्याभावघटितव्यभिचारे लक्षणसंगतिसम्भवान्न दोषसम्भावना ।

अत्र यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्ये प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वप्रकृतसाध्यविषयतानिरूपिततत्तद्व्याप्तिप्रकारतानिरूपि - तहेतुतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नहेतुतावच्छेदकावच्छिन्नप्रकारताकत्वोभ - याभावः विरोधिविषयताप्रयुक्तस्तद्रूपावच्छिन्नत्वमिति समुदितलक्षणार्थः ।

ननु तथापि निर्वह्नित्वविशिष्टपर्वते वह्निवैशिष्ट्यावगाहित्वस्याऽप्रसिद्ध्या तादृशोभयाभावप्रतियोगिघटकप्रथमदलस्याऽप्रसिद्धिवसतः प्रतियोग्यप्रसिद्ध्या उभ- याभावस्यापि तथात्वेन लक्षणागमनात् निर्वह्निः पर्वतो वह्निमानित्यादौ वह्निमत्प- र्वतरूपाश्रयासिद्ध्यादावव्याप्तिस्तदवस्थैवेति चेन्न, गत्यन्तरविरहेण निर्वह्नित्ववि- शिष्टपर्वते वह्निप्रत्यक्षं जायतामित्याकारिका या बाधकालीनेच्छा तज्जन्यं यत् निर्व- ह्निः पर्वतो वह्निमानिति ज्ञानं तत्र निर्वह्नित्वविशिष्टपर्वते वह्निवैशिष्ट्यावगाहित्वस्य प्रसिद्ध्या वह्निमत्पर्वतरूपाश्रयासिद्धिविषयकनिश्चययोत्तरघटाद्यनुमितिसामान्येऽन्यत्र प्रसिद्धनिर्वह्नित्वविशिष्टपर्वते वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगा- हित्वोभयाभावसत्त्वात् लक्षणसमन्वयः ।

## दीधितिः

एवञ्च वस्तुमात्रनिश्चयानन्तरं निर्वह्नित्वविशिष्टे वह्नेरग्रहेऽपि न क्षतिस्तस्यस्वविरोध्यविषयकत्वात् । एवं साध्यनिश्चयोत्तरं तस्यानन्- मितावपि मानसज्ञानाविरोधित्वात् ।

## गादाधरी

विरोधिविषयिताप्रयुक्तत्वनिवेशनप्रयोजनमाह एवञ्चेति । विरोधिविष यिताप्रयुक्तत्वनिवेशे चेत्यर्थः । न क्षतिः = न निर्वह्निः पर्वतो वह्निमानित्यादौ घटादावतिव्याप्तिः । तस्य = घटादिनिश्चयस्य । विरोध्यविषयकत्वात् = स्वान- न्तरोत्पन्नानुमितिसामान्यनिष्ठतादृशोभयाभावप्रयोजकविरोधिविषयिताकत्वविरहात् । वह्निमत्पर्वतादिविषयकसमूहालम्बनात्मकघटादिनिश्चयानन्तरजातज्ञाननिष्ठतादृशो-

भयाभाववत्त्वस्य तज्ज्ञानीयविरोधिविषयिताप्रयुक्तत्वेऽपि घटादिनिश्चयाव्यवहितोत्तरानुमितेर्विरोधिविषयिताप्रयुक्तोभयाभाववत्त्वविरहान्नातिव्याप्तिरिति भावः ।

प्रयोज्यप्रयोजकभावश्चानुभवसिद्धः स्वरूपसम्बन्धविशेषः । विरोधिपदप्रयोजनमाह एवमिति । अननुमितावपीति । न क्षतिः विरोध्यविषयकत्वादित्यनुषज्यते । न क्षतिः=न साध्यवत्पक्षेऽतिव्याप्तिः ।

## विमलप्रभा

स्वानन्तरेत्यादि । स्वं = घटपटादिविषयकनिश्चयः, तदव्यवहितोत्तरजायमानघटाद्यनुमितिसामान्ये निर्वह्निपर्वतत्वावच्छिन्ने वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावस्य प्रयोजकीभूतविरोधिविषयिताकत्वाभावात् । वह्निमत्पर्वतादिविषयकसमूहालम्बनात्मकघटादिनिश्चयः=पर्वतो वह्निमान् घटवांश्चेत्याकारकनिश्चयः । तादृशोभयाभाववत्त्वस्य=पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभाववत्तायाः । तज्ज्ञानीयविरोधिविषयिता = समूहालम्बनात्मकज्ञानीयविरोधिविषयिता । प्रयुक्तत्वेऽपि = प्रयुक्तत्वस्य वर्त्तमानत्वेऽपि । नातिव्याप्तिः=न घटाद्युदासीनेऽतिप्रसंगः । अनुषज्यते—पूर्वेणेति शेषः । अयमर्थः । विरोधिविषयिताप्रयुक्तत्वदलानुपादाने निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ घटाद्युदासीनेऽतिव्याप्तिः, तथा हि घटत्वावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरजायमानानुमितिर्न निर्वह्निः पर्वतो वह्निमानित्याहार्यज्ञानरूपाऽनुमितेरनाहार्यत्वनियमात्, किन्तु घटपटादिविषयकैवेति तादृशानुमितिसामान्ये निर्वह्नित्वविशिष्टपर्वते वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावसत्त्वात् । तदुपादाने च घटत्वावच्छिन्नविषयकनिश्चयोत्तरजायमानघटपटाद्यनुमितिनिष्ठनिरुक्तोभयाभावे विरोधिविषयिताप्रयुक्तत्वाभावात् नातिव्याप्तिः । न च वह्निमद्विषयकघटविषयकसमूहालम्बनात्मकपर्वतो वह्निमान् घटश्चेत्याकारकनिश्चयोत्तरजायमानपटाद्यनुमितिसामान्ये वर्त्तते यः निरुक्तोभयाभावस्तस्यानुमितिप्राक्कालीनसमुत्पन्नसमूहालम्बनज्ञानीयविषयिताप्रयुक्ततया घटादावतिव्याप्तिस्तदवस्थैवेति वाच्यम् ।

तादृशनिश्चयोत्तरानुमितिसामान्ये निरुक्तोभयाभावस्य निवेशनीयतया । समूहालम्बनानात्मककेवलघटादिविषयकनिश्चयोत्तरजायमानपटाद्यनुमितेरपि तादृशानुमितिसामान्यान्तर्गततया तत्रत्यनिरुक्तोभयाभावे विरोधिविषयिताप्रयुक्तत्वविरहान्नातिव्याप्तिः । अत्रोभयाभावः प्रयोज्यः विरोधिविषयिता च प्रयोजिकेति स्वानुभवसिद्धमेवोभयाभावविरोधिविषयित्वयोः प्रयोज्यप्रयोजकभाव इति ।

ननु यद्रूपावच्छिन्नविषयकनिश्चयोत्तरानुमितिसामान्ये विषयिताप्रयुक्तस्तादृशोभयाभाव इत्युक्तावेव निर्वह्निः पर्वतो वह्निमान् धूमादित्यत्र घटत्वावच्छिन्नविषयकनिश्चयोत्तरजायमानपटाद्यनुमितिनिष्ठनिर्वह्निपर्वते वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावे पूर्वोत्पन्नज्ञानीयघटत्वावच्छिन्नप्रयोज्यत्वाभावात्घटादावतिव्याप्तिवारणसम्भवे विषयितायां विरोधित्वविशेषणोपादानं निरर्थकमिति चेन्न, विरोधिपदानुपादाने पर्वतो वह्निमान् धूमादित्यादौ साध्यवत्तानिश्चयविषये वह्निमत्पर्वतेऽतिप्रसंगो दुर्वारः, वह्निमत्पर्वतत्वावच्छिन्नविषयकपर्वतो वह्निमानित्याकारकसाध्यवत्तानिश्चयोत्तरजायमाना न पर्वतो वह्निमान् वह्निव्याप्यधूमवानित्यनुमितिः पूर्वोक्तवह्निमत्तानिश्चयस्यैव तत्प्रतिबन्धकस्य सत्त्वात्, किन्तु घटाद्यनुमितिरेव, तादृशानुमितिसामान्यान्तर्गता तत्र पर्वते वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावः वह्निमत्पर्वतविषयिताप्रयुक्तः वर्त्तत इति तद्रूपाच्छिन्नत्वस्य वह्निमत्पर्वते सत्त्वात् । विरोधित्वविशेषणोपादाने च वह्निमत्पर्वतविषयकनिश्चयोत्तरजायमानानुमितिनिष्ठनिरुक्तोभयाभावे विरोधिविषयिताप्रयुक्तत्वाभावान्न दोष इति भाव ।

## गादाधरी

विरोधिविषयितापदेन तादृशोभयाभावप्रतियोगितावच्छेदककोटौ - यद्रूपावच्छिन्नांशे यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वं निविष्टं तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नाभावतद्व्याप्यान्यतरविषयितायाः साध्यविशिष्टपक्षविषयितासाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यता - वह्निमूर्तविषयतायाः वा विवक्षितत्वादिति भावः

## विमलप्रभा

तादृशोभयाभावप्रतियोगितावच्छेदककोटौ = पक्षतावच्छेदकावच्छिन्नपक्षे साध्यतावच्छेदकावच्छिन्नसाध्यवैशिष्ट्यावगाहित्वसाध्यनिरूपितव्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहित्वोभयाभावीया या प्रतियोगिता तदवच्छेदककुक्षौ । यद्रूपावच्छिन्नांशे = पक्षतावच्छेदकावच्छिन्नांशे । यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वं = यद्रूपावच्छिविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताकत्वम् । तद्रूपावच्छिन्नविषयिता = पक्षतावच्छेदावच्छिन्नविषयिता । तद्रूपाच्छिन्नाभावतद्व्याप्यान्यतरविषयिता = साध्यतावच्छेदकावच्छिन्नसाध्याभावसाध्याभावव्याप्यान्यतरविषयिता । अयमर्थः । विरोधिविषयितापदेन पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नसाध्यप्रकारताकत्वसाध्यतावच्छेदकावच्छिन्नसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नहेतुप्रकारकत्वोभयाभावीया या उभयनिष्ठा प्रतियोगिता तदवच्छेदककुक्षौ पक्षतावच्छेदकावच्छिन्नांशे प्रविष्टं यत् साध्यतावच्छेदकावच्छिन्नवैशिष्ट्यावगाहित्वं तादृशपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नाभावसाध्याभावव्याप्यविषयितायाः, साध्यतावच्छेदकावच्छिन्नसाध्यविशिष्टपक्षतावच्छेदकावच्छिन्नपक्षविषयितायाः साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयिताभिन्नविषयितायाश्चान्यतरत्वेन विवक्षणात् । तेन पक्षे साध्यवत्तानिश्चयोत्तरं तदतिरिक्तविषयकसाध्यविषयकानुमितेरनुत्पादेऽपि पक्षांशे साध्यांशे वाऽधिकावगाहिन्या अनुमितेः साध्यधर्मितावच्छेदकानुमितेः साध्यावच्छिन्नपक्षविधेयकानुमितेश्चोत्पत्तिसम्भवेन तत्र निरुक्तोभयाभावविरहान्नातिप्रसङ्ग इति ।

## बलदेवी

अन्यतरविषयितारूपविरोधिविषयितायाः विवक्षितत्वादिति भट्टाचार्यः ।

ननु विरोधिविषयितायास्तादृशत्वे पर्वतो वह्न्यभाववानित्यादौ वह्निमत्पर्वतरूपत्वादेरव्याप्तिः, पर्वतत्वावच्छिन्नविषयितानिरूपितवह्नित्वावच्छिन्नविषयि-

तायास्तादृशविरोधित्वाभावात्, वह्न्यभावाभावत्वावच्छिन्नविषयिताया एव तथात्वादिति चेन्न ।

यद्रूपावच्छिन्नांशे [पक्षतावच्छेदकावच्छिन्नांशे] यद्रूपावच्छिन्न [साध्यतावच्छेदकावच्छिन्न] वैशिष्ट्यावगाहित्वं प्रविष्टं यादृशपक्षतावच्छेदकावच्छिन्नविषयितानिरूपितसाध्यतावच्छेदकावच्छिन्नाभावप्रतियोगितावच्छेदकावच्छिन्नतद्व्याप्यान्यन्यतरविषयिताया विवक्षणान्नोक्ताव्याप्तिः, पर्वते वह्निविषयिताया अपि तादृशत्वादिति । ननु तथापि ह्रदो वह्न्यभाववान् द्रव्यत्वादित्यत्र सिद्धिविषयेऽतिव्याप्तिः, तत्र वह्न्यभावाभावस्य वह्निरूपद्रव्यात्मकतया वह्न्यभावत्वस्य द्रव्यत्वावच्छिन्नात्मकाभावप्रतियोगिताकाभावप्रतियोगितावच्छेदकतया तादृशोभयाभावप्रतियोगितावच्छेदककुक्षौ ह्रदत्वावच्छिन्नांशे द्रव्यत्वावच्छिन्नवैशिष्ट्यावगाहित्वस्य निविष्टतया ह्रदत्वावच्छिन्नविषयितानिरूपितवह्न्यभावत्वावच्छिन्नविषयिताया निरुक्तविरोधिविषयितारूपत्वात् । न च यद्धर्मावच्छिन्ने यद्धर्मावच्छिन्नावगाहित्वं निविष्टं तद्धर्मावच्छिन्नविषयितानिरूपिततद्धर्मसमनियतानुयोगितानिरूपितप्रतियोगितावच्छेदकावच्छिन्नतद्व्याप्यान्यतरविषयिताविवक्षणीयेति, तथा च वह्न्यभावत्वन्न धूमजनकतेजस्त्वावच्छिन्नप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकमिति तादृशविषयितायां विरोधिविषयिताकत्वाभावान्नोक्तातिव्याप्तिरिति वाच्यम् ।

तथा सति ह्रदो वह्न्यभाववान् धूमजनकतैजसत्वादित्यादौ सिद्धिविषयेऽतिव्याप्तिः, तत्रोभयाभावप्रतियोगितावच्छेदककुक्षौ ह्रदत्वावच्छिन्ने धूमजनकतेजस्त्वावच्छिन्नवैशिष्ट्यावगाहित्वं निविष्टं धूमजनकतेजस्त्वसमनियतानुयोगितानिरूपितप्रतियोगितावच्छेदकं वह्न्यभावत्वं भवति, ह्रदत्वावच्छिन्नविषयितानिरूपितवह्न्यभाववच्छिन्नप्रकारताया विरोधिविषयितारूपत्वात् ।

न च तद्धर्मसमनियतानुयोगितानिरूपितप्रतियोगितावच्छेदकत्वे सति तद्धर्मावच्छिन्नप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकविषयितावच्छेदको यो धर्मस्तद्धर्मावच्छिन्नविषयितया विवक्षणीयतया वह्न्यभावत्वन्न धूमजनक-

तेजस्त्वावच्छिन्नप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकविषयता - वच्छेदकमिति तादृशविषयितया विरोधिविषयित्वाभावान्नोक्तातिव्याप्तिरिति वाच्यम् ।

पर्वते संयोगेन वह्नेः साधने कालिकसम्बन्धावच्छिन्नवह्न्यभावस्य हेतुत्वे सिद्धिविषयेऽतिव्याप्तेः, पर्वतत्वावच्छिन्ने वह्न्यभाववैशिष्ट्यावगाहित्वस्योभयाभावप्रतियोगितावच्छेदककोटौ प्रविष्टतया वह्नित्वस्य वह्न्यभावसमनियतानुयोगितानिरूपितप्रतियोगितावच्छेदकतया तादृशप्रतिबन्धकतावच्छेदकविषयतानिरूपकतावच्छेदकतया च पर्वतत्वावच्छिन्नविषयितानिरूपितवह्नित्वावच्छिन्नविषयितया विरोधिविषयितारूपत्वादिति चेन्न, तादृशोभयाभावीयप्रतियोगितानिरूपितावच्छेदकताश्रयविषयिताविशिष्टा या विषयिता तादृशविषयिताविशिष्टविषयिताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयितान्यतरविषयतायास्तथाविधत्वात् । विषयितायां विषयितावैशिष्ट्यञ्च, स्वाधिकरणत्व–स्वाधिकरणत्वान्यतरसम्बन्धेन । तत्र प्रथमस्वाधिकरणत्वं स्वविशिष्टविशेष्यतावच्छेदकावच्छिन्नत्व— स्वविशिष्टप्रकारतानिरूपितत्वोभयसम्बन्धेन, विशेष्यतायां स्ववैशिष्ट्यञ्च, स्वनिरूपितत्व—स्ववृत्तिभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन, भेदप्रतियोगितावच्छेदकसम्बन्धश्च, स्वनिरूपितकिञ्चिद्धर्मव्यापकप्रतियोगिकत्वावच्छिन्नसांसर्गिकविषयतानिरूपकत्वरूपः, प्रकारतायां स्ववैशिष्ट्यञ्च, स्वाश्रयत्व–स्ववत्त्वान्यतरसम्बन्धेन, स्वाश्रयवत्त्वञ्च, स्वविशिष्टप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यत्वावच्छेद्यत्व —स्वावच्छेदकरूपावच्छिन्नस्वावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभाववृत्तिस्वाश्रयसामान्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धनिष्ठकिञ्चिद्धर्मव्यापकप्रतियोगिकत्वावच्छिन्नविषयतानिरूपितत्वोभयसम्बन्धेन । प्रकारतायां स्ववैशिष्ट्यञ्च, स्वावच्छेदकधर्मावच्छिन्नत्व –स्वावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नत्वोभयसम्बन्धेन, स्ववत्त्वञ्च स्वावच्छेद्यविशेष्यतानिरूपितप्रतियोगितात्वावच्छिन्नसांसर्गिकविषयितावत्त्वसम्बन्धेन, तादृशविषयतावत्ता च स्वनिरूपितप्रकारतावच्छेदकधर्मावच्छिन्नत्व-स्वनिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्सम्बन्धनिष्ठकिञ्चिद्धर्मव्यापकप्रतियोगिकत्वावच्छिन्नसांसर्गिकविषयतानिरूपितत्वोभयसम्बन्धेन । द्वितीं-

यस्याधिकरणत्वञ्च स्वनिरूपितकिञ्चिद्धर्मव्यापकप्रतियोगिकत्वावच्छिन्नसांसर्गिक-विषयतानिरूपितविशेष्यतावच्छेदकावच्छिन्नत्व -- स्वविशिष्टप्रकारतानिरूपितत्वोभयसम्बन्धेन। स्ववैशिष्टयञ्च, स्वावच्छेद्यविशेष्यतानिरूपितप्रतियोगितात्वावच्छिन्नसांसर्गिकविषयतावत्त्व—स्वाश्रयत्वान्यतरसम्बन्धेन। सांसर्गिकविषयतावत्त्वञ्च, स्वनिरूपितप्रकारतावच्छेदकरूपावच्छिन्नत्व— स्वनिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्त्वसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन, स्वाश्रयवत्त्वञ्च, स्वविशिष्टप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यतावच्छेद्यत्व—स्वनिरूपितसंसर्गतावच्छेदकेतरधर्मानवच्छिन्नसंसर्गनिष्ठावच्छेदकताकस्वावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभाववृत्तिस्वाश्रयसामान्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन, प्रकारतायां स्ववैशिष्टयञ्च, स्वावच्छेदकधर्मावच्छिन्नत्व—स्वनिरूपितसंसर्गतानवच्छेदकेतरधर्मानवच्छिन्नसंसर्गनिष्ठावच्छेदकताकप्रतियोगित्वसम्बन्धावच्छिन्नत्वोभयसम्बन्धेनेति। साध्यवदवृत्तित्वपक्षस्य बाधत्वे तु स्वाधिकरणत्वत्रयान्यतमसम्बन्धेन विषयतावैशिष्टय विवक्षणीयम्, तत्र तृतीयस्वाधिकरणत्वं स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नत्व—स्वावच्छेदकावच्छिन्नस्वावच्छेदकसम्बन्धावच्छिन्ननिरूपकताकाधिकरणतावदवृत्तित्वाभावत्वावच्छिन्नप्रकारतानिरूपितत्वोभयसम्बन्धेन बोध्यम्। ननु विरोधिविषयिताया एतादृशत्वेऽसाधारण्येऽव्याप्तिः असाधारण्यविषयकनिश्चयोत्तरानुमितिनिष्ठोभयाभावाधिकरणतायां विरोधिविषयिताप्रयुक्तत्वाभावात्, असाधारण्यविषयितायामुक्तविरोधिविषयितात्वाभावादिति चेन्न। लक्षणघटकनिश्चये पक्षधर्मिकहेतुमत्ताज्ञानाकालीनत्वघटितोभयाभावमनिवेश्य पक्षधर्मिकसाध्यव्यापकीभूताभावप्रतियोगिहेतुमत्ताज्ञानभिन्नत्वासाधारण्यविषयकत्वोभयाभावस्य निवेशनीयतया असाधारण्यविषयकनिश्चयस्य पक्षे तादृशहेत्वावगाहिन एवोभयाभाववत्तया तादृशनिर्णयमादायैवासाधारण्ये लक्षणसमन्वयस्य कर्त्तव्यतया तत्र च विषयताविशिष्टविषयताविरहेऽपि विषयताविशिष्टविषयताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयितारूपविरोधिविषयितायाः सत्त्वात्। तत्प्रयुक्तत्वाच्च तादृशोभयाभावाधिकरणताया इति नाव्याप्तिरिति दिक्।

साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितेत्यादि गदाधरः। अत्र पूर्वकल्पे विपरीतबाधादीनामसङ्ग्रहात् कल्पान्तरानुसरणं कृतम्। नन्वत्र पर्वतो वह्निमान् वह्न्यभावादित्यत्र स्वरूपासिद्धावव्याप्तिः, तद्विषयतायास्तादृशविषयताबहिर्भूतत्वाभावादिति चेन्न, विषयतायां साध्यावत्पक्षविषयताबहिर्भूतत्वमनिवेश्य विषयतानिष्ठप्रयोजकतायां पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतानिष्ठप्रयोज्यतानिरूपितसाध्यवत्पक्षविषयतानिष्ठप्रयोजकताभिन्नत्वस्य निवेशेनैवोक्ताव्याप्तिविरहादिति।

## गादाधरी

न च सिषाधयिषधीनायां साध्यनिश्चयानन्तरं समूहालम्बनानुमितौ तादृशोभयाभावासत्त्वात् सिद्धिविषयेऽतिप्रसङ्ग एव नास्ति, एवम् पक्षे साध्यनिश्चयोत्तरं तदतिरिक्ताविषयकसाध्यविषयकाऽनुमितेरनुत्पादेऽपि पक्षांशे साध्यांशे वाऽधिकावगाहिन्या अनुमितेः साध्यधर्मितावच्छेदकान्यविधेयकानुमितेः साध्यावच्छिन्नपक्षविधेयकानुमितेश्चोत्पत्त्या तत्रोभयाभावासत्त्वादपि नातिप्रसक्तिरिति वाच्यम्। यत्र विषयविशेषे सिषाधयिषावलात् सिद्ध्युत्तरं तादृशानुमितिः कदापि न जाता तत्रैवातिव्याप्तिसम्भवात्। द्वितीयकल्पे विषयितामात्रं निवेश्यं न तु विरोधिविषयितापर्यन्तमित्याशयेनाह मानसज्ञान इति। साध्यनिश्चयेत्यादि।

## विमलप्रभा

विरोधिपदस्य वैयर्थ्यमाशङ्कते न चेति। सिषाधयिषाधीनायां=पर्वते वह्न्यनुमितिर्जायतामित्याकारिका या सिषाधयिषा तदधीनायाम्। साध्यनिश्चयानन्तरं=पर्वतो वह्निमानित्याकारकनिर्णयोत्तरम्। समूहालम्बनानुमितौ=पर्वतो वह्निमान्-वह्निव्याप्यधूमवांश्चेत्याकारकानुमितौ। तादृशोभयाभावासत्त्वात्=पर्वतत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकत्ववह्निव्याप्यधूमत्वावच्छिन्नप्रकारकत्वोभयाभावविरहात्। सिद्धिविषये=साध्यवत्पक्षे वह्निमत्पर्वतादाविति यावत्। पक्षे=पर्वतादौ। साध्यनिश्चयोत्तरं=वह्न्यादिविषयकनिश्चयानन्तरम्। तदतिरिक्तविषयकासाध्यविषयकानुमितेः = साध्यनिश्चयविषयातिरिक्तविषयवह्न्यादिरूपसाध्यविषयकानु-

मितेः । अनुत्पादेऽपि = उत्पत्त्यभावेऽपि । पक्षांशे = पर्वताद्यंशे । साध्यांशे = वह्न्याद्यंशे । अधिकावगाहिन्या अनुमितेः = पीतपर्वतो वह्निमान् पर्वतः शुक्लवह्निमानित्याद्याकारकानुमितेः । साध्यधर्मितावच्छेदकान्यविधेयकानुमितेः = वह्निमान् पर्वतो घटवानित्यनुमितेः । साध्यावच्छिन्नपक्षविधेयकानुमितेः = अयं वह्निमत्पर्वतवानित्यनुमितेः । तत्र = तादृशानुमितौ । उभयाभावासत्त्वात् = पक्षे साध्यवैशिष्ट्यावगाहित्वघटितोभयाभावविरहात् । यत्र = यादृशस्थले । सिषाधयिषाबलात् = अनुमितिर्जायतामित्याकारिकेच्छावसतः । सिद्ध्युत्तरं = साध्यवत्पक्षविषयकनिश्चयोत्तरम् । तादृशानुमितिः = पक्षाद्यंशेऽधिकावगाहिनी एवं साध्यधर्मितावच्छेदकान्यविधेयिका साध्यावच्छिन्नपक्षविधेयिका चानुमितिः । न जाता = नोत्पन्ना । तत्रैव = तादृशस्थल एव । अतिव्याप्तिसम्भवात् = साध्यवत्पक्षेऽतिप्रसङ्गसद्भावात् । द्वितीयकल्पे = अनाहार्यमानसज्ञाने वेति कल्पे । अयमर्थः । विरोधिविषयितेत्यत्र विरोधिपदमन्तराऽपि साध्यवत्पक्षेऽतिव्याप्तिवारणसम्भवे विरोधिपदं कुतो न निरर्थकम् । तथा हि पर्वतो वह्निमान् धूमादित्यादौ पर्वतो वह्निमानित्याकारकसाध्यवत्तानिश्चयोत्तरं पर्वते वह्न्यनुमितिर्जायतामितीच्छाबलेन पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकानुमितिसामान्ये पर्वतविशेष्यकवह्निप्रकारकत्ववह्निव्याप्यधूमप्रकारकत्वोभयस्यैव वर्त्तमानतया तदभावविरहात् । ननु यत्र साध्यवत्तानिश्चयाव्यवहितपूर्वक्षणे तदुत्तरक्षणे वा सिषाधयिषा न जाता तत्र तादृशानुमित्यनुत्पत्त्या सिद्धिविषयेऽतिव्याप्तिवारणाय विरोधिपदमावश्यकमिति चेन्न, पर्वतादिविशेष्यकवह्न्यादिप्रकारकसाध्यनिश्चयानन्तरं तादृशानुमितेरनुत्पादेऽपि पीतपर्वतो वह्निमान् पर्वतः शुक्लवह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकानुमितेः वह्निमान् पर्वतो घटवानित्याद्याकारिकायाश्चानुमितेरुत्पत्त्या तत्र तादृशोभयाभावविरहेणातिव्याप्तिवारणसम्भवे तदर्थं विरोधिपदमनर्थकमेवेति चेत्—का नो हानिः तादृशस्थलेऽतिव्याप्त्यभावेऽपि यादृशस्थलविशेषे साध्यवत्तानिश्चयोत्तरं सिषाधयिषाबलादपि कदापि कस्यापि समूहालम्बनानुमितिर्न जाता तादृशस्थले साध्यवत्पक्षे सिद्धिविषयेऽतिव्याप्तिभयेन विरोधिपदमावश्यकमेवेति भावः ।

एवम्, यद्रूपावच्छिन्नविषयकनिश्चयोत्तरमनाहार्यमानसज्ञाने वेति द्वितीय-

कल्पे, साध्यवत्तानिश्चये मानसज्ञानप्रतिबन्धकताविरहेण साध्यवत्तानिश्चयोत्तरपर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकमानसज्ञानोत्पत्त्या तत्र तादृशोभयाभावविरहेणातिव्याप्तिवारणसम्भवे विरोधिपदोपादानमनावश्यकमेवेति भावः ।

## गादाधरी

अत्र मेयत्वविशिष्टव्यभिचारादिवारणाय यथाश्रुतविशिष्टान्तराऽघटितत्वनिवेशे उपदर्शितव्यभिचारघटितबाधाद्यव्याप्तेः, विशिष्टान्तरविषयित्वाप्रयोज्यस्वविषयिताप्रयोज्यतादृशोभयाभावप्रयोजकाभावाधिकरणताकत्वरूपं तादृशविशेषणं निवेशनीयम् । मेयत्वविशिष्टव्यभिचारादिविषयिताप्रयोज्याया उक्तोभयाभावप्रयोजकव्याप्त्याद्यवगाहित्वाभाववत्तायाः शुद्धव्यभिचारादिविषयिताप्रयोज्यत्वनियमेन मेयत्वविशिष्टव्यभिचारादौ न विशिष्टान्तरविषयित्वाऽप्रयोज्यस्वविषयिताप्रयोज्यनिरुक्तोभयाभावप्रयोजकाभावाधिकरणताकत्वमिति नातिप्रसङ्गः ।

उपदर्शितव्यभिचारादिघटितबाधादिविषयिताप्रयोज्यायाः पक्षे साध्यावगाहित्वाद्यभावाधिकरणतायास्तद्घटकव्यभिचारादिविषयित्वाऽप्रयोज्यतया तत्संग्रहः ।

## विमलप्रभा

अत्रेति । अत्र = निरुक्तोभयाभावघटितात्रवदन्तिकल्पोक्तलक्षणे । मेयत्वविशिष्टव्यभिचारादिवारणाय = मेयत्वविशिष्टो यो व्यभिचारादिस्तत्रातिप्रसङ्गभङ्गाय । यथाश्रुतविशिष्टान्तराघटितत्वनिवेशे = स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकमथ च यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्ये विरोधिविषयिताप्रयुक्तनिरुक्तोभयाभावस्तादृशं यद्रूपं तद्रूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् स्वं तादृशस्वावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्ये विरोधिविषयिताप्रयुक्तनिरुक्तोभयाभावस्तादृशस्ववत्त्वरूपविशिष्टान्तराघटितत्वनिवेशे । उपदर्शितव्यभिचारादिघटितबाधे = पूर्वोदीरितधूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपव्यभिचारघटितबाधे । अव्याप्तेः = लक्षणागमनप्रसङ्गस्यात् । विशिष्टान्तरविषयित्वाऽप्रयोज्यस्वविषयिताप्रयोज्यतादृशोभयाभावप्र-

योजकाभावाधिकरणता = स्वावच्छिन्नविषयितात्वावच्छिन्नप्रयोजकतानिरूपितप्रयो - ज्यतावती स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्ये विरोधिविषयिताप्रयुक्तो यो निरुक्तोभयाभावस्तद्रूपावच्छिन्नविषयितात्वावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वाभाववती या पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावप्रयोजकाभावाधिकरणता। तादृशविशेषणम् = विशिष्टान्तराघटितत्वविशेषणम्। उक्तोभयाभाव इति = पक्षतावच्छेदकावच्छिन्नपक्षे साध्यतावच्छेदकावच्छिन्नसाध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभाव इत्यर्थः। नातिप्रसंगः = न मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिः। उपदर्शितेति धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ पूर्वोक्तधूमाभाववद्धूमव्यभिचारिवह्निमदर्थकम्। तद्घटकेति। व्यभिचारघटितबाधघटकार्थकम्। तत्संग्रहः = व्यभिचारघटितबाधसंग्रहः। अयमर्थः। अत्र वदन्तिकल्पोक्तलक्षणे मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिस्तथा हि यद्विषयकनिश्चयपदेन मेयत्वविशिष्टव्यभिचारविषयकनिश्चयमुपादाय तदुत्तरजायमानानुमितिर्न पक्षः साध्यवान् साध्यव्याप्यहेतुमानित्याकारिका [व्याप्तिज्ञानं प्रति व्यभिचारनिश्चयस्य प्रतिबन्धकत्वात्] किन्तु घटवद्भूतलमित्याद्याकारिकैवेति तादृशानुमितौ निरुक्तोभयाभावसत्त्वात्। तद्वारणाय यदि पूर्वोक्तरीत्या विशिष्टान्तराऽघटितत्वं निवेश्यते तदा मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् शुद्धव्यभिचारत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतायाः मेयत्वविशिष्टव्यभिचारत्वेऽसत्त्वात् स्वपदेन मेयत्वविशिष्टव्यभिचारत्वरयोपादानासम्भवात्, तत्रातिव्याप्तिवारणमिति चेत्, तदा धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपव्यभिचारघटितबाधेऽव्याप्तिः, धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् धूमव्यभिचारिवह्नित्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतायाः धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वरूपव्यभिचारघटितबाधत्वेऽभावात्, तादृशबाधत्वस्यापि स्वपदेनोपादातुमशक्यत्वात्। अतः यथोक्तविशिष्टान्तराऽघटितत्वविशेषणन्न देयम्, किन्तु स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद्यद्रूपम् तत्तद्रूपावच्छिन्नविष-

यित्वाऽप्रयोज्यस्वावच्छिन्नविषयिताप्रयोज्यनिरुक्तोभयाभावप्रयोजकाभावाधिकरण - ताकत्वरूपमन्यादृशमेव विशिष्टान्तराघटितत्वं यद्रूपे विशेषणीयम्। तथा च मेयत्वविशिष्टव्यभिचारे मेयत्वविशिष्टव्यभिचारविषयिताप्रयोज्यायाः पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावप्रयोजकव्याप्त्यवगाहित्वा - भाववत्तायाः विशिष्टान्तरभूतशुद्धव्यभिचारविषयिताप्रयोज्यतयाऽप्रयोज्यत्वाभावान्नातिप्रसङ्गः। पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां मेयत्वविशिष्टव्यभिचारविषयिताप्रयोज्यत्वविरहादपि न तत्रातिव्याप्तिरिति भावः।

धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ व्यभिचारघटितबाधे, तादृशबाधत्वावच्छिन्नविषयितानिष्ठप्रयोजकतानिरूपितप्रयोज्यतावती या पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावप्रयोजकीभूतपक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणता तत्र व्यभिचारविषयिताप्रयोज्यत्वविरहेण विशिष्टान्तरविषयित्वाऽप्रयोज्यस्वविषयताप्रयोज्यतादृशोभयाभावप्रयोजकाभावाधि - करणताकत्वसत्त्वात् लक्षणसङ्गतिरिति।

## गादाधरी

न च विशिष्टपक्षे विशिष्टसाध्यवत्ताग्रहप्रतिबन्धकतावच्छेदिकायास्तादृशबाधादिविषयतान्तःपातिव्यभिचारादिविषयिताया अपि तादृशबाधादिविषयिताप्रयोज्यायां विशिष्टपक्षे विशिष्टसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां प्रयोज कतया तादृशबाधादेर्दुःसंग्रह इति वाच्यम्। यत्किञ्चिद्विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यतानिवेशेन तत्संग्रहसंभवात्,व्यभिचारादिविषयिताया बाधविषयितान्तःपातिविषयितामात्रवृत्तिरूपेणैव उपदर्शितसाध्यवत्ताग्रहप्रतिबन्धकतावच्छेदकतया तेनैव रूपेण तादृशसाध्यावगाहिताविरहवत्ताप्रयोजकत्वात्तादृशस्य च रूपस्य बाधविषयितानन्तःपातिव्यभिचारादिविषयतासाधारणव्यभिचारादिरूपविशिष्टविषयतात्वाव्यापकत्वात् तद्व्यापकरूपावच्छिन्नाप्रयोज्यत्वस्य उक्तबाधादिविषयिताप्रयुक्तसाध्यावगाहित्वाभाववत्तायामक्षतत्वात्। मेयत्वविशिष्टव्यभिचारादिविष-

यितायां येन रूपेण व्याप्त्यादिग्रहप्रतिबन्धकतावच्छेदकता तद्रूपेण निरुक्तविषयतात्वव्यापकेन मेयत्वविशिष्टव्यभिचारादिविषयताप्रयोज्यव्याप्त्याद्यवगाहित्वाभाववत्तायां नियमतः प्रयोजकत्वान्नातिप्रसङ्गावकाशः ।

## विमलप्रभा

पुनरव्याप्तिमाशङ्कते न चेत्यादिना । न चेत्यस्य वाच्यमित्यनेनान्वयः । विशिष्टपक्षे = धूमव्यभिचारिवह्निमत्त्वावच्छिन्नपक्षे । विशिष्टसाध्यवत्ता = धूमत्वविशिष्टधूमवत्ता । तादृशबाधादिविषयता = धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपबाधविषयता । तादृशबाधादिविषयिता = व्यभिचारघटितबाधादिविषयिता । विशिष्टपक्षे विशिष्टसाध्यवैशिष्टयाद्यवगाहित्वाभावाधिकरणतायां = धूमव्यभिचारिवह्निमत्त्वावच्छिन्ने धूमत्वावच्छिन्नवैशिष्टयावगाहित्वाभावाधिकरणतायाम् । तादृशबाधादेः = व्यभिचारघटितबाधादेः । तत्संग्रहसम्भवात् = व्यभिचारघटितबाधादौ लक्षणसंगमनात् । उपदर्शितसाध्यवत्ताग्रहप्रतिबन्धकता = विशिष्टपक्षे विशिष्टसाध्यवत्ताग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धता । तेनैव रूपेण = व्यभिचारघटितबाधविषयतान्तःपातिव्यभिचारविषयितात्वरूपेण । तादृशसाध्यावगाहिता = विशिष्टपक्षे विशिष्टसाध्यावगाहिता । तादृशस्य च रूपस्य = यत्किञ्चिद्व्यभिचारविषयितात्वव्यापकरूपस्य । अव्यापकत्वात् = व्यभिचारविषयितात्वव्यापकताविरहात् । तद्व्यापकरूपावच्छिन्नाऽप्रयोज्यत्वस्य = विशिष्टान्तरभूतव्यभिचारविषयितात्वव्यापकं यत् शुद्धव्यभिचारविषयितात्वं तदवच्छिन्नाऽप्रयोज्यत्वस्य । उक्तबाधादिविषयिता = व्यभिचारघटितबाधादिविषयिता । अक्षतत्वात् = वर्त्तमानत्वात् ।

मेयत्वविशिष्टव्यभिचारादावतिप्रसङ्गमपाकरोति मेयत्वविशिष्टेत्यादिना । येन रूपेण = व्यभिचारविषयितात्वरूपेण । तद्रूपेण = व्यभिचारविषयितात्वरूपेण । निरुक्तविषयितात्वव्यापकेन = विशिष्टान्तरभूतव्यभिचारविषयितात्वव्यापकेन । अयमर्थः । विशिष्टान्तरविषयित्वाऽप्रयोज्येत्यादिरीत्या विशिष्टान्तराघटितत्वनिवेशे धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ व्यभिचारघटितबाधेऽव्या-

प्तिर्दुर्वारैव, तथा हि धूमव्यभिचारिवह्निमान् धूमवानिति बुद्धिं प्रति धूमव्यभिचारिवह्निमान् धूमाभाववानिति बाधनिश्चयस्य प्रतिबन्धकतया तादृशबाधज्ञानीयविषयिताया इव तद्घटकव्यभिचारविषयिताया अपि तादृशबुद्धिप्रतिबन्धकतावच्छेदकत्वेन [पक्षतावच्छेदककोटिप्रविष्टतया] पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां बाधविषयिताप्रयोज्यत्वसत्त्वेऽपि तद्घटकव्यभिचाररूपविशिष्टान्तरविषयत्वाऽप्रयोज्यत्वविरहेण स्वपदेन धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वरूपबाधत्वस्य धारणासम्भवात् [अर्थात् धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वावच्छिन्नविषयकनिश्चये पक्षतावच्छेदकधूमव्यभिचारिवह्निमत्त्वावच्छिन्नविशेष्यकसाध्यतावच्छेदकधूमत्वावच्छिन्नप्रकारताशालिबुद्धिप्रतिबन्धकतासत्त्वेन तादृशप्रतिबन्धकतावच्छेदकतायाः धूमाभावादिविषयिताया इव धूमव्यभिचारविशिष्टवह्निविषयितारूपबाधविषयितान्तःपातिपक्षतावच्छेदककोटिप्रविष्टविषयितायामपि वर्त्तमानतया बाधत्वावच्छिन्नविषयिताप्रयोज्यत्वस्यैव विशिष्टान्तरतावच्छेदकधूमव्यभिचारविशिष्टवह्नित्वावच्छिन्नविषयिताप्रयोज्यत्वस्यापि निरुक्तोभयाभावप्रयोजकपक्षधर्मिकसाध्यप्रकारकत्वाभावाधिकरणतायां सत्त्वेन विशिष्टान्तरविषयित्वाप्रयोज्यस्वविषयिताप्रयोज्यतादृशोभयाभावप्रयोजकाभावाधिकरणताकत्वरूपविशिष्टान्तराऽघटितत्वलक्षणस्य व्यभिचारघटितबाधेऽभावादव्याप्तिः] यत्किञ्चिद्विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यस्वविषयिताप्रयोज्यतादृशोभयाभावप्रयोजकाभावाधिकरणताकत्वरूपमेव विशिष्टान्तराघटितत्वं निवेशनीयम्। तथा च व्यभिचारघटितबाधे धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वरूपबाधत्वावच्छिन्नविषयितान्तःपातिविषयितामात्रवृत्तियद्रूपं तच्चोक्तबाधविषयितात्वं तादृशरूपेण धूमव्यभिचारिवह्निमत्त्वावच्छिन्नविशेष्यतानिरूपितधूमत्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकतायाः व्यभिचारविषयितायां सत्त्वेऽपि तादृशव्यभिचारविषयितायां तादृशबाधविषयितान्तःपातिविषयितामात्रवृत्तिधर्मेणैव विशिष्टपक्षे विशिष्टसाध्यवैशिष्ट्यावगाहित्वाभावप्रयोजकतेति बाधविषयितान्तःपातिविषयितामात्रवृत्तिनिरुक्तविषयितात्वरूपधर्मस्य बाधविषयिताया अनन्तःपातिव्यभिचारविषयितासाधारणं यद्व्यभिचारादिरूपविशिष्टविषयितात्वं तदव्यापकतया यत्किञ्चिद्विशिष्टान्तरविषयितात्वव्यापकरूपपदेन तादृशबाधविषयितान्तः-

पातिव्यभिचारविषयितासाधारणधर्मस्य धारणासम्भवतया शुद्धव्यभिचारविषयितात्वमेव तादृशरूपपदेनोपादाय लक्षणसङ्गतिः, [अर्थात् तादृशबाधविषयितान्तःपातिव्यभिचारविषयितात्वं न विशिष्टान्तरव्यभिचारविषयितात्वव्यापकं केवलधूमव्यभिचारिवह्निरितिज्ञानीयविषयितायां बाधविषयितान्तःपातिव्यभिचारविषयितात्वविरहात्, किन्तु धूमव्यभिचारिवह्निमत्त्वावच्छिन्नविषयितात्वं, तादृशं रूपं न धूमव्यभिचारिवह्न्यवच्छिन्नधर्मिकधूमप्रकारकग्रहप्रतिबन्धकतावच्छेदकमिति न तादृशरूपेण व्यभिचारविषयतायाः प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभावप्रयोजकता, येन रूपेण विषयितायाः यादृशरूपावच्छिन्नविषयित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वं तेन रूपेण स्वविषयितायाः तादृशविषयितात्वावच्छिन्नाभावाधिकरणताप्रयोजकत्वाल्लक्षणसंगतिः ]।

मेयत्वविशिष्टव्यभिचारे च मेयत्वविशिष्टव्यभिचारविषयितायां व्यभिचारविषयितात्वरूपेणैव व्याप्त्यादिज्ञानप्रतिबन्धकतावच्छेदकतेति व्यभिचारविषयितात्वे मेयत्वविशिष्टव्यभिचारादेर्यत्किञ्चिद्विशिष्टान्तरभूतं यद्वद्व्यभिचारादिक तादृशव्यभिचारविषयितात्वव्यापकतासत्त्वेन तादृशव्यभिचारविषयितात्वावच्छिन्नप्रयोज्यतायाः मेयत्वविशिष्टव्यभिचारविषयिताप्रयोज्यतादृशोभयाभावप्रयोजकीभूतव्याप्त्याद्यवगाहित्वाभावाधिकरणतायां सत्त्वेनाऽप्रयोज्यत्वविरहान्नातिप्रसङ्गसम्भावनेति भावः।

## वलदेवी

यत्किञ्चिद् विशिष्टान्तरविषयितात्वव्यापकेति गदाधरः। अत्र यत्किञ्चित्पदानुपादाने विशिष्टान्तरविषयितात्वव्यापकं रूपं प्रमेयविषयितात्वादिकमेव तदवच्छिन्नप्रयोज्यत्वाऽप्रसिद्धेरतस्तदुपादानम्, स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद्यद्रूपं प्रत्येकं तत्तद्रूपावच्छिन्नविषयिताव्यापकत्वलाभाय। तथा च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वसमानाधिकरणोभयावृत्तिधर्मनिष्ठावच्छेदकतानिरूपकावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकविषयित्वनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकताकप्रतियोगित्वनिष्ठावच्छेद-

कतानिरूपकावच्छेदकतात्वावच्छिन्नाभावः व्यापकतारूपविशेषाभावः । अभावश्च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकव्यभिचारत्वादितत्तद्रूपावच्छिन्नविषयि-ताभृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धो ग्राह्यः । प्रयोज्यप्रयोज-कभावश्च सामान्याभावः । स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वसमाना-धिकरणोभयावृत्तिधर्मनिष्ठावच्छेदकतानिरूपकावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदक-तानिरूपकविषयितानिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठा-वच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकावच्छेदकतात्वावच्छिन्नप्रतियो-गिताकाभाववद्रूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वन्नास्तीति प्रतीतिसिद्धः स्व-निष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकविषयितानिष्ठप्रतियोगित्वसम्बन्धा-वच्छिन्नावच्छेदकतानिरूपकशून्यत्वनिष्ठावच्छेदकतानिरूपकप्रतीतिनिष्ठावच्छेदकतानि-रूपकविषयितानिष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठावच्छेदकतानिरूपकसामानाधि-करण्यनिष्ठावच्छेदकतानिरूपकधर्मनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिष्ठा-वच्छेदकतानिरूपकविषयित्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठाव-च्छेदकतानिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकप्रतियो-गितानिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकावच्छेदकतात्वावच्छिन्नप्रतियोगितानि-ष्ठावच्छेदकतानिरूपकाभावनिष्ठावच्छेदकतानिरूपकरूपनिष्ठावच्छेदकतानिरूपकाव-च्छिन्नत्वनिष्ठावच्छेदकतानिरूपकप्रयोजकतानिष्ठावच्छेदकतानिरूपकनिरूपितत्वनिष्ठा-वच्छेदकतानिरूपकप्रयोज्यतात्वावच्छिन्नप्रतियोगिताकाऽभावो ग्राह्यः । अत्र सामान्या-भावाऽनिवेशे मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिवारणमशक्यम्, मेयत्वविशिष्टव्य-भिचारत्वावच्छिन्नविषयिताप्रयोज्यायां तादृशोभयाभावप्रयोजकहेतुधर्मिकव्याप्त्यव-गाहित्वाभावाधिकरणतायां तादृशव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयताव-च्छेदकबाधत्वावच्छिन्नविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वसत्त्वात् ।

तथा च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयत्किञ्चिद्रूपावच्छि-न्नविषयितानिष्ठभेदप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिता-नवच्छेदकरूपवृत्तिप्रयोज्यताशून्यत्वम् निविष्टम्, रूपवृत्तित्वञ्च प्रयोज्यतायां स्वनि-रूपितप्रयोजकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस-म्बन्धेन, एवञ्च व्यभिचारघटितबाधस्थले पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिक-

रणानानिष्ठप्रयोज्यता च न तादृशबाधाविषयकप्रतीतिविषयतावच्छेदकशुद्धव्यभिचार-त्वावच्छिन्नविषयितानिष्ठभेदप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्या-प्त्यनुयोगितानवच्छेदकशुद्धव्यभिचारत्वगतसमुदायत्ववृत्तिरिति नाव्याप्तिरिति दिक्।

## गादाधरी

बाधसत्प्रतिपक्षादिविषयकज्ञानस्य नानाविधबाधविषयकज्ञानस्य वाऽनन्तरं जायमानायामनुमितौ या बाधादिविषयिताप्रयोज्याऽभावधिकरणता तस्या विशिष्टान्तरविषयिताप्रयोज्यत्वेऽपि स्वपूर्ववर्त्तिज्ञानीयविरोधिविषयिताया एव स्वनिष्ठप्रतिबध्यतावच्छेदकधर्माभावाधिकरणताप्रयोजकत्वात् तत्रैकविधबाधादिज्ञानानन्तरं जातज्ञाने या तत्तद्बाधादिविषयिताप्रयोज्या पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणता तस्याः विशिष्टान्तरविषयित्वाप्रयोज्यतया बाधादौ लक्षणसमन्वयः।

## विमलप्रभा

यत्किञ्चिद्विशिष्टान्तरविषयित्वाप्रयोज्येत्यादिरीत्या निवेशे बाधादौ लक्षणसमन्वयम् प्रदर्शयन्नाह=बाधसत्प्रतिपक्षेत्यादि। बाधसत्प्रतिपक्षादिविषयकज्ञानस्य=ह्रदो वह्न्यभाववान् वह्न्यभावव्याप्यवांश्चेत्याकारकसमूहालम्बनात्मकनिश्चयस्य। नानाविधबाधविषयकज्ञानस्य=ह्रदो वह्न्यभाववान् वह्न्यभावः ह्रदे इत्याद्याकारकनानाविधबाधविषयकनिश्चयस्य। अनुमितौ=भूतलं घटवदित्याद्यनुमितौ। अभावाधिकरणता=उक्तोभयाभावप्रयोजकह्रदादिविशेष्यकवह्न्यादिप्रकारकत्वाभावाधिकरणता। तस्याः=ह्रदादिविशेष्ये वह्न्यादिवैशिष्ट्यावगाहित्वाभावाधिकरणतायाः। स्वमनुमितिः। पूर्ववर्त्तिज्ञानीयविरोधिविषयताया एव=यादृशबाधविषयकनिश्चयोत्तरजायमाना याऽनुमितिस्तादृशानुमितिपूर्ववृत्तितादृशबाधज्ञानीयविरोधिविषयिताया एव। स्वनिष्ठप्रतिबध्यतावच्छेदकधर्माभावाधिकरणता=स्वं घटवद्भूतलमित्याद्यनुमितिः, तन्निष्ठा या वह्न्यभाववान् ह्रद इत्याकारकनिश्चयनिष्ठप्रतिबन्धकतानिरूपितह्रदो वह्निमानित्याकारकबुद्धिनिष्ठा प्रतिबध्यता तदवच्छेदकह्रदविशेष्यकवह्निप्रकारकत्वाभावाधिकरणता। तत्र=यादृशस्थले नानाविधबाधनिश्चयादिस्तादृशस्थले। अयमर्थः। विशिष्टान्तराऽघटितत्वस्योक्तरीत्या निर्वचने कृतेऽपि ह्रदो वह्निमान् जलादित्यादौ वह्न्यभाववद्ध्रदादावव्याप्तिस्तदव-

स्यैव, तथा हि वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकवह्न्यभाववान् ह्रदो वह्न्यभावव्याप्यवांश्चेत्याकारकबाधसत्प्रतिपक्षविषयकनिश्चयाव्यवहितोत्तरजायमानघटवद्भूतलमित्यनुमितौ, तथा ह्रदे वह्न्यभावः ह्रदो वह्न्यभाववानित्याकारकनानाविधबाधविषयकनिश्चयाव्यवहितोत्तरजायमानघटवद्भूतलमित्याद्याकारकानुमितौ वर्त्तते या ह्रदे वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यजलवैशिष्ट्यावगाहित्वोभयाभावप्रयोजकीभूता ह्रदत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकत्वाभावाधिकरणता तादृशाधिकरणतायां निरुक्तबाधविशिष्टान्तरभूतवह्न्यभावव्याप्यवद्ध्रदरूपसत्प्रतिपक्षादिविषयताप्रयोज्यत्वस्य वर्त्तमानतया विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यताविरहात् इति चेत् नैतन्मनोरमम्, तत्र सत्प्रतिपक्षादिरूपविशिष्टान्तरविषयिताप्रयोज्यत्वस्य वर्त्तमानत्वेऽपि घटाद्यनुमितेः पूर्वं वर्त्तमानः यादृशबाधादिनिश्चयस्तादृशबाधादिनिश्चयीयविरोधिविषयिताया एव घटाद्यनुमितिनिष्ठह्रदो वह्न्यभाववानित्याकारकनिश्चयनिष्ठप्रतिबन्धकतानिरूपितह्रदो वह्निमानित्याकारकबुद्धिनिष्ठप्रतिबध्यतावच्छेदकह्रदत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकत्वाभावाधिकरणताप्रयोजकतया तत्र विशिष्टान्तरापरबाधसत्प्रतिपक्षादिविषयिताप्रयोज्यत्वविरहेण निरुक्तविशिष्टान्तराघटितत्वघटितलक्षणगमनान्नाव्याप्तिसम्भावनेति ।

## गादाधरी

व्यभिचारघटितबाधादिविषयिताप्रयोज्याया दीधितिकारोक्तोभयाभावाधिकरणताया व्याप्त्याद्यवगाहिताविरहप्रयोज्यत्वेन यत्किञ्चिद्विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नबाधादिविषयतानन्तःपातिव्यभिचारादिविषयिताप्रयोज्यत्वनियमात् तत्संग्रहाय तादृशोभयाभावप्रयोजकाभावाधिकरणतापर्यन्तनिवेशः । तथा सति दर्शितोभयाभावाधिकरणताया उक्तरूपावच्छिन्नव्यभिचारादिविषयित्वप्रयोज्यत्वनियमेऽपि तादृशोभयाभावप्रयोजकसाध्यादिमत्तावगाहित्वाभावाधिकरणताया उक्तरूपावच्छिन्नव्यभिचारादिविषयित्वाऽप्रयोज्यत्वेन तादृशबाधादेः संग्रह इति ।

## विमलप्रभा

विशिष्टान्तरविषयित्वाप्रयोज्यस्वविषयिताप्रयोज्यत्वस्य निरुक्तोभयाभावाधिकरणतायां निवेशेनैव सर्वसामञ्जस्ये निरुक्तोभयाभावप्रयोजकाभावाधिकरण-

तायां तन्निवेशनं कुतो न निरर्थकमित्याशङ्कायामाह व्यभिचारघटितेति । दीधितिकारोक्तोभयाभावाधिकरणतायाः = प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वप्रकृतसाध्यव्याप्यप्रकृतहेतुवैशिष्ट्यावगाहित्वोभयाभावाधिकरणतायाः । व्याप्त्याद्यवगाहिताविरहप्रयोज्यत्वेन = व्याप्त्याद्यवगाहित्वाभावप्रयोज्यत्वसत्त्वेन । तत्संग्रहाय = व्यभिचारघटितबाधादिसंग्रहाय । तथा सति = उभयाभावप्रयोजकाभावाधिकरणतायां विशिष्टान्तरविषयित्वाऽप्रयोज्यस्वविषयिताप्रयोज्यत्वनिवेशे सति । दर्शितोभयाभावाधिकरणतायाः = प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावाधिकरणतायाः । उक्तरूपावच्छिन्नव्यभिचारादिविषयित्वप्रयोज्यत्वनियमेऽपि = बाधविषयितान्तःपातिव्यभिचारविषयितात्वरूपयत्किञ्चिद्विशिष्टान्तरविषयितात्वव्यापकव्यभिचारविषयितात्वावच्छिन्नप्रयोज्यत्वस्यावश्यकत्वेऽपि । उक्तरूपावच्छिन्नव्यभिचारादिविषयित्वाप्रयोज्यत्वेन = यत्किञ्चिद्विशिष्टान्तरविषयितात्वव्यापकव्यभिचारविषयितात्वावच्छिन्नप्रयोज्यत्वविरहेण । तादृशबाधादेः संग्रहः = व्यभिचारघटितबाधादेः संग्रहः। अयमर्थः । विशिष्टान्तरविषयितात्वाऽव्यापकरूपावच्छिन्नाऽप्रयोज्यस्वविषयिताप्रयोज्यनिरुक्तोभयाभावाधिकरणताकत्वमात्रनिवेशे नैव सामञ्जस्येऽलमुभयाभावप्रयोजकाभावाधिकरणतायां विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाऽप्रयोज्यस्वविषयिताप्रयोज्यत्वनिवेशेनेति केषाञ्चित् प्रलपनमपि भङ्गतरङ्गविजृम्भमाणत्वेनाकिञ्चित्करमेव, तथा सति तदनिवेशे धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपव्यभिचारघटितबाधे लक्षणागमनप्रसङ्गः, धूमव्यभिचारिवह्निमत्त्वावच्छिन्ने धूमवैशिष्ट्यावगाहित्वधूमव्याप्यवह्निवैशिष्ट्यावगाहित्वोभयाभावाधिकरणतायां धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपबाधविषयिताप्रयोज्यायां विशिष्टान्तरभूतव्यभिचारविषयिताप्रयोज्यत्वसत्त्वेनाप्रयोज्यत्वविरहप्रयुक्तलक्षणागमनात् । विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यस्वविषयिताप्रयोज्यत्वस्य निरुक्तोभयाभावप्रयोजकाभावाधिकरणतायां निवेशे च, पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभाववती या प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणता तत्र व्यभिचारविषयितात्वरूपेण व्यभिचारविषयितायाः प्रयोजकत्वाभावात् व्यभिचाररूपविशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाऽप्रयोज्यत्वरयाक्षततया लक्षणागमनान्नाव्याप्तिरिति भावः ।

तत्संग्रहाय ताद्दशोभयाभावप्रयोजकाभावाधिकरणतापर्यन्तनिवेश इति गदाधरः। नन्वत्र उभयाभावप्रयोजकाभावानिवेशे व्यभिचारघटितबाधेऽव्याप्तिरभिहिता, सा च न संगच्छते, तदनुपादानेऽपि यत्र धूमव्यभिचारिवह्निमान् धूमाभाववानिति दोषज्ञानं धूमव्याप्तिविशिष्टवह्निज्ञानं जायतामितीच्छा च, तदनन्तरं जायमानानुमितौ व्याप्त्यवगाहित्वाभावो हि सामग्र्यभावप्रयुक्तः न तु पूर्वज्ञाननिष्ठव्यभिचारविषयिताप्रयुक्तः, प्रतिबन्धकज्ञाननिष्ठविरोधिविषयिताया एव प्रयोजकत्वस्वीकारात्, इच्छाविरहविशिष्टविरोधिज्ञानस्यैव प्रतिबन्धकतया ताद्दशदोषज्ञानस्य व्याप्त्यवगाहित्वावच्छिन्नप्रत्यप्रतिबन्धकत्वात्, तथा च ताद्दशानुमितिनिष्ठोभयाभावाधिकरणता न व्यभिचारविषयिताप्रयुक्तहेतुधर्मिकव्याप्त्यवगाहित्वाभावप्रयुक्तेति तन्निष्ठताद्दशबाधविषयिताप्रयोज्यत्वमादाय लक्षणगमनसम्भवात्।

न च प्रतिबध्यतावच्छेदकशरीरेऽनाहार्यत्वादिनिवेशेनेच्छाकालीनविरोधिज्ञानस्यापि प्रतिबन्धकतया तदीयव्यभिचारविषयितायां व्याप्त्यवगाहित्वाभावप्रयोजकतायाः तदुत्तरानुमितिनिष्ठोभयाभावाधिकरणतायां व्यभिचारविषयिताप्रयोज्यत्वमस्तीति तत्राव्याप्तिरेवेति वाच्यम् सत्प्रतिपक्षग्रन्थे इच्छाव्यक्तीनामुत्तेजकत्वेऽनन्ततत्तद्व्यक्तीनां तत्तद्व्यक्तित्वेनोत्तेजकत्वेऽपि तदभावानामेकत्र द्वयमिति रीत्या विशेषणत्वे मानाभावात् गौरवादनाहार्यत्वस्य प्रतिबध्यतावच्छेदककुक्षौ निवेशे आहार्यज्ञानं प्रतीच्छायाः पृथक्कारणत्वेगौरवाच्चेच्छाया उत्तेजकतामतस्यैव भट्टाचार्येणादृतत्वात्। इच्छाकालीनताद्दशज्ञानस्याप्रतिबन्धकतया तन्निष्ठव्यभिचारविषयिताया अप्रयोजकत्वादिति। मैवम्, ह्रदत्वावच्छेदेन वह्नेः साध्यतायामवच्छेदकावच्छेदेन बाधेऽव्याप्त्यापत्तेः, अवच्छेदकावच्छेदेन बाधविषयिताप्रयोज्यायां ताद्दशोभयाभावाधिकरणतायां ताद्दशबाधाविषयकप्रतीतिविषयसामानाधिकरण्येन बाधविषयताया अपि प्रयोजकत्वात्, उक्तविवक्षायान्तु नाव्याप्तिः, ताद्दशोभयाभावप्रयोजकीभूता या पक्षे सामानाधिकरण्येन साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणता तस्या अवच्छेदकावच्छेदेन बाधविषयिताप्रयोज्यायां सामानाधिकरण्येन बाधविषयिताप्रयोज्यत्वाभावादिति, ताद्दशोभ-

याभावप्रयोजकसामानाधिकरण्येन वह्न्यवगाहित्वाभावमादाय लक्षणसमन्वयादिति। स्वविषयताप्रयोज्यत्वानुपादाने, यत्र किमपि प्रतिबन्धकज्ञानं नासीत् स्वसामग्र्यभावादेव समूहालम्बनज्ञानमनुमित्यादिरूपं न जातम् घटाद्यनुमितिरेव जाता तन्निष्ठोभयाभावप्रयोजकाभावाधिकरणता न किञ्चिद्विशिष्टान्तरविषयिताप्रयोज्येति तत्र मेयत्वविशिष्टव्यभिचारेऽपि विशिष्टान्तरविषयित्वाऽप्रयोज्योभयाभावप्रयोजकाभावाधिकरणताकत्वस्य सत्त्वात् तत्रातिव्याप्तिः।

न च तद्वारणाय विषयिताप्रयोज्यत्वमेवोपादीयतामिति वाच्यम् यत्र धूमव्याप्यवह्निमानिति परामर्शः पर्वतो धूमाभाववानिति बाधभ्रमस्तदनन्तरज्ञाने उभयाभावप्रयोजिकायां पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां बाधभ्रमविषयिताप्रयोज्यत्वस्य विशिष्टान्तरविषयित्वाऽप्रयोज्यत्वस्य च सत्त्वात् तदधिकरणतामादाय मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, अतः स्वविषयिताप्रयोज्यत्वाभिधानम्, तावन्मात्रे कृते तत्रैवातिव्याप्तिरतो विशेषणदलम्। अत्रोभयाभावप्रयोजकाधिकरणतायामभावीयत्वानुपादाने धूमव्यभिचारिवह्निधूर्मवान् वह्नेरित्यादौ मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, स्मृत्यनुभवसाधारणविरोधिविषयकनिश्चयत्वेनैव प्रतिबन्धकतया मेयत्ववान् धूमाभाववान् इति निश्चयविशिष्टमेयत्ववान् धूमव्यभिचारिवह्निरिति स्मरणात्मकनिश्चयस्य वह्नौ धूमवत्ताज्ञानप्रतिबन्धकतया तादृशस्मरणोत्तरज्ञानवृत्तिसाध्यव्याप्तिवैशिष्ट्यावगाहित्वघटितोभयाभावं प्रति तादृशस्मरणात्मकप्रतिबन्धकज्ञानवृत्तिमेयत्वविशिष्टव्यभिचारविषयितायाः प्रयोजकतया तदधिकरणत्वस्यापि प्रयोजकत्वात्, कार्यतावच्छेदकविषयितां प्रति कारणतावच्छेदकविषयितायाः प्रयोजकत्वात्, स्मृतिनिष्ठमेयत्वविशिष्टव्यभिचारविषयित्वाधिकरणत्वस्यानुभवीयविषयिताप्रयोजकत्वात्, विशिष्टान्तरविषयित्वाप्रयोज्यत्वाच्च विशेष्यदलस्य च सत्त्वात्, अभावीयत्वोपादाने च, न साऽभावाधिकरणतेति नातिव्याप्तिः, अधिकरणतात्वेनाधिकरणतामनुपादाय विशिष्टान्तरविषयित्वाप्रयोज्यस्वविषयिताप्रयोज्यतादृशोभयाभावप्रयोजकाभावनिरूपकत्वं विशिष्टान्तराघटितत्वमित्युक्तौ भावभेदोऽवृत्तिरित्यत्र पक्षे साध्यप्रकारकत्वाभावेऽतिव्याप्तिः, तत्र हि भावभेदवान् बाधः, भावभेदो ह्यभावत्वं, तथा चाभाववानिति ज्ञानीयाभावत्वावच्छिन्नविषयितैव पक्षे

साध्यप्रकारकत्वाभाव इति स्मरणात्मकज्ञानीयविषयितापि ताद्दशोभयाभावप्रयोजिका सामान्येऽवृत्तित्वज्ञानं प्रति विशेषवत्ताज्ञानस्य बाधतुल्ययोगक्षेमतया प्रतिबन्धकत्वात् स्मृतीयताद्दशविषयिताप्रयोजिका तद्विषयकानुभवविषयितेति विशिष्टान्तरविषयित्वाप्रयोज्यस्वविषयिताप्रयोज्यताद्दशोभयाभावप्रयोजकस्मृतीयविषयतात्मकताद्दशाभावनिरूपकत्वस्य ताद्दशप्रकारत्वाभावे सत्त्वात् तद्विषयकनिश्चयोत्तरानुमितिसामान्ये ताद्दशोभयाभावस्य च सत्त्वात् ।

न च भावभेदोऽवृत्तिरिति ज्ञानं नियताहार्यतया निर्वह्निर्वह्निमानिति ज्ञानतुल्यम् नियमेनाभावत्वप्रकारकत्वात्तदीयसाध्यवत्पक्षविषयिताव्यापकप्रतिबध्यतावच्छेदकविषयित्वाऽप्रसिद्धिः, तथा चैतल्लक्षणे ताद्दशस्थले दोषो ग्रन्थकारेण स्वयं वक्तव्य इति वाच्यं, तथापि भावभेदे वृत्तिभेदसाधने तत्रातिव्याप्तिः, तस्य नियताहार्यत्वाभावात् । एवमभावः प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताकप्रकारत्वाभाववानित्यत्र पक्षे साध्यप्रकारकत्वाभावेऽतिव्याप्तिश्चातोऽधिकरणतात्वेन तन्निवेशः ।

नन्वत्रासाधारण्येऽव्याप्तिः, विशेष्यदलघटकनिश्चये पक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वघटितोभयाभावं निवेश्य विशेष्यदलोपादानेऽपि विशिष्टान्तराघटितत्वस्याभावात्, असाधारण्यविषयिताप्रयोज्यायास्ताद्दशोभयाभावप्रयोजिकायाः पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताया विशिष्टान्तरहेतुमत्पक्षविषयिताप्रयोज्यत्वात् ।

अथ सर्वं गगनवदित्यत्र गगनाभाववद्घटादिरूपबाधेऽव्याप्तिः, सर्वं गगनवदिति ज्ञानं प्रति गगनाभाववद्घटपटादिविषयकनिश्चयानां गगनाभावत्वावच्छिन्नप्रकारतानिरूपितावच्छिन्नविशेष्यताशालिनिश्चयत्वेनानुगतरूपेणैव प्रतिबन्धकतया गगनाभाववद्घटत्वावच्छिन्नविषयिताप्रयोज्यायां ताद्दशोभयाभावप्रयोजिकायां पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां गगनाभाववत्पटादिरूपविशिष्टान्तरविषयितात्वव्यापकगगनाभावत्वावच्छिन्नप्रकारतानिरूपितावच्छिन्नविषयितात्वावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतायाश्च सत्त्वात्, अतो विशिष्टान्तरे स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकत्वस्य तद्विषयितायाम्वा ताद्दशज्ञानीयत्वस्य वक्तव्यतया हेतुमत्पक्षस्य विशिष्टान्तरत्वाभावात् न तद्विषयिताप्रयोज्यत्वमादायासाधारण्येऽव्याप्तिः ।

न चैवं ह्रदो वह्निमान् जलादित्यादौ बाधाद्यसंग्रहः तत्र बाधैकदेशवह्न्यभावादेरेव तादृशविशिष्टान्तरतया तद्विषयितात्वव्यापकरूपावच्छिन्नप्रयोजकताया अप्रसिद्धेरिति वाच्यम्। अभावो वह्नीय इति ज्ञानं प्रति वह्न्यभाव इति ज्ञानस्य प्रतिबन्धकतया वह्न्यभावविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यताया अभावे वह्नीयत्वाभावावगाहित्वाभावाधिकरणतायां प्रसिद्धत्वात्।

न चैवमपि पर्वतो वह्न्यभाववानित्यत्र वह्निमत्पर्वतरूपबाधेऽव्याप्तिः, तदेकदेशवह्न्यादिविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकत्वाऽप्रसिद्धेरिति वाच्यम्, तत्रापि वह्निरिति ज्ञानं प्रति तादृशबाधैकदेशवह्निमद्विषयकनिश्चयस्य प्रतिबन्धकतया प्रसिद्धिसम्भवादिति। घटोऽवृत्तिरित्यत्र घटवदिति बाधे तादृशविशिष्टान्तराऽप्रसिद्धयाव्याप्तेः। न च तत्रापि घटत्वावच्छिन्नविषयताशालिज्ञानस्य घटवान् पट इति ज्ञानं प्रति घट इति स्मृतिं प्रत्यपि च कारणतया कार्यतावच्छेदकविषयितायामेव घटत्वावच्छिन्नविषयिताप्रयोज्यत्वं प्रसिद्धमिति वाच्यं, घटवान् पट इति ज्ञानं प्रति घट इति ज्ञानस्य घटत्वप्रकारताशालिज्ञानत्वेनैव कारणतया घट इति स्मृतिं प्रत्यपि तत्तद्विषयिताशालिज्ञानत्वेनैव कारणतया घटत्वप्रकारितात्वस्य तत्तद्घटविषयितात्वस्य च घटत्वावच्छिन्नविषयितात्वव्यापकत्वाभावेन तादृशविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वस्याऽप्रसिद्धेरिति चेन्न। विशिष्टान्तरविषयित्वाऽप्रयोज्येत्यनेन स्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकधर्माभाववत्त्वस्य विवक्षितत्वात्। अभावप्रतियोगितावच्छेदकसम्बन्धश्च स्वावच्छिन्नविषयिताव्यापकविषयिताशून्यज्ञानीयस्वावच्छिन्नविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वरूपः। एवञ्च घटोऽवृत्तिरित्यत्र घटवदात्मकबाधविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयतदविषयकप्रतीतिविषयतावच्छेदकघटत्वस्यायं व्यधिकरणसम्बन्ध इति तेन सम्बन्धेन तदभाववती बाधविषयिताप्रयोज्या पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणता भवतीति न तत्राव्याप्तिः।

मेयत्वविशिष्टव्यभिचारादौ च नातिव्याप्तिः, उक्तसम्बन्धेन शुद्धव्यभिचारत्वस्य हेतौ व्याप्तिवैशिष्ट्यावगाहित्वाभावाधिकरणतायां तादृशव्यभिचारविषयिताया

प्रयोज्यायां सत्त्वात्। ननु तथापि अभावो गगनवानाधेयत्वादित्यत्र हेतुमत्पक्षघटितासाधारण्येऽव्याप्तिः, तादृशासाधारण्यविषयिताप्रयोज्यायाः पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायाः गगनत्वव्यापकाभावप्रतियोग्याधेयत्वरूपासाधारण्यविषयित्वाव्यापकविषयिताशून्यज्ञानीयासाधारण्यविषयकप्रतीतिविषयतावच्छेदकाधेयत्ववद - भावत्वावच्छिन्नविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वनियमा - त्। न च विशिष्टान्तरविषयितायां प्रकृतलक्षणाश्रयीभूतत्वं निवेशनीयम्, तथा च हेतुमत्पक्षविषयिता च न तादृशीति वाच्यम्। ह्रदो वह्निमानित्यादावपि तादृशविशिष्टाप्रसिद्ध्याऽव्याप्त्यापत्तेः। न च प्रतियोगिनि स्वत्वमन्तर्भाव्य विशिष्टान्तराघटितत्वं निर्वाच्यम्, तथा हि स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकं तदवच्छिन्नविषयित्वाऽप्रयोज्यस्वविषयिताप्रयोज्यनिरुक्तोभयाभावाधिकरणताकं यद्यत्स्वं तत्तदघटितत्वम्। तथा च सर्वत्र मेयत्वविशिष्टदोषतावच्छेदकमादाय लक्षणसमन्वयः। स्वस्य स्वाऽघटितत्वाभावादेव मेयत्वविशिष्टव्यभिचारादौ नातिव्याप्तिः। इदानीं विशिष्टान्तरविषयितायां प्रकृतलक्षणाश्रयीभूतत्वं देयमतो न हेतुमत्पक्षघटिताऽसाधारण्येऽव्याप्तिरिति वाच्यम्। आधेयत्वाभाववानभावो गगनत्ववानाधेयत्वादित्यत्राऽसाधारण्येऽव्याप्त्यापत्तेः, तत्र हेतुमत्पक्षरूपविशिष्टान्तरस्य प्रकृतलक्षणाश्रयीभूतत्वात्। एवमनुयोगिनि स्वत्वान्तर्भावे, घटो गगनाभाववदभाववत्कालीनगगनवान् अभाववद्घटकालीनपटादित्यत्राभाववति गगनाभावोऽव्याप्यवृत्तिरिति ज्ञानकालीनतादृशगगनाभववद्घटरूपबाधनिश्चयोत्तरज्ञाने तादृशोभयाभावप्रयोजकपक्षे साध्यवैशिष्ट्याभावाधिकरणतायां विशिष्टान्तरविषयित्वाऽप्रयोज्यत्वसत्त्वेन तादृशनिश्चयमादाय लक्षणसमन्वयः सम्भवति, प्रतियोगिनि स्वत्वान्र्भावे तु तत्राऽव्याप्तिः, अभाववद्घटत्वात्मकं यद्विशिष्टान्तरतावच्छेदकं तदवच्छिन्नविषयिताप्रयोज्यस्वावच्छिन्नविषयिताप्रयोज्योभयाभावप्रयोजकाभावाधिकरणताप्रसिद्ध्या स्वपदेन तादृशबाधत्वस्यापि धर्त्तुं शक्यत्वात्, अभाववद्घटस्य प्रकृतलक्षणाश्रयत्वात्, स्वस्य स्वाघटितत्वाभावादिति चेन्न। विशिष्टान्तरविषयितानिष्ठप्रयोजकतायां ज्ञानवैशिष्ट्यनिष्ठप्रयोजक-

तानिरूपितप्रयोज्यतावदधिकरणतानिष्ठप्रयोज्यतानिरूपितत्वासाधारण्यविषयित्वावृ-त्तित्वोभयाभावस्य निवेशनीयत्वात्। तथा चोक्तहेतुमत्पक्षघटितासाधारण्ये नाव्याप्तिः। हेतुमत्पक्षविषयितानिष्ठप्रयोजकतायामसाधारण्यविषयकज्ञानवैशिष्ट्यनिष्ठप्रयोजकतानिरूपितप्रयोज्यताशालिपक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतानिष्ठ-प्रयोज्यतानिरूपितत्वासाधारण्यविषयित्वावृत्तित्वोभयस्यैव सत्त्वेनोभयाभावासत्त्वात्। इदानीमनुयोगिन्येव स्वत्वान्तर्भावः। न चैवं मेयत्वविशिष्टबाधेऽतिव्याप्तिः, वह्नि-व्यापकीभूताभावप्रतियोगिधूमवान् ह्रदः वह्न्यभाववान् ह्रदः प्रमेय इत्यसाधारण्य-भ्रमात्मकमेयत्वविशिष्टबाधविषयकज्ञानोत्तरज्ञाननिष्ठायां पक्षे साध्यवैशिष्ट्यावगाहि-त्वाभावाधिकरणतायां मेयत्वविशिष्टबाधविषयिताप्रयोज्यायां शुद्धबाधात्मकविशिष्टा-न्तरविषयिताप्रयोज्यत्वेऽपि बाधविषयितानिष्ठप्रयोजकतायां निरुक्तोभयसत्त्वेनोभया-भाववती चान्यविषयितानिष्ठप्रयोजकतैवेति तन्निरूपितप्रयोज्यताशून्यत्वस्य तत्र स-त्त्वात् इति वाच्यम्। स्वविषयितानिष्ठप्रयोजकतायामपि तादृशोभयाभावस्य वि-शेषणत्वात्। न चैवमपि आधेयत्वं निरूपितत्वाभाववदाधेयतात्वादित्यत्र निरूपित-त्वव्याप्यवदाधेयत्वरूपबाधघटितसत्प्रतिपक्षेऽव्याप्तिः, तत्र बाधसत्प्रतिपक्षयोरेकत्रैवा-धिकरणतायां प्रयोजकत्वात्, बाधविषयितानिष्ठप्रयोजकतायामुक्तोभयाभावस्य सत्त्वा-च्चेति वाच्यम्, तत्र बाधस्यैव दोषत्वाङ्गीकारात्। अस्तु वा बाधघटितसत्प्रतिप-क्षस्य दोषत्वं तथापि विशिष्टान्तरविषयितानिष्ठप्रयोजकतायां स्वविषयितानिष्ठप्रयोज-कतावदन्यत्वं विशेषणं देयम्. तादृशप्रयोजकतावत्त्वञ्च स्वावच्छेदकानवच्छिन्नत्वस्व-निरूपितप्रयोज्यतावदधिकरणतानिष्ठप्रयोज्यतानिरूपितत्वोभयसम्बन्धेन, तथा च बा-धविषयितानिष्ठप्रयोजकता च तादृशोभयसम्बन्धेन सत्प्रतिपक्षविषयितानिष्ठप्रयोजकता-विशिष्टैवेति तद्वदन्या सत्प्रतिपक्षैकदेशान्तरविषयितानिष्ठा किञ्चिदन्यनिरूपितप्रयोजक-तैव तन्निरूपितप्रयोज्याधिकरणतायां सत्त्वान्नाव्याप्तिः, इदानीं विशिष्टान्तरविषयिता-निष्ठप्रयोजकतायां प्रागुक्तोभयाभावोऽपि न निवेशनीयः, अभावो गगनत्ववानाधेयत्वादि-त्यत्राधेयत्ववभावरूपहेतुमत्पक्षविषयितानिष्ठप्रयोजकतायामुक्तोभयसम्बन्धेनाऽसाधार-ण्यविषयितानिष्ठप्रयोजकतायाः सत्त्वेनाऽव्याप्तिविरहात्। यद्यपि स्वविषयितानिष्ठप्र-योजकतायामुक्तोभयाभावानिवेशेऽपि न मेयत्वविशिष्टबाधादावुक्तरीत्यातिव्याप्तिः, शु-

द्बाधविषयितानिष्ठप्रयोजकतायां मेयत्वविशिष्टबाधविषयितानिष्ठप्रयोजकतावच्छेद-काववच्छिन्नत्वसत्त्वेन तदनवच्छिन्नत्वघटितोभयसम्बन्धेन स्वविषयितानिष्ठप्रयोजकता-वदन्यत्वसत्त्वेन तादृशप्रयोजकतानिरूपितप्रयोज्यताशून्यत्वस्य स्वविषयिताप्रयोज्यता-दृशाधिकरणतायामभावेन विशिष्टान्तराघटितत्वाभावात् ।

तथापि ह्रदो वह्निमानित्यत्र वह्न्यभाववज्जलादिमद्वृत्ति जलवद्ध्रदेऽतिव्या-प्तिः तादृशवह्न्यभाववज्जलवत्त्वावच्छिन्नविषयितानिष्ठप्रयोजकतायामुक्तोभयसम्बन्धेन तादृशविषयितानिष्ठप्रयोजकतायाः सत्त्वेन तदन्यप्रयोजकतानिरूपितप्रयोजकताशून्यत्व-स्य तादृशविशिष्टविषयिताप्रयोज्याधिकरणतायां सत्त्वात्, तत्र तादृशोभयाभावनिवेशे तु स्वपदेन तादृशविशिष्टमेव धर्त्तुं न शक्यते तद्विषयितानिष्ठप्रयोजकतायामसाधारण्य-विषयित्वावृत्ति त्वज्ञानवैशिष्ट्यनिष्ठप्रयोजकतानिरूपितप्रयोज्यतावदधिकरणतानिष्ठप्र - योजकतानिरूपितत्वोभयसत्त्वात् ।

न च स्वविषयितानिष्ठप्रयोजकतायामुक्तोभयाभावाऽनिवेशेऽपि नोक्तविशिष्टेऽ-तिव्याप्तिः, जलवद्ध्रदस्यापि विशिष्टान्तरतया तादृशविषयिताया अपि जलवद्ध्रदवि-षयितात्वेनैव प्रयोजकतया जलवद्ध्रदविषयितानिष्ठप्रयोजकतायां तादृशविशिष्टवि-षयितानिष्ठप्रयोकतानिरूपितप्रयोज्यतावदधिकरणतानिष्ठप्रयोज्यतानिरूपितत्वसत्त्वे - ऽपि तदवच्छेदकानवच्छिन्नत्वाभावेन तादृशोभयसम्बन्धेन स्वविषयितानिष्ठप्रयोजकता-विशिष्टान्यजलवद्ध्रदविषयितानिष्ठप्रयोजकतानिरूपितप्रयोज्यताशून्यत्वस्य स्वविष-यिताप्रयोज्याधिकरणतायामभावादिति वाच्यम् । अभावो वह्निमानित्यत्र वह्न्य-भाववद्वह्निमत्यतिव्याप्तिः, तत्र वह्न्यभावरूपविशिष्टान्तरविषयितानिष्ठप्रयोज - कतायां तादृशविशिष्टविषयितानिष्ठप्रयोजकताया निरुक्तोभयसम्बन्धेन वर्त्तमान-तया तदन्यप्रयोजकतानिरूपितप्रयोज्यताशून्यत्वस्य स्वपदग्राह्यतादृशविषयिताप्रयो-ज्याधिकरणतायां सत्त्वात् ।

एवम्, धूमव्यभिचारिवह्निर्धूमवान् वह्नेरित्यत्र मेयत्वविशिष्टव्यभिचारेऽति-व्याप्तिः, मेयत्वविशिष्टव्यभिचारविषयिताप्रयोज्यायां पक्षे साध्यवैशिष्ट्याभावाधिक-रणतायां शुद्धव्यभिचारविषयिताप्रयोज्यत्वाभावात्, स्वविषयितानिष्ठप्रयोजकताया-

मुक्तोभयाभावनिवेशे स्वपदेन वह्न्यभाववद्वह्निः मेयत्वविशिष्टव्यभिचारश्च धर्तुं न शक्यते ज्ञानवैशिष्ट्यनिष्ठप्रयोजकतानिरूपितप्रयोज्यतावत्पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतानिष्ठप्रयोजकतानिरूपितत्वाऽसाधारण्यविषयिताऽवृत्तित्वोभयसत्वात्। नन्वेवमपि गगनाभाववत्कालीनघटो गगनवानित्यत्र गगनाभाववत्तादृशघटरूपबाधेऽव्याप्तिः, एवम् वह्न्यभाववद्वह्न्यभावव्याप्यवत्कालीनह्रदो वह्निमानित्यत्र वह्न्यभावव्याप्यवत्तादृशह्रदरूपसत्प्रतिपक्षे व्यापकसामानाधिकरण्यरूपव्याप्तिघटितस्य सत्प्रतिपक्षत्वे तादृशसत्प्रतिपक्षमात्रे चाव्याप्तिः, सर्वत्र दोषज्ञानस्य विशिष्टज्ञानत्वेनैव प्रतिबन्धकतया दोषविषयितानिष्ठप्रयोजकतायां उक्तोभयाभावासत्त्वेन स्वपदेन तस्य धारणासम्भवादिति चेन्न, स्वावच्छिन्नविषयितानिष्ठप्रयोजकतावदन्यविशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यताशून्यनिरुक्तोभयाभाववत्स्वावच्छिन्नविषयितानिष्ठप्रयोजकतानिरूपितप्रयोज्यताशालिनिरुक्तोभयाभावप्रयोजकाभावाधिकरणताकान्यत्वतादृशोभयाभावप्रयोजकाभावाधिकरणतानिष्ठप्रयोज्यतानिरूपितप्रयोजकताविशिष्टविषयितानिरूपकतानवच्छेदकत्वतादृशविषयिताघटितधर्मावच्छिन्नकार्यतानिरूपितकारणताविशिष्टविषयितानिरूपकतानवच्छेदकत्वैतत्त्रितयाभावस्य दोषतावच्छेदके निवेशनीयत्वात्। विषयितायां प्रयोजकतावैशिष्ट्यञ्च, स्वाश्रयत्व–स्वविशिष्टविषयितावदन्यत्वोभयसम्बन्धेन, विषयितायां स्ववैशिष्ट्यञ्च स्वाश्रयत्वस्वनिरूपितप्रयोज्यतावदधिकरणतानिरूपकाभावप्रतियोगितावच्छेदकताविशिष्टनिश्चयोत्तरानुमितित्वव्यापकविषयिताप्रयुक्ताधिकरणतानिरूपकाभावप्रतियोगित्वोभयसम्बन्धेन, निश्चयेऽवच्छेदकतावैशिष्ट्यञ्च स्वाश्रयविषयितावत्वस्वविशिष्टप्रकारतावच्छेदकावच्छिन्नधर्मिकाऽव्याप्यवृत्तित्वज्ञानाभावत्वोभयसम्बन्धेन, प्रकारतायां स्ववैशिष्ट्यञ्च स्वाश्रयत्वस्वनिरूपितावच्छेदकताश्रयमुख्यविशेष्यतानिरूपितत्वोभयसम्बन्धेन अत्र मुख्यविशेष्यतानिवेशात् वह्न्यभाववज्जलवद्वृत्तिजलाभाववद्वह्निमत्कालीनह्रदो वह्निमानित्यत्र वह्न्यभाववज्जलवद्वृत्तिजलवत्तादृशह्रदे नातिव्याप्तिः। तादृशविषयितावत्ता च, स्वव्याप्यत्वस्वव्यापकत्वोभयसम्बन्धेन कारणतावैशिष्ट्यञ्च स्वावच्छेदकत्वस्वावच्छेदकविषयितावदन्यत्वोभयसम्बन्धेन विषयितावत्ता च पूर्वोक्तोभयसम्बन्धेन। अत्रानुगमः प्रकृतपक्षतावच्छेदकावच्छिन्ने प्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतु-

वैशिष्टयावगाहित्वोभयाभावविशिष्टरूपवत्त्वम् लक्षणम् । रूपे तादृशाभाववैशिष्टयम् स्ववृत्तिर्थः किञ्चिद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयोत्तरानुमितिनिष्ठाभावीयदिषयिताप्रयुक्तत्वविशिष्टस्वाधिकरणत्वसम्बन्धावच्छिन्नोभयावृत्तिधर्मेतरधर्मानवच्छिन्नप्रतियोगित्वन्नास्तीति प्रतीतिसिद्धोऽभावस्तन्निरूपितप्रतियोगित्वनिष्ठप्रतियोगितानिरूपिताभावनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताऽनुमितिनिष्ठावच्छेदकतानिरूपितोत्तरत्वनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व-स्वप्रयोजकाभावाधिकरणावृत्तित्वोभयसम्वन्धेन, तादृशाधिकरणावृत्तित्वञ्च, स्वावच्छिन्नविषयितानिष्ठासासाधारण्यविषयित्वाऽवृत्तित्वघटितोभयाभाववत्प्रयोजकतानिरूपितप्रयोज्यतावत्त्वस्वविशिष्टप्रतीतिविषयितावच्छेदकरूपाभाववत्त्वोभयसम्बधेन, प्रतीतौ स्ववैशिष्टयम् स्वावच्छिन्नविषयिताशून्यत्वस्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वोभयसम्बन्धेन, रूपनिष्ठप्रतियोगितावच्छेदकसम्बन्धश्च स्वविशिष्टविषयितानिष्ठभेदप्रतियोगितानवच्छेदकरूपावच्छिन्नप्रागुक्तोभयाभाववत्प्रयोजकतानिरूपितप्रयोज्यतारूपः,विषयितायां स्ववैशिष्टयञ्च स्वावच्छिन्ननिरूपकताकत्वस्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वोभयसम्बन्धेन, त्रितयाभावनिवेशकल्पे रूपेऽभाववैशिष्टयञ्च प्रागुक्तस्वप्रयोजकाभावाधिकरणतावृत्तित्वप्रत्येकप्रागुक्तविषयिताद्वयानवच्छेदकत्वैतत्त्रितयाभाववत्त्वोभयसम्बन्धेनेति बोध्यम् । वस्तुतस्तु यद्रूपावच्छिन्नविषयताशालिनिश्चयोत्तरानुमितित्वव्यापकोभयाभावप्रयोजकयदभावाधिकरणतायां विरोधिविषयिताप्रयुक्तत्वमस्ति तदभावाधिकरणतायां विशिष्टान्तरविषयित्वाऽप्रयोज्यत्वविशिष्टस्वविषयिताप्रयोज्यत्वाभिधानमेव सम्यक् । एवञ्च मेयत्वविशिष्टव्यभिचारे नातिव्याप्तिः, तादृशव्यभिचारविषयकनिश्चयोत्तरानुमितित्वव्यापकोभयाभावप्रयोजकहेतुधर्मिकव्याप्त्यवगाहित्वाऽभावाधिकरणतायामेव विरोधिविषयिताप्रयुक्तत्वसत्त्वात् तत्र च विशिष्टान्तरशुद्धव्यभिचारविषयिताप्रयुक्तत्वस्य च सत्त्वात् । धूमव्यभिचारिवह्निर्धूमवान् वह्नेरित्यादौ च मेयत्वविशिष्टव्यभिचारे च नातिव्याप्तिः, तत्र विशेष्यदलघटकविरोधिविषयिताप्रयुक्तत्वं हि हेतौ व्याप्त्यवगाहित्वाभावाधिकरणतायामेवास्ति तस्या एव तादृशव्यभिचारविषयकनिश्चयोत्तरानुमितित्वव्यापकत्वात्, तत्र

च विशिष्टान्तरशुद्धव्यभिचारविषयिताप्रयोज्यत्वमस्त्येव, तादृशोभयाभावप्रयोजिकायां पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायामेव विशिष्टान्तरविषयित्वाऽप्रयोज्यत्वविशिष्टस्वविषयिताप्रयोज्यत्वस्य सत्त्वात् अधिकरणताया ऐक्याभावात्। एवञ्च स्वविषयितानिष्ठप्रयोजकतायामसाधारण्यविषयित्वाऽवृत्तित्वघटितोभयाभाववत्त्वमपि न विवक्षणीयम्, तद्वारणायोक्तस्थनीयमेयत्वविशिष्टव्यभिचारेऽतिव्याप्त्यभावात्, एवमलक्ष्ये कुत्रापि विशिष्टे नातिव्याप्तिः, बाधघटितसत्प्रतिपक्षेऽव्याप्तिस्तु नियतज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकताश्रयज्ञानविषयसत्प्रतिपक्षसंग्रहप्रयासेनैव वार्यते, [प्रयासश्च स्वविषयितानिष्ठप्रयोजकतावदन्यत्वविशेषणात्मकः,] हेतुमत्पक्षघटितासाधारण्यसंग्रहस्तु यद्रूपावच्छिन्नविषयताशालिनिश्चयोत्तरानुमितित्वव्यापकमुभयाभावप्रयोजकाभावाधिकरणत्वं तद्रूपावच्छिन्नविषयिताभिन्नत्वाऽसाधारण्यविषयिताभिन्नत्वोभयाभाववद्विषयितानिरूपकतावच्छेदकधर्मवत्त्वविवक्षणेनैव कार्यः। एवञ्च विशेष्यदलघटकयद्रूपावच्छिन्नविषयकनिश्चये पक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वघटितोभयाभावोऽपि न निवेशनीयः, उक्तविवक्षयैवासाधारण्यमात्रसंग्रहात्, सर्वत्रासाधारण्यस्थले बाधस्वरूपासिद्ध्यन्यतरनियमेन तादृशदोषमादाय लक्षणसमन्वयात्।

मेयत्वविशिष्टासाधारण्यविषयितायाः शुद्धासाधारण्यविषयिताभिन्नत्वादेव नातिव्याप्तिरिति। अत्रायमनुगमः तादृशोभयाभावप्रयोजकीभूताभावविशिष्टविषयिताभिन्नत्वासाधारण्यविषयिताभिन्नत्वोभयाभाववद्विषयितानिरूपकतावच्छेदकधर्मवत्त्वं लक्षणम्, विषयितायामभाववत्त्वञ्च स्ववृत्तिर्यः किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयोत्तरानुमितिनिष्ठाभावीयविरोधिविषयिताप्रयुक्तत्वविशिष्टाधिकरणतासम्बन्धावच्छिन्नोभयावृत्तिधर्मेतरधर्मानवच्छिन्नप्रतियोगित्वन्नास्तीति प्रतीतिसिद्धोऽभावस्तन्निरूपितप्रतियोगितानिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताऽनुमितिनिष्ठावच्छेदकतानिरूपितोत्तरत्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकत्व–स्वनिरूपिताधिकरणतावृत्तित्वोभयसम्बन्धेन, अधिकरणतावृत्तित्वञ्च पूर्वोक्तसम्बन्धेन। परन्तु विशिष्टान्तरनिष्ठप्रयोजकतायां स्वविषयितानिष्ठप्रयोजकतायाञ्च प्रागुक्तोभयाभावो न निवेशनीय इति बोध्यम्।

## गादाधरी

बाधादिविषयिताप्रयोज्यस्य साध्यादिमत्तावगाहिताविरहस्य सत्प्रतिपक्षादिरूपविशिष्टान्तरविषयिताप्रयोज्यत्वनियमादसम्भवः स्यादित्युभयाभावप्रयोजकाभावे विशिष्टान्तरविषयित्वाप्रयोज्यत्वमनिवेश्य तादृशाभावाधिकरणतायां तन्निवेशः। तथा सति अधिकरणताया अधिकरणभेदेन भिन्नतया पूर्ववर्त्तिनिष्ठप्रतिबन्धकतावच्छेदकधर्मस्यैव तदुत्तरोत्पन्ननिष्ठप्रतिबध्यतावच्छेदकधर्माभावाधिकरणताप्रयोजकत्वेन बाधादिनिश्चयानन्तरोत्पन्नानुमितिनिष्ठसाध्यादिमत्त्वावगाहित्वाभावाधिकरणतायां सत्प्रतिपक्षान्यादृशबाधादिविषयिताया अप्रयोजकत्वेन सामञ्जस्यात्।

## विमलप्रभा

विरहस्य=अभावस्य। असम्भवः=लक्ष्यमात्रावर्त्तनम्। तादृशाभावाधिकरणतायां=उभयाभावप्रयोजकीभूताभावाधिकरणतायाम्। तन्निवेशः=विशिष्टान्तरविषयित्वाऽप्रयोज्यत्वनिवेशः। तथा सति=उभयाभावप्रयोजकीभूताभावाधिकरणतायां विशिष्टान्तरविषयित्वाऽप्रयोज्यत्वनिवेशे सति। अन्यादृशबाधादिविषयितायाः=विभिन्नबाधादिज्ञानीयविषयितायाः। अप्रयोजकत्वेन=प्रयोजकत्वाभावेन। सामञ्जस्यात्=अव्याप्त्याद्यभावात्। अयमर्थः। विशिष्टान्तरविषयित्वाऽप्रयोज्यस्वविषयिताप्रयोज्यत्वमुभयाभावप्रयोजकाभावे निवेशेनैव सर्वदोषवारणसम्भवेऽलं तादृशाधिकरणतायां तन्निवेशेनेति चेन्नैतत् चमत्कारमाविष्करोति, यतस्तदनिवेशे सर्वत्रैवासम्भवप्रसङ्गः, तथा हि बाधाद्येकैकदोषमुपादाय तद्विषयकनिश्चयाव्यवहितोत्तरजायमानानुमितिनिष्ठबाधादिविषयिताप्रयोज्यतादृशोभयाभावप्रयोजकसाध्यवैशिष्ट्यावगाहित्वाभावे विशिष्टान्तरभूतं यत् सत्प्रतिपक्षादिकं तद्विषयिताया अपि प्रयोजकतयाऽप्रयोजकत्वविरहेण लक्षणागमनात्। तन्निवेशे चाधिकरणताया अधिकरणभेदेन विभिन्नतया बाधादिनिर्णयनिष्ठप्रतिबन्धकतावच्छेदकविषयिताया एव बाधादिनिश्चयाव्यवहितोत्तरजायमानानुमित्यादिनिष्ठप्रतिबध्यतावच्छेदकधर्माभावाधिकरणताप्रयोजकतया बाधादिविषयकनिश्चयोत्तरघटाद्यनुमितिनिष्ठह्रदधर्मिकवह्न्य-

वगाहित्वाभावाधिकरणतायां सत्प्रतिपक्षादिविषयिताया अप्रयोजकतया लक्षणगमनान्नासम्भवावकाश इति ।

## गादाधरी

अथ ताद्दशोभयाभाववत्त्वघटितलक्षणकरणेऽपि केवलनिर्वह्नित्वादिपक्षतावच्छेदककवह्न्यादिसाध्यकस्थलीयनिर्वह्निनिष्ठवह्न्यभावादिरूपबाधादिरूपदोषेऽव्याप्तिस्ताद्दशबाधादिरूपदोषज्ञानस्याप्रतिबन्धकतया तदीयविषयतायाः प्रतिबन्धकतानवच्छेदकतया तथाविधोभयाभावाप्रयोजकत्वात्, तस्य दोषत्वानुपगमे तत्र हेतोर्दुष्टत्वव्यवहारानुपपत्तेः, इष्टापत्तौ निर्वह्नि पर्वतो वह्निमानित्यादावपि तत्सम्भवेन एताद्दशप्रयासवैफल्यात् ।

## विमलप्रभा

शङ्कते अथेत्यादिना । एताद्दशोभयाभावः = विशिष्टान्तराऽघटितत्वघटितात्रवदन्तिकल्पोक्तनिरुक्तोभयाभावः । बाधादिरूपदोष इत्यत्रादिपदेन सत्प्रतिपक्षपरिग्रहः । अव्याप्तिः = निर्वह्निर्वह्निमांनित्याहार्यस्थलीयवह्न्यभाववन्निर्वह्निरूपबाधे लक्षणागमनप्रसङ्गः । ताद्दशबाधादिरूपदोषज्ञानस्य = वह्न्यभाववन्निर्वह्निरूपबाधज्ञानस्य । अप्रतिबन्धकतया = प्रतिबन्धकतारहिततया । तदीयविषयतायाः = वह्न्यभाववन्निर्वह्निरूपबाधनिश्चयीयविषयतायाः । तथाविधोभयाभावः = निर्वह्नित्वविशिष्टे वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावः । तस्य = वह्न्यभाववन्निर्वह्निरूपबाधस्य । तत्र = निर्वह्निर्वह्निमान् धूमादित्यत्र । दुष्टत्वव्यवहारानुपपत्तेः = निर्वह्नौ वह्निसाधने धूमो दुष्ट इति व्यवहारानुत्पादप्रसङ्गात् । इष्टापत्तौ = ताद्दशव्यवहारो न भवतीत्युक्तौ । तत्सम्भवेन = इष्टापत्तिसम्भवेन । एताद्दशप्रयासवैफल्यात् = अत्र वदन्ति—कल्पोक्तलक्षणप्रणयनप्रयासे निष्फलत्वं स्यात् । अयमर्थः । अनुमितिप्रतिबन्धकताघटितलक्षणे निर्वह्निपर्वतपक्षकवह्निसाध्यकधूमहेतुकस्थलेऽनाहार्यज्ञानाऽप्रसिद्ध्याऽव्याप्तिमाशङ्क्यात्रवदन्ति—कल्पोक्तोभयाभावघटितलक्षणद्वारा तत्र व्यापकाभावप्रयोजकस्या [निर्वह्निपर्वतविशेष्यकवह्निप्रकारकत्वस्य व्याप'क

यत् पर्वतविशेष्यकवह्न्यभावप्रकारकत्वं तदभावस्या] भावाधिकरणतायाः वह्निमत्पर्वतरूपाश्रयासिद्धिविषयिताप्रयोज्यत्वेन व्याप्यीभूतघटाद्यनुमितिनिष्ठनिर्वह्निपर्वतविशेष्यकवह्निप्रकारकत्वस्याभावाधिकरणताया अपि वह्निमत्पर्वतरूपाश्रयासिद्धिविषयिताप्रयोज्यतया व्यापकाभावप्रयोजकस्य व्याप्याभावप्रयोजकत्वमिति रीतिमनुसृत्य विरोधिविषयिताप्रयुक्तोभयाभावघटितलक्षणगमनादव्याप्तिवारणसम्भवेऽपि निर्वह्निपक्षकवह्निसाध्यकस्थले वह्न्यभाववद्वह्न्यभावरूपबाधेऽव्याप्तिर्दुर्वारैव, निर्वह्निर्वह्निमानित्याकारकज्ञानस्याहार्यतया वह्न्यभाववद्वह्न्यभावरूपबाधविषयकनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यत्वाऽप्रसिद्ध्या निर्वह्नौ वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावे तदधिकरणतायां वा तादृशविरोधिविषयिताप्रयोज्यत्वाभावेन लक्षणागमनादिति। यदि तत्र वह्न्यभाववद्वह्न्यभावस्य दोषतैव न स्वीक्रियते तदा निर्वह्नौ वह्निसाधने धूमो दुष्ट इति व्यवहारविलोपप्रसङ्गः स्यात्, तत्रेष्टापत्तौ निर्वह्निः पर्वतो वह्निमानित्यत्रापि निर्वह्निपर्वते वह्निसाधने धूमो दुष्ट इति व्यवहारविलोपेऽपि इष्टापत्तिस्वीकारेणैव सामञ्जस्यसम्भवे अत्रवदन्ति–कल्पोक्तलक्षणप्रणयनस्य निरर्थकत्वमेव स्यादतो नेष्टापत्तिसम्भावना, तथा चाऽव्याप्तिस्तदवस्थैवेति शङ्काशयः।

## गादाधरी

न च तत्र अभाववान् वह्निमानित्यनाहार्यज्ञानस्य प्रसिद्ध्या तत्प्रतिबन्धकीभूताभाववान् निर्वह्निरित्यादिज्ञानविषय एव दोष इति वाच्यम्। अभावत्वसामानाधिकरण्येन निर्वह्नित्वग्रहस्य तादृशवह्निमत्त्वग्रहाविरोधित्वात्, अभावत्वावच्छेदेन वह्न्यादिमत्ताग्रहविरोधित्वेऽपि तादृशवह्न्यादिमत्तावगाहित्वस्य वह्न्यभावादिमत्त्वरूपपक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यावगाहित्वाव्यापकतया तदवच्छिन्ननिरूपितप्रतिबन्धकतावच्छेदकविषयितायास्तथाविधोभयाभावाप्रयोजकत्वात्, तद्विषयस्य दोषत्वानुपपत्तेः, अभावत्वावच्छेदेन निर्वह्नित्वग्रहस्य भ्रमरूपतया तद्विषयविशिष्टस्याऽप्रसिद्धेः।

तटस्थः शङ्कते न चेति । वाच्यमिति परेणान्वयः । तत्र = निर्वह्नि-र्वह्निमानित्यत्र । अनाहार्यज्ञानस्य = प्रतिबध्यात्मकज्ञानस्य । तत्प्रतिबन्धकीभूतस्य = अभाववान् वह्निमानिति निश्चयप्रतिबन्धकस्य । ज्ञानविषय एव = वह्न्यभाव-वद्वह्न्यभाववति एव । निर्वह्नित्वग्रहस्य = बाधनिश्चयात्मकवह्न्यभावज्ञानस्य । तादृशवह्निमत्त्वग्रहाविरोधित्वात् = अभाववत्त्वसामानाधिकरण्येन वह्निमत्त्वावगाहिबु-द्धिम्प्रत्यप्रतिबन्धकत्वात् । तादृशवह्न्यादिमत्त्वावगाहित्वस्य = अभाववत्त्वावच्छेदेन वह्न्यादिमत्तावगाहितायाः । अव्यापकतया = वह्न्यभाववत्त्वावच्छेदेन वह्न्यवगा-हित्वाव्यापकत्वेन । तदवच्छिन्ननिरूपितप्रतिबन्धकता = अभाववत्त्वावच्छेदेन वह्नि-प्रकारकत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकता । तथाविधोभयाभावाप्रयोजक-त्वात् = निर्वह्नित्वविशिष्टे वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वो-भयाभावाप्रयोजकत्वात् । तद्विषयस्य = अभाववत्त्वसामानाधिकरण्येन वह्न्यभावव-त्तानिश्चयविषयस्य । तद्विषयविशिष्टस्य = भ्रमविषयविशिष्टस्य । अयमर्थः । नि-र्वह्निर्वह्निमानित्यत्र यदि वह्न्यभाववन्निर्वह्निरूपबाधस्यात्तदोक्तरीत्या दोषसम्भा-वना अतो न तस्य बाधत्वम्, किन्तु वह्न्यभावविशिष्टाभाववत एव दोषत्वम्, एवञ्चाभाववान् वह्निमानित्याकारकानाहार्यज्ञानं प्रति वह्न्यभाववदभाववत्त्वाव-च्छिन्नविषयकनिश्चयस्योत्तरजायमानघटाद्यनुमितिनिष्ठा या निर्वह्निविशेष्यकवह्नि-प्रकारकत्वव्यापकस्याभाववद्विशेष्यकवह्निप्रकारकत्वस्याभावाधिकरणतया अभाव-वन्निष्ठवह्न्यभावविषयिताप्रयोज्यतया न तादृशबाधेऽव्याप्तिशङ्केति चेन्नैतन्मनोरम् । अभाववत्त्वसामानाधिकरण्येन वह्न्यभावस्य बाधत्वे तादृशबाधनिश्चयस्याभावत्वसा-मानाधिकरण्येन वह्निमत्त्वाद्यवगाह्यनुमित्यविरोधित्वात्, सामानाधिकरण्येन बाध-निश्चयस्यावच्छेदकावच्छेदेनानुमितिं प्रति प्रतिबन्धकत्वेऽपि वह्न्यभावत्वावच्छेदेन वह्निमत्ताज्ञानस्याभावत्वावच्छेदेन वह्निमत्ताज्ञानस्य च परस्परं विभिन्नतया व्या-पकतावच्छेदकीभूतधर्मभेदेन व्यापकत्वस्यापि भिन्नतयाऽभाववत्त्वावच्छेदेन वह्निमत्ता-ज्ञानत्वस्य वह्न्यभावत्वावच्छेदेन वह्निमत्तावगाहिज्ञानत्वाव्यापकतया वह्न्यभाव-वदभाववत्त्वावच्छिन्ननिरूपितप्रतिबन्धकतावच्छेदकविषयितायां वह्न्यभाववति वह्नि-

वैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावप्रयोजकत्वविरहेणाभाव-त्वसामानाधिकरण्येन वह्न्यभाववत्तानिश्चयविषयस्य न दोषत्वमिति, अभावत्वा-वच्छेदेन वह्न्यभावस्य बाधत्वे तु अभावत्वावच्छेदेन वह्न्यभावावगाहिनोऽभावो व-ह्न्यभाववानिति ज्ञानस्य भ्रमरूपतया भ्रमविषयविशिष्टस्याऽप्रसिद्ध्या यद्रूपपदेन त-स्योपादानासम्भवान्न तस्यापि दोषत्वमतोऽगत्या वह्न्यभाववन्निर्वह्निरूप एव बाध-स्तत्राङ्गीकार्य इति तादृशबाधेऽव्याप्तिस्तदवस्थैवेति भावः ।

## गादाधरी

एवं वह्निमान् निर्वह्निरित्यादिस्थलीयदोषे नितरामव्याप्तिः वह्निमन्निष्ठवह्निमत्त्वा-देरेव तत्र दोषत्वसम्भवात् । तद्विषयकस्य क्वचिदपि प्रतिबन्धकत्वायोगात् । एवं-यत्र निर्वह्निः पर्वतो, वह्निमानित्यादौ पर्वतत्वादिसामानाधिकरण्येन वह्न्यभावादि-मत्त्वस्य पक्षतावच्छेदकघटकता तत्र पर्वतत्वसामानाधिकरण्येन वह्न्यादिमत्त्वं न दो-षः, विशिष्टपक्षग्रहाद्यविरोधित्वेनाश्रयासिद्ध्यादिरूपत्वानुपपत्तेः, उक्तरीत्यैतल्लक्ष-णानाक्रान्तत्वाच्च । पर्वतत्वावच्छेदेन वह्न्यादिमत्त्वञ्चाप्रसिद्धम्, वह्निशून्यपर्वता-देरपि सत्त्वात् । नापि पर्वतत्वादिसामानाधिकरण्येन, निर्वह्निपर्वतत्वाद्यवच्छेदेन वा वह्न्यभावादिमत्त्वरूपबाधादिदोषः, तज्ज्ञानस्य पक्षतावच्छेदकविशिष्टे साध्यवै-शिष्ट्यावगाहित्वव्यापकविषयताघटितधर्मावच्छिन्नाप्रतिबन्धकतया तत्र लक्षणगम-नायोगात् । नापि पर्वतत्वावच्छेदेन वह्न्यभावादिमत्त्वं, अप्रसिद्धत्वादिति न को ऽपि दोषः स्यात् ।

## विमलप्रभा

दोषज्ञानप्रतिबध्यानाहार्यज्ञानाऽप्रसिद्धिस्थलेऽव्याप्तिमाशङ्कते एवमित्यादिना । दोषे=वह्निमद्वह्निरूपबाधे । नितरां=सुतराम् । तद्विषयकज्ञानस्य=वह्निमान् वह्निमानित्याकारकबाधविषयकनिश्चयस्य । निरुक्तलक्षणे दोषान्तरमप्याह एव-मिति । यत्र=यादृशस्थलविशेषे । तत्र=तादृशस्थले । विशिष्टपक्षग्रहाद्यविरोधित्वे-न=निर्वह्नित्वविशिष्टपर्वतत्वावच्छिन्नविषयकज्ञानाप्रतिबन्धकत्वेन । आश्रयासि-

द्ध्यादिरूपत्वानुपपत्तेः=विशिष्टपक्षज्ञानप्रतिबन्धकस्यैवाश्रयाऽसिद्धिरूपतया तदविरोधिनस्तत्त्वानुपपत्तेः। उक्तरीत्या=पूर्वोक्तनिर्वह्निर्वह्निमानित्यादौ बाधादावव्याप्तिप्रदानरीत्या। एतल्लक्षणानाक्रान्तत्वाच्च=अत्रवदन्तीत्यादिना प्रतिपादितलक्षणानाक्रान्तत्वात्। पर्वतत्वाद्यवच्छेदेन वह्न्यादिमत्त्वञ्च=पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगेन वह्निमत्त्वञ्च। अप्रसिद्धम्=भ्रमरूपत्वेनाऽप्रसिद्धम्। वह्निशून्यपर्वतादेरपि सत्त्वात्=पर्वतत्वस्य वह्न्यभाववति पर्वतेऽपि सत्त्वात्। तज्ज्ञानस्य=तादृशबाधादिनिश्चयस्य। पक्षतावच्छेदकविशिष्टे=वह्न्यभावविशिष्टे पर्वते। साध्यवैशिष्ट्यावगाहित्वव्यापकताघटितधर्मावच्छिन्नाप्रतिबन्धकतया =वह्निवैशिष्ट्यावगाहित्वव्यापकविषयिताघटितं यत् पर्वतत्वसामानाधिकरण्येन वह्निप्रकारकज्ञानत्वं तादृशज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताराहित्येन। तत्र=तादृशदोषे। पर्वतत्वावच्छेदेन=पर्वतत्वव्यापकवह्निप्रतियोगिकस्वरूपसम्बन्धेन। वह्न्यभावादिमत्त्वम्=बाध इति शेषः। अप्रसिद्धत्वात्=वह्निगत्पर्वतादेरपि वर्त्तमानतयाऽसिद्धत्वात्। न कोऽपि दोषः स्यात् =न कोऽपि हेत्वाभासः स्यात् अयमर्थः। वह्निमत्पक्षकवह्न्यभावसाध्यकस्थले वह्निविशिष्टभह्निमद्र पूबाधेऽव्याप्तिः, वह्निमान् वह्निमानित्याकारकबाधनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यत्वाऽप्रसिद्ध्या तादृशबाधनिश्चये प्रतिबन्धकताविरहेण लक्षणागमनात्।

एवं निर्वह्निपर्वतपक्षकवह्निसाध्यकस्थले यदि पर्वतत्वसामानाधिकरण्येन निर्वह्नित्त्वस्य पक्षतावच्छेदकता तदा सामानाधिकरण्येनानुमितौ सामानाधिकरण्येन विपरीतज्ञानस्याप्रतिबन्धकतया पर्वतत्वसामानाधिकरण्येन वह्निमत्त्वनिश्चये पक्षतावच्छेदकीभूतनिर्वह्निपर्वतत्वविशिष्टवत्ताबुद्धिप्रतिबन्धकताविरहेण वह्निमत्पर्वतत्वस्याश्रयासिद्धिरूपत्वानुपपत्तेः। एवं सामानाधिकरण्येन वह्निमत्त्वनिश्चये विशिष्टपर्वतग्रहप्रतिबन्धकताविरहेण तदीयविषयितायाः तादृशोभयाभावाप्रयोजकतया तादृशोभयाभावघटितलक्षणागमनाद्दोषत्वमेव न स्यादतो यद्यवच्छेदकावच्छेदेन वह्निमत्त्वस्यैवाश्रयासिद्धत्वमुच्यते तदा तज्ज्ञाने निरुक्तसाध्यवत्ताबुद्धिप्रतिबन्धकतासत्त्वेऽपि पर्वतत्वावच्छेदेन वह्निमत्त्वस्याश्रयासिद्धत्वमेव न सम्भवति पर्वतत्वं वह्निशून्यपर्वतादावपि वर्त्तते तत्र वह्निमत्त्वाभावेन पर्वतत्वावच्छेदेन वह्निमत्त्वं सर्वथैवाऽप्रसिद्ध-

म् इति यद्रूपपदेन तस्य वारणासम्भवादिति ।

न च तत्राश्रयासिद्ध्यप्रसिद्धिसम्भवेऽपि बाधस्यैव दोषत्वमिति चेन्न, पर्वतत्वसामानाधिकरण्येन वह्न्यभाववत्पर्वतरूपबाधनिश्चये निर्वह्निपर्वतत्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वव्यापकीभूता या विषयिता तद्घटितं यन्निर्वह्निपर्वतत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारताशालिबुद्धित्वं तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताविरहप्रयुक्तलक्षणागमनात्तस्य दोषत्वासम्भवात्, अतो न सामानाधिकरण्येन बाधः, नाप्यवच्छेदकावच्छेदेन, वह्निमति पर्वतादावपि पर्वतत्वं वर्त्तते तत्र वह्न्यभावविरहेण तस्य बाधत्वासम्भवात्, तथा च निर्वह्निः पर्वतो वह्निमान वह्निव्यभिचारिण इत्यत्र के दोषाः भवेयुर्यै र्हेतौ दुष्टताव्यवहारोपपत्तिः स्यादिति शङ्काशयः ।

## गादाधरी

यत्तु प्रयुक्तत्वं व्यापकत्वं यद्विषयकनिश्चयनिष्ठविरोधिविषयिताया उभयाभावव्याप्यत्वञ्च स्वाश्रयताहशनिश्चयाव्यवहितोत्तरानुमितित्वसम्बन्धेन, तादृशसम्बन्धलाभायैव तदुत्तरानुमितावित्युक्तम् । एवञ्च विरोधिविषयकयद्विषयकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकस्तादृशोभयाभावस्तत्त्वमिति पर्यवसितम् । एवञ्च निर्वह्निर्वह्निमानित्यादिस्थलीयबाधादिस्थलीयबाधादिविषयितायां स्वरूपसम्बन्धरूपोभयाभावाप्रयोजकत्वासम्भवेऽपि उभयाभावप्रतियोगितावच्छेदककोटौ यद्रूपावच्छिन्नविशेष्यकयद्रूपावच्छिन्नप्रकारकत्वं निविष्टं तद्रूपावच्छिन्नविशेष्यकतद्रूपावच्छिन्नाभावतद्व्याप्यान्यतरप्रकारकत्वस्यैव विरोधिविषयत्वार्थकतया तत्र लक्षणं सुसमन्वयमेव तादृशप्रयोजकत्वस्याऽनिवेशाद् ।

## विमलप्रभा

निर्वह्निर्वह्निमान् धूमादित्यादौ प्रसक्तां पूर्वोक्तामव्याप्तिं प्रकारान्तरेण वारयतां मतमुपन्यस्यति यत्त्विति । यत्तु इत्यस्य तत्तुच्छमित्यग्रेणान्वयः । प्रयुक्तत्वं = विरोधिविषयिताप्रयुक्तत्वदलघटकप्रयुक्तत्वपदार्थः । व्यापकत्वम् = यद्रूपावच्छिन्नविष-

यकनिश्चयनिष्ठविरोधिविषयिताव्यापकत्वम् । व्याप्यत्वञ्च = निरुक्तोभयवदवृत्तित्व-रूपम् । व्याप्यत्वघटकवृत्तिता च, विरोधिविषयिताश्रययद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितित्वसम्बन्धेन । स्वं = विरोधिविषयित्वम् । तादृशनिश्चयेति, यद्रूपावच्छिन्नविषयनिश्चयेत्यर्थः । एतादृशसम्बन्धलाभाय = विरोधिविषयिताश्रययद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितित्वरूपसम्बन्धलाभाय । इत्युक्तं = दीधितिकृतेति शेषः । एवञ्च = प्रयुक्तत्वस्य व्यापकत्वार्थकत्वे च । तादृशोभयाभावः = पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावः । तत्त्वम् = तद्रूपावच्छिन्नत्वम् । पर्यवसितमिति लक्षणमिति शेषः । एवञ्च = एतादृशलक्षणार्थकरणे च । बाधादिविषयितायां = वह्न्यभाववन्निर्वह्निरूपबाधादिविषयितायाम् । असम्भवेऽपि = असत्वेऽपि । उभयाभावप्रतियोगिता = पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावीयप्रतियोगिता । कोटौ = कुक्षे । निविष्टं = प्रविष्टम् । तद्व्याप्येत्यत्र तत्पदं तादृशाभावार्थकम् । तत्र = निर्वह्निर्वह्निमानित्यत्र बाधे । तादृशप्रयोजकत्वस्य = स्वरूपसम्बन्धात्मकप्रयोजकत्वस्य । अनिवेशात् = अप्रवेशात् । अयमर्थः । विरोधिविषयिताप्रयुक्तत्वदलघटकप्रयुक्ततत्त्वानानुभवसिद्ध-स्वरूपसम्बन्धात्मकम्, किन्तु व्यापकत्वरूपम्, व्याप्यताघटकवृत्तिता च, विरोधिविषयिताश्रयद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितित्वसम्बन्धेन । एवञ्च यद्रूपावच्छिन्नविषयकविरोधिविषयकनिश्चयोत्तरानुमितित्वव्यापकः पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावस्तद्रूपावच्छिन्नत्वं पर्यवसितलक्षणार्थः । तथा च निरुक्तोभयाभावे यद्रूपावच्छिन्नविषयकनिश्चयवृत्तिविरोधिविषयिताव्यापकत्वे विरोधिविषयितायां निरुक्तोभयाभावव्याप्यत्वमनुभवसिद्धमेवेति, ह्रदो वह्निमान् जलादित्यत्र वह्न्यभाववद्ध्रदरूपबाधे लक्षणसंगतिः, तथा हि ह्रदो वह्निमान् वह्निव्याप्यजलवानित्यनुमितौ ह्रदत्वावच्छिन्ने वह्नित्वावच्छिन्नवैशिष्ट्यावगाहित्ववह्नित्वावच्छिन्नवह्निनिरूपितव्याप्तिविशिष्टधूमवैशिष्ट्यावगाहित्वोभयाधिकरणे वह्न्यभाववद्ध्रदविषयितारूपविरोधिविषयितायाः वह्न्यभाववद्ध्रदविषयिताश्रय-वह्न्यभावविशिष्टह्रदविषयकनिश्चयाव्यवहितोत्तरानुमितित्वससर्गेणावर्त्तमानत्वेन वह्न्यभाववद्ध्रदविषयितायाः ह्रदे वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावव्याप्यतया वह्न्यभाववद्ध्रदात्मकविरोधिविषयकवह्न्यभाववद्ध्रदत्वा-

वच्छिन्नविषयकनिश्चयोत्तरघटानुमितित्वव्यापकः ह्रदे वह्निवैशिष्ट्यावगाहित्ववह्नि-व्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभाव इति वह्न्यभाववद्ध्रदत्वावच्छिन्नत्वस्य तादृशबाधे सत्त्वात्।

निर्वह्निर्वह्निमानित्यादौ वह्न्यभाववन्निर्वह्निरूपबाधे लक्षणसंगतिः, तथा हि वह्न्यभाववद्वह्न्यभाववद्रूपबाधनिश्चयीयविषयितायां स्वरूपसम्बन्धात्मकनिरुक्तोभयाभावप्रयोजकत्वाभावेऽपि निर्वह्नौ वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावीयोभयनिष्ठा या प्रतियोगिता तदवच्छेदककुक्षौ निर्वह्नित्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकत्वस्य प्रविष्टतया निर्वह्नित्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नाभावतादृशाभावव्याप्यान्यतरविषयिताया एव विरोधिविषयितारूपतया तादृशोभयाभावप्रयोजकस्य तादृशविरोधिविषयित्वस्य तत्र वर्त्तमानत्वात्।

## गादाधरी

न चैवं तत्र वस्तुमात्रेऽतिव्याप्तिर्दुर्वारैव, तादृशोभयाभावस्य विरोधिविषयकसमूहालम्बनरूपघटादिविषयकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकताया अक्षतत्वादिति वाच्यम्। विरोधिविषयितानतिरिक्तवृत्तिर्यदीयविषयिता तच्छालिनिश्चयस्य निश्चयान्तेन विवक्षणात्, घटादिविषयितायास्तत्र निरुक्तविरोधिविषयितानतिरिक्तवृत्तित्वविरहात्।

## विमलप्रभा

शङ्कते न चेति। वाच्यमिति परेणान्वयः। एवम्=विरोधिविषयिताप्रयुक्तत्वघटकप्रयुक्तत्वस्य व्यापकतात्मकत्वे। तत्र=निर्वह्निर्वह्निमानित्यत्र। वस्तुमात्रे=घटाद्यखिलोदासीने। तादृशोभयाभावस्य=निर्वह्निविशेष्यकवह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावस्य। अक्षतत्वात्=निरुक्तोभयाभावसत्त्वे बाधकविरहात्। समाधत्ते विरोधिविषयितेति। निश्चयान्तेन=यद्रूपावच्छिन्नविषयनिश्चयस्येत्यन्तेन। तत्र=निर्वह्निर्वह्निमानित्यत्र। अनतिरिक्तवृत्तित्वविरहात्=व्यापकत्वाभावात्। अयमर्थः। प्रयुक्तत्वस्य व्यापकतात्मकत्वे

निर्वह्निर्वह्निमानित्यत्र घटादावतिव्याप्तिः, वह्न्यभाववद्वह्न्यभाववद्रूपबाधविषयकघटादिविषयकसमूहालम्बनात्मकवह्न्यभाववद्वह्न्यभाववान् घटवांश्चेत्याकारकनिश्चयाव्यवहितोत्तरजायमाना याऽनुमितिस्सा न वह्न्यभाववान् वह्निमानित्याकारिका अनुमितेरनाहार्यत्वनियमात् किन्तु घटवद्भूतलमित्याकारिकैवेति तत्र निर्वह्नित्वविशिष्टे वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावसत्त्वात् तादृशघटत्वावच्छिन्नत्वस्य घटादौ सत्त्वात्। तद्वारणाय यद्रूपावच्छिन्नविषयकनिश्चयस्येत्यन्तेन विरोधिविषयितानतिरिक्तवृत्तियद्रूपावच्छिन्नविषयिता तच्छालिनिश्चयस्य विवक्षिततया न निर्वह्निर्वह्निमानित्यत्र घटादावुदासीनेऽतिव्याप्तिः, वह्न्यभाववद्वह्न्यभाववदविषयकसमूहालम्बनानात्मककेवलघटविषयकघट इति ज्ञानेऽपि घटत्वावच्छिन्नविषयिताया वर्त्तमानतया तत्र वह्न्यभाववद्वह्न्यभाववत्त्वावच्छिन्नविषयित्वाभावेन घटादिविषयिताव्यापकत्वस्य वह्न्यभाववद्वह्न्यभाववत्त्वावच्छिन्नविषयितायामभावात् घटाद्युदासीनविषयितायाः स्वपदेन धर्त्तुमशक्यतया तत्र लक्षणागमनात्।

## बलदेवी

निश्चयान्तेन विवक्षणादिति गदाधरः। अत्र यद्रूपावच्छिन्ननिरूपकताक विरोधिविषयिता तादृशोभयाभावव्याप्या, इत्युक्तावसाधारण्यासंग्रहः असाधारण्यत्वावच्छिन्नविषयितायां निर्वाच्यविरोधिविषयितात्वाभावात्। न च यद्रूपावच्छिन्नविषयितानतिरिक्तवृत्तिरित्यभिधाने कथमसाधारण्यसंग्रहः, असाधारण्यविषयितायाः विरोधिविषयिताशून्यासाधारण्यज्ञाने सत्त्वादिति वाच्यम्। यद्रूपावच्छिन्नविषयितायां निरूप्यनिरूपकभावापन्नसाध्यव्यापकीभूताभावप्रतियोगिहेतुमत्पक्षविषयिताशालिज्ञानभिन्नत्वनिरूप्यनिरूपकभावापन्नाऽसाधारण्यविषयितावत्त्वोभयाभाववज्ज्ञानीयत्वस्य विवक्षणीयत्वात्। तथा च तादृशहेतुमत्पक्षविषयितानिरूपकज्ञानमेवासाधारण्यविषयकमुभयाभाववद्भवतीति तादृशपक्षविषयितानिरूपितसाध्याभावव्याप्यताशून्यविरोधिविषयकयद्विषयकनिश्चयविवक्षणे पर्वतविषयित्वाऽव्यापकविषयिताशून्यपर्वतविषयकविरोधिविषयिताशालिनिश्चयाऽप्रसिद्धेरेकदेशेऽतिव्याप्तिसम्भावनानवकाशात्।

न चैवमपि गोत्वाभावो गोत्वाभाववानित्यत्र गोत्वाभावेऽतिव्याप्तिः, गोत्वादिविषयितायाः गोत्वाभावविषयितान्यापकतया तद्विषयित्वाव्यापकविषयिताशून्यगोत्वाभावविषयकविरोधिविषयिताशालिगोत्वाभावो गोत्ववानिति निश्चयोत्तरानुमितिसामान्ये तादृशोभयाभावसत्त्वादिति वाच्यम् । यद्रूपावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्नविषयिता यद्विषयित्वाव्यापिका तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नविषयिताशून्यविरोधिविषयकयद्विषयकनिश्चयत्वस्य विवक्षणान्नातिव्याप्तिः, गोत्वाभावत्वावच्छिन्नविषयितानिरूपितसमवायावच्छिन्नविषयिताया गोत्वाभावविषयित्वाव्यापिकाया उक्तबाधभ्रमे सत्त्वेन तच्छून्यगोत्वाभावविषयकविरोधिविषयिताशालिनिश्चयाऽप्रसिद्धेरिति ।

न चैवमपि घटो द्रव्यभिन्न इत्यत्र बाधैकदेशे घटेऽतिव्याप्तिः, घटो द्रव्यमित्याकारकघटविषयकविरोधिविषयिताशालिनिश्चये घटत्वावच्छिन्नविषयित्वाव्यापिका या यद्रूपावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्नविषयिता तस्या अभावात्, समवायावच्छिन्नविषयितानिरूपितघटत्वावच्छिन्नविषयिताव्यापिकैव घट इति ज्ञाने घटत्वस्य समवायेन भानात् बाधज्ञाने द्रव्यत्वं स्वरूपत एव भासत इति न तद्विषयिता किञ्चिद्रूपावच्छिन्ना, तादृशनिश्चयोत्तरानुमितिसामान्ये निरुक्तोभयाभावस्य सत्त्वादिति वाच्यम् । यद्रूपावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्नविषयिता यद्विषयित्वाऽव्यापिका तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नविषयिताशून्यत्व विवक्षणेऽतिव्याप्त्यभावादिति । घट इति ज्ञानेऽविद्यमानायाः समवायावच्छिन्नविषयितानिरूपितघटत्वावच्छिन्नविषयिताया घटो द्रव्यमिति ज्ञाने सत्त्वेन तच्छून्यघटविषयकविरोधिविषयिताशालिनिश्चयाऽप्रसिद्धेरिति चेन्न, स्वरूपं स्वरूपवद्भेदत्ववदित्यत्र स्वरूपवद्भेदत्ववद्भेदवति बाधैकदेशेऽतिव्याप्तेः, स्वरूपवद्भेदत्ववद्भेदवत्स्वरूपमिति बाधज्ञाने बाधैकदेशनिरुक्तविशिष्टविषयित्वाव्यापिकायाः कस्या अपि निरुक्तविषयिताया अभावात्, तादृशनिश्चयोत्तरानुमितिसामान्ये उभयाभावस्याक्षतत्वात्, यद्विषयितायां विरोधिविषयितानतिरिक्तवृत्तित्वनिवेशे तु, बाधैकदेशविषयिताया विरोधिविषयिताशून्यैकदेशमात्रविषयकज्ञाने सत्त्वेन नातिव्याप्तिरिति दिक् ।

## गादाधरी

न चैवं विरोधिविषयितानतिरिक्तवृत्तियदीयविषयिता तत्त्वमित्येतावतैव सामञ्जस्ये शेषवैयर्थ्यमिति वाच्यम्। यत्र पर्वतत्वसामानाधिकरण्येन वह्न्यादेः साध्यता तत्र पर्वतत्वादिसामानाधिकरण्येन वह्न्यभावादिमत्त्वविषयिताया निरुक्त-विरोधिविषयितानतिरिक्तवृत्तितया तत्रातिव्याप्तिवारकतया शेषसार्थक्यात्। तदुपादाने तादृशवह्न्यभावादिमत्त्वविषयकनिश्चयानन्तरं पर्वतत्वादिसामानाधिकरण्येन वह्न्या-द्यनुमित्युत्पत्त्या तादृशानुमितौ तथाविधोभयसत्त्वेनातिव्याप्त्यनवकाशादिति, तत्तुच्छम्, निर्वह्निः पर्वतो वह्निमानित्यादौ यत्र पर्वतत्वसामानाधिकरण्येन वह्न्यादिमत्त्वस्य विशिष्टपक्षग्रहाविरोत्वादाश्रयासिद्ध्यनात्मकहेत्वाभासान्तरताभयेनासम्भवलक्ष्यभावस्य निरुक्तविरोधिविषयितानतिरिक्तवृत्तिविषयिताकतयाऽतिव्याप्तेः। तादृशोभयाभाव-प्रतियोगितावच्छेदकगर्भे यद्रूपविशिष्टे येन सम्बन्धेन यद्रूपावच्छिन्नवैशिष्ट्यावगाहि-त्वं निविष्टं तद्रूपावच्छिन्नविशेष्यकतत्संसर्गकतद्रूपावच्छिन्नप्रकारकानुमितित्वा-वच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वरूपविरोधित्वस्य विषयितायां निवेशे तु शेषवैयर्थ्यम्; उक्तरीत्या निर्वह्निर्वह्निमानित्यादिस्थलीयदोषेऽव्याप्तिश्च।

## विमलप्रभा

शङ्कते न चेत्यादिना। न चेत्यस्य वाच्यमित्यनेनान्वयः। एवम्=यद्रू-पाववच्छिन्नविषयितायां विरोधिविषयितानतिरिक्तवृत्तित्वनिवेशे। यदीयविषयिता =यद्रूपावच्छिन्नविषयकज्ञानीयविषयिता। तत्त्वं=तद्रूपावच्छिन्नत्वम्। इत्येता-वतैव=एतावन्मात्रलक्षणेनैव। सामञ्जस्ये=दोषवारणसम्भवे। शेषवैयर्थ्यम्= यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकनिरुक्तोभयाभावपर्यन्तस्य वैयर्थ्यम्। यत्र=यादृशस्थले। तत्र=तादृशस्थले, पर्वतो वह्निमान् धूमादित्यत्रेति यावत्। तत्रातिव्याप्तिवारकतया=पर्वतत्वसामानाधिकरण्येन पर्वतनिष्ठवह्न्यभावा-दावतिप्रसङ्गनिवारकतया। शेषसार्थक्यात्=तादृशविषयिताशालिनिश्चयाव्यवहितो-त्तरानुमितित्वव्यापकोभयाभावपर्यन्तस्य सार्थकत्वसम्भवात्। तदुपादाने शेषविशेषणो-पादाने। तादृशवह्न्यभावेति=पर्वतत्वसामानाधिकरण्यविशिष्टवह्न्यभावेत्यर्थः।

अनुमित्युत्पत्त्या = सामानाधिकरण्येनानुमितिं प्रति सामानाधिकरण्येन बाधादिनिश्च-यस्याप्रतिबन्धकत्वेनानुमितेरुत्पादसम्भवेन । अत्र हेत्वर्थे तृतीया । तादृशानु-मितौ = पर्वतत्वसामानाधिकरण्येन वह्न्यनुमितौ । तथाविधोभयसत्त्वेन = पर्वत-विशेष्यकवह्निप्रकारकत्ववह्निव्याप्यधूमप्रकारकत्वोभयसत्त्वेन । अतिव्याप्त्यनवका-शात् = अतिव्याप्त्यभावात् । पूर्वोक्तमतं खण्डयति तत्तुच्छमिति । यत्र = यादृश-स्थलविशेषे । तत्र = तादृशस्थले । विशिष्टपक्षग्रहाविरोधित्वात् = पर्वतत्वसामाना-धिकरण्येन पर्वतो वह्निमानित्याकारकज्ञानाप्रतिबन्धकत्वात् । आश्रयासिद्ध्यना-त्मकेति, आश्रयासिद्धिभिन्नत्वेन । हेत्वाभासान्तरताभयेन = पञ्चविधहेत्वाभासभिन्ने हेत्वाभासत्वापत्तिभयेन । असम्भवलक्ष्यभावस्य = तस्य लक्ष्यत्वमेव न सम्भवत्य-तोऽलक्ष्यभवस्य । निरुक्तविरोधिविषयिता = पूर्वोदीरितविरोधिविषयिता । अति-व्याप्तेः = वह्निमत्पर्वतादावतिव्याप्तेः । तादृशोभयाभावप्रतियोगिता = प्रकृतपक्ष-विशेष्यकप्रकृत साध्यप्रकारकत्वप्रकृतसाध्यव्याप्यप्रकृतहेतुप्रकारकत्वोभयाभावीयोभ-यनिष्ठप्रतियोगिता । यद्रूपविशिष्टे = पक्षतावच्छेदकावच्छिन्ने । येन सम्बन्धेन = सयाध्तावच्छेदकसम्बन्धेन । यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वं = साध्यतावच्छेदका-वच्छिन्नसाध्यवैशिष्ट्यावगाहित्वम् । तद्रूपावच्छिन्नविशेष्यकतत्संसर्गकतद्रूपावच्छिन्न-प्रकारकानुमितित्वावच्छिन्नप्रतिबध्यता = पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यताव-च्छेदकसंसर्गावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारकानुमितित्वावच्छिन्नप्रतिबध्यता । विषयितायाम् = उभयाभावप्रयोजकविषयितायाम् । शेषवैयर्थ्यम् = यद्रूपावच्छिन्न-विषयिताशालिनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकोभयाभावात्मकशेषविशेषणस्य वैयर्थ्यम् । उक्तरीत्या = पूर्वकथितरीत्यनुसारेण । दोषे = वह्न्यभाववन्निष्ठवह्न्य-भावात्मकबाधे । अयमर्थः । यद्विषयकनिश्चयस्येत्यन्तेन विरोधिविषयितानतिरिक्त-वृत्तिर्यद्विषयिता तच्छालिनिश्चयस्य विवक्षणे यद्रूपावच्छिन्नविषयितानतिरिक्तवृत्तिः [ व्यापकं ] तादृशविरोधिविषयित्वं तद्रूपावच्छिन्नत्वं दोषत्वमित्येतावन्मात्रलघुलक्ष-णेनैव घटादावतिव्याप्तिवारणसम्भवेन गुरुतरलक्षणारम्भो व्यर्थः । ह्रदो वह्निमान् जलादित्यादौ वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताव्यापकं भवति तादृशविरोधिविष-यित्वमिति तद्रूपावच्छिन्नत्वस्य वह्न्यभाववद्ध्रदे सत्त्वेन लक्षणगमनादिति चेन्नैवम्, तथा सति पर्वतत्वसामानाधिकरण्येन वह्नेः साध्यतास्थले सामानाधिकरण्येन

वह्न्यभाववत्त्वावगाहिनिश्चयीयवह्न्यभाववत्पर्वतविषयितायाः विरोधिविषयित्वाभाववत्यवर्त्तमानतयेति तत्त्वस्य वह्न्यभाववत्पर्वते वर्त्तमानत्वादतिव्याप्तिस्स्यादतो नास्य निर्दुष्टतेति तथा च दीधितिकारोक्तलक्षणमेवादरणीयम्, एवञ्च पर्वतत्वसामानाधिकरण्येन वह्न्यभावादिमत्त्वावगाहिनिश्चयाव्यवहितोत्तरजायमानपर्वतत्वसामानाधिकरण्येन पर्वतो वह्निमान् वह्निव्याप्यधूमवानित्यनुमित्युत्पत्तौ बाधकाभावेन तत्र तादृशोभयाभावासत्त्वान्नोक्तदोष इति ।

प्रयुक्तत्वस्य व्यापकतात्मकतामङ्गीकृत्य लक्षणकरणेऽपि न निस्तारः पर्वतत्वसामानाधिकरण्येन वह्न्यभावस्य पक्षतावच्छेदकस्थले निर्वह्निः पर्वतो वह्निमानित्यत्र पर्वतत्वसामानाधिकरण्येन वह्न्यादिमत्त्वावगाहिनिश्चयस्याश्रयासिद्धचनात्मकस्य या विषयिता सापि विरोधिविषयित्वाभाववत्यवर्त्तमानेति तत्त्वस्य पर्वतत्वसामानाधिकरण्येन वह्निमति पर्वते वर्त्तमानतया तत्रातिप्रसङ्गात् । न च तस्य दोषत्वम् आश्रयासिद्धयादिष्वनन्तर्भावात्, अतिरिक्तत्वे च हेत्वाभासाधिक्यप्रसङ्गात् । यदि तादृशातिव्याप्तिवारणाय विरोधिविषयितानिष्ठविरोधित्वं तादृशोभयाभावीयोभयनिष्ठप्रतियोगिताया अवच्छेदककुक्षौ पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकावच्छिन्नसाध्यवैशिष्ट्यावगाहित्वं प्रविष्टं तादृशपक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वरूपन्निवेश्यते तदा तत्र निर्वह्निविशिष्टे वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावप्रतियोगिताया अवच्छेदककुक्षौ निर्वह्निविशिष्टे संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नवह्निवैशिष्ट्यावगाहित्वस्य प्रविष्टतया निर्वह्निपर्वतत्वावच्छिन्नविशेष्यकसंयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताशाल्यनुमितेरनाहार्यस्याप्रसिद्धया तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतायाः सामानाधिकरण्येन वह्निमत्पर्वतविषयकनिश्चयेऽभावेन तदवच्छेदकत्वरूपविरोधित्वस्य सामानाधिकरण्येन वह्निमद्विषयितायामभावादेवातिव्याप्तिवारणसम्भवे शेषवैयर्थ्यं दुष्परिहरणीयमेवेति । निर्वह्निर्वह्निमानित्यत्र निर्वह्निर्वह्निमानिति ज्ञानस्याहार्यतयाऽप्रतिबध्यत्वप्रयुक्ततन्निरूपितप्रतिबन्धकत्वस्याप्यप्रसिद्धया तादृशबाधज्ञाने निरुक्तप्रतिबन्धकतावि-

रहेण तदीयविषयितायां पूर्वोदीरितविरोधित्वस्याभावेन लक्षणागमनादव्याप्तिश्चातो नेदमपि निर्वचनन्निर्दुष्टमिति भावः ।

## बलदेवी

न चैवं विरोधिविषयितानतिरिक्तवृत्तियदीयविषयितेति गदाधरः । अत्र विरोधिविषयितापक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावप्रतियोगितावच्छेदकताश्रयसाध्यविषयताविशिष्टविषयता तादृशविषयताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयिताविशिष्टविषयितान्यतररूपा । विषयितायाँ विषयितावैशिष्ट्यञ्च स्वाधिकरणत्वस्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन, स्वाधिकरणत्वञ्च, स्वविशिष्टप्रकारतानिरूपितत्वस्वावच्छेद्यविशेष्यतानिरूपितप्रतियोगितात्वावच्छिन्नसांसर्गिकविषयतावत्प्रकारतानिरूपितत्वस्वावच्छेद्यविशेष्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नप्रकारतावच्छेदकताविशिष्टप्रकारतानिरूपितत्वस्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छेदकावच्छिन्ननिरूपकताकाधिकरणतावन्निरूपितवृत्तितात्वावच्छिन्नप्रतियोगिताकाभावत्वावत्वावच्छिन्नप्रकारतानिरूपितत्वान्यतमसम्बन्धेन, अन्यतमघटकप्रथमसम्बन्धघटकप्रकारतायां स्ववैशिष्ट्यञ्च । स्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छेदकावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकत्वस्वावच्छेदकावच्छिन्नस्वावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभाववन्निष्ठस्वाश्रयसामान्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वोभयस्वावच्छेदकावच्छिन्नस्वावच्छेदकसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदत्वावच्छिन्नत्वानुपदमुक्तद्वितीयसम्बन्धावच्छिन्नत्वोभयान्यतरसन्बन्धे द्वितीयसम्बन्धेन प्रकारतायां सासर्गिकविषयतावत्त्वञ्च, स्वनिरूपितप्रकारतावच्छेदकधर्मावच्छिन्नत्वस्वनिरूपितावच्छिन्ननिष्ठावच्छेदकतानिरूपितावच्छेदकतासम्बन्धावच्छिन्नत्वोभयसम्बन्धेन, तृतीयसम्बन्धेऽवच्छेदकतावैशिष्ट्यञ्च, प्रकारतायां स्वाधिकरणवृत्तित्वस्वावच्छेदकसम्बन्धावच्छिन्नत्वावच्छेदकतासम्बन्धावच्छिन्नस्वाभाववद्धर्मानवच्छिन्नत्वस्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन, अन्यतमशरीरे प्रथमसम्बन्धनिवेशात् ह्रदो वह्निमानित्यत्र ह्रदो वह्न्यभाववान् ह्रदो वह्निमद्भिन्न इति

ज्ञानीयविषयितायाः संग्रहः। द्वितीयसम्बन्धनिवेशात् पर्वतो वह्न्यभाववानित्यत्र पर्वतो वह्निमानिति ज्ञानीयविषयितायाः संग्रहः, तृतीयसम्बन्धनिवेशात् घटो द्रव्यभिन्न इत्यत्र स्वरूपतो द्रव्यत्वावगाहिघटो द्रव्यमिति ज्ञानीयविषयितायाः संग्रहः चतुर्थसम्बन्धनिवेशात् ह्रदो वह्निमानित्यत्र वह्निमद्वृत्तिमान् ह्रद इति ज्ञानीयविषयितायाः संग्रहः।

एवं तुल्यवित्तिवेद्यत्वभानमङ्गीकृत्य पक्षे साध्याभाव इति ज्ञानीयविषयितायाः संग्रहः, एतादृशविषयितैव विरोधिविषयिता, नातः, प्रागुक्ताहार्यस्थले उदासीनेऽतिव्याप्तिः।

## गादाधरी

यत्तु पक्षतावच्छेदकविशिष्टे निरुक्तसाध्यवैशिष्ट्यावगाहिनिश्चयावृत्तिविषयितैव विरोधिविषयितापदार्थः। तथा च यन्निरूपिततादृशविषयिताशालिनिश्चयोत्तरानुमितित्वव्यापकउभयाभावस्तत्त्वमिति समुदितार्थः। निश्चयत्वञ्च विशेषणविशेष्यतावच्छेदकभावानापन्नविरोधिकोटिद्वयप्रकारकैकधर्मिकविशेष्यकज्ञानान्यज्ञानत्वम्। कोटिद्वये विशेषणविशेष्यतावच्छेदकभावानापन्नत्वनिवेशात् निर्वह्निः पर्वतो वह्निमानित्यादौ पक्षतावच्छेदकविशिष्टे साध्यादिवैशिष्ट्यग्रहस्य एकत्र विरोधिद्वयप्रकारकत्वनियमेऽपि न तादृशवैशिष्ट्यावगाहिनिश्चयाऽप्रसिद्धिः।

## विमलप्रभा

प्रकारान्तरेण विरोधिविषयितापदार्थमुपपाद्य लक्षणार्थमुपपादयताम्मतन्निर्दिश्य निषेधयति यत्त्वित्यादिना। यत्त्वित्यस्याग्रे तनतदपि नेत्यनेनान्वयः। निश्चयावृत्तिविषयिता = पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकावच्छिन्नप्रकारकसाध्यतावच्छेदकावच्छिन्नसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नहेतुप्रकारकनिश्चयनिरूपितवृत्तित्वाभाववती विषयिता। तथा च = विरोधिविषयित्वस्यैतादृशार्थकरणे च। यन्निरूपितेत्यत्र यत्पदं यद्रूपपरम्। तादृशविषयिता = निरु-

क्तसाध्यहेतुवैशिष्ट्यावगाहिनिश्चयाऽवृत्तिविषयिता। उभयाभावः=पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावः। तत्त्वम्=तद्रूपावच्छिन्नत्वम्। समुदितार्थ इति, अत्र वदन्तिकल्पोक्तलक्षणस्येति शेषः। कोटिद्वये=निश्चयलक्षणघटकदलद्वये। ग्रहस्य=निर्वह्निः पर्वतो वह्निमानिति ज्ञानस्य। एकत्र=पर्वतादौ। न तादृशवैशिष्ट्यावगाहिनिश्चयाऽप्रसिद्धिः=न पक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यावगाहिज्ञानाऽप्रसिद्धिः। अयमर्थः। विरोधिविषयितापदेन पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यप्रकारतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यप्रकारतानिरूपितव्याप्तिप्रकारताविशिष्टप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुप्रकारताशालिनिश्चयनिरूपितवृत्तित्वाभाववती या विषयिता तस्या उपादाने प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यप्रकारताकप्रकृतसाध्यव्याप्यप्रकृतहेतुप्रकारताकनिश्चयनिरूपितवृत्तिताशून्ययद्रूपावच्छिन्नविषयिताशालिनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकः पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावस्तद्रूपावच्छिन्नत्वं लक्षणार्थः। भवति च ह्रदो वह्निमान् जलादित्यत्र वह्न्यभाववद्ध्रदरूपबाधे लक्षणसङ्गतिः, तथा हि वह्न्यभाववान् ह्रद इत्याकारकबाधबुद्धित्वावच्छिन्ना या बाधज्ञानीया वह्न्यभाववद्ध्रदविषयिता सा ह्रदो वह्निमान् वह्निव्याप्यजलवांश्चेत्याकारकनिश्चयाऽवृत्तीति तादृशविषयिताशालिवह्न्यभाववान् ह्रद इत्याकारकनिश्चयोत्तरजायमानघटानुमितित्वव्यापकः ह्रदविशेष्यकवह्निप्रकारकत्व-वह्निव्याप्यजलप्रकारकत्वोभयाभाव इति तादृशवह्न्यभाववद्ध्रदत्वावच्छिन्नत्वस्य वह्न्यभावविशिष्टह्रदरूपबाधे सत्त्वात्।

अत्र निश्चयत्वं यदि विरोधिकोटिद्वयप्रकारकैकधर्मिविशेष्यकज्ञानान्यज्ञानत्वरूपमर्थात् तद्धर्मावच्छिन्नविशेष्यकतदभावाप्रकारकत्वे सति तद्धर्मावच्छिन्नविशेष्यकतत्प्रकारकत्वरूपम्, तदा निर्वह्निः पर्वतो वह्निमान् धूमादित्यत्र वह्निमत्पर्वतरूपाश्रयासिद्धावव्याप्तिः, निर्वह्निपर्वते वह्निवैशिष्ट्यावगाहिनिर्वह्निपर्वतो वह्निमानित्याकारकज्ञानस्यापि वह्निविरोधिवह्न्यभावप्रकारकज्ञानरूपत्वेन तदन्यत्वस्य तत्राभावेन निर्वह्निपर्वते वह्निवैशिष्ट्यावगाहिनिश्चयाऽप्रसिद्धिप्रयुक्तलक्षणागमनात्। अतः

कोटिद्वये विशेषणत्वविशेष्यतावच्छेदकभावापन्नत्वरूपविशेषणं प्रक्षिप्य निश्चयत्वं निर्वाच्यम्। तथा च निर्वह्निः पर्वतो वह्निमानिति ज्ञाने वह्निनिष्ठविशेषणताकत्ववह्न्यभावनिष्ठविशेष्यतावच्छेदकत्वोभयसत्त्वेन विशेषणविशेष्यतावच्छेदकभावानापन्नकोटिद्वयप्रकारकैकधर्मिविशेष्यकं यत् पर्वतो वह्निमान्नवेत्याकारकं संशयरूपं ज्ञानं तद्भिन्नत्वस्य पर्वतो वह्निमानित्याकारकज्ञाने सत्त्वेन तादृशज्ञाने निश्चयत्वोपपत्त्या-निश्चयपदेन तादृशनिश्चयमादाय लक्षणसमन्वयसम्भवान्नोक्तदोष इति।

## वलदेवी

"निश्चयत्वञ्चविशेषणविशेष्यतावच्छेदकभावानापन्नेत्यादि" गदाधरः। अत्र तादृशज्ञानत्वन्नाम प्रकारताविशिप्रकारत्वानिरूपकत्वम्, वैशिष्ट्यञ्च प्रकारतायां स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितस्वनिरूपकज्ञानीयत्वस्वावच्छेदकावच्छिन्ननिरूपितविरोधितावच्छेदकधर्मावच्छिन्नत्वस्वनिरूपितविशेष्यतावच्छेदकत्वानवच्छेद्यत्वस्वाभाववत्वैतत्सम्बन्धपञ्चकेन, एवञ्च ह्रदो वह्निमान्न वेति संशयीयवह्न्यादिप्रकारतैव वह्न्यभावप्रकारताविशिष्टा तत्र स्वपदग्राह्यवह्न्यभावप्रकारतानिरूपितविशेष्यतावच्छेदकह्रदत्वावच्छिन्नत्वस्य तन्निरूपकतादृशसंशयनिरूपितत्वस्य तादृशप्रकारतावच्छेदकवह्न्यभावत्वावच्छिन्ननिरूपितविरोधितावच्छेदकवह्नित्वावच्छिन्नत्वस्य तादृशप्रकारतानिरूपितह्रदनिष्ठविशेष्यतानिरूपितावच्छेदकत्वानवच्छिन्नत्वस्य तादृशप्रकारत्वाभाववत्त्वस्य च सत्त्वात्। तादृशप्रकारत्वाभावश्च, स्वावच्छेद्यावच्छेदकताकविशेष्यतानिरूपितत्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकः, अयञ्च सम्बन्धः संशयीयकोटिप्रकारताया व्यधिकरणः, संशये वह्न्यभावादेः धर्मितावच्छेदकत्वाभावात्। निर्वह्निर्वह्निमानिति ज्ञानीया निर्वह्निः पर्वतो वह्निमानिति ज्ञानीया च प्रकारता न कापि तादृशी, प्रथमज्ञानीयप्रकारतायां वह्न्यभावप्रकारतायाः अन्यसम्बन्धचतुष्टयेन सत्त्वेऽपि स्वाभाववत्त्वसम्बन्धेनाभावात्, स्वावच्छेद्यावच्छेदकतानिरूपकविष्शेयतानिरूपितत्वसत्त्वेन तत्सम्बन्धावच्छिन्नस्वाभावस्य तत्राभावात्, वह्न्यभावनिष्ठप्रकारतायां वह्निप्रकारतायाः स्वनिरूपितविशेष्यतानवच्छेदकत्वात्। एवं द्वितीयज्ञानीयपर्वतत्वनिष्ठप्रकारतायां विरोधिविषयितावच्छेदकध-

र्मावच्छिन्नत्वमपि नास्तीति तादृशज्ञानद्वयं च न तादृशनिश्चयाक्रान्तम्। एवम् ह्रदो वह्निमान् वह्निव्याप्यधूमवान् वह्न्यभाववानिति समूहालम्बनज्ञानन्तु तादृशनिश्चयाक्रान्तम्, ह्रदे वह्नेः तदभावस्य च परस्परविशेषणविशेष्यतावच्छेदकभावानापन्नयोः प्रकारत्वात्। एवं निर्वह्निर्वह्निमान् निर्वह्निर्वह्न्यभाववानिति समूहालम्बनज्ञानञ्च न तादृशनिश्चयाक्रान्तम्, वह्न्यभावावच्छिन्नप्रकारतापन्नवह्निप्रकारतायास्तत्रैव प्रकारतापन्नवह्न्यभावप्रकारतायाश्च उक्तसम्बन्धैः परस्परविशिष्टत्वाद् अतो वह्न्यभाववद्वह्न्यभावावच्छिन्नविषयित्वञ्च तादृशनिश्चयावृत्तीति। अत्र प्रथमसम्बन्धानिवेशे पर्वतो वह्निमान् धूमान्यधूमादित्यत्र वह्न्यभाववद्भूतलादावतिव्याप्तिः, पर्वतो वह्निमान् भूतलं वह्न्यभाववानिति ज्ञानीयवह्न्यादिप्रकारताया अन्यसम्बन्धचतुष्टयेन परस्परविशिष्टत्वात्। प्रकारताविशिष्टप्रकारतानिरूपकत्वरूपनिश्चयत्वस्य तादृशसमूहालम्बनेऽभावेन तादृशनिश्चये वह्न्यभाववद्भूतलाद्यनवगाहिपक्षे साध्यहेतुवैशिष्ट्यावगाहिज्ञानत्वमेवेति, तत्र च वह्न्यभाववद्भूतलविषयिताया अवृत्तित्वात्। द्वितीयसम्बन्धानिवेशेऽसम्भवः, सर्वस्यापि प्रकारकत्वस्य समानधर्मितावच्छेदकज्ञानान्तरीयविरोधिप्रकारताविशिष्टत्वात्। तृतीयसम्बन्धानिवेशे ह्रदो वह्निमानित्यत्र पक्षे साध्यहेतुवैशिष्ट्यावगाहितादृशनिश्चयाऽप्रसिद्धेः, तत्र परस्परविशेषणविशेष्यतावच्छेदकभावानापन्नयोः साध्यसाधनयोरेकस्मिन् धर्मिणि प्रकारत्वात्। न चैवं ह्रदो वह्निमान् वह्न्यभावादित्यत्र न कोऽपि दोषस्स्यादिति वाच्यम्। विरोधितावच्छेदकेतरधर्मानवच्छिन्नत्वस्य विवक्षणीयत्वात्, चतुर्थपञ्चमसम्बन्धानिवेशे निर्वह्निः पर्वतो वह्निमानिति साध्यवत्तानिश्चयस्यासंग्रहः इति ध्येयम्।

## गादाधरी

यदीयविषयिता तादृशनिश्चयाऽवृत्तिस्तत्त्वमित्येतावति कृते ह्रदो वह्निव्याप्यधूमवानित्यादौ ह्रदादिनिष्ठवह्न्यभावादिमत्त्वेऽतिव्याप्तिः, वह्न्यादिव्याप्यवत्तानिश्चयस्यापि वह्न्यादिनिश्चयवत्कार्यसहभावेन वह्न्यभावादिग्रहविरोधित्वात् वह्न्यभावादिमत्त्वविषयतायास्तादृशनिश्चयावृत्तित्वादिति न शेषवैयर्थ्यम्।

## विमलप्रभा

यदीयविषयिता = यद्रूपावच्छिन्नविषयिता। तादृशनिश्चयावृत्तिः = पक्षे साध्यतद्व्याप्यहेतुवैशिष्ट्यावगाहिनिश्चयाऽवृत्तिः। तत्त्वं = तद्रूपावच्छिन्नत्वम्। इत्येतावति कृते = एतावन्मात्रलक्षणे कृते। तादृशनिश्चयावृत्तित्वात् = पक्षे साध्यतद्व्याप्यहेतुवैशिष्ट्यावगाहिनिश्चयनिरूपितवृत्तित्वाभावात्। न शेषवैयर्थ्यम् = तादृशनिश्चयोत्तरानुमितित्वव्यापकनिरुक्तोभयाभावपर्यन्तनिवेशस्य न वैयर्थ्यम्। अयमर्थः। यद्रूपावच्छिन्नविषयिता पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकतद्व्याप्यहेतुतावच्छेदकावच्छिन्नहेतुप्रकारकनिश्चयनिरूपितवृत्तित्वाभाववती तद्रूपावच्छिन्नत्वम् हेत्वाभासत्वमित्युक्तावेव सामञ्जस्ये पूर्वोदीरितनिश्चयावृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयिताशालिनिश्चयोत्तरानुमितित्वव्यापकनिरुक्तोभयाभावपर्यन्तनिवेशनं कुतो न निरर्थकमिति चेन्नैतत्सारम् तथा सति ह्रदपक्षकवह्निव्याप्यधूमसाध्यकस्थले वह्न्यभाववद्ध्रदादावतिव्याप्तिः, यथा वह्न्यभाववान् ह्रद इति बुद्धिं प्रति वह्निमान् ह्रद इति निश्चयस्य प्रतिबन्धकता तथैव सत्प्रतिपक्षविधया विरोध्यनुमितिसामग्रीत्वेन वह्निव्याप्यवत्तानिश्चयस्यापि प्रतिबन्धकत्वमिति वह्न्यभाववद्ध्रदविषयिता भवति ह्रदो वह्निव्याप्यधूमवान् वह्निव्याप्यजलवानित्याकारकनिश्चयावृत्तीति तद्रूपावच्छिन्नत्वस्य वह्न्यभाववद्ध्रदे सत्त्वात् अतो न शेषवैयर्थ्यम्, तथा च शेषोपादाने च न वह्न्यभाववद्ध्रदादावतिव्याप्तिसम्भावना, तादृशनिश्चयावृत्तिवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताशालिनिश्चयाव्यवहितोत्तरजायमानह्रदो वह्निव्याप्यधूमवान् तादृशधूमव्याप्यजलवांश्चेत्याकारकानुमितौ निरुक्तोभयसत्त्वेनोभयाभावविरहात्।

## गादाधरी

तदपि न, वह्निव्याप्यवान् वह्निव्याप्यव्याप्यवांश्च ह्रदो वह्न्यभाववानित्येतादृशाहार्यज्ञानोपगमेन वह्न्यभाववदिमत्त्वविषयितायाः वह्निव्याप्यादिमत्त्वनिश्चययवृत्तितया उक्तातिव्याप्त्यनवकाशेन शेषसार्थक्यानुपपत्तेः। वह्निमान् वह्निव्याप्यवांश्च ह्रदो वह्न्यभाववानित्येतादृशाहार्यसाध्यादिवैशिष्ट्यनिश्चये ह्रदो वह्निमानि-

त्यादिस्थलीयवाधादिविषयितायाः सत्त्वेनासम्भवप्रसङ्गाच्च। वह्न्यादिरूपधर्मितावच्छेदकानवच्छिन्नवह्न्यभावादिविशेषितह्रदादिनिरूपितविषयितायाः साध्यादिनिश्चयावृत्तित्वेऽपि घटादिनिरूपिताया अपि दोषविशेषावच्छिन्नाया विषयितायाः साध्यादिनिश्चयावृत्तितया घटादावुदासीनेऽतिव्याप्तिवारणाय यादृशविशिष्टविषयितासामान्यं तादृशनिश्चयावृत्ति तादृशविशिष्टनिरूपितविषयिताया एव विरोधिविषयितेत्यनेन विवक्षणीयतया अप्रतीकारात्।

## विमलप्रभा

पूर्वोक्तमतमपाकरोति तदपि नेति। उक्तातिव्याप्त्यनवकाशेन = वह्न्यभाववद्ध्रदादावतिव्याप्तिविरहेण। शेषसार्थक्यानुपपत्तेः = निरुक्तविरोधिविषयिताशालिनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकोभयाभावरूपशेषोपादानस्य वैयर्थ्यापत्तेः। बाधादिविषयितायाः = वह्न्यभाववद्ध्रदादिविषयितायाः। असम्भवप्रसङ्गात् = लक्ष्यमात्रेषु लक्षणागमनप्रसङ्गात्। साध्यादिनिश्चयावृत्तित्वे = वह्न्यादिप्रकारकनिश्चयनिरूपितवृत्तितारहितत्वे। तादृशनिश्चयावृत्ति = पक्षे साध्यहेतुवैशिष्ट्यावगाहिनिश्चयावृत्ति। अप्रतीकारात् = अतिव्याप्तिविरहेऽपि पूर्वोक्तासम्भवस्य वारणासम्भवात्। अयमर्थः। ह्रदपक्षकवह्निव्याप्यधूमसाध्यकजलहेतुकह्रदो वह्निव्याप्यधूमवान् जलादित्यादिस्थले वह्न्यभाववद्ध्रदादावतिव्याप्तिवारणाय शेषांशस्य सार्थक्यम् यदुक्तं तन्न युक्तम्, शेषांशानुपादानेऽपि तत्रातिव्याप्तिवारणसम्भवात्, तथा हि वह्निव्याप्यवान् वह्निव्याप्यव्याप्यवांश्च ह्रदो वह्न्यभाववानित्येतादृशाहार्यज्ञानस्यापि निरुक्तकोटिद्वयावगाहिसंशयान्यनिश्चयरूपतया तादृशज्ञाने वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितायाः वह्निव्याप्यादिमत्त्वावच्छिन्नविषयितायाश्च वृत्तित्वेन वह्निव्याप्यादिमत्त्वावच्छिन्नविषयताशालिनिश्चयवृत्तित्वस्य वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितायामभावेन वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितायाः धारणासम्भवात्। एवञ्च शेषोपादानं निरर्थकमेवेति। न च पूर्वोक्तलघुलक्षणेनैवोपपत्तौ शेषांशवैयर्थ्ये त्विष्टापत्तिरेवेति वाच्यम्। तथा सति लक्ष्यमात्रे लक्षणागमनप्रसङ्गः, वह्निमान् वह्निव्याप्यवांश्च ह्रदो वह्न्यभाववानित्याकारकवह्निवैशिष्ट्यावगाहिबा-

धकालीनेच्छाजन्याहार्यावगाहिनिश्चये ।कोटिद्वयावगाहिसंशयान्ये ताद्दशनिश्चयत्वसत्त्वेन निरुक्तनिश्चयस्यापि निश्चयपदेन धर्त्तुं शक्यतया तत्र वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताया अवृत्तित्वविरहेण विरोधिविषयितापदेन वह्न्यभाववद्ध्रदविषयितायाः धर्त्तुमशक्यतया लक्षणागमनाद्। यदपि केनचिदुक्तम् वह्न्यादिरूपं यत् धर्मितावच्छेदकं तदनवच्छिन्ना या वह्न्यभावविशिष्टह्रदविषयिता तस्याः वह्निमान् वह्निव्याप्यवांश्च ह्रदो वह्न्यभाववानित्याकारकाहार्यनिश्चयेऽवृत्तित्वेन ताद्दशविषयितामादाय नोक्तासम्भवसम्भावनेति तदपि न युक्तम् निरुक्तासम्भववारणेऽपि ह्रदो वह्निमान् धूमादित्यादौ घटादावतिव्याप्तिर्दुर्वारैव, घटादिविषयकवह्न्यभाववद्ध्रदादिविषयकसमूहालम्बनात्मकवह्न्यभाववान् ह्रदो घटवानित्याकारकज्ञानीयघटत्वावच्छिन्नविषयितायाः ह्रदविशेष्यकवह्न्यादिप्रकारकनिश्चयावृत्तितया तत्त्वस्य घटादौ सत्त्वात्। अतो यदि यद्रूपावच्छिन्नविषयितासामान्यं पक्षविशेष्यकसाध्यादिप्रकारकप्रोक्तनिश्चयावृत्ति ताद्दशविशिष्टविषयितायाः विरोधिविषयितापदेन विवक्षायाम् दोषविषयित्वानवच्छिन्नघटादिविषयितायाः ह्रदविशेष्यकवह्निप्रकारकघटविषयकसमूहालम्बनात्मकनिश्चये वर्त्तमानतया अवृत्तित्वविरहेण विरोधिविषयितापदेन तस्याः धारणासम्भवान्नातिप्रसङ्ग इति चेत्तदाऽसम्भवस्तदवस्थ एव, वह्निमान् वह्निव्याप्यधूमवांश्च, ह्रदो वह्न्यभाववानित्याकारकाहार्यज्ञानीयवह्न्यभावविशिष्टह्रदविषयितायाः ताद्दशसंशयान्याहार्यज्ञानात्मकनिश्चये वर्त्तमानतयाऽवृत्तित्वविरहेण तस्याः विरोधिविषयितापदेन धारणासम्भवादिति भावः।

## गादाधरी

भ्रमान्यवृत्तियदीयविषयितासामान्यं ताद्दशनिश्चयावृत्तितदीयविषयिताविवक्षणेन निर्वाहेऽपि विरोधियद्विषयिताशालिनिश्चयोत्तरानुमितिसामान्ये द्वयोर्व्यतिरेक इत्यनभिधाय यद्विषयकनिश्चयस्येत्यादिवक्राभिधानस्य ग्रन्थकारीयरीतिविरुद्धत्वात्।

## विमलप्रभा

यदीयविषयिता = यद्रूपावच्छिन्नविषयिता। ताद्दशनिश्चयावृत्तिः = पक्षे साध्ययद्व्याप्यहेतुवैशिष्ट्यावगाहिताद्दशनिश्चयनिरूपितवृत्तित्वाभाववती। तदीयविषयि-

ता=तद्रूपावच्छिन्नविषयिता। निर्वाहेऽपि=असम्भवादिदोषवारणेऽपि। अनभिधाय=अप्रतिपाद्य। रीतिविरुद्धत्वात्=सिद्धान्तविरुद्धत्वात्। अयमर्थः। भ्रमान्यवृत्तियद्रूपावच्छिन्नविषयितासामान्यं पक्षे साध्यवैशिष्ट्याद्यवगाहितादृशनिश्चयनिरूपितवृत्तित्वाभाववत्तद्रूपावच्छिन्नविषयिताया विरोधिविषयितापदेन विवक्षात एवासम्भववारणसम्भवात्, तथा हि वह्निमान् वह्निव्याप्यवांश्च ह्रदो वह्न्यभाववानित्याकारकाहार्यज्ञानस्य तदभाववति तत्प्रकारकत्वेन भ्रमरूपतया तादृशाहार्यात्मकभ्रमज्ञानभिन्नज्ञानीयविषयितायाः ह्रदविशेष्यकवह्न्यादिप्रकारकतादृशनिश्चयावृत्तितया विरोधिविषयितापदेन तदुपादानसम्भवेन लक्षणगमनात्। सामान्यपदोपादानाच्च नोक्तरीत्या घटादावतिप्रसङ्ग इति चेत्सत्यम्, तावतापि विरोधिविषयितावालिनिश्चयाव्यावहितोत्तरतादृशानुमितिसामान्ये निरुक्तोभयाभावस्तत्त्वमित्यादिसरलरीत्या निवेशेनैव सामञ्जस्ये यद्विषयकनिश्चयस्येत्यादिना वक्रनिवेशस्य ग्रन्थकारोक्तसिद्धान्तविरुद्धत्वादिति भावः।

## बलदेवी

भ्रमान्यज्ञानीययदीयविषयितासामान्यमिति गदाधरः। नन्वत्रोक्तनिश्चयस्य लक्षणघटकत्वे किं तत्कुक्षिप्रविष्टं विरोधितावच्छेदकत्वन्नाम? यदि तद्वृत्तितानवच्छेदकत्वं तदा ह्रदो वह्निमान् धूमान्यधूमादित्यत्र जलवद्ध्रदेऽतिव्याप्तिः, ह्रदो वह्निमान् वह्निव्याप्यधूमान्यधूमवान् जलवांश्चेति ज्ञानीयवह्निजलप्रकारतयोरुक्तसम्बन्धैः परस्परविशिष्टत्वात्, तन्निरूपकत्वेन तादृशज्ञानस्य निश्चयत्वासम्भवेन जलानवगाहिसाध्यहेत्ववगाहिज्ञानस्यैव निश्चयत्वात् तत्र च जलवद्ध्रदविषयिताया अवृत्तित्वात्। न च विरोधितावच्छेदकावच्छिन्नत्वेत्यनेन स्वावच्छेदकावच्छिन्नस्वावच्छेदकसम्बन्धावच्छिन्नप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकमुख्यविशेष्यतानिरूपितप्रकारतावच्छेदकधर्मावच्छिन्नत्वविवक्षणान्नायं दोष इति वाच्यम्। ह्रदो वह्निमान् धूमान्यधूमादित्यत्र कालिकसम्बन्धेन वह्न्यभावविशिष्टह्रदेऽतिव्याप्तेः, पक्षे साध्यहेतुवैशिष्ट्यावगाहिनः कालिकसम्बन्धेन वह्न्यभावावगाहिज्ञानस्योक्तनिश्चयत्वाभावात्, तेन सम्बन्धेन वह्न्यभावानवगाहिनि पक्षे

साध्यसाधनावगाहिनिश्चये तेन सम्बन्धेन वह्न्यभावविशिष्टह्रदविषयिताया अवृत्तित्वात्। न च तादृशप्रकारतावच्छेदकावच्छिन्नत्वं परित्यज्य तादृशप्रकारताविशिष्टत्वं तृतीयसम्बन्धो विवक्षणीयः, वैशिष्ट्यञ्च स्वावच्छेदकरूपावच्छिन्नत्व-स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेनेति वाच्यम्। यत्र निर्वह्नित्वसामानाधिकरण्येन वह्नेः साध्यता तत्र निर्वह्नित्वावच्छेदेन वह्न्यभाववन्निर्वह्निरूपबाधाद्यसंग्रहापत्तेः, निर्वह्निर्वह्निमान् वह्न्यभाववांश्चेति समूहालम्बनज्ञानीयवह्नितदभावप्रकारतयोः परस्परविशिष्टत्वाभावात्। तथा हि सामानाधिकरण्येन वह्निमत्ताबुद्धिं प्रति अवच्छेदकावच्छेदेन तदभाववत्ताज्ञानस्य प्रतिबन्धकतया शुद्धसंयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूता या प्रकारता तदवच्छेदकसम्बन्धश्च पर्वतत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपमेव, निर्वह्नित्वव्यापकवह्निप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रकारतायाः निरुक्तप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वाभावात्। तादृशसमूहालम्बनज्ञानीयवह्न्यभावप्रकारता च न पर्वतत्वव्यापकवह्निप्रतियोगिकस्वरूपसम्बन्धावच्छिन्ना, तथा च तादृशप्रतिबन्धकतावच्छेदकप्रकारतायाः स्वावच्छेदकावच्छिन्नत्वस्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन तादृशप्रकारतायामभावेनोक्तसम्बन्धैः प्रकारताविशिष्टप्रकारताऽनिरूपके तादृशज्ञाने तादृशदोषविषयितासत्त्वादिति। न च तादृशप्रकारतावैशिष्ट्यञ्च स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकसंसर्गतानिरूपितावच्छेदकतावत्त्वघटितं न विवक्ष्यते, किन्तु संसर्गतावच्छेदकधर्मावच्छिन्नावच्छेदकताकसंसर्गताघटितमेव। तथा च तादृशदोषविषयकसमूहालम्बनज्ञानीयवह्न्यभावप्रकारतायामपि तादृशप्रतिबन्धकतावच्छेदकप्रकारतानिरूपितसंसर्गतावच्छेदकीभूतस्वरूपत्वावच्छिन्नसंसर्गतानिरूपितावच्छेद्यत्वस्य सत्त्वान्नाव्याप्तिरिति वाच्यम्। तथा निवेशे तत्रैव सामानाधिकरण्येन वह्न्यभाववन्निर्वह्नेरपि दोषत्वापत्तिः, निर्वह्नित्वसामानाधिकरण्येन वह्नितदभावावगाहिसमूहालम्बनादिज्ञानस्य निश्चयत्वाभावेन तादृशसमूहालम्बनाद्यन्यज्ञानस्यैव निर्वह्निर्वह्निमानित्यस्य तथात्वात्, तत्र च सामानाधिकरण्येन वह्न्यभाववन्निर्वह्निविषयिता-

या असत्वादिति चेन्न, स्वविशिष्टप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावत्त्वसम्बन्धेन, उभयत्र प्रकारतावैशिष्ट्यस्य स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वस्वनिरूपितसंसर्गतावच्छेदककिञ्चिद्धर्मव्यापकप्रतियोगित्वेतरधर्मावच्छिन्नकिञ्चिद्धर्मव्यापकप्रतियोगिकत्वावच्छिन्नसांसर्गिकविषयतानिरूपितत्वोभयसम्बन्धेन । किञ्चिद्धर्मावच्छिन्नव्यापकत्वनिवेशेन सामानाधिकरण्येन वह्न्यभाववन्निर्वह्नौ न प्रागुक्तातिप्रसंगः। यत्र निर्वह्नित्वावच्छेदेन वह्नेः साध्यता तत्र तत्सामानाधिकरण्येन दोषसंग्रहाय वह्नित्वावच्छिन्नप्रकारतायां वह्न्यभावत्वावच्छिन्नप्रकारतावैशिष्ट्यमादाय साध्यसाधनदोषविषयकसमूहालम्बनस्य निश्चयत्वाभाव उपपादनीयः। निर्वह्नित्वावच्छेदेन वह्नेः साध्यतास्थले सामानाधिकरण्येन वह्न्यभावव्याप्यवत्पक्षस्य दोषत्वमावश्यकम् तदा स्वावच्छेदकावच्छिन्नस्वावच्छेदकसम्बन्धावच्छिन्नप्रकारताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकप्रकारताविशिष्टत्वान्यतमघटितसम्बन्धपञ्चकेन वैशिष्ट्यं बोध्यम्। न चैवमपि ह्रदो वह्निमान् वह्न्यभाववद्ध्रदकालीनधूमादित्यत्र न कश्चिद्दोषः स्यात् पक्षे साध्यहेत्ववगाहितादृशनिश्चयाऽप्रसिद्धेरिति वाच्यम्। पक्षे साध्यावगाहिनिश्चयवृत्तित्वपक्षे हेत्ववगाहिनिश्चयवृत्तित्वोभयाभावस्य विवक्षणीयत्वात्। नन्वत्र ग्रन्थकाररीतिविरुद्धरूपदूषणाभिधानमसङ्गतम्, ह्रदो वह्निव्याप्यधूमवान् घटान्यत्वादित्यत्र वह्न्यभाववद्ध्रदेऽतिव्याप्तेः, ह्रदे वह्न्यभावविषयकतादृशसाध्यहेतुविषयकसमूहालम्बनस्य निश्चयत्वासम्भवेन वह्न्यभाववद्ध्रदविषयितायाः पक्षे साध्यसाधनावगाहितादृशनिश्चयावृत्तित्वात् इति चेन्न, अनुमितिघटितलक्षणस्यातिव्याप्तिसत्त्वेऽपि अनाहार्यमानसज्ञानसामान्यघटितलक्षणस्य निर्दुष्टत्वे तात्पर्यात्। अनाहार्यमानसत्वं नामेच्छाविशिष्टान्यदोषविशेषाजन्यज्ञानत्वम्, तत्रेच्छाविशिष्टज्ञाने दोषत्वेनाभिमततादृशोदासीनज्ञानोत्तराहार्यतत्तद्व्यक्तिभेदो निवेशनीयः, तथा च तादृशदोषत्वेनाभिमतोदासीनज्ञानोत्तरपक्षविशेष्यकसाध्यहेतुवैशिष्ट्यावगाहितादृशाहार्यज्ञानमपि सामान्यान्तर्गतम् तत्र नोक्तोभयाभावोऽस्तीति नातिव्याप्तिरित्यभिप्रायात्। ननु भ्रमान्यज्ञानीयमेयत्वविशिष्टव्यभिचारादिविषयितासामान्यस्य तादृशनिश्चयावृत्तितया तत्रातिव्याप्तिवारणं कथमिति चेत्? विशिष्टान्तराघटितत्वनिवेशेनेति गृहाण। तन्निवेशश्च भ्रमान्यज्ञानीयस्वावच्छिन्नविष-

यितासामान्यं प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिप्रकृतसाध्यनिरूपितव्याप्तिविशिष्टप्रकृतहेतुवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रकारताविशिष्टा यावन्तः प्रकारताविशिष्टप्रकारतानिरूपकानिश्चयास्तदन्तर्गतयद्यन्निश्चयास्तत्तन्निश्चयावृत्तिस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकरूपावच्छिन्नभ्रमान्यज्ञानीयविषयतासामान्यं तद्रूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वं लक्ष्यतावच्छेदके विशेषणमिति । निश्चये प्रकरतावैशिष्ट्यञ्च स्वावच्छेदकावच्छिन्नप्रकारतानिरूपितस्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतावत्त्वसम्बन्धेन, तादृशनिश्चयत्वघटकप्रकारतावैशिष्ट्यघटकतृतीयसम्बन्धघटकप्रतिबन्धकतायां निश्चयविशिष्टनिश्चयत्वावच्छिन्नत्वं विशेषणं देयम् नातो विशिष्टद्वयाघटितत्वं निवेशनीयमिति । अत्रायमनुगमः । प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वप्रकृतसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभाववद्वृत्तिकिञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयोत्तरानुमितिनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धाभावनिरूपितप्रतियोगितानिरूपितावच्छेदकतानिरूपितपरम्परयाऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मविशिष्टधर्मवत्त्वं लक्षणम् । धर्मे धर्मवैशिष्ट्यञ्च, स्वतादात्म्यस्वविशिष्टरूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धेन, रूपे स्ववैशिष्ट्यञ्च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वभ्रमान्यज्ञानीयस्वावच्छिन्नविषयितावृत्तिभेदप्रतियोगितावच्छेदकत्वाभाववत् पक्षे साध्यवैशिष्ट्यावगाहिसाध्यव्याप्यहेतुवैशिष्ट्यावगाहिग्रहनिष्ठकिञ्चिद्रूपावच्छिन्नविशेष्यतानिरूपितकिञ्चिद्रूपावच्छिन्नप्रकारता नास्तीति प्रतीतिसिद्धाभावाप्रतियोगिप्रकारितात्वव्यापकत्वविशिष्टोभयाभावाऽवृत्तितादृशाभावप्रतियोगितापरम्पराऽवच्छेदकत्वोभयसम्बन्धेन, भेदप्रतियोगितावच्छेदकताघटकसम्बन्धश्च स्वविशिष्टप्रकारतानिरूपकत्वविशिष्टप्रागुक्तप्रकारताविशिष्टप्रकारत्वानिरूपकत्वविशिष्टनिश्चयावृत्तित्वरूपः । प्रकारतायां स्ववैशिष्ट्यञ्च, स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वस्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन, प्रकारतात्वव्यापकता च भ्रमान्यज्ञानीयस्वावच्छिन्नविषयितात्वव्यापकतासम्बन्धेन, व्यापकता च प्रागुक्तसम्बन्धेनेति ॥

## गादाधरी

एतेन विषयिताया उभयाभावप्रयोजकत्वं तादृशोभयाभावप्रतियोगितावच्छेदकं

यद्रूपविशिष्टे येन सम्बन्धेन यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वघटितं तद्रूपावच्छिन्न-विशेष्यकतत्संसर्गकतद्रूपावच्छिन्नप्रकारकत्वविशेषितेनानुमितित्वेनानाहार्यलौकिकस-न्निकर्षाद्यजन्यज्ञानत्वेन वा अवच्छिन्ना या प्रतिबध्यता तन्निरूपितप्रतिबन्धकतावच्छे-दकत्वम् । एवञ्च यादृशविशिष्टविषयितानिरुक्ततथाविधोभयाभावप्रयोजकताश्रय-स्तादृशत्वमेव लक्षणम् । विषयितादौ विरोधित्वादिकथनन्तु स्वरूपाख्यानमात्र-मेव इति प्रलपितमप्यनादेयमेव । निर्वह्निर्वह्निमानित्यादिस्थलीयदोषस्य उक्तयु-क्त्या दुःसंग्रहात् । अत्र केचित् कश्चिदित्यन्ताग्रिमकल्प इवात्रापि कल्पे न दीधिति-कृतो निर्भरः, निर्वह्निर्वह्निमानित्यादिस्थलीयदोषासंग्रहेणास्वरसस्याग्रिमकल्पे कश्चि-दित्यनेनैवात्रापि कल्पे वदन्तीत्यनेन सूचितत्वात् । निर्भरस्तु केचिदित्यादिकल्पे एव । अत एव तत्र प्रकर्षसूचनाय प्राहुरित्युक्तम् ।

## विमलप्रभा

एतेनेति । एतेनेत्यस्यानादेयमेवेत्यनेनान्वयः । एतेन = वक्ष्यमाणदो-षेण निर्वह्निर्वह्निमानित्यादिस्थलीयदोषेऽव्याप्तिप्रसङ्गेनेति यावत् । तादृशोभया-भावप्रतियोगिता = प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्या-वगाहित्वोभयाभावीयप्रतियोगिता । यद्रूपविशिष्टे = पक्षतावच्छेदकावच्छिन्ने । येन सम्बन्धेन = साध्यतावच्छेदकसम्बन्धेन, यद्रूपावच्छिन्नेत्यत्र यद्रूपपदेन साध्यता-वच्छेदकस्योपग्रहः । तद्रूपपदेन पक्षतावच्छेदकस्य परिग्रहः । तत्संसर्गकेत्यत्र त-त्पदेन साध्यतावच्छेदकसम्बन्धस्य परामर्शः । तद्रूपम् = साध्यतावच्छेदकम् । पर्यवसितलक्षणार्थमाह एवञ्चेति । एवञ्च = विषयितायामुभयाभावप्रयोजकत्व-स्योक्तार्थकरणे च । यादृशविशिष्टविषयिता = यद्रूपावच्छिन्नविषयिता । तथावि-धोभयाभावप्रयोजकताश्रयः = पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्या-वगाहित्वोभयाभावनिष्ठप्रयोज्यतानिरूपितप्रयोजकताश्रयः । तादृशत्वम् = तद्रूपा-वच्छिन्नत्वम् । स्वरूपाख्यानम् = स्वरूपकथनम् । प्रलपितमपि = अनर्थकवचन-मपि । अनादेयम् = अग्राह्यम् । दोषस्य = वह्न्यभाववद्वह्न्यभाववद्रूपबाधादेः । उक्तरीत्या = प्रतिबन्धकतावच्छेदकाद्यप्रसिद्धिरूपयुक्त्या । दुःसंग्रहात् = संग्रहाभावा-

त् । अत्रापि कल्पे=उभयाभाववघटितकल्पे । दीधितिकृतः—रघुनाथस्य। न निर्भरः=न विश्वासः, नाग्रह इति यावत्। सूचितत्वात्=दीधितिकृतैव प्रतिपादितत्वात् । केचिदित्यादिकल्प एव=केचित्तु पक्षसाध्यहेतुकस्थले यावन्तो दोषा इत्यादिकल्प एव । अत एव=निर्भरत्वादेव । तत्र=केचिदित्यादिकल्पे । उक्तम्= दीधितिकृतेति शेषः । अयमर्थः। कस्यचिन्मते विरोधिविषयितया उभयाभावप्रयोजकत्वं हि [प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकत्वसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नहेतुप्रकारकत्वोभयाभावनिष्ठप्रयोज्यतानिरूपितप्रयोजकत्वं] तादृशोभयाभावप्रतियोगितावच्छेदकं यद्रूपावच्छिन्नविशेष्यकसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नसाध्यवैशिष्ट्यावगाहित्वघटितं तद्रूपावच्छिन्नविशेष्यकसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारकानुमितित्वावच्छिन्नाऽनाहार्यलौकिकसन्निकर्षाजन्यदोष-विशेषाजन्यज्ञानत्वावच्छिन्ना वा या प्रतिबध्यतानिरूपितप्रतिबन्धकता तदवच्छेदकत्वरूपम्, तथा च तन्मते तादृशोभयाभावप्रयोजकताश्रयीभूता यद्रूपावच्छिन्ननिरूपितविषयिता तद्रूपावच्छिन्नत्वं लक्षणार्थः । एवम् तन्मते विषयितायां विरोधित्वमपि लक्षणघटकतया न प्रविष्टमपि तु स्वरूपकथनमात्राभिप्रायकमिति तन्मतमपि न क्षोदक्षमम्, निर्वह्निर्वह्निमानित्यत्र वह्न्यभाववन्निर्वह्निरूपबाधज्ञानप्रतिबध्याऽप्रसिद्ध्या [तादृशोभयाभावप्रतियोगितायाः वह्न्यभाववति वह्निप्रकारकत्वघटिततया वह्न्यभाववद्विशेष्यकवह्निप्रकारकानुमितेरनाहार्यमानसज्ञानस्य वाऽप्रसिद्ध्या] लक्षणागमनेन तादृशबाधेऽव्याप्त्यापत्तेः दुष्परिहरत्वात् ।

कस्यचिन्मते केचित्तु यादृशपक्षे यादृशसाध्यकेत्यादिना प्रतिपादनीयकल्पे कश्चिदित्युक्तम्, उभयाभावघटितकल्पे च वदन्तीत्युक्तं रघुनाथेन, सुतरामुभयत्रैवानुमितेरनाहार्यज्ञानस्याऽप्रसिद्ध्या निर्वह्निर्वह्निमानित्यत्र वह्न्यभाववन्निर्वह्निरूपबाधेऽव्याप्तिरूपास्वरसः दीधितिकृतैव कश्चिदित्यनेनात्र वदन्तीत्यनेन च संसूचितः इति दीधितिकृतः निर्भरस्तु केचिदित्यादि प्राहुरित्यन्तवक्ष्यमाणकल्प एव, अतस्तत्र प्रकर्षसूचनाय प्राहुः पदोपादानमिति भावः ।

## गादाधरी

परे तु घटाभावादिधर्मितावच्छेदककवह्न्यादिमत्त्वज्ञानं प्रति तद्धर्मितावच्छेदककवह्न्यभावादिमत्त्वज्ञानप्रतिबन्धकत्वे कल्पनीये धर्मितावच्छेदकभेदेन तदकल्पनप्रयुक्तलाघवानुरोधेन धर्मितावच्छेदकमनिवेश्यमनाहार्यवह्न्यादिविशिष्टबुद्धित्ववह्न्यभावादिनिश्चयत्वाभ्यां समानधर्मितावच्छेदकत्वप्रत्यासत्त्यैव प्रतिबध्यप्रतिबन्धकभावः कल्प्यते। एवञ्च तद्देशनिष्ठस्य स्वपूर्ववर्त्तिज्ञाननिरूपितप्रतिबन्धकतावच्छेदकसम्बन्धस्य उत्तरवर्त्तिज्ञाननिष्ठप्रतिबध्यतावच्छेदकसम्बन्धेन तद्देशासम्बन्धित्वं प्रति प्रयोजकतया वह्न्यभावादिनिष्ठवह्न्यभावादिप्रकारकज्ञानीयधर्मितावच्छेदकताख्यविषयितायास्तदुत्तरोत्पन्नानाहार्यवह्न्यादिप्रकारकज्ञानस्य वह्न्यभावादिधर्मितावच्छेदककत्वविरहप्रयोजकत्वाद्वह्न्यभावादिविशिष्टे वह्न्यादिवैशिष्ट्यावगाहित्वविरहस्य वह्न्यभावादिधर्मितावच्छेदकताकवह्न्यभावादिप्रकारकनिश्चयविषयिताप्रयुक्तत्वमक्षतमेवेति तादृशनिश्चयविषयस्य दोषत्वमव्याहतमेव।

## विमलप्रभा

अथेत्यादिना प्रागुक्ताशङ्कायाः समाधानमाह परे त्वित्यादिना। घटाभावादिधर्मितावच्छेदककवह्न्यादिमत्त्वज्ञानं = घटाभाववान् वह्निमानिति ज्ञानम्। तद्धर्मिता = घटाभावादिरूपधर्मिता। धर्मितावच्छेदकभेदेन = घटाभावादिरूपधर्मितावच्छेदकभेदेन। तत् = धर्मितावच्छेदकभेदेन प्रतिबध्यप्रतिबन्धकभावम्। एवञ्च = धर्मितावच्छेदकतासम्बन्धेन प्रतिबध्यप्रतिबन्धकभावकल्पने च। तद्देशनिष्ठस्य = घटाभावादिरूपधर्मितावच्छेदकनिष्ठस्य। स्वपूर्ववर्त्तिज्ञाननिरूपितप्रतिबन्धकतावच्छेदकसम्बन्धस्य = स्वं प्रतिबध्यज्ञानं तत्पूर्ववर्त्तिज्ञानात्मकघटाभावादिरूपधर्मितावच्छेदककत्तद्धर्मावच्छिन्नप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकधर्मितावच्छेदकत्वादिसम्बन्धस्य। उत्तरवर्त्तिज्ञाननिष्ठप्रतिबध्यतावच्छेदकसम्बन्धेन = प्रतिबन्धकज्ञानाव्यवहितोत्तरजायमानघटवद्भूतलमित्याकारकाऽप्रतिबध्यज्ञाननिष्ठा या धर्मिता तदवच्छेदकसम्बन्धेन। तद्देशासम्बन्धित्व = घटाभावादिरूपदेशा-

दावववर्त्तमानत्वम् । निर्वह्निर्वह्निमानित्यादौ लक्षणसंगतिमाह वह्न्यभावादीति । तादृशनिश्चयविषयस्य = वह्न्यभाववान् निर्वह्निरित्याकारकनिश्चयविषयस्य । दोषत्वं = हेत्वाभासत्वम् । अव्याहतमेव, = अक्षतमेव । निर्वह्निर्वह्निमानित्यत्र वह्न्यभाववन्निर्वह्निरूपबाधे लक्षणसङ्गतिमाह वह्न्यभावादीति । अयमर्थः । केवलधर्मितावच्छेदकताघटितप्रत्यासत्त्या प्रतिबध्यप्रतिबन्धकभावकल्पने घटाभावादिधर्मितावच्छेदककवह्निप्रकारकबुद्धित्वावच्छिन्नं प्रति घटाभावादिधर्मितावच्छेदककवह्न्यभावादिप्रकारकनिश्चयस्य प्रतिबन्धकत्वम्, एवं पटाभावादिधर्मितावच्छेदकतासम्बन्धेन वह्न्यादिप्रकारकबुद्धिम्प्रति पटाभावादिधर्मितावच्छेदककवह्न्यभावादिप्रकारकनिश्चयस्य प्रतिबन्धकत्वमिति धर्मितावच्छेदकभेदेनानन्तप्रतिबध्यप्रतिबन्धकभावापत्तिस्तथा च गौरवं दुःपरिहरणीयमतो न धर्मितावच्छेदकताघटितप्रत्यासत्त्या प्रतिबध्यप्रतिबन्धकभावकल्पना, किन्तु लाघवात् धर्मितावच्छेदकमनिवेश्य स्वीयधर्मितानिरूपितसमवायादिसम्बन्धावच्छिन्ननिरवच्छिन्नावच्छेदकतासम्बन्धेन वह्नित्वाद्यवच्छिन्नप्रकारताशाल्यनाहार्यतत्पुरुषीयबुद्धिं प्रति निरुक्तसम्बन्धेन वह्न्यभावप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकतेति, एवञ्च निर्वह्निर्वह्निमानित्यत्र वह्न्यभाववद्वह्न्यभाववद्रूपबाधे लक्षणसंगतिः, तथा हि एतद्देशनिष्ठपूर्ववर्त्तिज्ञानवृत्तिर्या प्रतिबन्धकता तन्निरूपितधर्मितावच्छेदकसम्बन्धस्य स्वोत्तरवर्त्तिज्ञानीयधर्मितावच्छेदकतासम्बन्धेन तद्देशाऽवृत्तित्वं प्रति प्रयोजकतया धर्मितावच्छेदकनिष्ठस्य ह्रदो वह्न्यभाववानिति ज्ञाननिरूपितधर्मितावच्छेदकत्वसम्बन्धस्य घटवद्भूतलमित्यादिज्ञाननिष्ठधर्मितावच्छेदकतासम्बन्धेन ह्रदत्वादिरूपधर्मितावच्छेदकदेशाऽवृत्तित्वं प्रति प्रयोजकतया वह्न्यभावादिनिष्ठवह्न्यभावादिप्रकारकज्ञानीया या धर्मितावच्छेदकताख्यविषयता तस्यास्तदुत्तरोत्पन्नानाहार्यवह्न्यादिप्रकारकज्ञानीयवह्न्यभावादिधर्मितावच्छेदकताविरहप्रयोजकत्वेन वह्न्यभावादिधर्मितावच्छेदकताकवह्न्यभावादिप्रकारकनिश्चयीयविषयितायाः वह्न्यभावादिविशिष्टे वह्न्यादिवैशिष्ट्यावगाहित्वविरहप्रयोजकत्वमक्षतमेवेति वह्न्यभाववद्वह्न्यभाववद्रूपबाधे लक्षणगमनात् संगतिरिति भावः ।

# बलदेवी

परे तु घटाभावादिधर्मितावच्छेदककेति गदाधरः। अत्रावच्छेदकावच्छेदेन ज्ञानस्य प्रतिबन्धकत्वे वह्निमत्वावच्छिन्नप्रकारतानिरूपितकिञ्चिद्धर्मव्यापकप्रतियोगिकत्वविशिष्टसंयोगसम्बन्धावच्छिन्नसंसर्गतानिरूपितविशेष्यतानिरूपितसमवायसम्बन्धावच्छिन्ननिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ज्ञानत्वावच्छिन्नं प्रति संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतात्वावच्छिन्नाभावत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितसमवायसम्बन्धावच्छिन्ननिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन निश्चयस्य प्रतिबन्धकत्वम्। सामानाधिकरण्येन ज्ञानस्य प्रतिबध्यत्वे वह्नित्वावच्छिन्नप्रकारतानिरूपितसंयोगत्वावच्छिन्नसंसर्गतानिरूपितविशेष्यतानिरूपितसमवायसम्बन्धावच्छिन्ननिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ज्ञानत्वावच्छिन्नं प्रति किञ्चिद्धर्मव्यापकप्रतियोगिकत्वविशिष्टसंयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नाभावत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितसमवायसम्बन्धावच्छिन्ननिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन निश्चयस्य प्रतिबन्धकत्वम्। अयं प्रतिबध्यप्रतिबन्धकभावः पर्वतो वह्निमान् घटो वह्निमानित्यादिज्ञानानां पर्वतो वह्न्यभाववान् घटो वह्न्यभाववानित्यादिज्ञानानाञ्च,नीलपर्वतो वह्निमान् पीतपर्वतोवह्निमानित्यादिज्ञानानां तद्विपरीतज्ञानानाञ्च, तद्भावस्तु अवच्छेदकावच्छेदेन प्रतिबध्यत्वे वह्नित्वावच्छिन्नावच्छिन्नप्रकारतानिरूपितकिञ्चिद्धर्मव्यापकप्रतियोगित्वावच्छिन्नसंसर्गतानिरूपितविशेष्यतानिरूपितावच्छेदकत्वावच्छेद्यपर्वतत्वावच्छेद्यपर्वतत्वावच्छिन्नविशेष्यतानिरूपितसमवायसम्बन्धावच्छिन्नप्रकारतानिरूपितसमवायसम्बन्धावच्छिन्ननिरवच्छिन्नावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ज्ञानं प्रति संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नाभावत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नवि-

शेष्यतानिरूपितसमवायसम्बन्धावच्छिन्नप्रकारत्वावच्छेद्यावच्छेदकतानिरूपितसमवा-यसम्बन्धावच्छिन्ननिरवच्छिन्नाऽवच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्व-सम्बन्धेन ज्ञानस्य प्रतिबन्धकत्वमिति ।

एवम्, सामानाधिकरण्येन बुद्धिं प्रति एवं घटवान् वह्निमान् पटवान् वह्निमानित्यादिज्ञानानां तद्विपरीतज्ञानानाञ्च तद्भावः, वह्नित्वाव-च्छिन्नप्रकारतानिरूपितकिञ्चिद्धर्मव्यापकप्रतियोगिकसंयोगत्वावच्छिन्नसंसर्गतानिरूपि-तविशेष्यतानिरूपितावच्छेदकतात्वावच्छिन्नसंयोगसम्बन्धावच्छिन्नप्रकारतानिरूपित-समवायसम्बन्धावच्छिन्ननिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनु-योगितावच्छेदकत्वसम्बन्धेन ज्ञानं प्रति वह्नित्वावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्र-कारतानिरूपितविशेष्यत्वावच्छेद्याभावत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतानि-रूपितविशेष्यतानिरूपितसंयोगसम्बन्धावच्छिन्नावच्छेदकतानिरूपितसमवायसम्बन्धा-वच्छिन्ननिरवच्छिन्नावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ज्ञा-नस्य प्रतिबन्धकत्वमिति । एवं घटाभाववान् वह्निमान् पटाभाववान् वह्निमानित्यादिज्ञानानां तद्विपरीतज्ञानानाञ्च, तद्भावः वह्नित्वाव-च्छिन्नप्रकारतानिरूपितकिञ्चिद्धर्मव्यापकप्रतियोगिकसंयोगत्वावच्छिन्नसंसर्गतानिरूपि-तविशेष्यतानिरूपितावच्छेदकत्वावच्छेद्यस्वरूपसम्बन्धावच्छिन्नाभावत्वावच्छिन्नप्रका-रत्वाऽवच्छिन्नविशेष्यतानिरूपितसंयोगसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्न-प्रकारतानिरूपितसमवायसम्बन्धावच्छिन्ननिरवच्छिन्नधर्मविशिष्टान्यत्वावच्छेदकतात्-वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ज्ञानं प्रति वह्नित्वावच्छिन्नसंयोगस-म्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नाऽभा-वत्वावच्छिन्नप्रकारत्वावच्छिन्नाऽवच्छेदकतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नप्र-कारत्वावच्छेद्यावच्छेदकतानिरूपितसमवायसम्बन्धावच्छिन्ननिरवच्छिन्नधर्मविशिष्टा-न्याऽवच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ज्ञानस्य प्रतिबन्धक-त्वमिति । एवमेव सर्वत्र प्रतिबध्यप्रतिबन्धकज्ञानयोर्धर्मितावच्छेदकपरम्परायां य-स्य स्वरूपतो भानं तद्वृत्तिधर्मान्तर्भावेण प्रतिबध्यप्रतिबन्धकभावः स्वयमूहनीय इति ।

इति महामहोपाध्यायश्रीबलदेवभट्टाचार्यविरचिता

बलदेवीति प्रसिद्धा सामान्यनिरुक्तिटीका समाप्ता ॥

## गादाधरी

न च धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या विपरीतज्ञानस्य प्रतिबन्धकत्वे निर्वह्नि-विशेष्यकवह्निज्ञानं जायतामित्याकारकेच्छाजन्यनिर्वह्निर्वह्निमान् घटाभाववांश्च वह्निमानित्याद्यांशिकाहार्यज्ञानस्य विपरीतज्ञानप्रतिबध्यतावच्छेदकानाक्रान्ततया घटाभाववान् वह्न्यभाववानित्यादिनिश्चयकाले तथाविधेच्छासत्त्वे घटाभावविशिष्ट-विशेष्यकवह्निज्ञानं जायतामित्याकारकेच्छां विनैव तादृशज्ञानापत्तिरिति वाच्यम्। यतः सामान्यतो वह्न्यादिज्ञानेच्छाविशिष्टान्यत्वरूपमनाहार्यत्वं न प्रतिबध्यतावच्छे-दककोटौ निवेशनीयम्, किन्त्वनाहार्यज्ञानोत्पत्त्यर्थं विशेष्यतानिष्ठं यत् स्वविषयताव-च्छेदकत्वं तदवच्छेदकतावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यादिज्ञानेच्छा-विरहस्य या स्वाव्यवहितप्राक्क्षणावच्छिन्नाधिकरणता तद्विशिष्टधर्मितावच्छेदकताया एव प्रतिबध्यतावच्छेदकसम्बन्धत्वमुपेयते, तादृशेच्छाविरहस्य प्रतिबन्धकविशेषणत्व-मेव वा विशेषणताविशेषधर्मितावच्छेदकतासम्बन्धघटितसामानाधिकरण्यसम्बन्धेनो-पगन्तव्यम्, उक्तस्थले च घटाभावादौ तादृशेच्छाविरहस्य सत्त्वान्नोक्तापत्तिरधिकम-न्यत्रानुसन्धेयमिति वदन्ति।

## विमलप्रभा

शङ्कते न चेत्यादिना। न चेत्यस्य वाच्यमित्यनेनान्वयः। धर्मितावच्छेद-कनिष्ठप्रत्यासत्या = धर्मितावच्छेदकतासम्बन्धेन। विपरीतज्ञानस्य = घटाभाववान् वह्न्-भाववानित्याकारकतदभावप्रकारकनिश्चयस्य। प्रतिबन्धकत्वे = तत्प्रकारकबुद्धिं प्रति प्रतिबन्धकत्वे। आंशिकाहार्यज्ञानस्य = निर्वह्निर्वह्निमानित्यंशेऽहार्य्यत्वम् घटा-भाववांश्च वह्निमानित्यंशेऽनाहार्य्यत्वमित्यांशिकाहार्य्यज्ञानस्य। विपरीतज्ञानप्रतिब-ध्यतावच्छेदकानाक्रान्ततया = तदभावप्रकारकनिश्चयनिष्ठप्रतिबन्धकतानिरूपिता या प्रतिबध्यता तदवच्छेदकत्वरूपधर्मानाश्रयतया। तथाविधेच्छासत्त्वे = वह्न्यभाववद्वि-शेष्यकवह्निप्रकारकज्ञानं जायतामित्याकारकेच्छासत्त्वे। तादृशज्ञानापत्तिः = वह्-

न्यभाववद्वह्निमान् घटाभाववांश्च वह्निमानित्याकारकज्ञानोत्पादापत्तिः। अय-मर्थः। धर्मितावच्छेदकतासम्बन्धेन पूर्वोक्तयुक्त्याप्रतिबध्यप्रतिबन्धकभावस्वीकारे यत्र प्रथमं घटाभाववान् वह्न्यभाववानिति निर्णयस्तदनन्तरं वह्न्यभावविशेष्यकवह्निप्रकारकं ज्ञानं जायतामितीच्छा तदनन्तरं घटाभाववद्विशेष्यकवह्निप्रकारकज्ञानं जायतामित्याकारकेच्छायामविद्यमानायामपि वह्न्यभावो वह्निमान् घटाभाववांश्च वह्निमानित्याकारकज्ञानोत्पादापत्तिः यद्यपि घटाभावे धर्मितावच्छेदकतासम्बन्धेन घटाभाववान् वह्न्यभाववानित्याकारकनिश्चयोऽस्ति तथापि तादृशनिश्चयस्य धर्मितावच्छेदकतासम्बन्धेनोक्तसमूहालम्बनात्मकाहार्यनिश्चयम्प्रत्यप्रतिबन्धकत्वात् तादृशज्ञानोत्पत्तौ प्रतिबन्धकान्तरविरहादिति चेन्नैतत्समीचीनम्। यतः सामान्यत इच्छाविशिष्टान्यत्वरूपं यदनाहार्यत्वं तत् यदि प्रतिबध्यतावच्छेदककुक्षौ प्रविष्टं स्यात् स्याच्च तदा तादृशसमूहालम्बनज्ञानोत्पादप्रसङ्गापत्तिस्तदेव नास्ति किन्तु तादृशाहार्यज्ञानोदयाय प्रतिबध्यज्ञानीया या विशेष्यता तन्निष्ठं यत् इच्छीयविषयितावच्छेदकत्वं तदवच्छेदकतावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यादिप्रकारकज्ञानेच्छाभावस्य तादृशेच्छाव्यवहितप्राक्क्षणावच्छिन्नधर्मितावच्छेदकनिष्ठा याधिकरणता तादृशाधिकरणताविशिष्टा या धर्मितावच्छेदकता तस्या एव प्रतिबध्यतावच्छेदकसंसर्गत्वमङ्गीक्रियते, तथा च प्रकृते वह्न्यभावावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालि यत् ज्ञानं तादृशज्ञानं जायतामित्याकारिका या इच्छा तादृशेच्छीयवह्न्यभावावच्छिन्नविशेष्यकवह्निप्रकारकज्ञाननिष्ठा या विशेष्यता तन्निष्ठतादृशविषयतावच्छेदकत्वं वह्न्यभावावच्छिन्नविशेष्यत्वरूपं तन्निष्ठा या इच्छीयविषयतावच्छेदकता सा च वह्न्यभावावच्छिन्नविशेष्यतानिष्ठावच्छेदकता तद्वृत्तिनिरुक्तेच्छाविषयतावच्छेदकतावच्छेदकत्वात्मकसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावविशेष्यकवह्निप्रकारकज्ञानं जायतामितीच्छाविरहवत्त्वस्य घटाभावे वर्त्तमानतया तद्विशिष्टावच्छेदकतायाः घटाभावे सत्त्वेन घटाभाववान् वह्न्यभाववानिति निश्चयकाले न तादृशसमूहालम्बनज्ञानोत्पादः, तथा च न कोऽपि दोष इति।

न चानाहार्यत्वस्य प्रतिबध्यतावच्छेदकतया प्रवेशे निर्वह्निर्वह्निमानित्यादिज्ञानाना-

नुसमदयप्रसङ्ग इति वाच्यम्, एतदभिप्रायेणैव तादृशेच्छाविरहस्य प्रतिबन्धकत्ताविशेषण-त्वमेव देयमिति कल्पान्तरमनुसृतम्, सुतरां प्रतिबध्यदिशि अनाहार्यत्वप्रवेशेऽपि न क्षतिः। एवञ्च विशेषणताविशेषरूपधर्मितावच्छेदकताघटितसामानाधिकरण्यसम्ब-न्धेन तादृशवह्निज्ञानं जायतामितीच्छाविरहस्य प्रतिबन्धकविशेषणतया घटाभावे निरुक्तेच्छाविरहस्य वर्त्तमानत्वप्रयुक्तघटाभावविशेष्यकवह्निप्रकारकज्ञानोत्पादप्रसङ्ग-सम्भावनैव नेति भावः।

## दीधितिः

तादृशपक्षे तादृशसाध्यवैशिष्ट्यस्य तादृशसाध्यनिरूपितव्याप्तिनिरू-पिततादृशहेतुवैशिष्ट्यावगाहिनो ज्ञानस्य यद्विषयकं ज्ञानं विरोधिविष-यकं तत्त्वम्, तादृशज्ञानविरोधित्वं वा हेतुदोषत्वम्। ज्ञानविरोधि-त्वञ्च तद्विषयविषयकग्रहविरोधिग्रहविषयत्वम्। एवं विधैव रीति-रुत्तरत्र सर्वत्र सव्यभिचारलक्षणादावनुसर्त्तव्या इत्यपि केचित्।

## गादाधरी

निर्वह्निः पर्वतो वह्निमानित्यादिस्थलीयदोषसाधारण्याय प्रकारान्तरेण लक्षणं वर्णयतां केषाञ्चिन्मतमाह तादृशपक्ष इति। पक्षतावच्छेदकविशिष्टपक्ष इत्यर्थः। तादृशसाध्येति। साध्यतावच्छेदकविशिष्टसाध्येत्यर्थः। तादृशहेत्विति। हेतुता-वच्छेदकविशिष्टहेत्वित्यर्थः। ज्ञानस्य विरोधिविषयकं यद्विषयकं ज्ञानमिति योजना। ज्ञानं = ज्ञानसामान्यं, तेन घटादिविषयकस्य कस्यचित् समूहालम्बनज्ञानस्य तादृश-ज्ञानविरोधिबाधादिविषयकत्वेऽपि नातिव्याप्तिः।

## विमलप्रभा

दीधितौ तादृशेत्यादि। यद्विषयकं = यद्रूपाच्छिन्नविषयकम्। तत्त्वं = तद्रू-पावच्छिन्नत्वम्। तादृशज्ञानविरोधित्वं = पक्षतावच्छेदकावच्छिन्नपक्षे साध्यता-वच्छेदकावच्छिन्नसाध्यस्य तादृशसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्न-

हेतोश्च वैशिष्ट्यावगाहियज्ज्ञानं तत्प्रतिबन्धकत्वम् । तद्विषयविषयकग्रहविरोधिग्रह-विषयत्वम् = पक्षे साध्यहेतुवैशिष्ट्यावगाहियज्ज्ञानं तद्विषयो यः साध्यादिस्तत्प्रकारकं यज्ज्ञानं तत्प्रतिबन्धकज्ञानविषयत्वम् । एवं विधैव रीतिः = एतादृशी एव प्रणाली । अनुसर्त्तव्या = आदरणीया । टीकायां निर्वह्निरिति । दोषसाधारण्याय = दोषेषु लक्षणसमन्वयाय । प्रकारान्तरेण = अन्यप्रकारेण । लक्षणम् = यद्विषयके-त्यादिद्वितीयलक्षणम् । वर्ण्यतां = प्रतिपादयताम् । आह, दीधितिकार इति शेषः । योजनेति, लक्षणघटकवाक्यस्येति शेषः । तेन = ज्ञानपदस्य ज्ञानसामान्यार्थकत्वकथनेन । यस्य कस्यचित् समूहालम्बनज्ञानस्य = बाधादिविषयकवह्न्यभाववान् ह्रदो घटश्चेत्याद्याकारकज्ञानस्य । तादृशज्ञानेति, पक्षे साध्यहेतुवैशिष्ट्यावगाहिज्ञानस्येत्यर्थः । नातिव्याप्तिः = न घटाद्युदासीनेऽतिव्याप्तिः । अयमर्थः । निर्वह्निः पर्वतो वह्निमान् धूमादित्यादिस्थलीयवह्निमत्पर्वतरूपाऽश्रयासिद्ध्यादिदोषे हेत्वाभासलक्षण-समन्वयाय लघुभूतप्रणाल्या लक्षणं प्रतिपादयतां केषाञ्चित् प्राचीनानाम्मते लक्षणस्वरूपमाह तादृशपक्षे इत्यादिना दीधितिकारः । तथा च प्रकृतपक्षतावच्छेदकावच्छिन्न-विशेष्यकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकप्रकृतसाध्यनिरूपितव्याप्तिविशिष्टप्रकृत-हेतुतावच्छेदकावच्छिन्नहेतुकज्ञानस्य विरोधिविषयकं यद्रूपावच्छिन्नविषयकं ज्ञान-सामान्यं तद्रूपावच्छिन्नत्वं मूलोक्तयद्विषयकेत्यादिद्वितीयलक्षणार्थः । एवञ्चात्र ह्रदो वह्निमान् जलादित्यादौ वह्न्यभाववद्ध्रदरूपबाधे लक्षणसंगतिः, तथा हि ह्रदत्वावच्छिन्ने वह्नित्वावच्छिन्नवह्निवैशिष्ट्यावगाहिवह्नित्वावच्छिन्नवह्नि-निरूपितव्याप्तिविशिष्टधूमत्वावच्छिन्नधूमवैशिष्ट्यावगाहिनः ह्रदो वह्निमान् वह्निव्याप्यधूमवानिति ज्ञानस्य विरोधिविषयकं भवति वह्न्यभाववद्ध्रदत्वावच्छिन्नविषय-कवह्न्यभाववान् ह्रद इत्याकारकज्ञानसामान्यमिति तद्रूपावच्छिन्नत्वं वह्न्यभाववद्ध्रदरूपबाधे सत्त्वात् । निर्वह्नि पर्वतो वह्निमान् धूमादित्यत्र वह्निमत्पर्वतरूपाश्रयासिद्धौ च निर्वह्निपर्वते वह्निवैशिष्ट्यावगाहिवह्निव्याप्यधूमवैशिष्ट्यावगाहिज्ञानस्य विरोधिविषयकं भवति वह्निमान् पर्वत इत्यारकं वह्निमत्पर्वतत्वावच्छिन्नविषयकं ज्ञान-मिति तद्रूपावच्छिन्नत्वस्य तत्र सत्त्वात् लक्षणसमन्वयः ।

अत्र सामान्यपदानुपादाने ह्रदो वह्निमान् जलादित्यत्र घटादावतिव्याप्तिः, ह्रदो

वह्न्यभाववान् घटश्चेत्याकारकसमूहालम्बनात्मकघटत्वावच्छिन्नविषयकयत्किञ्चिज्ज्ञानस्यापि ह्रदत्वावच्छिन्ने वह्निवैशिष्ट्यावगाहिवह्निव्याप्यजलवैशिष्ट्यावगाहिज्ञानविरोधिविषयकतया तद्रूपावच्छिन्नत्वस्य घटादौ सत्त्वात्। तदुपादाने च समूहालम्बनानात्मकघट इत्याकारकज्ञानस्यापि ज्ञानसामान्यान्तर्गततया तत्र विरोधिविषयत्वाभावेन यद्विषयकज्ञानपदेन घटज्ञानस्य धारणासम्भवान्नातिप्रसंगः।

## गादाधरी

स्वावच्छिन्नविषयकत्वव्यापकताहशज्ञानविरोधिविषयिताकधर्मवत्त्वमिति तु फलितार्थः। अत्र च विषयितानिष्ठं स्वरूपसम्बन्धात्मकज्ञानविषयविषयकग्रहप्रतिबन्धकतावच्छेदकतात्मकताहशज्ञानविरोधित्वमेव निवेशनीयम्, न तु विषयनिष्ठं निर्वाच्यताहशज्ञानविरोधित्वं, तस्यैव लक्षणत्वसम्भवेन शेषवैयर्थ्यप्रसङ्गात्। अत्र च विषयनिष्ठस्य निर्वाच्यताहशज्ञानविरोधित्वस्यैव तदपेक्षया लघुतया तदेवाह ताहशज्ञानविरोधित्वं वेति।

## विमलप्रभा

स्वं = यद्रूपावच्छिन्ने लक्षणन्नेयं तदेव। ताहशेति। पक्षः साध्यवान् साध्यव्याप्यहेतुमानित्याकारकेत्यर्थः। अत्र = एतल्लक्षणे। ताहशज्ञानविरोधित्वम् = प्रकृतपक्षविशेष्यकसाध्यप्रकारकप्रकृतसाध्यनिरूपितव्याप्तिविशिष्टप्रकृतहेतुप्रकारकज्ञानप्रतिबन्धकत्वम्। विषयनिष्ठम् = दोषविषये विद्यमानम्। ताहशज्ञानविरोधित्वम् = पक्षविशेष्यकसाध्यतद्व्याप्यहेतुवैशिष्ट्यावगाहिज्ञानविषयविषयकग्रहप्रतिबन्धकतावच्छेदकीभूतविषयिताकत्वरूपं प्रतिबन्धकत्वम्। तस्यैव = विषयनिष्ठताहशज्ञानविरोधित्वस्यैव। शेषवैयर्थ्यप्रसङ्गात् = ताहशज्ञानस्य यद्विषयकं ज्ञानं विरोधिविषयकमित्यंशस्योपादानं व्यर्थमेव स्यात्। अत्र = प्रकृतलक्षणे। तदपेक्षया = विषयितानिष्ठताहशज्ञानविरोधित्वनिवेशापेक्षया। तदेव = विषयनिष्ठताहशज्ञानविरोधित्वमेव। आह = दीधितिकार इति शेषः। अयमर्थः। सामान्यपदस्य व्यापकत्वार्थकतया यद्रूपावच्छिन्नविषयकत्वव्यापकं यत् प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यकप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यनिरूपितव्याप्तिविशिष्ट-

प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुप्रकारकज्ञानविषयित्वं तत् यस्य एवं भूतं यत् स्वं तादृशस्वावच्छिन्नत्वम् हेत्वाभासत्वमिति यद्विषयकेत्यादिमूलकारोक्तद्वितीयलक्षणस्य पर्यवसितार्थः। अत्र निरुक्तलक्षणे विषयभूतदोषादिविषये विद्यमानम् पक्षे साध्यहेतुवैशिष्ट्यावगाहिज्ञानविषयविषयकज्ञानप्रतिबन्धकतावच्छेदकविषयिताकत्वरूपं विरोधित्वं न निवेश्यम्, किन्तु विषयितानिष्ठं स्वरूपसम्बन्धरूपम् यत् पक्षे साध्यहेतुवैशिष्ट्यावगाहिज्ञानविषयविषयकग्रहप्रतिबन्धकतावच्छेदकत्वं तदात्मकं यत् पक्षे साध्यहेतुवैशिष्ट्यावगाहिज्ञानविरोधित्वं तदेव निवेशनीयम्। अन्यथा विषयनिष्ठतादृशज्ञानविरोधित्वस्यैव लक्षणार्थत्वे तादृशज्ञानस्य यद्विषयकं ज्ञानं विरोधिविषयकमित्यंशस्य निरर्थकत्वमेव स्यात्।

निरुक्तलक्षणे विषयितानिष्ठतादृशज्ञानविरोधित्वनिवेशापेक्षया लाघवात् विषयनिष्ठतादृशज्ञानविरोधित्वस्यैव निवेशनमुचितमित्यभिप्रेत्याह दीधितिकारः तादृशज्ञानविरोधित्वमिति।

## गादाधरी

तादृशज्ञानविरोधित्वं यदि तादृशज्ञानप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयिताकधर्मवत्त्वं, तदा पूर्वनिरुक्तयथाश्रुतमूलार्थ एव पर्यवसानात् निर्वह्निपर्वतो वह्निमानित्यादिस्थलीयदोषाऽव्याप्तितादवस्थ्यमिति तन्निर्वक्ति ज्ञानविरोधित्वञ्चेति। तद्विषयविषयकेति। तथा च निर्वह्निः पर्वतो वह्निमानित्यादौ तादृशज्ञानविरोधिज्ञानाप्रसिद्धावपि तद्विषयविषयकस्य निर्वह्निः पर्वत इति ज्ञानस्य प्रतिबन्धकं यत् वह्निमान् पर्वत इति ज्ञानं तद्विषयतामादायैव वह्निमत्पर्वतादिरूपतत्स्थलीयाश्रयासिद्ध्यादौ लक्षणसमन्वयः।

## विमलप्रभा

तादृशज्ञानविरोधित्वं = पक्षविशेष्यकसाध्यप्रकारकसाध्यव्याप्यहेतुप्रकारकज्ञानविरोधित्वम्। तदा = यद्रूपावच्छिन्नविषयकत्वव्यापिका भवति पक्षः साध्यवान् साध्यव्याप्यहेतुमानित्याकारकज्ञानप्रतिबन्धकता तद्रूपावच्छिन्नत्वं हेत्वाभासत्वमित्यर्थ-

करणे । यथाश्रुतमूलार्थ एव = यद्विषयकत्वेनेत्यादिमूलोक्तद्वितीयलक्षणार्थे एव । अव्याप्तितादवस्थ्यम् = निर्वह्निः पर्वतो वह्निमानित्यत्रानुमित्याद्यप्रसिद्ध्या पूर्वोक्ताव्याप्तिस्तदवस्थैव । तन्निर्वक्ति = तादृशज्ञानविरोधित्वं दीधितिकारः निर्वक्ति । तथा च = विरोधिपदस्योक्तार्थकरणे च तद्विषयविषयकस्य = निर्वह्निः पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकग्रहविषयविषयकस्य । तद्विषयता = वह्निमत्पर्वतविषयता । अयमर्थः । पक्षतावच्छेदकावच्छिन्नपक्षे साध्यतावच्छेदकावच्छिन्नसाध्यस्य तादृशसाध्यव्याप्यहेतोश्च वैशिष्ट्यावगाहिज्ञानस्य विरोधिविषयकं यद्रूपावच्छिन्नविषयकज्ञानं तद्रूपावच्छिन्नत्वमित्येव लाघवादर्थः करणीयः । भवति च ह्रदो वह्निमाञ्जलादित्यादौ ह्रदत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकत्वावगाहिवह्निव्याप्यजलत्वावच्छिन्नप्रकारकत्वावगाहिह्रदो वह्निमान वह्निव्याप्यजलवानित्याकारकज्ञानस्य विरोधिविषयकं वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकवह्न्यभाववान् ह्रद इति ज्ञानमिति तद्रूपावच्छिन्नत्वं वह्न्यभाववद्ध्ररूपबाधे सत्त्वात् तत्र लक्षणसंगतिः ।

अत्र पक्षे साध्यहेतुप्रकारकज्ञानविरोधित्वं यदि पक्षे साध्यहेतुवैशिष्ट्यावगाहिज्ञानप्रतिबन्धकतावच्छेदकयद्रूपावच्छिन्नविषयिताकधर्मवत्त्वमेव तदा मूलोक्तद्वितीयलक्षणार्थस्यैव पर्यवसिततया निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ निर्वह्निपर्वते वह्नितद्व्याप्यधूमवैशिष्ट्यावगाहिनिर्वह्निः पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकज्ञानस्याहार्यतया तत्प्रतिबन्धकग्रहाऽप्रसिद्धिवसतस्तत्राव्याप्तिस्तदवस्थैव स्यादतो ज्ञानविरोधित्वन्न पूर्वोक्ततादृशधर्मवत्त्वरूपमपि तु पक्षे साध्यहेतुवैशिष्ट्यावगाहिज्ञानविषयविषयकग्रहप्रतिबन्धकत्वरूपम् । एवञ्च निर्वह्निः पर्वतो वह्निमान् धूमादित्यत्र निर्वह्निः पर्वतो वह्निमान् वह्निव्याप्यधूमवानित्याकारकाहार्यज्ञानप्रतिबन्धकज्ञानाऽप्रसिद्धावपि तादृशज्ञानविषयीभूतो यः निर्वह्निपर्वतस्तदद्विषयकं यत् वह्न्यभाववान् पर्वत इत्याकारकं ज्ञानं तत्प्रतिबन्धकतायाः वह्निमत्पर्वतरूपाश्रयासिद्धिविषयकवह्निमान् पर्वत इति निश्चयेऽक्षततया यद्रूपपदेन वह्निमत्पर्वतत्वस्योपादानसम्भवेन तद्रूपावच्छिन्नत्वस्य वह्निमत्पर्वतरूपाश्रयासिद्धौ सत्त्वात् लक्षणसंगतिः ।

## गादाधरी

अथ घटवद्भूतलादिरूपोदासीनपदार्थविषयकसमूहालम्बनात्मकपक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकविशिष्टसाध्यतद्व्याप्यहेतुप्रकारकज्ञानविषयविषयकघटवद्भूतलादिज्ञानप्रतिबन्धकज्ञानविषयघटाभाववद्भूतलादावतिव्याप्तिः।

## विमलप्रभा

शङ्कते अथेत्यादिना। अथ = निरुक्तरीत्यालक्षणार्थनिर्वचानन्तरम्। समूहालम्बनात्मकेत्यस्य ज्ञानेन सहान्वयः। भूतलादिज्ञानमिति,—भूतलं घटवदित्याकारकज्ञानमित्यर्थः। प्रतिबन्धकज्ञानमिति, घटाभाववद्भूतलमित्याकारकज्ञानमित्यर्थः। अयमर्थः। निर्वह्निः पर्वतो वह्निमान् धूमादित्यादिस्थलीयवह्निमत्पर्वतरूपाश्रयासिद्धिसंग्रहायोक्तरीत्या लक्षणार्थप्रतिपादनेऽपि ह्रदो वह्निमान् जलादित्यादौ सर्वत्रैव घटाभाववद्भूतलादिरूपोदासीनेऽतिप्रसङ्गो दुर्वारः, ह्रदत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकवह्निव्याप्यधूमत्वावच्छिन्नप्रकारकह्रदो वह्निमान्वह्निव्याप्यधूमवान् भूतलञ्च घटवदित्याकारकज्ञानविषयीभूतं यत् घटवद्भूतलादिकं तद्विषयको यः घटवद्भूतलमिति ग्रहः तत्प्रतिबन्धकतायाः घटाभाववद्भूतलमिति निश्चये वर्त्तमानतया तादृशप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयिता भवति घटाभाववद्भूतलत्वावच्छिन्नेति तद्रूपावच्छिन्नत्वं घटाभाववद्भूतले सत्त्वात्।

## गादाधरी

पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकविशिष्टसाध्यतन्निरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारकग्रहत्वव्यापकविषयिताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयताकधर्मवत्त्वनिवेशान्न दोषः, घटवद्भूतलादिविषयितायास्तादृशग्रहत्वाव्यापकत्वादिति वाच्यम्। यतः पर्वताद्यंशे वह्निमत्ताद्यनवगाहिनो निर्वह्निः पर्वत इति ज्ञानस्य या वह्निप्रकारकत्वाद्यनिरूपिता निर्वह्नित्वादिप्रकारतानिरूपितपर्वतादिविषयिता सैवानाहार्यत्वविशि-

ष्टतया वह्निमान् पर्वत इत्यादिज्ञानप्रतिबध्यतावच्छेदिका, तस्याश्च निर्वह्निः पर्वतो वह्निमानित्याहार्यज्ञानसाधारण्ये मानाभावात्, आहार्यज्ञानसामग्र्यास्तादृशविषयिताप्रयोजकत्वाऽसिद्धेः ।

विमलप्रभा

न चेति वाच्यमित्यनेनान्वयः । न दोषः=न घटाभाववद्भूतलादावुदासीनेऽतिव्याप्तिः । तादृशग्रहत्वाव्यापकत्वात्=पक्षविशेष्यकसाध्यतद्व्याप्यहेतुप्रकारकनिरुक्तज्ञानत्वव्यापकतायाः घटवद्भूतलमिति ज्ञानीयविषयितायामभावात् । न चेत्यादिग्रन्थेन घटाभाववद्भूतलेऽतिप्रसङ्गभङ्गाय या शङ्का प्रतिपादिता तस्याः समाधानमाह गदाधरः यत इत्यादिना । यतः=यस्माद्धेतोः । सैव=वह्निप्रकारित्वाद्यनिरूपिता निर्वह्नित्वप्रकारतानिरूपितपर्वतत्वावच्छिन्नविषयितैव ।तस्याः=वह्निप्रकारित्वानिरूपितवह्न्यभावप्रकारितानिरूपितपर्वतविषयितायाः । मानाभावात्= अनाहार्यज्ञानीयविषयिताया आहार्यज्ञानसाधारण्ये प्रमाणविरहात् । तादृशविषयिता=उक्तप्रतिबध्यतावच्छेदकीभूतानाहार्यज्ञानीयविषयिता । अनाहार्यज्ञानीयविषयिताप्रयोजकसामग्र्याः आहार्यज्ञानीयविषयिताप्रयोजकत्वे मानभाव इति यावत् । अयमर्थः । घटाभाववद्भूतलादावुदासीनेऽतिव्याप्तिवारणाय प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकप्रकृतसाध्यव्याप्यप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुप्रकारकज्ञानत्वव्यापकविषयिताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तियद्रूपावच्छिन्नविषयिता तद्रूपावच्छिन्नत्वरूपलक्षणार्थः कार्यः, तथा च ह्रदत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकवह्निव्याप्यधूमत्वावच्छिन्नप्रकारकघटवद्भूतलाद्यविषयकसमूहालम्बनानात्मकज्ञानत्वव्यापकतायाः घटवद्भूतलविषयितायामभावेन तादृशज्ञानत्वव्यापकविषयितापदेन घटवद्भूतलविषयितायाः धर्तुमशक्यतया न घटाभाववद्भूतलेऽतिव्याप्तिसम्भवनेति ।

तथा सति निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ वह्निमत्पर्वतरूपाश्रयासिद्धायादावव्याप्तिस्तदवस्थैव, आहार्यज्ञानस्य या सामग्री तादृशसामग्रीप्रयोज्याया एव वह्न्य-

भाववत्पर्वतविषयितायाः निर्वह्निपर्वतविशेष्यकवह्निप्रकारकज्ञानत्वव्यापकतया तस्या आनाहार्य्यज्ञानमात्रे वर्त्तमानतया तदवच्छिन्नप्रतिबध्यत्वाऽप्रसिद्धया लक्षणागमनात् ।

## गादाधरी

विपरीतज्ञानाभावघटितायास्तादृशविषयिताप्रयोजकानाहार्यज्ञानसामग्र्याश्चाहार्यज्ञानाजनकत्वात्, तादृशग्रहत्वव्यापिका च वह्निमत्त्वादिप्रकारितानिरूपिता तादृशपर्वतादिविषयिता, सा च न प्रतिबध्यतावच्छेदिकेति निर्वह्नित्वादिप्रकारतानिरूपितपर्वतादिविषयितात्वेन निर्वह्निः पर्वत इत्यादिज्ञानीयविषयितापि तथाविधग्रहत्वव्यापिकेति चेत् तर्हि विषयितात्वादिना घटवद्भूतलादिविषयितानामपि तद्व्यापकतया उदासीनपदार्थवारणमशक्यमिति चेत् ?

## विमलप्रभा

विपरीतज्ञानाभावघटितायाः=वह्निमान् पर्वत इत्याद्याकारकं यत् प्रतिबन्धकज्ञानं तदभावविशिष्टायाः । तादृशविषयिता=प्रतिबध्यतावच्छेदकविषयिता । तादृशग्रहत्वव्यापिका=निर्वह्निः पर्वतो वह्निमानिति ज्ञानत्वव्यापिका । तादृशपर्वतादिविषयिता=वह्न्यभावप्रकारतानिरूपितपर्वतविषयिता । सा च=तादृशविषयिता च । न प्रतिबध्यतावच्छेदिका=आहार्यज्ञाने प्रतिबध्यताविरहेणाहार्यज्ञानीयविषयिता न प्रतिबध्यतावच्छेदिका । निर्वह्नित्वादिप्रकारिता=वह्न्यभावादिप्रकारिता । तथाविधग्रहत्वव्यापिका=प्रकृतपक्षविशेष्यकप्रकृतसाध्यतद्व्याप्यहेतुप्रकारकज्ञानत्वव्यापिका । विषयितात्वादिना=वह्न्यभावादिप्रकारितानिरूपितपर्वतत्वाद्यवच्छिन्नविषयितात्वेन । तद्व्यापकतया=ह्रदादिविशेष्यकवह्न्यादिप्रकारकज्ञानत्वव्यापकतया । उदासीनपदार्थवारणम्=घटाभाववद्भूतलादावतिव्याप्तिवारणम् । अयमर्थः । उक्तरीत्या परिष्कारकरणेऽपि निर्वह्निः पर्वतो वह्निमान् धूमादित्या-

दौ पर्वतरूपोद्देश्ये वह्निमत्त्वानवगाहिनिर्वह्निः पर्वत इत्याकारकं यज्ज्ञानं तादृशज्ञानीया या वह्न्यभावत्वावच्छिन्नप्रकारितानिरूपितपर्वतत्वावच्छिन्नविषयिता तस्यामेवानाहार्यत्वाभावविशिष्टविषयितायां पर्वतो वह्निमानित्याकारकनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वमस्तीति निर्वह्निः पर्वतो वह्निमानित्याहार्यज्ञाने चोक्तविषयिताविरहप्रयुक्तबाधकालीनेच्छाजन्याहार्यज्ञानसामग्रीमध्येऽनाहार्यज्ञानीयविषयिताप्रयोजकत्वं सुतरामसिद्धमेवेति पर्वतो वह्निमानित्यनाहार्यज्ञानजनकसामग्र्याः निर्वह्निः पर्वतो वह्निमानित्याहार्यज्ञानजनकत्वे प्रमाणाभावात् निर्वह्निपर्वतत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकतादृशवह्निव्याप्यधूमत्वावच्छिन्नप्रकारकज्ञानत्वव्यापकतायाः वह्नित्वावच्छिन्नप्रकारतानिरूपितनिर्वह्निपर्वतत्वावच्छिन्नविषयितायां सत्त्वेऽपि तादृशाहार्यज्ञाने प्रतिबध्यताविरहेण निरुक्तविषयितायां प्रतिबध्यतावच्छेदकत्वाभावादव्याप्तिस्स्यादेव । यदि व्यापकतावच्छेदकीभूतनिर्वह्नित्वादिप्रकारितानिरूपितपर्वतादिविषयितात्वेनाव्यापकस्यापि व्यापकत्वं स्वीक्रियते तदा वह्न्यभावत्वावच्छिन्नप्रकारितानिरूपितपर्वतत्वावच्छिन्नविषयितात्वेन निर्वह्निपर्वतत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकतादृशवह्निव्याप्यधूमत्वावच्छिन्नप्रकारकज्ञानत्वव्यापकतायाः निरुक्तानाहार्यज्ञानीयवह्न्यभावत्वपर्वतत्वविषयितायामपि वर्त्तमानतया तादृशग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकवह्निमत्पर्वतत्वरूपावच्छिन्नत्वस्य वह्निमत्पर्वतरूपाश्रयासिद्धौ सत्त्वाल्लक्षणसमन्वय इति चेत्तर्हि तुल्ययुक्त्या ह्रदो वह्निमान् जलादित्यादौ घटाभाववद्भूतलादावतिव्याप्तिस्दवस्थैव स्यात् तथा हि घटवद्भूतलविषयितायामपि विषयितात्वेन ह्रदविशेष्यकवह्निप्रकारकवह्निव्याप्यजलादिप्रकारकह्रदो वह्निमान् वह्निव्याप्यजलवान् भूतलञ्च घटवदित्याकारकज्ञानत्वव्यापकतासत्त्वेन तदवच्छिन्नप्रतिबध्यतानिरूपितघटाभाववद्भूतलविषयकनिश्चयनिष्ठप्रतिबन्धकतानतिरिक्तवृत्तित्वस्य घटाभाववद्भूतलत्वावच्छिन्नविषयितायां सत्त्वेन तद्रूपावच्छिन्नत्वं घटाभाववद्भूतले सत्त्वात्, एवञ्च तादृशातिव्याप्तिवारणमशक्यमेवेति शङ्काशयः ।

## गादाधरी

मैवम्, यद्रूपावच्छिन्ने यद्रूपावच्छिन्नप्रकारकत्वावच्छिन्नं तादृशग्रहत्वव्यापकं तद्रूपावच्छिन्नविशेष्यकतद्रूपावच्छिन्नप्रकारकग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रति -

बन्धताकावच्छेदकस्वावच्छिन्ननिरूपितविषयिताकधर्मवत्त्वस्य विवक्षणीयतया सर्वसामञ्जस्यादिति दिक्।

## विमलप्रभा

अथेत्यादिग्रन्थोक्ताशाशङ्कां परिहरति मैवमित्यादिना। यद्रूपावच्छिन्ने =पक्षतावच्छेदकावच्छिन्ने। यद्रूपावच्छिन्नप्रकारकत्वावच्छिन्नं =साध्यतावच्छेदकावच्छिन्नप्रकारकत्वाच्छिन्नम्। तादृशग्रहत्वव्यापकं =प्रकृतपक्षे प्रकृतसाध्यतद्व्याप्यप्रकृतहेतुप्रकारकग्रहत्वव्यापकम्। प्रथमं तत्पदं पक्षतावच्छेदकपरम्, द्वितीयं तत्पदं साध्यतावच्छेदकपरम्। सर्वसामञ्जस्यात् =सर्वत्रैवोदासीनेऽतिव्याप्तिवारणसम्भवात् सर्वत्र लक्ष्ये लक्षणसमन्वयसम्भवात्। अयमर्थः। यद्रूपावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताकत्वावच्छिन्न पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकसाध्यव्याप्यहेतुप्रकारकज्ञानत्वव्यापकं तद्रूपावच्छिन्नविशेष्यकतद्रूपावच्छिन्नप्रकारकग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तियद्रूपावच्छिन्नविषयिता तद्रूपावच्छिन्नत्वम् हेत्वाभासत्वमिति पर्यवसितलक्षणार्थकरणे ह्रदो वह्निमान् जलादित्यादौ घटाभाववद्भूतलादिरूपोदासीनेऽतिव्याप्तिविरहात्, तथा हि समूहालम्बनानात्मकह्रदत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकतादृशवह्निव्याप्यधूमत्वावच्छिन्नप्रकारकह्रदो वह्निमान् वह्निव्याप्यधूमवानित्याकारकज्ञाने ह्रदविशेष्यकवह्न्यादिप्रकारकग्रहत्वस्य वर्त्तमानतया तादृशग्रहे च भूतलत्वावच्छिन्नविशेष्यकघटत्वावच्छिन्नप्रकारकत्वाभावेन पक्षविशेष्यकसाध्यादिप्रकारकग्रहत्वव्यापकत्वस्य भूतलत्वावच्छिन्नविशेष्यकघटत्वावच्छिन्नप्रकारकत्वावच्छिन्नेऽभावात् भूतलत्वावच्छिन्नविशेष्यकघटत्वावच्छिन्नप्रकारकग्रहत्वावच्छिन्नप्रतिबध्यतायाः धर्त्तुमशक्यतया लक्षणागमनात्। ह्रदो वह्निमान् जलादित्यत्र वह्न्यभाववद्ध्रदरूपबाधे लक्षणसङ्गतिः, तथा हि ह्रदत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकत्वत्वावच्छिन्नस्य ह्रदविशेष्यकवह्नितद्व्याप्यजलप्रकारकह्रदो वह्निमान् वह्निव्याप्यजलवानित्याकारकग्रहत्वव्यापकतया तादृशग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितवह्न्यभाववान् ह्रद इत्याकारकनिश्चयनिष्ठप्रतिबन्धकतानतिरिक्तवृत्तिविष-

यिता भवति वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितेति तद्रूपावच्छिन्नत्वस्य वह्न्यभाववद्ध्रदे सत्त्वात्। निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ पर्वतविशेष्यकवह्न्यभावप्रकारकत्वत्वावच्छिन्नस्य निर्वह्निः पर्वतो वह्निमान् वह्निव्याप्यधूमवानित्याकारकज्ञाने वर्त्तमानतया पक्षविशेष्यकसाध्यादिप्रकारकग्रहत्वव्यापकतायास्तत्र सुतरामेव सत्त्वेन निर्वह्नित्वावच्छिन्नप्रकारकज्ञानत्वावच्छिन्नप्रतिबध्यता निरूपितवह्निमत्पर्वतत्वावच्छिन्नविषयकनिश्चयनिष्ठप्रतिबन्धकतानतिरिक्तवृत्तिविषयिता भवति वह्निमत्पर्वतत्वावच्छिन्नविषयितेति तद्रूपावच्छिन्नत्वस्य वह्निमत्पर्वतरूपाश्रयासिद्धौ वर्त्तमानतया भवति तत्र लक्षणसमन्वय इति भावः।

## दीधितिः

केचित्तु यादृशपक्षकयादृशसाध्यकयादृशहेतौ यावन्तो दोषास्सम्भवन्ति तावदन्यान्यत्वम्।

## गादाधरी

अत्र चास्वरससूचनाय केचिदिति। स च उक्तयुक्त्या निर्वह्निर्वह्निमानित्यादिस्थलीयदोषासंग्रहेण। न च धर्मितावच्छेदकत्वप्रत्यासत्त्या वह्निप्रकारकज्ञानं प्रति वह्न्यभावप्रकारकज्ञानस्य प्रतिबन्धकतामते निर्वह्निर्वह्निमानित्येतादृशज्ञानसमानविषयकानाहार्यवह्निमानित्याकारकज्ञानप्रतिबन्धकतामादाय लक्षणसमन्वयस्तत्रापि सम्भवतीति वाच्यम्। तादृशमताश्रयणे पर्वतो वह्निमानित्यादौ वह्न्यभाववद्ध्रदादेर्दोषताप्रसङ्गात्।

## विमलप्रभा

अत्र = निरुक्तग्रहत्वव्यापकप्रतिबध्यतेत्यादिलक्षणे। अस्वरससूचनाय = अरुचिप्रतिपादनाय। स च = अस्वरसः। उक्तयुक्त्या = आहार्यज्ञाने प्रतिबध्यत्वादिविरहरूपयुक्त्या। पुनराशङ्कते न चेति। वाच्यमित्यनेनान्वयः। तत्रापि = निर्वह्निर्वह्निमानित्यत्रापि। तादृशमताश्रयणे = धर्मितावच्छेदकतासम्बन्धेन प्रति-

बध्यप्रतिबन्धकभावस्वीकर्तृणां मतादरणे। अयमर्थः। तादृशग्रहत्वव्यापकप्रतिबध्यतेत्यादिलक्षणे केचिदिति कथनेनास्वरसः सूचितः,स चास्वरसः निर्वह्निर्वह्निमानित्यादौ तादृशानाहार्यज्ञानाऽप्रसिद्धया वह्न्यभाववन्निर्वह्निरूपबाधेऽव्याप्तिरूप एव, वह्न्यभावविशेष्यकवह्निप्रकारकज्ञानत्वव्यापकं यद्यपि वह्न्यभावावच्छिन्ने वह्निप्रकारकत्वं तथापि तदवच्छिन्नप्रतिबध्यत्वाऽप्रसिद्धया लक्षणागमनात्।

यदि धर्मितावच्छेदकतासम्बन्धेन वह्निप्रकारकज्ञानं प्रति धर्मितावच्छेदकतासम्बन्धेन वह्न्यभावप्रकारकं ज्ञानं प्रतिबन्धकमित्येतादृशरीत्या प्रतिबध्यप्रतिबन्धकभावस्वीकारेण निर्वह्निर्वह्निमानित्याकारकं यदाहार्यज्ञानं तद्विषयकं यत्पर्वतो वह्निमानित्याकारकज्ञानं तत्प्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयिताकधर्मवत्त्वस्य वह्न्यभावविशिष्टनिर्वह्निरूपबाधे सत्त्वाल्लक्षणसंगतिरित्युच्यते तदा पर्वतो वह्निमान् धूमादित्यत्र वह्न्यभाववद्ध्रदेऽतिव्याप्तिः, तथा हि पर्वतत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकवह्नित्वावच्छिन्ननिरूपितव्याप्तिविशिष्टधूमप्रकारकज्ञानविषयविषयकह्रदो वह्निमानित्याद्याकारकज्ञानप्रतिबन्धकतावच्छेदकीभूतवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताकधर्मवत्त्वस्य वह्न्यभाववद्ध्रदे सत्त्वात्, अतस्तन्मतमनादेयमेवेति तथा च निर्वह्निर्वह्निमानित्यादिस्थलीयदोषासंग्रहस्तदवस्थ एवेति केचिदित्यनेन सूचितः।

## गादाधरी

यादृशेति। सर्वत्र यद्रूपावच्छिन्नार्थकम्। तावदन्यान्यत्वमिति। यत्र च यादृशपक्षसाध्यहेतुकस्थले यादृशदोषज्ञानस्य प्रतिबध्यज्ञानं प्रसिद्धयति यथा निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ वह्निविशिष्टपर्वतादिरूपाश्रयासिद्धि—धूमाभावविशिष्टनिर्वह्निपर्वतादिरूपस्वरूपासिद्धयादीनां ज्ञानस्य, तत्र तादृशदोषाणां ग्राह्याभाव—तद्व्याप्यरूपतद्घटकभेदेन विशेषणविशेष्यभावभेदेन च विभिन्नानामनुगतेन विशिष्टपक्षे विशिष्टसाधनवैशिष्ट्यग्रहविरोधित्वरूपासिद्धित्वादिनैव तावदन्यान्यत्वघटकभेदप्रतियोगिविधया निवेशो, न तु वह्निविशिष्टपर्वतत्व-निर्धूमत्वविशिष्टनिर्वह्नित्वादिना, प्रयोजनविरहात्, यत्स्थलीययादृशदोषविषयकज्ञानस्य प्रतिबध्यज्ञानमप्रसिद्धम्, यथा निर्वह्निर्वह्निमानित्यादिस्थलीयस्य च बाधादेर्ज्ञानस्य, तत्स्थलीयतादृशदोषाणामग-

त्या वह्न्यभावविशिष्टनिर्वह्नित्ववह्न्यभावव्याप्यविशिष्टनिर्वह्नित्वनिर्वह्निनिष्ठवह्न्य-भावत्वनिर्वह्निनिष्ठवह्न्यभावव्याप्यत्वादिना चाननुगतरूपेणैव निवेशः ।

## विमलप्रभा

सर्वत्रेति । सर्वत्र = सकललक्ष्येषु । तावदन्यान्यत्वमिति, तावद्दोषभिन्नभिन्नत्वमित्यर्थकम् । यादृशदोषज्ञानस्य = आश्रयासिद्ध्यादिनिश्चयस्य । ज्ञानस्य = वह्निमान् पर्वत इत्याश्रयासिद्धज्ञानस्य, धूमाभाववान् निर्वह्निपर्वत इति स्वरूपासिद्धिज्ञानस्य । तत्र = प्रतिबध्यज्ञानप्रसिद्धिस्थले । तादृशदोषाणाम् = आश्रयासिद्ध्यादिरूपदोषाणाम् । ग्राह्याभावतद्व्याप्यरूपतद्घटकभेदेन = प्रतिबध्यज्ञानविषयपदार्थस्य योऽभावस्तद्व्याप्यभेदेन । विशेषणविशेष्यभावभेदेन = विशेषणताविशेष्यताभेदेन । भिन्नानामिति अस्य पूर्वोक्तदोषाणामित्यनेनान्वयः । विशिष्टपक्षे = पक्षतावच्छेदकावच्छिन्नपक्षे । विशिष्टसाधनग्रहेति, हेतुतावच्छेदकावच्छिन्नहेतुज्ञानमित्यर्थकम् । तावदन्यान्यत्वघटकभेदप्रतियोगिविधया = तावद्दोषभिन्नभिन्नत्वघटकीभूतो यः प्रथमभेदस्तत्प्रतियोगिविधया । प्रयोजनविरहात् = प्रयोजनाभावात् । यत्स्थलीये = निर्वह्निर्वह्निमानित्यादिस्थलीये । यादृशदोषविषयकज्ञानस्य = यद्रूपावच्छिन्नपक्षकयद्रूपावच्छिन्नसाध्यकयद्रूपावच्छिन्नहेतुकबाधादिदोषविषयकनिश्चयस्य । प्रतिबध्यज्ञानं = दोषविषयकनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यताशालिज्ञानम् । अप्रसिद्धम् = आहार्यतयेति शेषः । बाधादेर्ज्ञानस्य = वह्न्यभाववन्निर्वह्निरूपबाधादिनिश्चयस्य । तत्स्थलीयेति, निर्वह्निर्वह्निमानित्यादिस्थलीयेत्यर्थः । तादृशदोषाणां = वह्न्यभाववन्निर्वह्निरूपबाधादिदोषाणाम् । अगत्या = गत्यन्तराभावेन । निवेशे इति । कार्य इति शेषः- अयमर्थः । पक्षतावच्छेदकावच्छिन्नपक्षकसाध्यतावच्छेदकावच्छिन्नसाध्यकहेतुतावच्छेदकावच्छिन्नहेतुकस्थले यावन्तो दोषास्सम्भवन्ति तावद्दोषप्रतियोगिकभेदत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वं हेत्वाभासत्वमिति लक्षणार्थकरणे ह्रदो वह्निमान् जलादित्यत्र बाधसत्प्रतिपक्ष-व्यभिचारादिदोषाः सम्भवन्तीति तावद्दोषप्रतियोगिताकयोर्भेदस्तादृशभेदत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वस्य बाधादौ सत्त्वात् भवति तेषु दोषेषु लक्षणसङ्गतिः ।

निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ वह्निविशिष्टपर्वतरूपाश्रयासिद्धि धू-

माभाववत्निर्वह्निपर्वतरूपस्वरूपासिद्ध्यादीनां विशेष्यत्वविशेषणत्वादिभेदेन = वह्निमत्पर्वतवह्निव्याप्यवत्पर्वतधूमाभाववत्निर्वह्निपर्वतधूमाभावव्याप्यवत्निर्वह्निप - र्वतरूपादिविभिन्नदोषभेदेन भिन्नानां पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितहेतु-तावच्छेदकावच्छिन्नप्रकारताशालिबुद्धित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतान - तिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकधर्मस्वरूपाश्रयासिद्धित्वादिनैव ताद्दशाश्रयादे-र्भेदः लाघवात् प्रवेशनीयः, न तु ग्राह्यभावतद्व्याप्यभिन्नभिन्नत्वेन प्रयोजनविरहा-दननुगतत्वेन गौरवाच्च । एवञ्च निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ निर्वह्नि-पर्वतत्वावच्छिन्नविशेष्यकधूमत्वाद्यवच्छिन्नप्रकारकज्ञानविरोधिनिरुक्तासिद्धित्वादिप्रति योगिताकभेदभिन्नत्वमेव लक्षणमिति ।

निर्वह्निर्वह्निमानित्यादौ चानाहार्यज्ञानानुत्पत्त्या आहार्यज्ञानविरोधित्वस्या-प्रसिद्ध्या बाधादावनुगतधर्माभावेनोपायान्तरासम्भवेन तत्र प्रथमभेदप्रतियोगिकुक्षौ वह्न्यभावविशिष्टनिर्वह्नित्वाद्यननुगतधर्मपुरष्कारेण ताद्दशभेदः प्रवेशनीयस्तथा च तत्र तत्तद्दोषप्रतियोगिकभेदत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वमेव लक्षणमिति भावः ।

## गादाधरी

अत्र च विशिष्टभिन्नभिन्नत्वस्य शुद्धविशेष्यसाधारणतया सर्वमाकाशवदि-त्यादावाकाशाभावविशिष्टसर्वादिरूपबाधादिभिन्नत्वस्याप्रसिद्धतया च तत्तद्विशिष्ट-निरूपितविषयितान्यतमविषयितानिरूपकतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वमेवा - भिमतम् ।

अयञ्च प्रकारो याद्दशपक्षसाध्यहेतुकस्थले उक्तसमूहालम्बनानुमितिरप्रसिद्धि-स्तत्रैवादरणीयः । यत्र तु तत्प्रसिद्धिस्तत्र लाघवात् यथाश्रुतमूललक्षणमेव साधी-यः । शब्दाभेदस्याकिञ्चित्करतायाः स्वयमेव वक्ष्यमाणत्वादित्यवधेयम् ।

## विमलप्रभा

अत्र = प्रकृतलक्षणे । विशिष्टभिन्नभिन्नत्वस्य = वह्न्यभावविशिष्टह्रदादि-

भिन्नभेदस्य । शुद्धविशेष्यसाधारणतया = विशिष्टस्य शुद्धाभिन्नतया शुद्धह्रदादिवृत्तित्वेन । तत्तद्विशिष्टनिरूपितविषयिता = तत्तद्रूपावच्छिन्नविषयिता । अभिमतम् = लक्षणार्थतया ग्रन्थकारस्येति शेषः । अयञ्च प्रकारः = तावदन्यान्यत्वरूपलक्षणात्मकप्रकारः । यादृशपक्षसाध्यहेतुकस्थले = निर्वह्निः पर्वतो वह्निमानित्यादिस्थले । उक्तसमूहालम्बनानुमितेः = साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारकानुमितेः । अप्रसिद्धिः = आहार्यतया प्रसिद्ध्यभावः । तत्रैव = तादृशस्थल एव, निर्वह्निर्वह्निमान् निर्वह्निः पर्वतो वह्निमानित्यादिस्थल इति यावत् । आदरणीयः = गत्यन्तराभावात्स्वीकरणीयः । यत्र तु = यादृशस्थले, ह्रदो वह्निमान् जलादावित्ति यावत् । तत्प्रसिद्धिः = उक्तसमूहालम्बनानुमितिप्रसिद्धिः । तत्र = तादृशस्थले । यथाश्रुतमूललक्षणम् = यद्रूपावच्छिन्नविषयिताव्यापिका प्रकृतानुमितिप्रतिबन्धकता तद्रूपावच्छिन्नत्वरूपमूललक्षणम् । साधीयः = समीचीनम् । शब्दाभेदस्य = लक्षणात्मकशब्दद्वयस्य । अकिञ्चित्करतायाः = अप्रयोजकतायाः । स्वयमेव = दीधितिकारेणैव । अयमर्थः । तावद्दोषभिन्नभिन्नत्वस्य लक्षणार्थत्वे ह्रदो वह्निमान् जलादित्यादौ वह्न्यभाववद्ध्रदरूपबाधैकदेशे केवलह्रदादावतिव्याप्तिः, विशिष्टं शुद्धान्नातिरिच्यत इति नियमेन वह्न्यभावविशिष्टह्रदस्य शुद्धह्रदाभिन्नत्वेन वह्न्यभाववद्ध्रदरूपबाधात्मकदोषभिन्नत्वस्य शुद्धह्रदे विरहप्रयुक्तबाधात्मकदोषभिन्नघटपटादिभिन्नत्वस्य शुद्धह्रदे सत्त्वेन लक्षणगमनात् । यदि विशिष्टं शुद्धान्नातिरिच्यत इत्युच्यते तदा वह्न्यभावविशिष्टह्रदरूपबाधात्मकदोषभिन्नत्वस्य शुद्धह्रदादौ वर्त्तमानतया तद्भेदस्य तत्राभावेन लक्षणागमनान्नातिव्याप्तिरित्युच्यते तदा सर्वपक्षकाकाशसाध्यकसर्वमाकाशवदित्यत्राकाशाभाववत्सर्वरूपबाधेऽव्याप्तिर्दुर्वारैव, आकाशाभाववत्सर्वभिन्नत्वस्याप्रसिद्ध्या[सर्वत्वस्यैव सर्वत्र विद्यमानतया भेदस्य प्रतियोगितावच्छेदकेन सह विरोधेन सर्वभेदाऽप्रसिद्ध्या ]तद्भिन्नभिन्नत्वस्य सुतरामेवाप्रसिद्धत्वेन लक्षणागमनात् । अतस्तावदन्यान्यत्वमित्यस्य दोषनिष्ठं तत्तद्दोषभिन्नत्वं नार्थः, किन्तु दोषनिरूपितविषयितायामेव तत्तद्दोषनिरूपितविषयिताभिन्नभिन्नत्वं निवेशनीयम्, एवञ्च तादृशदोषनिरूपितविषयिताभिन्नविषयितानिरूपकतावच्छेदकं यद्रूपं तद्रूपावच्छिन्नत्वं लक्षणार्थः करणीयः ह्रदो वह्नि-

मान् जलादित्यादौ वह्न्यभावविशिष्टह्रदरूपबाधज्ञानीया या वह्न्यभावविशिष्टह्रद-विषयिता तद्भिन्नत्वं शुद्धह्रद इति ज्ञानीयकेवलह्रदविषयितायां सत्त्वेन तद्भेदस्य तत्राभावेन तादृशभिन्नभिन्नविषयिता न केवलह्रदविषयिता किन्तु वह्न्यभावविशिष्टह्रदविषयितैवेति तादृशविषयितानिरूपकतावच्छेदकं वह्न्यभाववद्ध्रदत्वमिति तद्वत्त्वस्य शुद्धह्रदे विरहात् नातिव्याप्तिः, वह्न्यभावविशिष्टह्रदे च तद्वत्त्वसत्त्वात् लक्षणसंगतिः ।

एवम् आकाशाभाववत्सर्वरूपबाधेऽपि आकाशाभाववत्सर्वरूपबाधनिरूपिता या आकाशाभाववत्सर्वत्वावच्छिन्ना विषयिता तद्भिन्ना या घट इति ज्ञानीयघटत्वावच्छिन्नविषयिता तद्भिन्नत्वस्याकाशाभाववत्सर्वत्वावच्छिन्नविषयितायां सत्त्वेन निरुक्तविषयितावच्छेदकाकाशाभाववत्सर्वत्वरूपधर्मावच्छिन्नत्वस्याकाशाभाववत्सर्वरूप-बाधे सत्त्वेन लक्षणगमनान्नाव्याप्तिरिति भावः ।

तादृशतावद्दोषभिन्नभिन्नत्वात्मकलक्षणप्रकारश्च निर्वह्निःपर्वतो वह्निमान् पर्वतावृत्तिवह्निमान् निर्वह्निर्वह्निमानित्यादौ समूहालम्बनानुमितेरप्रसिद्धिस्थल एव स्वीकरणीयस्तथा च तत्र निरुक्तानुमितेरप्रसिद्धावपि स्वरूपासिद्ध्याश्रयासिद्धिबाधादिदोषभिन्नभिन्नत्वस्य तत्र तत्र सत्त्वात् लक्षणसंगतिः ।

यत्र च ह्रदो वह्निमान् धूमादित्यादौ समूहालम्बनानुमितिः प्रसिद्धैव तत्र यद्रूपावच्छिन्नविषयिताव्यापिका प्रकृतानुमितिप्रतिबन्धकता तद्रूपावच्छिन्नत्वरूपमूलकृल्लक्षणमेवादरणीयम् ।

न चैवं क्वचित् मूलकृल्लक्षणानुसरणे क्वचिद्दीधितिकृतलक्षणानुसरणे लक्षणस्य नानात्वप्रसङ्ग इति वाच्यम् । स्वयं दीधितिकारेणैव लक्षणस्य लक्ष्यभेदेन नानात्वस्य प्रतिपादनीयतया प्रकृतेऽपि लक्ष्यभेदेन लक्षणस्य नानात्वमिष्टमेवातः लक्षणात्मकशब्दस्याभेदोऽप्रयोजक एवेति भावः ।

दीधितिः

एकमात्रदोषस्थले च तत्त्वमेव हेत्वाभासत्वम् ॥

## गादाधरी

यत्राश्रयासिद्ध्यादिरेकविधएव दोषः, प्रतिबध्यज्ञानञ्च प्रसिद्धम् महानसत्ववान् पर्वतो वह्निमान् धूमादित्यादौ तत्र विशिष्टपक्षग्रहविरोधित्वादिरूपाश्रयासिद्धित्वादेरेव दोषसामान्यलक्षणत्वमुचितं, न तु महानसत्वाद्यभावविशिष्टपर्वतत्वाद्यवच्छिन्नतादृशाभावव्याप्यावशिष्टपर्वतत्वाद्यवच्छिन्नभिन्नभिन्नत्वस्य निरुक्तसमूहालम्बनानुमितिविरोधित्वस्य च गौरवादित्याशयेनाह एकमात्रदोषस्थल इति। एकविध एव यत्र दोषस्तद्विषयकज्ञानप्रतिबध्यज्ञानञ्च प्रसिद्धं, तादृशस्थल इत्यर्थः तेन ग्राह्याभावतद्व्याप्यभेदेन विशेषणविशेष्यभावभेदेन च सर्वत्र दोषाणां नानात्वसम्भवादेकमात्रदोषस्थलस्याप्रसिद्धत्वेऽपि पर्वतादन्यः पर्वतो वह्निमान् धूमादित्यादावेकविधमात्रदोषस्थले ग्राह्याभावतद्व्याप्यरूपघटकादिभेदेन विभिन्नाश्रयासिद्ध्यादीनामननुगमकरूपाभावेनान्यतमत्वस्य लक्षणताया आवश्यकत्वेऽपि न क्षतिः। तत्त्वं = तादृशत्वं निरुक्ताश्रयासिद्धित्वादिकमिति यावत्।

## विमलप्रभा

यत्र = यादृशसाध्यकादिस्थले। एकविध एव दोषः = दोषतावच्छेदकीभूतैकमात्रधर्मविशिष्ट एव दोषः। प्रतिबध्यज्ञानञ्च = एकविधदोषविषयकनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यताशालिज्ञानम्। तत्र = तादृशस्थले। विशिष्टपक्षग्रहविरोधित्वे, = पक्षतावच्छेदकविशिष्टपक्षग्रहप्रतिबन्धकत्वे। तदर्थः—तादृशाभाव इति, मानसत्वाभाव इति तदर्थः। निरुक्तसमूहालम्बनानुमितिविरोधित्वस्य = पक्षः साध्यवान् साध्यव्याप्यहेतुमांश्चेत्याकारकानुमितिप्रतिबन्धकत्वस्य। तद्विषयकज्ञानप्रतिबध्यज्ञानम् = एकविधदोषविषयकनिश्चयस्य प्रतिबध्यज्ञानम्। तेन = एकमात्रदोषस्थल इत्यस्य यत्र एकविध एव दोष इत्याद्यर्थकरणेन। ग्राह्याभावतद्व्याप्यभेदेन = प्रतिबध्यत्वाभिमतज्ञानस्य प्रकारीभूतपदार्थस्य योऽभावस्तद्व्याप्यभेदेन। विशेषणविशेष्यभावभेदेन = विशेषणत्वविशेष्यत्वभेदेन। दोषाणाम् = आश्रयासिद्ध्यादीनाम्। आश्रयासिद्ध्यादीनां = पर्वतत्ववत्पर्वतपर्वतवृत्तित्वविशिष्टपर्वतत्वादीनाम्। अनुगमकरूपा-

भावेन=सकलानुगतैकधर्मविरहेण। लक्षणतायाः=लक्षणत्वस्य। न क्षतिः=नाश्रयासिद्ध्यादावव्याप्तिः। निरुक्ताश्रयासिद्धित्वादिकम्=विशिष्टपक्षग्रहविरोधित्वादिरूपमाश्रयासिद्धित्वादिकम्। अयमर्थः। महानसत्ववत्पर्वतपक्षकवह्निसाध्यकधूमहेतुकमहानसत्ववान् पर्वतो वह्निमान् धूमादित्यादौ यथा महासत्वाभाववत्पर्वतस्याश्रयासिद्धित्वं तथैव महानसत्वाभावव्याप्यविशिष्टपर्वतस्य, पर्वतवृत्तिमहानसत्वाभावस्य चाश्रयासिद्धित्वमतस्तत्तद्दोषभिन्नभिन्नत्वस्य तत्र लक्षणार्थत्वे लक्षणस्य भेदद्वयघटिततया गौरवं दुष्परिहरणीयमेव स्यादतस्ताद्दृशाश्रयासिद्धिस्थले लाघवात् पक्षतावच्छेदकविशिष्टपक्षज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्त-वृत्तियद्रूपावच्छिन्नविषयिता तद्रूपावच्छिन्नत्वमेव लक्षणार्थः कार्यः।

न च विशेषणत्वविशेष्यत्वादिभेदेन तत्तदभावतद्व्याप्यादिभेदेन च प्रत्येकस्थले दोषमात्रस्यैव नानात्वसम्भवेन एकमात्रदोषस्थल एवाऽप्रसिद्धिरिति वाच्यम्, एकमात्रदोषस्थल इत्यस्यैकमात्रदोषकतावच्छेदकरूपावच्छिन्नदोषस्थल इत्यर्थकरणान्नाप्रसिद्धिरिति। न च तथापि पर्वतान्यः पर्वतो वह्निमान् धूमादित्यादौ पर्वतान्यत्वाभाव-तद्व्याप्यविशिष्टपर्वतादेश्चाश्रयासिद्धित्वरूपैकधर्मावच्छिन्नस्य दोषत्वेन तत्र तत्तद्दोषभिन्नभिन्नत्वस्यैव लक्षणत्वे पर्वतान्यत्ववत्पर्वतज्ञानस्यानाहार्यस्याऽप्रसिद्ध्या आहार्यज्ञानविरोधित्वस्य ताद्दृशाश्रयासिद्धावभावेन लक्षणागमनादव्याप्तिरिति वाच्यम्, याद्दृशस्थलविशेषे एकविध एव दोषः तद्दोषविषयकनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यताशालिज्ञानञ्च प्रसिद्धं तत्रैव विशिष्टपक्षज्ञानप्रतिबन्धकत्वरूपं लक्षणं न तु सर्वत्रेति भट्टाचार्यस्याशयः।

## गादाधरी

इदमुपलक्षणम्। यत्र परामर्शविरोधिनो व्यभिचारविरोधासिद्धयस्त्रयो दोषाः न तु बाधप्रतिरोधौ पर्वतो वह्निमान् ह्रदत्वादित्यादौ परामर्शविरोधित्वमेव सामान्यलक्षणम्, यत्र च बाधप्रतिरोधासिद्धयो दोषाः न तु व्यभिचारविरोधौ ह्रदो वह्निमान् धूमात्, काञ्चनमयह्रदो वह्निमान् धूमात्, ह्रदः काञ्चनमयवह्निमान् धूमात्, ह्रदो वह्निमान् काञ्चनमयधूमादित्यादौ च तत्र विशिष्टपक्षे विशिष्टसाध्यविशिष्टसाधनयोर्नै-

शिष्टयावगाहियज्ज्ञानं तद्विरोधित्वमेव तथा एवम् यत्र व्यभिचारासिद्धौ एव दोषौ काञ्चनमयः पर्वतो धूमवान् वह्नेरित्यादौ तत्र विशिष्टपक्षविषयकव्याप्तिविशिष्ट-साधनग्रहविरोधित्वादिकं तथेत्यपि बोध्यम् ।

## विमलप्रभा

लघुलक्षणमाह इदमुपलक्षणमित्यादिना । यत्र=यादृशस्थलविशेषे । न तु बाधप्रतिरोधौ=न तु बाधसत्प्रतिपक्षौ दोषाविति शेषः । पर्वतो वह्निमान् ह्रदत्वादित्यादाविति । वह्न्यभाववद्वृत्तिह्रदत्वं व्यभिचारः, वह्न्यसमानाधिकरणह्रदत्वं विरोधः, ह्रदत्वाभाववान् पर्वतः स्वरूपासिद्धिः । परामर्शविरोधित्वमेव=परामर्शप्रतिबन्धकत्वमेव । सामान्यलक्षणमिति, हेत्वाभासस्येति शेषः । यत्र=यादृशस्थले । प्रतिरोधासिद्धयः=सत्प्रतिपक्षासिद्धयः । ह्रदो वह्निमान् धूमादिति, वह्न्यभाववान् ह्रदो बाधः, वह्न्यभावव्याप्यविशिष्टह्रदः सत्प्रतिपक्षः, धूमाभाववान् ह्रदः स्वरूपासिद्धिः ।

काञ्चनमयह्रदो वह्निमान् धूमादित्यादौ काञ्चनमयत्वाभाववद्ध्रदादिकमाश्रयासिद्धिः । ह्रदः काञ्चनमयवह्निमान् धूमादित्यत्र काञ्चनमयत्वाभावविशिष्टवह्निः साध्याऽप्रसिद्धिः ह्रदो वह्निमान् काञ्चनमयधूमादित्यत्र काञ्चनमयत्वाभाववद्धूमः साधनाऽप्रसिद्धिरूपविशिष्टदोषः । तत्र=तादृशस्थले । विशिष्टपक्षे=पक्षतावच्छेदकावच्छिन्नपक्षे । विशिष्टसाध्यविशिष्टसाधनयोः=साध्यतावच्छेदकावच्छिन्नसाध्य--हेतुतावच्छेदकावच्छिन्नहेत्वोः । यज्ज्ञानं=पक्षतावच्छेदकावच्छिन्नपक्षः साध्यतावच्छेदकावच्छिन्नसाध्यवान् हेतुतावच्छेदकावच्छिन्नहेतुमानित्याकारकं यज्ज्ञानम् । तद्विरोधिवं=तत्प्रतिबन्धकत्वम् । तथा=दोषसामान्यलक्षणम् । यत्र=यादृशस्थले । व्यभिचारासिद्धी=धूमाभाववद्वृत्तिताविशिष्टवह्निर्व्यभिचारः, काञ्चनमयत्वाभावविशिष्टपर्वतः आश्रयाऽसिद्धिः । तत्र=तादृशस्थले । विशिष्टपक्षविषयकव्याप्तिविशिष्टसाधनग्रहविरोधित्वम्=पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकसाध्यतावच्छेदकावच्छिन्नसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नहेतुविषयकं यत् ज्ञानं तत्प्रतिबन्धकत्वम् । तथा=सामान्यलक्षणम् । अयमर्थः । यादृशस्थलविशेषे पर्वतो वह्निमान् ह्रदत्वादित्यादिस्थले वह्न्यभाववद्वृत्तिह्रदत्वं व्यभिचारः, वह्न्यसमानाधिकरणह्रदत्वं विरोधः, ह्रदत्वाभाववत्पर्वतरूपस्वरूपासिद्धिः, बाधसत्प्रतिपक्षौ

चाऽप्रसिद्धौ, तादृशस्थले केवलपरामर्शप्रतिबन्धकत्वमात्रं दोषसामान्यलक्षणम्। तथा च तत्र पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकसाध्यतावच्छेदकावच्छिन्नसाध्यनिरूपित-व्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नहेतुप्रकारकदोषविशेषाद्यजन्यबुद्धित्वव्यापकप्रतिब-ध्यतानिरूपितयद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापिका प्रतिबन्धकता तद्रूपावच्छिन्नत्वं हेत्वाभासत्वमिति पर्यवसितार्थः। तत्र पक्षः साध्यवानित्याकारकानुमितिघटित-लक्षणकरणे फलाभाव इति भावः।

ह्रदो वह्निमान् धूमादित्यत्र वह्न्यभाववद्ध्रदरूपबाधः, वह्न्यभावव्याप्यह्रद-रूपसत्प्रतिपक्षः, धूमाभाववद्ध्रदरूपस्वरूपासिद्धिरिति त्रयो दोषाः, एवं काञ्चनमय-त्वेन ह्रदपक्षकवह्निसाध्यकधूमहेतुकस्थले बाधसत्प्रतिपक्षाऽऽश्रयासिद्धयस्त्रयो दोषाः, एवं काञ्चनमयवह्निसाध्यकह्रदपक्षकधूमहेतुकस्थले बाधसत्प्रतिपक्षसाध्याऽप्रसिद्धयस्त्रयो दोषाः तथा तत्रैव काञ्चनमयधूमहेतुकस्थले बाधसत्प्रतिपक्षसाधनाप्रसिद्धयस्त्रयो दोषा-स्सम्भवन्ति न खलु दोषान्तरसम्भावना तत्र तत्रेति, एवञ्च पक्षतावच्छेदकावच्छिन्नवि-शेष्यकसाध्यतावच्छेदकावच्छिन्नप्रकारिका अथ च हेतुतावच्छेदकावच्छिन्नप्रकारकबुद्धि-त्वावच्छिन्नप्रतिबध्यतानिरूपिता या प्रतिबन्धकता तदनतिरिक्तवृत्तियद्रूपावच्छिन्न-विषयिता तद्रूपावच्छिन्नत्वम् तत्र हेत्वाभाससामान्यलक्षणमिति। काञ्चनमयपर्वतो धूमवान् वह्नेरित्यादौ व्यभिचारासिद्धी द्वावेव दोषौ तत्र पक्षतावच्छेदकावच्छिन्न-विशेष्यकसाध्यतावच्छेदकावच्छिन्नसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्न-हेतुकज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तियद्रूपावच्छिन्नवि-षयिता तद्रूपावच्छिन्नत्वमेव सामान्यलक्षणमिति।

## दीधितिः

स चातिरिक्त एवान्योन्याभाव इति न वैयर्थ्यम्।

## गादाधरी

ननु तद्धर्मावच्छिन्नभिन्नत्वरूपलक्षणघटकतत्तद्धर्माणां भागासिद्धतया हेत्वा-

भाससामान्येतरभेदाननुमापकत्वेऽपि व्यभिचारावारकतया तदितरांशवैयर्थ्यमित्यत आह स चेति । स चान्योन्याभावोऽतिरिक्त एवेति योजना । स च तत्तद्धर्मावच्छिन्नप्रतियोगिताकभेदकूटावच्छिन्नप्रतियोगिताकभेदः, अतिरिक्तः = तत्तद्धर्मातिरिक्तः, तथा च धर्मिभेदान्न वैयर्थ्यम् । तत्तद्धर्मावच्छिन्नभेदमात्रावच्छिन्नप्रतियोगिताकान्योन्याभावस्य स्वप्रतियोगितावच्छेदकीभूतभेदप्रतियोगितावच्छेदकतत्तद्धर्मस्वरूपत्वेऽपि तादृशभेदकूटावच्छिन्नप्रतियोगिताकभेदत्वस्य नानाधर्मेषु कल्पनापेक्षया तद्विशिष्टस्यैकस्य भेदस्य लाघवेन कल्पयितुं युक्तत्वादित्यभिप्रायः ।

## विमलप्रभा

शङ्कते नन्वित्यादि । तत्तद्धर्माणां = बाधत्वादीनाम् । भागासिद्धतया = पक्षतावच्छेदकसामानाधिकरण्येन हेत्वभाववत्पक्षरूपभागासिद्धत्वेन । अननुमापकत्वेऽपि = अनुमितिप्रयोजकत्वविरहेऽपि । व्यभिचारावारकतया = व्यभिचारवारकत्वाभावेन । तदितरांशवैयर्थ्यम् = तादृशभिन्नभिन्नत्वात्मकहेतोर्वैयर्थ्यम् । तत्तद्धर्मातिरिक्तः = तत्तद्बाधत्वादिरूपधर्मभिन्नः । तथा च = तत्तद्धर्मावच्छिन्नप्रतियोगिताकभेदकूटावच्छिन्नप्रतियोगिताकभेदस्य तत्तद्बाधत्वादिरूपधर्मातिरिक्ततास्वीकारे च । धर्मिभेदात् = विशेष्यभेदात्, तत्तद्धर्मतादृशभेदकूटावच्छिन्नयोर्विभिन्नत्वादिति यावत् । स्वप्रतियोगिता = स्वं द्वितीयभेदस्तदीयप्रतियोगिता । तत्तद्धर्मस्वरूपत्वेऽपि = द्वितीयभेदप्रतियोगितावच्छेदकीभूतो यः प्रथमभेदस्तत्प्रतियोगितावच्छेदकतत्तद्धर्मात्मकत्वेऽपि । तादृशेति, बाधत्वव्यभिचारत्वादिरूपो यस्तत्तद्धर्मस्तदवच्छिन्नप्रतियोगिताकभेदकूटावच्छिन्नप्रतियोगिताकभेदत्वस्येत्यर्थकम् । नानाधर्मेषु = बाधत्वव्यभिचारत्वविरोधत्वादिषु । कल्पना = स्वीकारः । तद्विशिष्टस्य = भेदत्वविशिष्टस्य । युक्तत्वात् = समुचितत्वात् । अयमर्थः । हेत्वाभासस्तदितरभिन्नः बाधादिमत्त्वात् व्यभिचारवत्त्वाद्वेत्यनुमाने हेत्वाभासात्मकपक्षैकदेशे विरुद्धादौ निरुक्तहेतोरभावेन हेत्वाभासत्वसामानाधिकरण्येन तादृशबाधादिमत्त्वरूपहेत्वभाववद्विरोधादिरूपहेत्वाभासात्मकपक्षरूपभागासिद्धेस्सत्त्वसम्भवेऽपि बाधादिमत्त्वदोषेतरभिन्नत्वयोः सर्वत्रैव साहचर्यात् व्यभिचाराभावेन बाधत्वादिरूपतत्तद्-

र्मावच्छिन्नभिन्नभिन्नत्वरूपलक्षणात्मकहेतोः वैयर्थ्यं दुष्परिहरणीयमेव तस्य व्यभिचारवारकत्वाभावादिति चेत्तदप्यापातरमणीयमेव यतः यदि तावदन्यान्यत्वादिघटकद्वितीयाऽन्योन्याभावस्तत्तद्धर्मात्मकस्स्यात्स्याच्च तदा तादृशेतरभेदानुमापकनिरुक्तलक्षणात्मकहेतोः वैयर्थ्यं, किन्तु तत्तद्धर्मावच्छिन्नप्रतियोगिताकभेदकूटावच्छिन्नप्रतियोगिताकाऽन्योन्याभावोऽतिरिक्त एव न तु तत्तद्धर्मस्वरूप इति तत्तद्धर्मत्वतादृशभेदकूटावच्छिन्नप्रतियोगिताकभेदत्वयोर्विभिन्नधर्मिवृत्तित्वेन स्वव्यापकतादृशधर्मान्तरत्वं तत्तद्धर्मे विरहान्न वैयर्थ्यसम्भावना, किन्त्वखण्डाभावघटकत्वेन सार्थक्यमेवेति ।

ननु तत्तद्धर्मावच्छिन्नप्रतियोगिताको यो भेदस्तादृशभेदमात्रावच्छिन्नप्रतियोगिताकान्योन्याभावस्य प्रथमभेदप्रतियोगितावच्छेदकीभूतघटत्वादिरूपतत्तद्धर्मस्वरूपवदेव बाधत्वाद्यवच्छिन्नप्रतियोगिताकभेदकूटावच्छिन्नप्रतियोगिताकभेदस्यापि तत्तद्बाधत्वादिस्वरूपतया धर्मिभेदाभावेन लक्षणात्मकहेतोर्वैयर्थ्यं तादवस्थ्यमिति चेन्न, तत्तद्धर्मावच्छिन्नप्रतियोगिताकभेदकूटावच्छिन्नप्रतियोगिताकभेदत्वस्य बाधत्वासिद्धत्वादिषु कल्पनायां गौरवस्य जागरूकत्वेन निरुक्तभेदत्वविशिष्टभेदस्यैकस्यातिरिक्तत्वकल्पनायामेव लघीयस्त्वादित्याशयेन स चातिरिक्त एवान्योन्याभाव इत्युक्तम्, तथा च धर्मिभेदान्न वैयर्थ्यमिति भावः । अत्रेत्यभिप्राय इति कथनेनान्योन्याभावाभावस्य स्वप्रतियोगितावच्छेदकरूपतासिद्धान्तभङ्गप्रसङ्गरूपास्वरसः सूचितः

## गादाधरी

एतच्च यथाश्रुतार्थाभिप्रायेण, तत्तद्धर्मावच्छिन्ननिरूपितविषयितान्यतमविषयितानिरूपकतावच्छेदकधर्मवत्त्वस्य लक्षणत्वे चाधिकविकासतया विशेषणसार्थक्यमित्यवधेयम् ।

## विमलप्रभा

एवञ्च = पूर्वोक्तरीत्या वैयर्थ्यप्रतिपादनञ्च । यथाश्रुताभिप्रायेण = स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेद -

कीभूतो यो धर्मस्तदवच्छिन्नविषयकप्रतीतिविषयतावच्छेदकं यत् स्वं तद्वत्त्वरूपवैयर्थ्य-लक्षणाभिप्रायेण । तत्तद्धर्मावच्छिन्नेति, तादृशविषयिताभिन्नभिन्नविषयितानिरू-पकतावच्छेदको यो धर्मस्तद्वत्त्वस्य । लक्षणत्वे = लक्षणार्थत्वप्रतिपादने । अधिक-विकासतया = अधिकदेशाऽवृत्तितया, तादृशनिरूपकतावच्छेदकत्वव्यापकधर्मान्तराऽ-घटिततयेति यावत् । विशेषणसार्थक्यम् = तादृशबाधत्वादिरूपधर्मावच्छिन्नप्रतियो-गिताकभेदकूटावच्छिन्नप्रतियोगिताकभेदात्मकेतरभेदानुमापकहेतोः सार्थक्यम् । अ-यमर्थः । तावदन्यान्यत्वरूपतत्तद्धर्मत्वस्य तत्तद्धर्मावच्छिन्नविषयितान्यतमविषयि-तानिरूपकतावच्छेदकत्वाव्यापकधर्मान्तराऽघटिततया निरुक्ततत्तद्धर्मत्वे निरुक्तनिरू-पकतावच्छेदकत्वाऽव्यापकत्वेन न प्रकृते वैयर्थ्यसम्भावनेति रमणीयः समाधिः ।

ननु द्रव्यं गुणकर्मान्यत्वे सति समवेतादित्यत्र हेतुघटकगुणत्वस्य द्रव्यत्वरूपसा-ध्यव्याप्यतावच्छेदकत्वात् समवेतत्वसमानाधिकरणत्वाच्चेति व्यर्थविशेषणघटितत्वेन हेतोर्दुष्टत्वापत्तिरिति चेन्न, एतद्दोषपरिहाराय स्वव्यापकसाध्यव्याप्यतावच्छेदकध-र्मान्तरघटितत्वमेव वैयर्थ्यं विवक्षणीयम्, न तु स्वसामानाधिकरण्यघटितम्, तथा च गुणत्वस्य समवेतत्वव्यापकताविरहेण वैयर्थ्याभावान्न हेतोर्दुष्टत्वापतिरिति । इ-त्थञ्च निरुक्तभेदकूटावच्छिन्नप्रतियोगिताकभेदस्य तत्तद्धर्मस्वरूपत्वेऽपि तादृशभेदत्वा-धिकरणे व्यभिचारत्वादौ तत्तद्धर्मत्वरूपबाधत्वत्वविरहेण तादृशभेदत्वव्यापकतायाः बाधत्वत्वादावभावेन वैयर्थ्यलक्षणविरहान्न वैयर्थ्यशङ्केति भावः ।

### चिन्तामणिः

ज्ञायमानं सदनुमितिप्रतिबन्धकं यत्तत्त्वं वा ।

### दीधितिः

पञ्चविधभेदोक्तिस्तु तत्सम्भवस्थलाभिप्रायेण ।

### गादाधरी

ननु साध्यादिभेदेन लक्षणभेदे ह्रदो वह्निमान् धूमादित्यादिस्थलीयलक्षणस्य

पञ्चविधहेत्वाभाससाधारण्यासम्भवात्तादृशलक्षणाक्रान्तानां पञ्चविधत्वोक्त्यसङ्गति-रित्यत आह पञ्चविधभेदोक्तिरिति । पञ्चविधत्वोक्तिरित्यर्थः । तत्सम्भवस्थलेति । यत्र पञ्चानामेव हेत्वाभासानां सम्भवः, गौरश्वो घटत्वादित्यादौ तत्स्थलीयलक्षणाक्रान्तस्य पञ्चविधत्वाभिप्रायेणेत्यर्थः ।

## विमलप्रभा

पञ्चविधेत्यादिदीधितिमवतारयितुमाशङ्कते न चेत्यादिना । साध्यादिभेदेन = पक्षसाध्याहेतुभेदेनलक्षणभेदे हेत्वाभासस्येति शेषः। लक्षणस्य = हेत्वाभासलक्षणस्य । तादृशलक्षणाक्रान्तानां = ह्रदो वह्निमान् धूमादित्यादिस्थलीयहेत्वाभासलक्षणविशिष्टानाम् । पञ्चविधत्वोक्तिः = हेत्वाभासाः पञ्चेति पञ्चविधत्वप्रतिपादनम् । इत्यतः = अतः हेतोः । आह दीधितिकार इति शेषः । यत्र = यादृशस्थले । तत्स्थलीयलक्षणाक्रान्तस्य = पञ्चविधहेत्वाभासस्थलीयलक्षणलक्षितस्य । अयमर्थः । पक्षसाध्यहेत्वादिभेदेन व्याप्तिलक्षणस्यैव हेत्वाभासलक्षणस्यापि विभिन्नतया ह्रदो वह्निमान् धूमादित्यादिस्थले यत्र बाधप्रतिरोधासिद्धयस्त्रय एव दोषाः तत्रत्यहेत्वाभासलक्षणं न पञ्चविधहेत्वाभाससाधारणमिति तादृशलक्षणलक्षितहेत्वाभासे पञ्चविधत्वाभिधानमसङ्गतमेवेति शङ्कायाः समाधानमाह दीधितिकारः पञ्चविध इत्यादिना । तथा च ह्रदो वह्निमान् धूमादित्यादिस्थलीयहेत्वाभासलक्षणलक्षिते पञ्चविधत्वविरहेऽपि यादृशगोपदार्थपक्षकाश्वत्वसाध्यकघटत्वहेतुकस्थलेऽश्वत्वाभाववत्त्वं गवि बाधः, अश्वत्वाभावव्याप्यवत्त्वं गवि सत्प्रतिपक्षः, अश्वत्वाभाववद्वृत्तिघटत्वं व्यभिचारः, अश्वत्वासामानाधिकरण्यं घटत्वे विरोधः, घटत्वाभाववत्त्वं गवि स्वरूपासिद्धिरिति पञ्चविधहेत्वाभासस्यैकस्थले प्रसिद्धया तत्स्थलीयहेत्वाभासलक्षणस्य पञ्चविधहेत्वाभाससाधारणतया पञ्चविधत्वाभिधानन्नासङ्गतमिति, तथा च यत्र पञ्चविधत्वसम्भावना तत्रैव पञ्चविधत्वाभिधानं न तु सर्वत्रेति नोक्तेरसङ्गतत्वमिति भावः । ज्ञायमानहेतोः कारणतावादिनामिव ज्ञायमानबाधादेरपि प्रतिबन्धकतावादिनाम्मतेन हेत्वाभाससामान्यलक्षणमाह मूले ज्ञायमानमिति । ज्ञायमानं = ज्ञानीयम् । यत् = यद्रूपावच्छिन्नविषयितासामान्यम् । तत्वं त-

द्रूपावच्छिन्नत्वम् । तथा च पूर्ववदत्रापि ज्ञानीययद्रूपावच्छिन्नविषयिताव्यापिका भवति प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपावच्छिन्नत्वम् पर्यवसितलक्षणार्थः । अनुमितिपदं तादृशसमूहालम्बनानुमितिपरम् । एवञ्च ह्रदो वह्निमान् जलादित्यत्र वह्न्यभाववान् ह्रद इत्याकारकज्ञानीयवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताव्यापिका भवति ह्रदत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकवह्नित्वावच्छिन्ननिरूपितव्याप्तिविशिष्टजलत्वावच्छिन्नप्रकारकह्रदो वह्निमान् वह्निव्याप्यजलवांश्चेत्याकारकानुमितित्वव्यापकप्रतिबध्यतानिरूपितवह्न्यभाववान् ह्रद इत्याकारकनिश्चयनिष्ठप्रतिबन्धकतेति तद्रूपावच्छिन्नत्वं वह्न्यभाववद्ध्रदे सत्त्वात् वह्न्यभाववद्ध्रदरूपबाधे लक्षणसंगतिः । अनयैव रीत्या व्यभिचारादावपि लक्षणसमन्वयः कार्य इति ।

## दीधितिः

व्यभिचारादेः साध्यादिभेदनियन्त्रितत्वात्, शब्दाभेदमात्रस्याकिञ्चित्करत्वादिति प्राहुः ।

## गादाधरी

ननु लक्षणाननुगमादितरभेदानुमाने भागासिद्धिरित्यत आह व्यभिचारादेरिति । साध्यादिभेदनियन्त्रितत्वात्=साध्यादिभेदनियन्त्रितलक्ष्यतावच्छेदकत्वात् । तथा च लक्षणस्येव लक्ष्यतावच्छेदकस्याप्यननुगमान्न भागासिद्धिरिति भावः । नन्वेवमप्यनुगतोक्त्यसम्भवान्नायं प्रकारः साधीयानित्यत आह शब्दाभेदमात्रस्येति ।

## विमलप्रभा

शङ्कते नन्विति । लक्षणाननुगमात्=साध्यादिभेदेन लक्षणस्य भेदात् । इतरभेदानुमाने=दोषः स्वेतरभिन्नः दोषभिन्नभिन्नत्वादित्यनुमाने । भागासिद्धिः=

पक्षतावच्छेदकसामानाधिकरण्येन हेत्वभाववत्पक्षात्मकदोषः। अतः=भागासिद्धि-रूपदोषतः। आह,दीधितिकार इति शेषः। साध्यादिति। आदिना पक्षहेतु-सम्बन्धपरिग्रहः। व्यभिचारादेरित्यत्रादिपदेन बाधसत्प्रतिपक्षादेः संग्रहः। तथा च=लक्ष्यतावच्छेदकस्य साध्यादिभेदसियन्त्रितत्वस्वीकारे च। अननुगमात्=अ-नुगतरूपाभावात्,विभिन्नत्वादिति यावत्। न भागासिद्धिः=न भागासिद्ध्यात्मको दोषः। अनुगतोक्त्यसम्भवात्=अनुगतरूपाभावात्। अयं प्रकारः=अननुगतरूपप्र-कारः। साधीयान्=समीचीनः। शब्दाभेदस्य=शब्दैक्यस्य, लक्षणरूपशब्दैक्यस्येति यावत्। अकिञ्चित्करत्वात्=तादृशलक्षणस्यैक्यतया सम्भावनाविरहात्। अय-मर्थः। पक्षसाध्यहेतुभेदेन हेत्वाभासलक्षणस्य विभिन्नतया दोषः स्वेतरभिन्नः तादृशलक्षणवत्त्वादित्यनुमाने दोषात्मकपक्षैकदेशे बाधे व्यभिचारभिन्नभिन्नत्वरूप-लक्षणवत्त्वरूपहेत्वभावेन भवति पक्षतावच्छेदकसामानाधिकरण्येन हेत्वभाववत्पक्ष-रूपभागासिद्ध्यात्मको दोष इति चेत्तदप्यशोभनमेव प्रतिभाति, यतः लक्षणस्या-ननुगतत्ववत् लक्ष्यतावच्छेदकस्याप्यननुगतत्वेन न दोषसामान्यं पक्षः किन्तु तत्प-क्षकतत्साध्यकतद्धेतुकस्थलीयदोष एव, तथा च तत्तद्दोषः स्वेतरभिन्नः व्यभिचार-त्वाद्यवच्छिन्नभिन्नभिन्नत्वादित्याकारकानुमानस्यैव फलिततया बाधाद्यात्मकैकपक्षे बाधभिन्नभिन्नत्वरूपलक्षणवत्त्वसत्त्वेन नैव भागासिद्धिसम्भावनेति। न च सक-लदोषसाधारणानुगतरूपाभावेनानुगमासम्भवतया अननुगतप्रकारो न समीचीन इति वाच्यम्। सर्वत्र सर्वदोषसाधारणनिरुक्तलक्षणस्यैक्य प्रयोजकत्वाभावेनैक्यतया वक्तुमशक्यतया अननुगतप्रकारोपि ज्याय एवेति भावः।

## गादाधरी

इदं पुनरिहावधेयम्। तावदन्यान्यत्वमितरभेदानुमापकमेव न तु दोषपदप्रवृ-त्तिनिमित्तम्, तथा सति निर्वह्नित्वविशिष्टे वह्निसाधने धूमो दुष्ट इत्यादौ दुष्टपदस्य व-ह्न्यभावविशिष्टनिर्वह्नित्वाद्यवच्छिन्नान्यतमवदर्थकतया निर्वह्नित्वविशिष्टे वह्निसाधने इत्यादेरनन्वितार्थकत्वप्रसङ्गादप्रसिद्ध्या तस्य हेत्वन्वयिनिर्वह्नित्वविशिष्टविशेष्यक-वह्न्यनुमितिप्रयोजकत्वार्थकत्वासम्भवात्, किन्तु अभावप्रयोजकभ्रमान्यवृत्तिविषयि-तानिरूपकत्वमेव तथा, उक्तस्थले च प्रकारता, प्रकारतानिरूपितव्याप्तिप्रकारतानि-

रूपितधूमत्वावच्छिन्नप्रकारता चोभयमेव साधनपदार्थः, प्रकारतारूपसाधनपदार्थेऽपरपदार्थैकदेशव्याप्तिप्रकारतानिरूपकप्रकारतायाश्च षष्ठयन्तवह्निपदप्रतिपाद्यस्य वह्निनिष्ठत्वस्य स्वरूपसम्बन्धेन साधनपदार्थोक्तप्रकारताद्वये च सप्तम्यन्तार्थस्य निर्वह्नित्वविशिष्टविशेष्यताया निरूपितत्वसम्बन्धेनान्वयः, साधनपदोत्तरसप्तम्या निरूपकत्वं द्वित्वञ्चार्थः, निरूपकत्वे च निरुक्तसाधनपदार्थयोः पृथगन्वयः, तदन्वितनिरूपकत्वे च द्वित्वान्वयः, द्वित्वान्विततादृशनिरूपकत्वयोश्च दोषपदार्थघटकाऽभावेऽन्वयः, तथाच निर्वह्नित्वविशिष्टविशेष्यतानिरूपितवह्निप्रकारतानिरूपकत्वस्य तादृशविशेष्यतानिरूपिता या वह्निप्रकारतानिरूपितव्याप्तिप्रकारतानिरूपितधूमत्वावच्छिन्नप्रकारता तन्निरूपकत्वस्य च द्वयोरभावप्रयोजकभ्रमान्यवृत्तिविषयितानिरूपकत्वानित्यन्वयबोधः। प्रतिबन्धकीभूतभ्रमविषयितानिरूपकाभावादिमत्त्वमादाय पर्वते वह्निसाधने धूमो दुष्ट इत्यादिप्रयोगवारणाय विषयितायां भ्रमान्यवृत्तित्वं निवेशितम्। दोषघटके केवलसाध्याभावादौ दोषव्यवहाराभावात्, अत्रायं दोष इत्यादौ स्वविषयकनिश्चयाव्यवहितोत्तरानुमितिनिष्ठतादृशोभयाभावाधिकरणतात्वव्यापकविरोधिविषयिताप्रयोज्यताकधर्म एव दोष पदार्थ इति दिक्।

## विमलप्रभा

इह=लक्षणे। अवधेयम्=बोध्यम्। इतरभेदानुमापकमेव=दोषेतरभेदानुमितिजनकत्वरूपप्रयोजकत्वमेव। न तु प्रवृत्तिनिमित्तम्=दोषपदशक्यतावच्छेदकम्। तथासति=तादृशभिन्नभिन्नत्वरूपहेतोः दोषपदशक्यतावच्छेदकत्वे सति। अनन्वितार्थकत्वप्रसङ्गात् षष्ठयन्तवह्निपदस्य साधनपदस्य चान्वयानुपपत्तिः स्यात्। तस्य=सप्तम्यन्तसाधनपदस्य। असम्भवात्=तत्स्थलेऽनुमित्यनुत्पत्त्या तत्प्रयोजकत्वासम्भवात्। तथा=दोषपदशक्यतावच्छेदकम्। उक्तस्थले=निर्वह्नित्वविशिष्टे वह्निसाधने धूमो दुष्ट इत्यादौ। उभयमेव=प्रकारताद्वयमेव। अपरपदार्थैकदेशे=प्रकारतानिरूपितव्याप्तिप्रकारतानिरूपितहेतुप्रकारतारूपसाधनपदार्थैकदेशीयप्रकारतायाम्। व्याप्तिप्रकारतानिरूपकतायां=प्रथमप्रकारतायां स्वरूपसम्बन्धेनेति अन्वय इति शेषः। प्रकारताद्वये=प्रकारतायाः प्रकारतानिरूपितव्याप्तिप्रकारतानिरूपितहेतुप्रकारतायाश्चेति प्रकारताद्वये। सप्तम्यन्तार्थस्य=वह्निसाधने त्य-

न्तार्थस्य। निरुक्तेति,प्रकारताद्वयेति तदर्थः। पदार्थयोः=प्रकारताद्वयोः। द्वित्वान्वयः=सप्तम्यन्तार्थद्वित्वस्यान्वयः। तथा च=निरुक्तरीत्या समस्तपदार्थान्वयस्वीकारे च। निरूपकतावान् हेतुरिति शेषः

प्रतिबन्धकीभूतविषयितानिरूपकाभावादिमत्त्वमादाय=अनुमितिप्रतिबन्धकीभूतो यः पर्वतो वह्न्यभाववानित्याकारकभ्रमस्तदीयविषयितानिरूपकवह्न्यभावादिमत्त्वमादाय। दोषघटके केवलसाध्याभावादौ=वह्न्यभाववद्ध्रदादिरूपबाधादिघटककेवलवह्न्यभावादौ। दोषव्यवहाराभावात्=अयं साध्याभावः दुष्ट इति व्यवहाराभावात्। अत्र=हेतौ। इत्यादौ=इत्याकारकव्यवहारस्थले। तादृशोभयाभावाधिकरणता=पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावाधिकरणता। धर्म एव=धर्मवान् एव। अयमर्थः। बाधत्वव्यभिचारत्वादिरूपतत्तद्धर्मावच्छिन्नप्रतियोगिताकभेदकूटावच्छिन्नप्रतियोगिताकभेदवद्धर्मवत्त्वरूपलक्षणे दोषपदशक्यतावच्छेदकतानाङ्गीक्रियतेऽपि तु तत्रेतरभेदानुमापकत्वमेवान्यथा तत्र दोषव्यवहारोपयिकदोषपदशक्यतावच्छेदकत्वस्वीकारे निर्वह्नित्वविशिष्टे वह्निसाधने धूमो दुष्ट इत्यादौ दुष्टपदस्य वह्न्यभावविशिष्टनिर्वह्नित्वाद्यवच्छिन्नभिन्नभिन्नवदर्थकतया साधनपदस्य षष्ठ्यन्तवह्निपदस्य च निरर्थकत्वप्रसङ्गः, स्यात् दुष्टपदद्वारैव तादृशार्थलाभसम्भवात्। सप्तम्यन्तसाधनपदस्य हेतुभूतधूमादावन्वयमुपगम्य निर्वह्नित्वविशिष्टविशेष्यकवह्निप्रकारकानुमितिप्रयोजकतार्थकत्वाभावात्, अतोऽभावप्रयोजिका या भ्रमान्यवृत्तिविषयिता तन्निरूपकत्वमेव दोषपदशक्यतावच्छेदकं वाच्यम्। तथा च निर्वह्नित्वविशिष्टे वह्निसाधने धूमो दुष्ट इति वाक्यघटकसाधनपदस्य निर्वह्नित्वविशिष्टविशेष्यतानिरूपितसाध्यप्रकारता साध्यप्रकारतानिरूपितव्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारता च द्वयमेवार्थः, प्रकारतारूपसाधनपदार्थे द्वितीयप्रकारतायाञ्च वह्नेरिति षष्ठ्यन्तपवह्निपदप्रतिपाद्यवह्निनिष्ठत्वस्य स्वरूपेणान्वयः, "निर्वह्नित्वविशिष्ट" इति सप्तम्यन्तार्थस्य विशेष्यत्वस्यापि तत्रैवान्वयः "साधन" इत्यत्र सप्तम्याः निरूपकत्वं द्वित्वञ्चार्थः, तत्र साधनपदार्थस्य प्रकारताद्वयोः स्वतन्त्रेणान्वयः, द्वित्वस्य च प्रकारताद्वयान्वितनिरूपकतायामन्वयः, दोषपदार्थ-

गताऽभावे निरूपकताद्वयोरन्वयः। इत्थञ्च निर्वह्नित्वविशिष्टविशेष्यतानिरूपितवह्नि-प्रकारतानिरूपकत्वनिर्वह्नित्वविशिष्टविशेष्यतानिरूपिता या वह्नित्वावच्छिन्नप्रकार-तानिरूपितव्याप्तिप्रकारतानिरूपितधूमत्वावच्छिन्नप्रकारतानिरूपकत्वैतदुभयाभावप्रयो-जकीभूता या भ्रमान्यवृत्तिविषयिता तन्निरूपकत्ववान् धूम इत्याकारकान्वयवोधः।

न च वह्न्यभाववान् पर्वत इति भ्रमज्ञानेऽपि पर्वतो वह्निमानित्यनुमि-तिप्रतिवन्धकतासत्त्वेन तादृशभ्रमज्ञानीयविषयितानिरूपकवह्न्यभाववत्त्वस्योपसंगृह्य पर्वते वह्निसाधने धूमो दुष्ट इति व्यवहारापत्तिरिति वाच्यम्। तादृशापत्तिवा-रणाय विषयितायां भ्रमान्यवृत्तित्वविशेषणं देयम्, तावतैव नोक्तविषयिताया भ्र-मावृत्तित्वान्न तामादाय दोषसम्भावनेति।

वह्न्यभाववद्ध्रदरूपवाधादिदोषघटककेवलवह्न्यभावादौ दोषव्यवहारविर-हेणात्रायं दोष इत्यत्र दोषविषयकनिश्चयोत्तरानुमितौ पक्षे साध्यवैशिष्ट्यावगाहि-त्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावप्रयोजकाभावाधिकरणतात्वव्यापकविरो-धिविषयिताप्रयोज्यताको यो धर्मस्स एव दोषपदार्थतया स्वीकार्यः, एवञ्च केव-लवह्न्यभावादिविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्ये तादृशोभयाभावविरहा-न्न तत्र दोषव्यवहार इति।

### चिन्तामणिः

दशाविशेषे हेत्वोरेवासाधारणसत्प्रतिपक्षयोराभासत्वात् तद्बुद्धेरप्य-नुमितिप्रतिबन्धकत्वम्।

### दीधितिः

स्यादेतत्, शब्दोऽनित्यः शब्दत्वात् इत्यत्रऽसाधारण्येऽव्याप्तिः, सर्व-साध्यवद्व्यावृत्तेस्तत्रासत्त्वात्, एवम्, शब्दोऽनित्यः कृतकत्वादित्यस्य सत्प्रतिपक्षे नित्यत्वव्याप्याद्रव्यद्रव्य:त्वादावपि पक्षस्य तद्वत्ताविरहादित्या-

शंकां तयोरलक्ष्यत्वेन निराकुरुते दशाविशेष इति ।

## गादाधरी

असाधारण्यस्य पक्षवृत्तित्वे सति साध्यव्यापकीभूताभावप्रतियोगित्वात्मकस्य, सत्प्रतिपक्षस्य च पक्षनिष्ठसाध्याभावव्याप्यवत्त्वरूपस्य बुद्धेर्विरोधिविषयकतया साध्यवत्ताज्ञानविरोधित्वं निर्विवादमेव । एवञ्च तज्ज्ञानदशायां हेतोरनुमित्यजनकत्वात्तद्बुद्धेः प्रतिबन्धकत्वमावश्यकमित्येतादृशयथाश्रुतार्थपरस्य दशाविशेष इत्यादिमूलस्यानुत्थितिः, अन्यथा साधारण्यादिज्ञानस्य प्रतिबन्धकताया अपि व्यवस्थापयितुमुचितत्वादतस्तादृशमूलमन्यथा व्याख्यातुमवतरणिकामाह स्यादेतदिति ।

इत्यत्रासाधारणे=एतत्स्थलीयासाधारण्यरूपदोषप्रकारकहेतुविशेष्यकभ्रमविषये सर्वसाध्यतद्व्यावृत्तत्वात्मके । अव्याप्तिरिति । तद्विषयत्वस्य निरुक्तानुमित्यप्रतिबन्धकहेत्वविषयकज्ञानसाधारणतया तादृशप्रतिबन्धकतातिरिक्तवृत्तित्वा-दिति भावः ।

## विमलप्रभा

स्यादेतदित्याद्यवतरणग्रन्थस्य संगमनमाह असाधारण्यस्येत्यादि । बुद्धेः=निर्णयस्य । विरोधिविषयकतया=साध्याभावव्याप्यवत्त्वावगाहितया । साध्यवत्ताज्ञानविरोधित्वम्=अनुमितिप्रतिबन्धकत्वम् । एवञ्च=साध्यवत्ताज्ञानप्रतिबन्धकत्वे विवादाभावे च । तज्ज्ञानदशायां=असाधारण्यादिज्ञानसमये । हेतोरनुमित्यजनकत्वात्=हेतुनिष्ठानुमितिजनकताविरहात् । तद्बुद्धेः=असाधारण्यादिविषयकज्ञानस्य । अन्यथा=दशाविशेषे इत्यादिमूलस्य यथाश्रुतप्रत्येकज्ञाननिष्ठानुमितिप्रतिबन्धकत्वमात्रव्यवस्थापनपरत्वे । उचितत्वात्=युक्तत्वात् । एवञ्च साधारण्यादिज्ञानमात्रस्य प्रतिबन्धकत्वाभिधानं न युक्तियुक्तमिति । तादृशमूलम्=दशाविशेषे इत्यादिमूलवाक्यम् । अन्यथा=प्रकारान्तरेण । व्याख्यातुम=व्याख्यानं कर्तुम् । अवतरणिकां=भूमिकाम् । आह–दीधितिकार इति शेषः । हेतुविशेष्यकभ्रमविषये=अनित्यत्वव्यापकीभूताभावप्रतियोगिशब्दत्वमिति भ्रमविषये । तद्विषयक-

त्वस्य=असाधारण्यविषयकत्वस्य। निरुक्तानुमितिः=समूहालम्बनानुमितिः। हेत्वविषयकज्ञानसाधारणतया=हेत्वविषयककेवलव्यावृत्तत्वावच्छिन्नविषयकज्ञानसाधारण्येन। प्रतिबन्धकतातिरिक्तवृत्तित्वात्=प्रतिबन्धकतारहितेऽपि वर्त्तमानत्वात्। अयमर्थः। ह्रदादिवृत्तित्वविशिष्टवह्निव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्यस्य ह्रदादिनिष्ठवह्न्याद्यभावव्याप्यवत्त्वरूपसत्प्रतिपक्षस्य च निश्चययोः वह्न्यादिज्ञानविरोधित्वेन प्रकृतानुमितिप्रतिबन्धकतया असाधारण्यादिविषयकनिश्चये प्रकृतानुमितिप्रतिबन्धकत्वमावश्यकमेव। एवञ्चैतादृशार्थप्रदर्शनपरदशाविशेषे इत्यादिमूलानुत्थितिप्रसङ्गः, नो चेत्साधारण्यानुपसंहारिज्ञानप्रतिबन्धकत्वस्यापि प्रदर्शनमुचिततया तदप्रदर्शनेनानौचित्यमेव स्यादतो यथाश्रुतार्थं परित्यज्य प्रकारान्तरेण दशाविशेष इत्यादिमूलग्रन्थं व्याख्यातुं-भूमिकामारचयति दीधितकार इति। दीधितौ स्यादेतदिति एवञ्च शब्दोऽनित्यः शब्दत्वादित्यत्र सर्वसाध्यतद्व्यावृत्तत्वरूपाऽसाधारण्येऽव्याप्तिः, तथा हि शब्दोऽनित्य अनित्यत्वव्याप्यशब्दत्ववांश्चेत्याकारिका या प्रकृतानुमितिस्तद्व्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतारहिते हेत्वविषयकहेतुमत्ताज्ञानासमानकालीनकेवलव्यावृत्तत्वावच्छिन्न-विषयकनिश्चये तादृशविषयताया वर्त्तमानतया अनतिरिक्तवृत्तित्वाभावादिति भावः।

## गादाधरी

ननु केवलं सर्वसाध्यवद्व्यावृत्तत्वं न दोषः, अपि तु साधनवृत्तित्वविशेषितम् तादृशविशिष्टविषयकत्वन्तु न प्रतिबन्धकतातिरिक्तवृत्तीत्यत आह सर्वेति। तत्र=हेतौ। असत्त्वात्=अवृत्तेः, साध्यवति पक्षे हेतोर्वृत्तेरिति शेषः। तथा च तादृशविशिष्टस्याऽप्रसिद्धया तस्य दोषत्वासम्भवेन प्रसिद्धस्याविशिष्टसाध्यवद्व्यावृत्तत्वस्यैव तत्र दोषताया आवश्यकत्वमिति भावः।

## विमलप्रभा

शङ्कते नन्विति। केवलं=हेत्वविशेषितम्। तादृशविशिष्टविषयकत्वम्=साधनवृत्तित्वविशिष्टसाध्यवद्व्यावृत्तत्वविषयकत्वम्। हेतौ=शब्दत्वादौ। साध्यवति=अनित्यत्ववति पक्षे=शब्दादौ। हेतोः=शब्दत्वस्य। तथा च =अनित्यत्ववति शब्दे शब्दत्वस्य वृत्तौ च। तादृशविशिष्टस्य=साधनवद्वृत्तित्व-

विशिष्टस्य। तस्य = तादृशविशिष्टस्य। तत्र = शब्दोऽनित्यः शब्दत्वादित्यत्र। अयमर्थः। यदि केवलसाध्यवद्वृत्तत्वमसाधारण्यं स्यात्तदा तादृशज्ञानेऽनुमितिप्रतिबन्धकताविरहेण तज्ज्ञानीयविषयतामादायाव्याप्तिसम्भावना स्यात्तदेव नाङ्गीकुर्मः, किन्तु साधनवृत्तित्वविशिष्टसाध्यवद्व्यावृत्तत्वमेवासाधारण्यम्, तादृशज्ञाने च प्रकृतानुमितिप्रतिबन्धकतासत्वान्न दोषसम्भावनेति केचित्, तन्न युक्तिसहम्, शब्दत्वस्य नित्यत्ववति शब्दे वर्त्तमानतया साधनवृत्तित्वविशेषितसर्वसाध्यवद्व्यावृत्तत्वस्याऽप्रसिद्ध्या तस्य दोषत्वानङ्गीकारात्। किन्तु केवलसाध्यवद्व्यावृत्तत्वस्यैवेति तज्ज्ञानेऽनुमितिप्रतिबन्धकताविरहेणाव्याप्तिस्तदवस्थैवेति भावः

## गादाधरी

अद्रव्यद्रव्यत्वादाविति। असमवेतद्रव्यत्वादावित्यर्थः। असमवेतत्वस्य ध्वंससाधारणतया नित्यत्वव्याप्यत्वासम्भवाद्विशेष्यांशनिवेशः। अत्राप्यनन्तरमव्याप्तिरित्यनुषज्यते, तद्विषयकत्वस्य पक्षाविषयकज्ञानसाधारणतया प्रतिबन्धकतातिरिक्तवृत्तित्वादिति भावः।

## विमलप्रभा

असमवेतद्रव्यत्वादौ = न विद्यते समवेतत्वसम्बन्धेन द्रव्यत्वं यत्र तादृशं यत् द्रव्यत्वं तस्मात्. असमेवतत्वे सति द्रव्यत्वादित्यादौ। नित्यत्वव्याप्यत्वासम्भवात् = अनित्यत्वरूपसाध्याभावरूपं यत् नित्यत्वं तद्व्याप्यत्वाऽसम्भवात्। विशेष्यांशनिवेशः = द्रव्यत्वांशप्रवेशः। तद्विषयकत्वस्य = नित्यत्वरूपसाध्याभावव्याप्तिविशिष्टाऽसमवेतद्रव्यत्वविषयकत्वस्य। पक्षाविषयकज्ञानसाधारणतया = नित्यत्वव्याप्याद्रव्यत्ववानिति ज्ञानसाधारणत्वेन। अयमर्थः। शब्दपक्षकानित्यत्वसाध्यककृतकत्वहेतुकस्थले नित्यत्वव्याप्याऽद्रव्यद्रव्यत्ववान् शब्द इति विरोधिपरामर्शविषयेऽव्याप्तिः, तत्र पक्षानन्तर्भावेण तादृशज्ञाने प्रतिबन्धकताविरहेण प्रतिबन्धकतानतिरिक्तवृत्तित्वस्य तादृशविषयतायामसम्भवादिति भावः।

अत्रासमवेतत्वमात्रस्य हेतुत्वे तस्य ध्वंससाधारणतया तत्र प्रागभावाप्रतियो-

गित्वे सति ध्वंसाप्रतियोगित्वरूपनित्यत्वाभावेन सत्प्रतिपक्षाऽप्रसिद्धिस्स्यादतः द्रव्यत्वरूपविशेष्यांशनिवेशः, एवञ्चासमवेतत्वे सति द्रव्यत्वं न ध्वंससाधारणमतो न दोषः।

### गादाधरी

ननु केवलं नित्यत्वव्याप्याद्रव्यद्रव्यत्वादिकं न तत्र दोषः, अपि तु पक्षनिष्ठतद्वत्तैव, तादृशविशिष्टविषयकत्वञ्च प्रतिबन्धकतानतिरिक्तवृत्त्येवेत्यत आह पक्षस्येति। तथा च पक्षघटितविशिष्टाऽप्रसिद्ध्या पक्षाघटितस्यैव दोषत्वमावश्यकमिति भावः।

### विमलप्रभा

तत्र=शब्दोऽनित्यः कृतकत्वादित्यत्र। पक्षनिष्ठतद्वत्तैव=शब्दनिष्ठनित्यत्वव्याप्यासमवेतद्रव्यत्ववत्तैव। तादृशविशिष्टविषयकत्वञ्च=नित्यत्वव्याप्याऽसमवेतद्रव्यत्वमच्छाब्दात्मकपक्षविषयकत्वञ्च। आह शिरोमणिरिति शेषः। तथा च=पक्षे तद्वत्ताविरहे च। पक्षाघटितस्यैव=केवलनित्यत्वव्याप्यासमवेतद्रव्यत्वस्यैव। दोषत्वमावश्यकमिति। एवञ्च तत्र लक्षणागमनादव्याप्तिरेवेति भावः। अयमर्थः। यदि नाम केवलनित्यत्वव्याप्यासमवेतद्रव्यत्वमात्रं सत्प्रतिपक्षः तदा तादृशसत्प्रतिपक्षनिश्चयेऽनुमितिप्रतिबन्धकताविरहेण तद्विषयतायाः प्रतिबन्धकतातिरिक्तवृत्तितयाऽव्याप्तिः, परन्तु पक्षवृत्तित्वविशेषिततादृशद्रव्यत्वमेव सत्प्रतिपक्षः, तादृशसत्प्रतिपक्षनिश्चये च प्रतिबन्धकतासत्त्वान्नाव्याप्तिशङ्केति चेन्मैवम्, शब्दरूपपक्षे नित्यत्वव्याप्यासमवेतवत्ताविरहेण पक्षघटितस्य तस्याऽप्रसिद्ध्या पक्षाऽघटितनित्यत्वव्याप्यासमवेतद्रव्यत्वस्यैव सत्प्रतिपक्षत्वमिति तन्निश्चये प्रतिबन्धकताविरहादव्याप्तिशङ्का तदवस्थैवेति भावः।

### दीधितिः

हेत्वोः=सद्धेत्वोः, असाधारणः=पक्षमात्रवृत्तिः, सन् प्रतिपक्षो विरोधिपरामर्शो यस्य स तथा, तयोर्दशाविशेषे हेतौ सर्वसाध्यवद्व्यावृत्तत्वस्य पक्षे साध्याभावव्याप्यवत्त्वस्य च भ्रमदशायाम्, आभासत्वात्=अनुमित्यजनकत्वात्।

## गादाधरी

तयोः=तादृशस्थलीयदोषत्वेनाभिमतयोरुक्तधर्मयोः। शब्दो नित्यः शब्दत्वादित्यादौ शब्दत्वादिविशेष्यकनित्यत्वव्याावृत्तत्वादिज्ञानविषयविशिष्टस्य प्रसिद्ध्या तत्राव्याप्तेः शङ्कानास्पदत्वादलक्ष्यत्वाभ्युपगमेन तत्परीहारस्यात्यन्तासम्भवदुक्तिकत्वात् हेतुपदं सद्धेतुपरतया व्याचष्टे हेत्वोरिति। सद्धेत्वोः साध्यवद्व्यावृत्तत्वादिरूपासाधारण्यस्य साध्याभावव्याप्यवत्पक्षकत्वरूपसत्प्रतिपक्षत्वस्य चासम्भवादसाधारणसत्प्रतिपक्षपदे अन्यथा व्याचष्टे असाधारण इति। तथा=प्रकृते सत्प्रतिपक्षपदार्थः। सद्धेत्वोर्दुष्टत्वरूपाभासत्वायोगादाभासपदमन्यथा व्याचष्टे आभासत्वादिति।

## विमलप्रभा

तादृशस्थलीयदोषत्वेनाभिमतयोः=शब्दोऽनित्यः कृतकत्वात् शब्दो नित्यः शब्दत्वादित्यादिस्थलीयहेत्वाभासत्वेनाभिप्रायविषयीभूतयोः। निरुक्तधर्मयोः=सर्वसाध्यवद्व्यावृत्तत्व- नित्यत्वव्याप्यासमवेतद्रव्यत्वरूपधर्मयोः। तत्र=शब्दो नित्यः शब्दत्वादित्यादौ। शङ्कानास्पदत्वात्=शङ्काया अविषयत्वात्। तत्परीहारस्य=अव्याप्तिवारणस्य। हेतुपदम्=दशाविशेषे इत्यादिमूलस्थहेतुपदम्। सद्धेत्वोः=शब्दत्वासमवेतद्रव्यत्वरूपयोर्हेत्वोः। साध्यवद्व्यावृत्तत्वं=साध्याधिकरणेऽवर्त्तमानत्वम्। असम्भवादिति, सद्धेताविति शेषः असाधारणसत्प्रतिपक्षपदे=मूलस्थे इति शेषः। अन्यथा=शब्दशक्यार्थपरित्यागेन। अयमर्थः। शब्दो नित्यः शब्दत्वादित्यादौ हेतुभूतशब्दत्वादिविशेष्यकनित्यत्ववद्व्यावृत्तत्वविशिष्टविषयकं यज्ज्ञानं तद्विषयविशिष्टस्य प्रसिद्धतया तस्य लक्ष्यतया तत्र दुष्टत्वमप्यावश्यकमतो दशाविशेष इत्यादिमूलघटकहेतुपदं सद्धेतुपरतया व्याचष्टे दीधितिकार इति। एवञ्च सद्धेतुस्थले सर्वसाध्याधिकरणावृत्तित्वस्य नासाधारण्यरूपता, न वा साध्याभावव्याप्यपक्षकत्वस्य सत्प्रतिपक्षता सम्भवति, सुतरां शब्दशक्यार्थत्यागेनैव विवरणमावश्यकम्, तथा चासाधारण इत्यस्य पक्षमात्रवृत्तित्वमेवार्थः, सत्प्रतिपक्षपदस्य च सन् विद्यमानः प्रतिपक्षः विरोधिपरामर्शः इत्येवार्थः, एवञ्च सद्धेतावप्येतादृशासाधारणसत्प्रतिपक्षयोः प्रसिद्धिसम्भवान्न दोषः।

न च सद्धेतौ दुष्टत्वरूपाभासत्वमप्रसिद्धमिति वाच्यम्, आभासपदमप्यनुमित्यजनकत्वार्थकमेव, तस्य च सद्धेतावपि प्रसिद्धिसम्भवः, सद्धेतुद्वारापि असाधारण-सत्प्रतिपक्षयोः भ्रमकाले प्रकृतानुमितेरजननादाभासत्वस्य सर्वानुभवसिद्धत्वादिति भावः ।

## दीधिति

तद्बुद्धेः हेत्वादौ साध्यवद्व्यावृत्तत्वादिबुद्धेः प्रतिबन्धकत्वं परमायाति, न तु तद्विषयस्य दोषत्वम्, असत्त्वात् अन्यथा बाधभ्रमेणानुमितेरनुदयात्तस्यापि दोषत्वं स्यात्, को हि साध्याभावतद्व्याप्यवत्ताभ्रमयोरनुमितिविरोधित्वे विशेषः, निर्युक्तिकस्तु प्रवादो न श्रद्धेयः ।

## गादाधरी

तद्बुद्धेरित्यत्र तत्पदस्य हेतुपरत्वं न सम्भवति, सत्प्रतिपक्षस्थले प्रतिबन्धकज्ञानस्य हेतुविषयकत्वानियमाद्धेतुविषयकत्वकथनस्याप्रयोजकत्वाद् बुद्धिपदस्यापि-बुद्धिसामान्यपरत्वं न सम्भवति हेत्वादिमात्रविषयकज्ञानस्याऽप्रतिबन्धकत्वादतस्तत्पदस्य हेतुपक्षोभयपरतया बुद्धिपदस्य साध्यतद्व्यावृत्तत्व—साध्याभावव्याप्यवत्त्वावगाहिबुद्धिपरतया तद्बुद्धिपदं हेतुविषयकसाध्यवद्व्यावृत्तत्व—पक्षविषयकसाध्याभावव्याप्यवत्ताबुद्धिपरतया व्याचष्टे तद्बुद्धेरिति । तयोरलक्ष्यतालाभाय हेत्वोरनन्तरं श्रुत एवकारोऽत्र योजनीयः । तदर्थं व्याचष्टे प्रतिबन्धकत्वं परमायाति । परम् = केवलम् । एवकारव्यवच्छेद्यं स्फुटयति । न त्विति । तद्विषयस्य = तादृशबुद्धि-विषयस्य । दोषत्वम् = दोषलक्षणलक्ष्यत्वम् । असत्त्वात् = लक्ष्यताप्रयोजकत्वस्यासत्त्वात् । प्रतिबन्धकीभूतज्ञानप्रमात्वस्यैव तद्विषयकलक्ष्यताप्रयोजकत्वादिति भावः । असत्त्वात् = विशिष्टस्याप्रसिद्धत्वादिति तु नार्थः, एकदेश एवाव्याप्तेराशङ्कित-तया विशिष्टाऽप्रसिद्धेस्तदलक्ष्यतानिर्वाहकत्वविरहेणानुपयोगात्, अन्यथा = प्रतिबन्ध-

कीभूतभ्रमविषयस्यापि दोषत्वे, बाधभ्रमेण=पक्षे साध्याभावभ्रमेण, तस्य=तद्वि-षयसाध्याभावादेः, नन्वेवमुक्तस्थले दशाविशेषे हेतोर्दुष्टताप्रवादो नोपपद्यत इ-त्यत आह निर्युक्तिकस्त्विवति।

## विमलप्रभा

प्रतिबन्धकज्ञानस्य=अनुमितिप्रतिबन्धक यज्ज्ञानं तस्य। हेत्वादिमा-त्रविषयकज्ञानस्य= हेतुरित्याकारकज्ञानस्य। तत्पदस्य= तद्बुद्धेरित्यादिमूलोक्त-तत्पदस्य। तयोः=असाधारणसत्प्रतिपक्षयोः। अलक्ष्यता=लक्ष्यभिन्नता। त-दर्थमन्तर्भाव्य= एवकारार्थमन्तर्भाव्य। तादृशबुद्धिविषयस्य=सर्वानित्यत्ववद्व्या-वृत्तशब्दत्वज्ञानविषयस्य, नित्यत्वव्याप्यासमवेतद्रव्यत्वादिमच्छब्दज्ञानविषयस्य।

लक्ष्यताप्रयोजकं किमित्याशङ्कायाः समाधानमाह प्रतिबन्धकीभूतेति। तद्विषयस्य=प्रतिबन्धकज्ञानविषयस्य। एवम्=प्रतिबन्धकीभूतज्ञानप्रमात्वस्य ल-क्ष्यताप्रयोजकत्वे। उक्तस्थले=असाधारणसत्प्रतिपक्षोभयस्थले। दशाविशेषे= तादृशभ्रमदशायाम्। हेतोः=शब्दत्वादिहेतोः। आह दीधितिकार इति शेषः। अयमर्थः। तद्बुद्धेरिति मूलघटकतत्पदं यदि हेतुमात्रपरं स्यात्तदा सत्प्रतिपक्षस्थले प्रतिबन्धकताशालिज्ञाने हेतुविषयकत्वविरहेण हेतुविषयकत्वकथनं निष्प्रयोजनकमे-व स्यादतः तत्पदं न हेतुमात्रपरम्, एवम् बुद्धिपदस्य बुद्धिसामान्यपरत्वे शब्दत्वादि-हेतुविषयकज्ञाने प्रकृतानुमितिप्रतिबन्धकताविरहेणासंगतिप्रसंगस्स्यादतो बुद्धिपदं न बु-द्धिसामान्यपरम्, किन्तु साध्यवदवृत्तित्वसाध्याभावव्याप्यत्ववावगाहिबुद्धिपरम्, पक्ष-हेतूभयपरम्, तद्बुद्धिपदेन च शब्दत्वादिविषयकनित्यत्ववद्व्यावृत्तत्व—शब्दविषयक-नित्यत्वाभावव्याप्यत्वादिविषयकबुद्धिर्ग्राह्येति भावः।

असाधारणसत्प्रतिपक्षयोरलक्ष्यताप्रतिपादनाय हेतुपदोत्तरमेवकारो योज्यः। इत्थञ्च तादृशज्ञाने केवलानुमितिप्रतिबन्धकतामात्रं वर्त्तते, न तु तादृशभ्रमविषयस्य दोषत्वमपीति। भ्रमात्मकज्ञानविषये प्रकृतलक्षणलक्ष्यताप्रयोजकप्रमात्वाभावेन न

तयोर्लक्ष्यत्वसम्भावनेति । यदि प्रतिबन्धकभ्रमविषयस्यापि दोषत्वमङ्गीक्रियते तदा वह्न्यभावव्याप्यवत्ताभ्रमस्येव वह्न्यभावभ्रमस्यापि प्रकृतानुमितिप्रतिबन्धकतायां विशेषाभावेन प्रकृतानुमितिप्रतिबन्धकभ्रमविषयवह्न्यभावादेरपि दोषत्वं दुष्परिहरमेव स्यादतोऽनुमितिप्रतिबन्धकज्ञानप्रमात्वस्यैव हेत्वाभासलक्षणलक्ष्यताप्रयोजकत्वमङ्गीकार्यम्, एवञ्च सद्धेतौ न तादृशव्यवहार इति ।

यद्युक्तासाधारणसत्प्रतिपक्षयोरलक्ष्यत्वमङ्गीक्रियते तदा दशाविशेषे निरुक्तस्थलीयहेतोर्दुष्टताप्रवादो व्याहन्येत इति चेत्का नो हानिः तादृशप्रवादस्य युक्तिशून्यतयाऽश्रद्धेयत्ववसतः शास्त्रकर्तुः दृष्टिगोचरानास्पदत्वादिति भावः ।

## दीधितिः

यत्तु ज्ञानस्य यदनुमितिप्रतिबन्धकतावच्छेदकं तद्वत्त्वं तत्प्रकारकप्रमाविषयत्वञ्च लक्षणार्थः ।

## गादाधरी

उपदर्शितस्थलेऽपि दशाविशेषे हेतोर्दुष्टत्वमङ्गीकुर्वतस्तत्साधारण्याय लक्षणमन्यथा व्याचक्षते तन्मतमुपन्यस्य दूषयति यत्त्विति । "ज्ञानस्येति,, षष्ठ्यन्तार्थस्य यत्पार्थेऽन्वयः, तथा च ज्ञानसम्बन्धित्वविशिष्टं यद्रूपावच्छिन्नं यत्किञ्चित्सम्बन्धेन अनुमितिप्रतिबन्धकतावच्छेदकमित्यर्थः । अत्राप्यवच्छेदकत्वं अनतिरिक्तवृत्तित्वम् उक्तयुक्तेः । तत्पदमुभयत्र तद्रूपविशिष्टपरम् । लक्षणार्थः=व्युत्क्रमेण लक्षणयोरर्थः ।

## विमलप्रभा

उपदर्शितस्थले=शब्दोऽनित्यः शब्दत्वादित्यादिस्थले । दशाविशेषे=असाधारण्यभ्रमदशायाम् । हेतोः=शब्दत्वादेः । तत्साधारण्याय=शब्दत्वानिरूप-

सद्धेतुसाधारण्याय । अन्यथा = शब्दार्थत्यागेन । ये = प्राचीनाः । तन्मतम् = प्राचीनमतम् । उपन्यस्य = प्रदर्श्य । दूषयति दीधितिकार इति शेषः । षष्ठ्यन्तार्थस्य = सम्बन्धित्वस्य । तथा च = यत्पदार्थे षष्ठ्यन्तार्थस्यान्वयस्वीकारे च । ज्ञानसम्बन्धित्वविशिष्टं = निश्चयसम्बन्धित्वविशिष्टम् । तेन संशयादेर्व्यवच्छेदः यत्किञ्चित्सम्बन्धेन = विषयितास्वरूपान्यतरसम्बन्धेन । अत्रापि = एतल्लक्षणेऽपि । अवच्छेदकत्वं = प्रतिबन्धकतावच्छेदकत्वम् । उक्तयुक्तेः = धूमादेरपि दुष्टत्वापत्तिरूपयुक्तेः । अयमर्थः । प्राचीनमिश्रमते विषयितास्वरूपान्यतरसम्बन्धेन निश्चयससम्बन्धिसत् यद्रूपावच्छिन्नम् 'प्रकृतानुमितिप्रतिबन्धकतावच्छेदकं तद्रूपावच्छिन्नत्वं हेतुनिष्ठदुष्टत्वम्। एवम् मूलस्थप्रतियोगिपदस्य प्रतियोगितावच्छेदकारतामङ्गीकृत्यानुमितिकारणीभूतो योऽभावः तदीयप्रतियोगितावच्छेदकधर्मप्रकारकप्रमाविशेष्यत्वम् क्रमशः द्वितीयप्रथमलक्षणार्थः । एवञ्च, ह्रदो वह्निमान् जलादित्यादौ वह्न्यभाववान् ह्रद इत्याकारकयथार्थनिश्चये वह्न्यभाववद्ध्रदादेः विषयितासम्बन्धेन वर्त्तमानत्वेनैव तस्य ह्रदो वह्निमानित्याकारकानुमितिप्रतिबन्धकतावच्छेदकतया तद्वत्त्वस्य जले सत्त्वात् जलादेर्दुष्टत्वमिति लक्षणसंगतिः । प्रथमलक्षणे चानुमितिप्रतिबन्धकतावच्छेदकबाधव्यभिचारादिप्रकारकयथार्थज्ञानविशेष्यतामादाय लक्षणसमन्वयो बोध्यः ।

अत्रापि प्रतिबन्धकतावच्छेदकत्वघटकीभूताऽवच्छेदकता पूर्वलक्षणवदनतिरिक्तवृत्तित्वरूपैव ग्राह्या अन्यथा ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभाववद्ध्रदरूपबाधैकदेशकेवलवह्न्यभावादिसत्त्वमादाय धूमादौ दुष्टत्वापत्तिः । तदुपादाने च केवलवह्न्यभावस्य विषयितासम्बन्धेन वह्न्यभाव इति निश्चयेऽपि वर्त्तमानतया तत्रानुमितिप्रतिबन्धकताविरहेण विषयितासम्बन्धेन वह्न्यभावादेः प्रतिबन्धकतातिरिक्तवृत्तितया तमादाय न धूमे दुष्टत्वव्यवहार इति । यदा यत्पदं यद्रूपावच्छिन्नपरम्, तदा तद्वत्त्वमित्यत्र तत्प्रकारकेत्यत्र च तत्पदं तद्रूपावच्छिन्नपरम् । प्रथमम् प्रथमलक्षणस्यार्थमनभिधाय द्वितीयलक्षणस्यैवार्थः प्रथममभिहितः, ततः प्रथमलक्षणस्यार्थः दीधितिकृताभिहित इत्येव व्युत्क्रमेण लक्षणार्थ इत्यस्याशय इति ।

## दीधितिः

तच्च द्विविधं, विषयरूपं, साधारण्यादि, बाधे च प्रमितसाध्याभाववान् पक्षः, तद्विषयकत्वेन ज्ञानस्यानुमितिप्रतिबन्धकत्वात्। अविषयरूपञ्च विरोधिसामग्रीकालीनत्वादिकम्।

## गादाधरी

नन्वेतावतैव कथं दर्शितसत्प्रतिपक्षादौ लक्षणसमन्वयः, तत्र प्रतिबन्धकतावच्छेदकीभूतविशिष्टविषयकत्वस्याऽप्रसिद्धेः, कथं वा व्यभिचारादिकमादाय सव्यभिचारादावेव लक्षणगमनं व्यभिचारादिविषयकत्वस्यैव प्रतिबन्धकतावच्छेदकतया व्यभिचारादेरतथात्वादित्यत आह तच्चेति। तादृशप्रतिबन्धकतावच्छेदकत्वञ्चेत्यर्थः भ्रमात्मकबाधप्रतिबन्धकतामादायापादितायाः सद्धेतोः दुष्टतायाः स्पष्टीकर्तुमाह बाधे चेति। बाधज्ञाननिष्ठप्रतिबन्धकतायाश्चेत्यर्थः, अवच्छेदक इति शेषः। पक्षस्य वास्तवं साध्याभाववत्त्वं निविशते न तु वैज्ञानिकमिति सूचयितुं प्रमितेति। तद्विषयस्यावच्छेदकत्वे युक्तिमाह तद्विषयकत्वेनेति। तथा च विषयविषयकत्वस्येव विषयस्यापि विषयितया अवच्छेदकत्वमक्षतमिति भावः। विरोधिसामग्रीकालीनत्वादीति। विरोधिकोटयनुमितिसामग्रीकालीनत्वेन परामर्शादेः प्रतिबन्धकत्वमित्यभिमानः। तथा च तदादायैव सत्प्रतिपक्षिते असाधारणे च सद्धेतौ दुष्टत्वमिति भावः।

## विमलप्रभा

नन्विति। एतावता=एतादृशलक्षणेन। सत्प्रतिपक्षादावित्यत्रादिपदेनासाधारणसंग्रहः। तत्र=सर्वसाध्यवद्व्यावृत्तशब्दत्वादिभ्रमे। व्यभिचारादौ=अयोगोलकं धूमवद्वह्नेरित्यादौ। अतथात्वात्=हेतावसत्त्वात्। तादृशप्रतिबन्धकतावच्छेदकञ्च=तादृशप्रतिबन्धकतानतिरिक्तवृत्ति च। प्रमितेति। प्रमितिसाध्याभाववत्त्वघटकप्रमितपदं

पक्षनिष्ठसाध्याभाववत्त्वञ्च वास्तविकम्, न तु भ्रमात्मकज्ञानीयविषयतामादाय वैज्ञानिकमित्येतदर्थकम्। तथा च=विषयत्वेन ज्ञानस्य प्रतिबन्धकत्वे च। विषयविषयकत्वस्येव=बाधादिज्ञानस्य यो विषयस्तद्विषयकत्वस्य यथातथैव। विषयस्यापि=बाधादिदोषस्यापि। विषयितया=विषयितासम्बन्धेन। अवच्छेदकत्वं प्रतिबन्धकताया इति शेषः। अक्षतम्=अव्याहतम्। परामर्शादेरित्यत्रादिपदेन नित्यत्वव्याप्यासमवेतद्रव्यत्ववान् शब्द इत्याकारकनिश्चयपरिग्रहः। तदादायैव=विरोधिकोट्यनुमितिसामग्रीकालीनत्वमादायैव। सद्धेतौ=शब्दोऽनित्यः शब्दत्वादित्यादौ। अयमर्थः। निरुक्तरीत्या लक्षणार्थनिर्वचनेऽपि शब्दोऽनित्यः कृतकत्वादित्यत्र केवलनित्यत्वव्याप्यासमवेतद्रव्यत्वरूपसत्प्रतिपक्षे कथं लक्षणसंगतिस्तत्र ज्ञानसम्बन्धित्वविशिष्टयद्रूपावच्छिन्नस्य प्रतिबन्धकतावच्छेदकस्याप्रसिद्धया लक्षणागमनात्। एवम्, व्यभिचारादौ प्रकृतानुमितिप्रतिबन्धकतावच्छेदकतायाः व्यभिचारादिविषयितायामेव वर्त्तमानतया व्यभिचारादौ तदभावेन कथं लक्षणसंगतिरिति चेत् शृणु, प्रतिबन्धकतावच्छेदकं विषयरूपाविषयरूपभेदात् द्विविधम् तथा च व्यभिचारे विषयरूपप्रतिबन्धकतावच्छेदकस्य वर्त्तमानत्वेन तदादायैव लक्षणसमन्वयः। शब्दोऽनित्यः शब्दत्वादित्यत्र सत्प्रतिक्षे चाविषयरूपप्रतिबन्धकतावच्छेदकत्वसत्त्वेन ज्ञानसम्बन्धित्वविशिष्टतादृशसत्प्रतिपक्षत्वावच्छिन्नं भवति प्रकृतानुमितिप्रतिबन्धकतावच्छेदकमिति तद्वत्त्वस्य हेतौ सत्त्वाद्भवत्येव दुष्टत्वव्यवहार इति भावः।

## दीधितिः

तद्वत्त्वञ्च ज्ञानस्येव तद्विषयस्य हेतोरपीति, तन्न तद्वत्त्वं हि हेतोर्नाभेदेन ॥

## गादाधरी

ननु ज्ञाननिष्ठविरोधिसामग्रीकालीनत्वमादाय कथं हेतोर्दुष्टत्वं तस्य ज्ञान एव सत्त्वादित्याशङ्कां परिहरति तद्वत्त्वञ्चेति। तद्विषयस्य हेतोरपीति। तत्कालनिरूपिताधेयतात्मकस्य तत्कालीनत्वस्याधेयभेदेन भेदानभ्युपगमात्, अभ्युपगमे वा आ-

धेयतासम्बन्धेन तत्कालस्यावच्छेदकतया तमादायैव लक्षणसमन्वयादिति भावः । नाभेदेनेति । विवक्षितमिति शेषः ।

## विमलप्रभा

तस्य = विरोधिकोट्यनुमितिसामग्रीकालीनत्वस्य । तद्वत्त्वञ्चेति = तादृशविरोधिसामग्रीकालीनत्वादिकञ्चेति । आधेयतात्मकस्य = वृत्तितास्वरूपस्य । आधेयभेदेन = प्रकारभेदेन । अनभ्युपगमात् = अस्वीकारात् । अभ्युपगमे वा = स्वीकारे वा । तत्कालनिरूपितवृत्तितास्वरूपस्य तत्कालीनत्वस्याधिकरणभेदेन भेदानङ्गीकारे वा । तत्कालस्य = तादृशसामग्रीकालस्य । तमादायैव = तादृशसामग्रीकालमादायैव । लक्षणसमन्वयात् = शब्दोऽनित्यः शब्दत्वादित्यादौ लक्षणसंगमनात् । अयमर्थः । विरोधिसामग्रीकालीनत्वमादाय लक्षणसंगतिर्या कृता सा न संगच्छते, तादृशसामग्रीकालीनत्वं हि तादृशसामग्रीकालनिरूपितवृत्तित्वं तच्च प्रकारभेदात् विभिन्नमेव, एवञ्च परामर्शात्मकज्ञाननिष्ठवृत्तितायाः परामर्श एव वृत्तितया शब्दत्वादौ तादृशाधेयत्वविरहादिति चेत्सत्यम्, आधेयभेदेनाधेयताभेदानभ्युपगमेन परामर्शात्मकज्ञाननिष्ठविरोधिसामग्रीकालनिरूपिताधेयतायाः शब्दत्वादिनिष्ठाधेयतायाश्च भेदाभावेन तादृशसामग्रीकालीनत्वमादायैव शब्दत्वादिहेतौ लक्षणसमन्वयः ।

आधेयतायाः आधेयव्यक्तिभेदेन भेदाभ्युपगमे च प्रकृते आधेयतासम्बन्धेन तादृशसामग्रीकालवत्त्वेनैव परामर्शादीनामनुमितिप्रतिबन्धकतया आधेयतासम्बन्धेन तादृशकालस्य परामर्शवत् शब्दत्वादावपि वर्त्तमानतया लक्षणसंगतिरिति ।

## गादाधरी

साध्याभाववद्वृत्तित्वादिविशिष्टसाधनरूपदोषस्याभेदसम्बन्धेन हेतौ सत्त्वात् तेन सम्बन्धेन तद्वत्त्वविवक्षायां न व्यभिचारादावप्रसक्तिरतः बाधे तदभावादिति । वह्न्यभाववद्ध्रदादिरूपबाधे धूमादिरूपहेत्वभेदासत्त्वादित्यर्थः । तथा च तत्राव्याप्तिरिति भावः । अत एव = बाधेऽव्याप्तेरेव, नाश्रयतया = तद्वत्त्वं विवक्षार्हमिति शेषः । धूमादेर्वह्न्यभाववद्ध्रदाद्यनाश्रयतया एकज्ञानविषयत्वादिरूपसम्बन्धस्याधारत्वानिर्वाहादिति भावः ।

## विमलप्रभा

तेन सम्बन्धेन = अभेदसम्बन्धेन । तद्वत्त्वविवक्षायाम् = दोषवत्त्वविवक्षायाम् । अप्रसक्तिः = अव्याप्तिः । अतः = हेतोः । तथा च = बाधे तद्वत्त्वाभावे च । तत्र = बाधे । अधारकत्वानिर्वाहात् = तादृशसम्बन्धस्य वृत्त्यनियामकतया तेन सम्बन्धेनाधिकरणत्वाऽप्रसिद्ध्याऽधिकरणत्वनिर्वाहकत्वाभावात् । अयमर्थः । यद्यभेदसम्बन्धेन तादृशदोषवत्त्वमेव दुष्टताव्यवहारनियामकमित्युच्यते तदा धूमवान् वह्नेरित्यादौ धूमाभाववद्वृत्तित्वविशिष्टवह्नेरेव व्यभिचारतयाऽभेदसम्बन्धेन तद्वत्त्वस्य वह्नौ सत्त्वेन तत्र दुष्टत्वव्यवहारसम्भवेऽपि, ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभाववद्ध्रदरूपबाधस्याभेदसम्बन्धेन धूमादावभावेन तादृशबाधितहेतावव्याप्तिर्दुर्वारैव । वृत्त्यनियामकसम्बन्धावच्छिन्नाधिकरणत्वाऽप्रसिद्ध्यैकज्ञानीयविषयत्वादिसम्बन्धेन दोषवत्त्वस्य हेतावभावादेवाश्रयतासम्बन्धेन वह्न्यभाववद्ध्रदरूपदोषवत्त्वस्य साधनभूतधूमादावभावाद्व्याप्तिस्तदवस्थैवातो नाश्रयतासम्बन्धेन तद्वत्त्वमिति भावः ।

## दीधितिः

बाधे तदभावात् । अत एव नाश्रयतया, वह्निव्यभिचारिद्रव्यत्वादिमति धूमेऽतिप्रसङ्गाच्च, साध्याभाववत्पक्षस्येव साध्यभाववद्वृत्तिहेतोर्ज्ञानस्य प्रतिबन्धकत्वात् ।

## गादाधरी

अव्याप्तिमुक्त्वा अतिव्याप्तिमप्याह वह्निव्यभिचारीति । ननु हेतुनिष्ठसाध्याभाववद्वृत्तित्वादिरूपविषय एव प्रतिबन्धकतावच्छेदको न तु तद्विशिष्टद्रव्यत्वादिः, तदाश्रयश्च न धूमादिरित्याशङ्कां निराकरोति साध्याभाववदिति । साध्याभाववद्वृत्तिहेतोर्ज्ञानस्येति = तादृशहेतुविषयकज्ञानस्येत्यर्थः । तथा च वह्न्यभाववद्वृत्तिद्रव्यत्वादिकमपि विषयतया अवच्छेदकमिति भावः ।

विमलप्रभा

अतिव्याप्तिमप्याह इति । पर्वतो वह्निमान् धूमादित्यादिसद्धेतावतिव्याप्तिरिति । तद्विशिष्टद्रव्यत्वादिः=साध्याभाववद्वृत्तित्वविशिष्टद्रव्यत्वादिः । तदाश्रयः=केवलवह्न्यभाववद्वृत्तित्वाश्रयः । न धूमादिरिति । एवञ्च न धूमहेतुकसद्धेतावतिप्रसङ्ग इति । तादृशहेतुविषयकज्ञानस्य=साध्याभाववद्वृत्तिहेतुविषयकज्ञानस्य । तथा च=तादृशहेतुविषयकज्ञानस्य प्रतिबन्धकत्वे च । विषयितया=विषयितासम्बन्धेन । अवच्छेदकम्=प्रतिबन्धकतावच्छेदकम् । अयमर्थः । आश्रयतासम्बन्धेन तद्वत्त्वविवक्षणे पर्वतो वह्निमान् द्रव्यत्वादित्यादौ वह्न्यभाववद्वृत्तिद्रव्यत्वात्मकव्यभिचारस्याश्रयतासम्बन्धेन पर्वतपक्षकवह्निसाध्यकधूमहेतावपि वर्त्तमानतया तत्रातिव्याप्तिः । न च द्रव्यत्वनिष्ठवह्न्यभाववद्वृत्तित्वरूपविषय एव प्रतिबन्धकतावच्छेदकः, न तु वह्न्यभाववद्वृत्तित्वविशिष्टद्रव्यत्वमिति नाश्रयतासम्बन्धेन तादृशद्रव्यत्वमादाय धूमेऽतिव्याप्तिरिति वाच्यम् । वह्न्यभाववत्पक्षविषयकज्ञानस्येव वह्न्यभाववद्वृत्तिद्रव्यत्वादिविषयकज्ञानस्यापि प्रतिबन्धकतया विषयितासम्बन्धेन ज्ञाननिष्ठं सत् वह्न्यभाववद्वृत्ति द्रव्यत्वं भवत्येव प्रतिबन्धकतावच्छेदकमिति तादृशद्रव्यत्वस्याश्रयतासम्बन्धेन धूमरूपसद्धेतावपि वर्त्तमानतया भवत्येवातिव्याप्तिरिति ।

दीधितिः

साधारण्यादिविषयविषयकत्वस्य ज्ञाननिष्ठस्यैव प्रतिबन्धकतावच्छेदकत्वात् सत्तादिसाध्यकज्ञाने अतिप्रसङ्गाच्च ।

गादाधरी

ननु धूमादेस्तादृशधर्मवत्त्वेऽपि वह्नौ साध्ये धूमो दुष्ट इत्यादिव्यवहारस्य नापत्तिसम्भवः, उक्तयुक्त्या तद्धेतुकानुमितिविरोधिरूपवत्त्वस्यैव तत्र दुष्टताव्यवहारनियामकत्वात्, अन्यथा तवाप्यप्रतीकारादित्यतोऽन्यत्रातिप्रसङ्गमाह साधारण्यादिविषयकत्वस्येति । ज्ञाननिष्ठस्य=ज्ञानवृत्तित्वविशिष्टस्य । सत्तादीति ।

सत्तावान् ज्ञानादित्यादौ ज्ञानहेतुकसत्ताद्यनुमितिप्रतिबन्धकतावच्छेदकं ज्ञानांशे सत्ताद्याभाववद्वृत्तित्वावगाहित्वमादाय सत्त्वे साध्ये ज्ञानं दुष्टमित्यादिव्यवहारापत्तेरित्यर्थः।

विमलप्रभा

तादृशधर्मवत्त्वेऽपि = अनुमितिप्रतिबन्धकतावच्छेदकतादृशद्रव्यत्वरूपव्यभिचारस्याश्रयतासम्बन्धेन धूमे सत्त्वेऽपि। उक्तयुक्त्या = दुष्टताव्यवहारोपयोगिपूर्वप्रदर्शितरीत्या। तद्धेतुकानुमितिविरोधिरूपवत्त्वस्य = पर्वतपक्षकवह्निसाध्यकधूमहेतुकानुमितिप्रतिबन्धकतावच्छेदकतादृशधर्मवत्त्वस्य। तत्र = वह्निसाध्यकधूमे। वह्निसाध्यकधूमे च तादृशरूपमेवाऽप्रसिद्धमिति यावत्।

अन्यथा = तद्धेतुकानुमितिप्रतिबन्धकधर्मवत्त्वस्य दुष्टत्वव्यवहारनियामकत्वानङ्गीकारे। तवापि = आश्रयत्वादिसम्बन्धेन दोषवत्त्वं दुष्टत्वमिति वादिमतेऽपि। अप्रतीकारात् = तादृशद्रव्यत्वरूपव्यभिचारदोषस्याश्रयतासम्बन्धेन धूमे विद्यमानतया पर्वते वह्निसाधने धूमो दुष्ट इति व्यवहारापत्तेर्वारणायोगात्। अन्यत्र = स्थलान्तरे। अतिप्रसङ्गम् = अतिव्याप्तिम्। आह, दीधितिकार इति शेषः। ज्ञानं दुष्टम् = सत्तासाध्यकज्ञानहेतुकानुमितिप्रतिबन्धकतावच्छेदकज्ञाननिष्ठं यत् सत्ताऽभाववद्वृत्तित्वविषयकत्वं तस्य ज्ञाने वर्त्तमानतया सत्त्वे साध्ये ज्ञानं दुष्टमिति व्यवहारस्स्यादिति भावः। अयमर्थः। धूमे आश्रयतासम्बन्धेन तादृशद्रव्यत्वरूपव्यभिचारस्य सत्त्वेऽपि वह्नौ साध्ये धूमो दुष्ट इत्यत्र पर्वतत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिबन्धकतावच्छेदकधर्मवत्त्वस्याऽप्रसिद्ध्या न तथा व्यवहार इत्याशयेन सत्तावान् ज्ञानादित्यादावतिव्याप्तिरभिहिता। तथा च सत्तासाध्यकज्ञानहेतुकानुमितिप्रतिबन्धकतावच्छेदकं यत् ज्ञाननिष्ठं सत्ताऽभाववद्वृत्तित्वविषयकत्वं तस्य ज्ञाने वर्त्तमानतया सत्तासाध्ये ज्ञानं दुष्टमिति व्यवहारपत्तिर्दुर्वारैवेति भावः।

दीधितिः

यथा कथञ्चित् तद्वत्त्वस्यातिप्रसञ्जकत्वात्। विरोधिसामग्रीसम-

वहितोऽपि च लिङ्गपरामर्शो न स्वसाध्यकानुमितेः प्रतिवन्धको मणिस-मवहितो वह्निरिव दाहस्य ।

## गादाधरी

येन केनापि सम्बन्धेन तद्वत्त्वं विवक्षणीयमित्यपि दूषयति यथा कथ-ञ्चिदिति । अतिप्रसञ्जकत्वादिति । उक्तधर्ममादाय सत्तादिसाध्यकज्ञाने धू-माद्यंशे यद्वह्न्यभाववद्वृत्तित्वावगाहित्वमेकज्ञानविषयत्वादिसम्बन्धेन तद्वत्त्वमादा-य वह्न्यादिसाध्यकधूमादावपि दुष्टत्वव्यवहारापत्तेरित्यर्थः ।

## विमलप्रभा

तद्वत्त्वम् = निरुक्तानुमितिप्रतिबन्धकतावच्छेदकवत्त्वम् । उक्तधर्ममादाय = ज्ञाननिष्ठसत्ताभाववद्वृत्तित्वविषयकत्वधर्ममादाय । तद्वत्त्वमादाय = वह्न्यभाववद्-वृत्तित्वावगाहित्वमादाय । अयमर्थः । येन केनापि सम्बन्धेन तद्वत्त्वनिवेशे ज्ञान-हेतुकानुमितिप्रतिबन्धकतावच्छेदकं यज्ज्ञाननिष्ठं सत्ताऽभाववद्वृत्तित्वविषयकत्वं ज्ञाने तस्य वर्त्तमानतया सत्त्वे साध्ये ज्ञानं दुष्ट इति व्यवहारापत्तिः ।

एवम् वह्न्यभाववद्वृत्तित्वं धूमश्चेत्याकारकसमूहालम्बनज्ञानविषयत्वस्य धूमे सत्त्वेनैकज्ञानविषयत्वसम्बन्धेन वह्न्यभाववद्वृत्तित्वावगाहित्वस्यापि धूमे वर्त्त-मानतया वह्नौ साध्ये धूमो दुष्ट इत्याकारकव्यवहारापत्तिर्दुर्वारैवेति भावः ।

## गादाधरी

सत्प्रतिपक्षस्थले विरोधिसामग्रीकालीनत्वेन प्रतिबन्धकतामादाय यल्लक्ष-णसत्त्वमुपपादितं तत् दूषयति विरोधिसामग्रीति । न स्वसाध्यकानुमितेः प्रतिबन्धक इति । न स्वजन्यानुमितिप्रतिबन्धक इत्यर्थः । कारणत्वप्रतिबन्धकत्व-योरेकत्रानभ्युपगमादिति हृदयम् । विभिन्नरूपेण तदुभयस्यैकत्रोपगमे प्रतिबन्दि-सूचनायाह मणीति । न प्रतिबन्धक इत्यनुषज्यते । तथा च विरोधिकोट्यनु-मितिसामग्रीकालीनत्वेन परामर्शस्य स्वसाध्यकानुमितिप्रतिबन्धकत्वे मणिसमवहि-

तत्वेन वह्न्यदीनामपि दाहप्रतिबन्धकत्वापत्तिः। मणिसमवहितत्वापेक्षया लाघवेन मणित्वेनैव प्रतिबन्धकता कल्प्यते इति चेत्, तर्हि विरोधिसामग्रीकालीनत्वापेक्षया लाघवात् तादृशसामग्रीत्वेन विरोधिपरामर्शत्वेनैव वा प्रतिबन्धकत्वं प्रकृतेऽपि कल्पयितुमुचितमिति कथं विरोधिसामग्रीकालीनत्वमादाय लक्षणं सङ्गमनीयम्, तस्य प्रतिबन्धकतातिरिक्तवृत्तित्वादिति भावः ।

## विमलप्रभा

सत्प्रतिपक्षस्थले=शब्दोऽनित्यः कार्यत्वादित्यादौ स्वजन्येत्यत्र स्वपदम्—विरोधिपरामर्शादिसामग्रीपरम् । तथा च स्वजन्येत्यस्य विरोधिसामग्रीकालीनपरामर्शजन्येत्यर्थः। एकत्रानभ्युपगमात्=एकस्मिन्नेव परामर्शे स्वसाध्यकानुमितिकारणत्वस्य तादृशानुमितिप्रतिबन्धकत्वस्य चास्वीकारात्। विभिन्नरूपेण=एकरूपेण कारणत्वम्, रूपान्तरेण प्रतिबन्धकत्वमित्येवं क्रमेण। तदुभयस्य=कारणत्वप्रतिबन्धकत्वोभयस्य। एकत्र=परामर्शे। उपगमे=स्वीकारे। एवञ्च एकस्मिन्नेव परामर्शे परामर्शत्वेनानुमितिकारणतायाः विरोधिसामग्रीत्वेनानुमितिप्रतिबन्धकतायाः स्वीकारे। तथा च=विभिन्नरूपेण कारणत्वप्रतिबन्धकत्वयोः स्वीकारे च। दाहप्रतिबन्धकत्वापत्तिः =एकस्मिन्नेव वह्नौ वह्नित्वेन दाहकारणत्वं, मणिसमवहितत्वेन दाहप्रतिबन्धकत्वमिति तादृशवह्न्यादीनामपि दाहप्रतिबन्धकत्वं स्यादिति।

मणित्वेनैव प्रतिबन्धकता=मणिसमवहितत्वापेक्षया लघोर्मणित्वस्यैव दाहप्रतिबन्धकतावच्छेदकता। कल्प्यते=स्वीक्रियते। तादृशसामग्रीत्वेन=विरोधिकोट्यनुमितिसामग्रीत्वेन। प्रकृतेऽपि=सत्प्रतिपक्षस्थलेऽपि। तस्य=विरोधिसामग्रीकालीनत्वस्य। एवञ्च विरोधिसामग्रीकालीनत्वस्य प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तितया कथं तदादाय लक्षणसमन्वय इति। अयमर्थः। विरोधिपरामर्शादिसामग्रीविशिष्टानित्यत्वादिसाध्यकपरामर्शत्वेनानित्यत्वादिसाध्यकानुमितिम्प्रति तादृशसामग्र्याः प्रतिबन्धकत्वाभावेन विरोधिसामग्र्याः प्रतिबन्धकतानवच्छेदकतया दशाविशेषे शब्दोऽनित्यः कृतकत्वादित्यत्र दुष्टत्वेनाभिमतेऽव्याप्तिरतदवस्थैव। न च साध्याभावानुमितिसामग्रीविशिष्टसाध्यानुमितिपरामर्शत्वेनैव प्रकृतानुमितिप्रतिबन्धकतास्वीकारान्नोक्तदोष इति वाच्यम्। तथा सति दाहरूपकार्यं प्रति मण्यादिविशिष्टवह्न्या-

देरपि प्रतिवन्धकत्वापत्तिः, न च मणिविशिष्टवह्नौ दाहप्रतिबन्धकत्वं केनाप्यङ्गीकृतमतो नेष्टापत्तिसम्भावनेति। ननु तत्र मणिसमवहितत्वेन प्रतिबन्धकत्वाङ्गीकारापेक्षया लाघवेन मणित्वेनैव तत्त्वं वाच्यम्. तावतैवेष्टसिद्धिसम्भवादिति चेन्न, तथा सति सत्प्रतिपक्षस्थलेऽपि विरोधिसामग्रीकालीनत्वेन प्रतिबन्धकत्वकल्पनापेक्षया लाघवात् विरोधिकोटयनुमितिसामग्रीत्वेन मिश्रमते दीधितिकारमते च विरोधिपरामर्शत्वेन वाप्रतिबन्धकत्वं स्वीकरणीयम्, तथा दीधितिकारमतेच विरोधिपरामर्शकालीनत्वस्य प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वेन सत्प्रतिपक्षादौ न लक्षणसमन्वयसम्भावनेतिभावः।

## दीधितिः

अथ यद्धर्मविशिष्टज्ञाने सत्यवश्यमनुमितिप्रतिबन्धः तदेवात्र प्रतिबन्धकतावच्छेदकमुक्तम्।

## गादाधरी

कार्यानुत्पत्तिव्याप्यतावच्छेदकत्वरूपम् प्रतिवन्धकतावच्छेदकत्वमेवात्र विवक्षितम्, न तु कारणीभूताभावप्रतियोगितावच्छेदकत्वरूपम्, तच्च विरोधिसामग्रीकालीनत्वेऽप्यक्षतमेवेत्यत आह अथेत्यादिना। यद्धर्मेति=यादृशधर्मविशिष्टनिश्चयाव्यवहितोत्तरक्षणत्वव्यापकोऽनुमित्यनुत्पादस्तादृशरूपपरमेवेत्यर्थः। निश्चयत्वनिवेशात् बाधादिविषयकसंशयसंस्काराव्यवहितोत्तरक्षणे कदाचिदनुमित्युत्पादेऽपि न क्षतिः। अत्र=एतल्लक्षणे। प्रतिबन्धकतावच्छेदकमुक्तम्=प्रतिबन्धकतावच्छेदकपदेन विवक्षितम्।

## विमलप्रभा

अथेत्यादिदीधितिग्रन्थं—व्याख्यातुमाह: कार्येति। अत्र=लक्षणे। तच्च=कार्यानुत्पत्तिव्याप्यतावच्छेदकत्वञ्च। अक्षतमेव=वर्त्तत एव। न क्षतिः= ना-

सम्भवः। दीधितौ अथेति। यद्धर्मविशिष्टज्ञाने=यद्रूपावच्छिन्नविषयकज्ञाने। अनुमितिप्रतिबन्धः=प्रतिबन्धकाधीनानुमित्यनुत्पादः। तदेव=तादृशरूपमेव। अयमर्थः। यद्येवं स्यात्तदा मणिसमवहितत्वेन वह्न्यादेः दाहप्रतिवन्धकत्वापत्तिरिति चेत् इष्टत्वादित्याशयेनोक्तम् कार्येति। तथा च द्विविधं हि प्रतिवन्धकतावच्छेदकत्वम्, तत्रैकं स्वाव्यवहितोत्तरत्वसम्वन्धेन कार्यानुत्पत्तिव्याप्यतावच्छेदकमपरञ्च कारणीभूताभावप्रतियोगितावच्छेदकत्वरूपम्। प्रकृते च कार्यानुत्पत्तिव्याप्यतावच्छेदकत्वरूपमेव प्रतिवन्धकतावच्छेदकत्वं विवक्षणीयम, तच्च विरोधिसामग्रीकालीनत्वे वर्त्तत एवेति तथा च नोक्तदोष इत्याशयवता दीधितिकृता तदेवाभिहितमथेत्यादिना एवञ्च यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरक्षणत्वव्यापकः प्रकृतानुमित्यनुत्पादस्तदेवात्र लक्षणे प्रतिबन्धकतावच्छेदकपदेन विवक्षितम्। ह्रदो वह्निमान् जलादित्यादौ विषयतासम्वन्धेन वह्न्यभावविशिष्टह्रदत्वादेरेव ह्रदो वह्निमान् वह्निव्याप्यजलवानित्यनुमितिप्रतिबन्धकतावच्छेदकत्वमिति तद्विशिष्टनिश्चयाव्यवहितोत्तरक्षणत्वव्यापकस्तादृशानुमित्यनुत्पाद इति वह्न्यभाववद्ध्रदमादाय तत्र जलस्य दुष्टत्वमिति।

अत्र निश्चयपदानुपादाने बाधादिविषयकसंशयसंस्काराव्यवहितोत्तरक्षणे कदाचित्प्रकृतानुमितेरुत्पत्त्याऽनुमित्यनुत्पादे तादृशक्षणत्वव्यापकत्वाभावेनासम्भवस्स्यादतः निश्चयपदम। पाषाणमयत्ववत्पर्वतादिकमादाय पर्वतपक्षकवह्निसाध्यकधूमे दुष्टत्वापत्तिवारणाय व्यापकत्वनिवेशः कृत इति।

## दीधितिः

भवति च प्रतिबन्धकीभूतविरोधिसामग्रीकालीनत्वादिविशिष्टपरामर्शे तथा इति चेत्? न वा कालादिसाधारणकारणघटिता सामग्री क्वापि प्रतिबन्धिका।

## गादाधरी

भवति चेति। विरोधिकोट्यनुमितिसामग्र्याः प्रतिबन्धकत्वकथनं प्रतिबन्धक-

समवहिताव्यवहितोत्तरक्षणे कार्यानुत्पादस्यावश्यकतया विरोधिसामग्रीकालीनत्वस्य निरुक्तप्रतिबन्धकतावच्छेदकताया आवश्यकत्वदर्शनाय। तथा=अवश्यमनुमित्यनुत्पादः। विरोधिसामग्र्याः प्रतिबन्धकत्वं यदुक्तं तदेवादौ दूषयति न वेति। नहीत्यर्थः कालादीति। घटितान्तं हेतुगर्भविशेषणम्। तथा च कारणसमुदायः सामग्री, सा च क्वचिदपि न प्रतिबन्धिका, कालादिसाधारणकारणानामपि तदन्तर्निविष्टत्वात्, तेषाञ्च प्रतिबन्धकतावच्छेदककोटौ निवेशस्य निष्फलत्वात् प्रतिबध्यकार्येऽपि तेषामनुगुणत्वादित्यर्थः।

## विमलप्रभा

दीधितौ भवति चेति। तथा=अवश्यानुमित्यनुत्पादः। तथा च स्वलिङ्गकप्रकृतसाध्यकानुमितिप्रतिबन्धकीभूतविरोधिसामग्रीकालीनत्वादिविशिष्टप्रकृतपरामर्शे सति प्रकृतानुमितेरनुत्पत्त्या तादृशक्षणत्वव्यापकताया अनुमित्यनुत्पादे वर्त्तमानतया दशाविशेषे तादृशसत्प्रतिपक्षे लक्षणसंगतिरिति भावः।

टीकायां भवति चेति। निरुक्तप्रतिबन्धकतावच्छेदकतायाः=कार्यानुत्पत्तिव्याप्यतावच्छेदकत्वरूपप्रतिबन्धकतावच्छेदकतायाः। आवश्यकत्वप्रदर्शनाय=तत्र प्रतिबन्धकतावच्छेदकत्वमवश्यमस्तीति प्रदर्शनाय। तदेव=प्रतिबन्धकत्वमेव। आदौ =प्रथमम्। दूषयति=दोषोद्घाटनेन खण्डयति। हेतुगर्भविशेषणम्=कालादीनां यतो न प्रतिबन्धकत्वमत एव विरोधिसामग्री न प्रतिबन्धिकेति। तथा च कालादीनां प्रतिबन्धकत्वभावे च। सा=सामग्री। तदन्तर्निविष्टत्वात्=सामग्रीकोटिप्रविष्टत्वात्। तेषां=कालादिसाधारणकारणानाम्। तेषामनुगुणत्वात्=प्रतिबध्यकार्येऽनुमित्यादावपि प्रयोजकत्वात्। अयमर्थः। प्रतिबन्धकक्षणाव्यवहितोत्तरक्षणे प्रकृतानुमितेरनुत्पत्त्या विरोधिसामग्रीकालीनत्वे प्रतिबन्धकतावच्छेदकतालाभाय तादृशसामग्र्याः प्रतिबन्धकत्वप्रदर्शनं कृतम्। तत्रेदं तत्त्वम् यदि कालादिसाधारणकारणघटितासामग्री प्रतिबन्धिका स्यात्तदा तादृशप्रतिबन्धकतामादाय संगतिसंभावना स्यात्—परन्तु तत्र प्रतिबन्धकतैव नास्ति, कालादिसाधारणकारणघटितकारणसमुदायो नाम सामग्री सा च न प्रतिबन्धिका कालादिसाधारणकारणानां प्रतिबन्धक-

तावच्छेदककुक्षौ प्रवेशे प्रयोजनाभावात् प्रतिबध्यकार्येऽनुमित्यादावपि कालादीनां प्रयोजकत्वात् । एवञ्च सामग्र्या अप्रतिबन्धकत्वेन न तामादाय लक्षणसंगतिसम्भावनेति भावः ।

## दीधितिः

विशेषतस्तत्र तत्सत्त्वे कार्योत्पादस्य दुर्वारत्वात्, किन्तु विरोधिपरामर्शस्तथा ।

## गादाधरी

सत्प्रतिपक्षस्थले विरोधिकोट्यनुमितिसामग्र्यास्तत्कोट्यनुमितिप्रतिबन्धकत्वमत्यन्तासम्भवदुक्तिकमेव, तत्र फलानुत्पादेन सामग्र्या एवासत्त्वादित्याह विशेषत इत्यादिना । तत्र=सत्प्रतिपक्षस्थले । सामग्री न प्रतिबन्धिकेत्यनुषज्यते । कार्योत्पादस्य दुर्वारत्वात् सामग्र्याः कार्यनियतत्वादिति भावः । ननु तर्हि तत्र परामर्शादिरूपानुमितिहेतुसत्त्वादनुमितिः कथं नोत्पद्यत इत्यत आह किन्त्विति । विरोधिपरामर्शः=साध्याभावव्याप्यवत्तानिश्चयः, तथा=अनुमितिप्रतिबन्धकः ।

## विमलप्रभा

सत्प्रतिपक्षस्थले=शब्दोऽनित्यः कृतकत्वादित्यादौ । विरोधिकोट्यनुमितिसामग्र्याः=साध्याभावानुमितिजनककारणसमुदायस्य । तत्र=सत्प्रतिपक्षस्थले । फलानुत्पादेन=विरोधिकोट्यनुमित्यनुदयेन । सामग्र्याः कार्यनियतत्वात्=सामग्रीसत्त्वे कार्योत्पादस्य नियतत्वात् । तत्र=सत्प्रतिपक्षस्थले । अनुमितिप्रतिबन्धकः =तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयस्य यथा प्रतिबन्धकत्वं तथैव तदभावव्याप्यवत्तानिश्चयस्यापि प्रतिबन्धकत्वमिति । अयमर्थः । सत्प्रतिपक्षस्थले सामग्री न प्रतिबन्धिका यतस्तत्र साध्याभावानुमितिकारणकूटस्य समवधानमेव नास्ति अन्यथा सामग्र्याः कार्यजनकत्वनियमेन साध्याभावानुमितिसामग्रीसत्त्वे तदुदयप्रसङ्गेन सत्प्रवि-

पक्षतैव न स्यादिति तत्र सामग्रीसमवधानाभावात् न तामादाय लक्षणसंगतिरिति ।

न च सत्प्रतिपक्षस्थले साध्याभावानुमितिसामग्रचसमवधाने साध्यव्याप्यहेतुमत्ता-परामर्शादिरूपसाध्यानुमितिसामग्रीसत्त्वे कथं न साध्यानुमितिरिति वाच्यम्, विरोधिसामग्रीसम्वलनाभावेऽपि सत्प्रतिपक्षस्थले साध्याभावव्याप्यवत्तानिश्चयरूप-प्रतिबन्धकवशादेव न प्रकृतसाध्यकानुमितिरिति भावः ।

## दीधितिः

यदि च तत्सत्त्वेऽपि तत्साध्ये बाधावतारे नानुमितिप्रतिबन्धः प्रामाणिकस्तदा अप्रामाण्यग्रहाभावस्येव तदभावस्यापि वैशिष्ट्यं तत्र निवेश्यताम् ।

## गादाधरी

ननु यत्र वह्न्यभावव्याप्यवत्तापरामर्शः वह्न्यभावाभाववान् पक्ष इति बाधनिश्चयश्च वर्त्तते तत्र वह्निव्याप्यवत्ताज्ञानेन वह्न्यनुमितिर्जन्यत इत्यनुभवसिद्धम्, विरोधिपरामर्शमात्रस्य प्रतिबन्धकत्वे च तन्नोपपद्यते इत्यत आह यदि चेति । तत्सत्त्वेऽपि = विरोधिपरामर्शसत्त्वेऽपि, तत्साध्ये बाधावतारे = तादृशपरामर्शानुमेयविरोधिकोटेः पक्षेऽभावनिश्चयदशायाम्, नानुमितिप्रतिबन्धः = न प्रकृतसाध्यानुमित्यनुत्पादः । अप्रामाण्यग्रहाभावस्येत्यनन्तरं वैशिष्ट्यमित्यनुषज्यते । तदभावस्य = विरोधिकोटिविरहनिश्चयाभावस्य । तत्र = विरोधिपरामर्शप्रतिबन्धकतावच्छेदकगर्भे निवेश्यतामिति ।

## विमलप्रभा

नन्वित्यादिना किन्त्वित्यादिदीधितिमवतारयति । यत्र = यादृशस्थले । अनुभवसिद्धम् = वह्न्यभावव्याप्यवत्तापरामर्शस्य स्वसाध्यबाधेन हीनबलतया वह्न्यनुमितेरनुभवसिद्धत्वम् । तन्नोपपद्यते = तादृशानुभवं न युक्तियुक्तं भवति । पक्षे = पर्वते । अभावनिश्चयदशायाम् = वह्न्यभावाभाववान् पर्वत इति निश्चयकाले ।

प्रतिबन्धकतावच्छेदकगर्भे = प्रतिबन्धकतावच्छेदककुक्षौ। अयमर्थः। सत्प्रतिपक्ष-स्थले यदि विरोधिपरामर्शमात्रस्यैव प्रतिबन्धकत्वमङ्गीक्रियते तदा यादृशस्थल-विशेषे वह्न्यभावव्याप्यवान् पर्वत इति परामर्शः वह्न्यभावाभाववान् पर्वत इति बाधनिश्चयश्च वर्त्तते तादृशस्थले वह्न्यभावव्याप्यवत्तापरामर्शस्य स्वसाध्यबाधेन हीनबलशालितया वह्निव्याप्यधूमवान् पर्वत इति स्वपरामर्शेन पर्वतो वह्निमानि-त्यनुमितिरनुभवसिद्धा या भवति सा न स्यात् विरोधिपरामर्शरूपप्रतिबन्धकसत्त्वात् अतो यथा तत्प्रकारकबुद्धि प्रत्यप्रामाण्यज्ञानाभावविशिष्टतदभावव्याप्यवत्तानिश्चय-स्य प्रतिबन्धकत्वं तथैव स्वसाध्यस्याभावनिश्चयरूपबाधनिश्चयाभावविशिष्टस्य तद-भावव्याप्यवत्तानिश्चयस्यापि तत्प्रकारकबुद्धिप्रतिबन्धकत्वम् वाच्यम्। एवञ्च वह्-न्यभावाभाववान् पर्वत इति बाधनिश्चयकाले बाधनिश्चयाभावविशिष्टतदभावव्या-प्यवत्तानिश्चयात्मकविरोधिपरामर्शरूपप्रतिबन्धकाभावेनानुमित्युत्पत्तौ बाधकाभावा-दिति भावः।

## गादाधरी

अत्र विपरीतकोटिव्याप्यवत्तापरामर्शदशायां तत्कोटिविरहनिश्चयसत्त्वे त-त्परामर्शे भ्रमत्वग्रहानन्तरमेवानुमितिर्न त्वन्यथेति भ्रमत्वग्रहाभाववैशिष्ट्यनिवेशो-नैवोपपत्तौ तादृशग्रहाभाववैशिष्ट्यनिवेशो व्यर्थ इत्यनिर्भरसूचनाय यदि चेत्युक्तम्। अप्रामाण्यग्रहाभाववैशिष्ट्यस्य दृष्टान्तविधया प्रतिबन्धकतावच्छेदकत्वञ्च दर्शितम्।

## विमलप्रभा

यदि चेत्याद्युक्तस्वरसमाह टीकायामत्रेत्यादि। अत्र = कल्पे। विप-रीतकोटिव्याप्यवत्तापरामर्शदशायां = वह्न्यभावव्याप्यवान् पर्वत इति परामर्शका-ले। तत्कोटिविरहनिश्चयसत्त्वे = वह्न्यभावाभाववानिति निश्चयसत्त्वे। तत्परा-मर्शे = विपरीतकोटिकपरामर्शे, वह्न्यभावव्याप्यवान् पक्ष इति परामर्श इति या-वत्। भ्रमत्वग्रहान्तरमेव = इदं ज्ञानमप्रमा, इदं ज्ञानं भ्रम इत्यादिज्ञानान्तर-मेव। अनुमितिः = पर्वतो वह्निमानित्यनुमितिः। उपपत्तौ = सामञ्जस्ये। तादृ-

शबाधग्रहाभाववैशिष्ट्यनिवेशः =स्वसाध्यबाधनिश्चयाभाववैशिष्ट्यप्रवेशः। अनिर्भरसूचनाय =अस्वरसप्रदर्शनाय। यदि चेत्युक्तं–दीधितिकृतेति शेषः। दृष्टान्तविधया =निदर्शनरूपेण। अयमर्थः। वह्न्यभावव्याप्यवान् पर्वत इति परामर्शदशायां वह्न्यभावाभाववान् पर्वत इति बाधनिश्चयसत्त्वेऽपि विपरीतपरामर्शे यावन्नाप्रामाण्यग्रहस्तावन्न तत्रानुमितिः भ्रमत्वग्रहाभावविशिष्टविपरीतपरामर्शः प्रतिबन्धक इत्येवं रीत्या प्रतिबन्धकत्वकल्पनेनैव सर्वसामञ्जस्यसम्भवे बाधनिश्चयाभाववैशिष्ट्यनिवेशो निरर्थक एवेति दीधितिकृता यदि चेत्यादिना प्रतिपादितः।

निदर्शनविधया अप्रामाण्यग्रहाभावे प्रतिबन्धकतावच्छेदकत्वञ्च प्रदर्शितमिति भावः।

## दीधितिः

यथा च भ्रमप्रमासाधारणविरोधिपरामर्शसत्त्वेनानुमितिस्तथा विधबाधग्रहेऽपीत्यतिप्रसङ्गः। न चातीतादौ लिङ्गे विरोधिपरामर्शकालीनत्वमपि।

## गादाधरी

नन्वस्तु विरोधिपरामर्शमात्रं प्रतिबन्धकम् तथापि तद्घटितविरोधिसामग्रीकालीनत्वस्य फलानुत्पादनियतत्वात्तादृशसामग्रीकालीनत्वस्य निरुक्तप्रतिबन्धकतावच्छेदकं दुरपह्नवमेव, एवं विरोधितथाविधपरामर्शकालीनत्वमादाय दशाविशेषे सत्प्रतिपक्षितस्य हेतोर्दुष्टत्वमुपपद्यत एवेत्यतो विरोधिपरामर्शकालीनत्वसमशीलबाधादिभ्रमकालीनत्वमादाय सद्धेतावतिप्रसङ्गमाह यथा चेति। तथाविधेति। विरोधिभ्रमप्रमासाधारणेत्यर्थः। अपीत्यनन्तरं नानुमितिरित्यनुषज्यते, तथा च तादृशबाधादिकालीनत्वमपि निरुक्तप्रतिबन्धकतावच्छेदकत्ववद्भवत्येवेत्यतोऽतिप्रसङ्गः इति। बाधादेरनित्यदोषतायाः केनाप्यनभ्युपगमेन इष्टापत्त्यनवकाशादिति भावः। विरोधिपरामर्शकालीनत्वमादाय सर्वत्र सत्प्रतिपक्षिते दुष्टत्वं नोपपादयि-

तुं शक्यत इत्याह न चेति । नहीत्यर्थः। तथा चातीतादिसद्धेतौ विरोधिपरामर्शदशायां भवन्मतसिद्धं सत्प्रतिपक्षत्वं नोपपद्यत इति भावः।

विमलप्रभा

शङ्कते यथाचेत्यादि ग्रन्थमवतारयितुं गदाधरः। नन्वित्यादिना। तथापि=विरोधिपरामर्शमात्रस्य प्रतिबन्धकत्वेऽपि। तद्घटितेति,विरोधिपरामर्शघटितेत्यर्थः। ज्ञानस्य=प्रकृतपरामर्शस्य। फलानुत्पादनियतत्वात्=फलानुत्पत्तिव्याप्यत्वात्। तादृशसामग्रीकालीनत्वस्य=विरोधिसामग्रीकालीनत्वस्य। निरुक्तेति। कार्यानुत्पादव्याप्यतावच्छेदकत्वरूपेत्यर्थकम्। तथा च=भ्रमसाधारणबाधादिज्ञानोत्तरानुमित्यनुत्पादे च। तादृशेति। विरोधिभ्रमप्रभासाधारणेत्यर्थकम्। निरुक्तप्रतिबन्धकता=प्रकृतानुमितिप्रतिबन्धकता। तथा च=अतीतानागतहतौ तादृशकालीनत्वाभावे च। अयमर्थः। विरोधिपरामर्शमात्रं प्रतिबन्धकं प्रकृतानुमितेः, तथापि विरोधिपरामर्शघटिता या विरोधिसामग्री तत्कालीनज्ञानरूपप्रकृतपरामर्शसत्त्वेऽप्यनुमित्यनुत्पादस्यैवानुभवसिद्धतया कार्यानुत्पादव्याप्यतावच्छेदकत्वरूपप्रतिबन्धकतावच्छेदकत्वस्य बाधनिश्चयाभावविशिष्टविरोधिसामग्रीकालीनत्वे वर्त्तमानतया तादृशप्रतिबन्धकतामादाय दशाविशेषे सत्प्रतिपक्षे संगमनं कार्यमिति भावः।

यदि भ्रमप्रमासाधारणविरोधिकोटिपरामर्शघटितसामग्रीकालीनत्वेन परामर्शस्य स्वसाध्यकानुमितिप्रतिबन्धकत्वं स्वीक्रियते तदा पर्वतो वह्निमान् धूमादित्यादावपि धूमस्य दुष्टत्वापत्तिः, तत्रापि वह्न्यभाववान् पर्वत इति बाधभ्रमकालीनत्वेन वह्निव्याप्यधूमवान् पर्वत इति परामर्शस्यापि पर्वतो वह्निमानित्यनुमितिं प्रति प्रतिबन्धकतया निरुक्तभ्रमकालीनत्वस्य धूमे सत्त्वात्। न चेष्टापत्तिर्बाधस्यानित्यदोषत्वादिति वाच्यम्। बाधेऽनित्यदोषत्वस्य केनाप्यनङ्गीकृततयेष्टापत्तिं कर्त्तुमशक्यत्वादिति। न च विरोधिपरामर्शान्यभ्रमकालीनान्यत्वं प्रतिबन्धकतावच्छेदके निवेश्य सद्धेतावतिव्याप्तिवारणं कर्त्तुं शक्यमिति वाच्यम्। विभिन्नका-

लीनयोः सम्बन्धसामान्येनाधाराधेयभावविरहेणातीतानागतसद्धेतौ विरोधिपरामर्शकाले विरोधिकोटयनुमितिसामग्रीकालीनत्वस्य केनापि सम्बन्धेनातीतादिहेतावभावेन सत्प्रतिपक्षेऽव्याप्तिदुर्वारैवेति भावः ।

## दीधितिः

यदपि यद्विषयकत्वेन ज्ञानस्य अनुमितिप्रतिबन्धकत्वं तद्वत्त्वमेव दुष्टत्वं वाच्यम्, सत्प्रतिपक्षे च विरोधिव्याप्त्यादिकमेव तथा ।

## गादाधरी

सत्प्रतिपक्षिते सद्धेतौ विरोधिव्याप्यवत्पक्षस्याप्रसिद्धावपि प्रतिबन्धकीभूतभ्रमविषयप्रसिद्धविरोधव्याप्त्यादिरेव दोष इति मतं दूषयति यदपीति । यद्विषयकत्वेनेति तृतीयार्थः स्वरूपसम्बन्धरूपावच्छेदकत्वं न त्वनतिरिक्तवृत्तित्वम्, तथा सति विरोधिव्याप्त्यादेर्दोषत्वानुपपत्तेः । प्रतिबन्धकतायां ज्ञाननिष्ठत्वविशेषणं कामिनीजिज्ञासादिनिष्ठप्रतिबन्धकतावच्छेदकधर्मेऽतिप्रसङ्गवारणाय ।

## विमलप्रभा

सत्प्रतिपक्षितसद्धेतौ = शब्दो नित्यः शब्दत्वादित्यादिस्थलीयशब्दत्वादौ । विरोधिव्याप्यवत्पक्षस्य = नित्यत्वव्याप्यासमवेतद्रव्यत्वादिमच्छब्दस्य । अप्रसिद्धावपि = अप्रसिद्धत्वेऽपि । तृतीयार्थः = तृतीयाविभक्तेरर्थः । तथासति = अनतिरिक्तवृत्तित्वस्य तृतीयार्थत्वे सति । दोषत्वानुपपत्तेः = दोषत्वं न स्यात् । प्रतिबन्धकतायां = प्रकृतानुमितिप्रतिबन्धकतायाम् । ज्ञाननिष्ठत्वविशेषणं = निश्चयनिष्ठत्वविशेषणम् । धर्मे = कामिनीत्वे कामिनीज्ञानत्वे वा । अतिप्रसंगवारणाय = अतिव्याप्तिवारणाय । अयमर्थः । शब्दो नित्यः शब्दत्वादित्यादिसत्प्रतिपक्षितसद्धेतौ नित्यत्वव्याप्यासमवेतद्रव्यत्वादिमच्छब्दस्याऽप्रसिद्धावपि शब्दो नित्य इत्यनुमितिप्रतिबन्धकीभूतभ्रमविषयतया प्रसिद्धविरोधिव्याप्त्यादिरेव तत्र दोष इति केषाञ्चिन्मतं निर्दिश्य यदपी-

त्यादिना निषेधयति । अत्र च मते यद्विषयता भवति निश्चयनिष्ठानुमितिप्रतिबन्धकतावच्छेदिका तत्त्वमेव लक्षणार्थः । अत्रावच्छेदकत्वं स्वरूपसम्बन्धविशेषरूपम्, न त्वनतिरिक्तवृत्तित्वात्मकम्; तथा सति अनुमितिप्रतिबन्धकतारहितहेत्वविषयकनिश्चयेऽपि विरोधिव्याप्त्यादिविषयकत्वस्य वर्त्तमानतया विरोधिव्याप्त्यादिविषयकत्वस्य प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वेन यत्पदेन विरोधिव्याप्त्यानिविषयकत्वस्योपादानासम्भवेन विरोधिव्याप्त्यादेर्दोषत्वानुपपत्तिरिति । अत्र यद्विषयत्वेन प्रतिबन्धकता तत्त्वमित्येतावन्मात्रोक्तौ ज्ञानपदानुपादाने कामिनीजिज्ञासायाः स्वविषयकज्ञानान्यज्ञानत्वावच्छिन्नं प्रति प्रतिबन्धकतया प्रकृतानुमितिप्रतिबन्धकता या कामिनीजिज्ञासानिष्ठा तदवच्छेदकत्वस्य कामिनीत्वे सत्त्वेन तत्रातिव्याप्तिस्स्यादतो निश्चयार्थकं ज्ञानपदम् । तथा च तादृशप्रतिबन्धकतायाः निश्चयनिष्ठत्वाभावान्नोक्तदोष इति ।

## दीधितिः

तद्वत्त्वमपि हेतोस्तज्ज्ञानरूपसम्बन्धेन, तस्य समूहालम्बनरूपतया हेतुद्वयविषयकत्वादिति ।

## गादाधरी

ननु विरोधिकोटिव्याप्यत्वस्य पर्वतो वह्निमान् धूमात् पर्वतो न वह्निमान् जलत्वादित्यादौ प्रतिबन्धकीभूतज्ञानविषयसमवायादिसम्बन्धावच्छिन्नपक्षधर्मतायाश्च प्रकृते हेतावभावात् कथं तस्य दुष्टत्वमत आह तद्वत्त्वमपीति । विरोधिव्याप्त्यादिमत्त्वमपीत्यर्थः । तज्ज्ञानरूपेति = स्वविषयकज्ञानविषयतात्मकेत्यर्थः । सम्बन्धविशेषस्याविवक्षितत्वादिति भावः ।

## विमलप्रभा

दीधितौ तद्वत्त्वमपीति । तद्वत्त्वं = विरोधिव्याप्त्यादिमत्त्वम्, हेतोःसत्प्रतिपक्षितत्वादिहेतोः । तज्ज्ञानरूपसम्बन्धेन = स्वविषयकज्ञानविषयत्वसम्बन्धेन ।

टीकायां नन्विति । प्रकृते हेतौ = धूमादिहेतौ । तस्य = धूमादेः जलत्वादेश्च । स्वविषयज्ञानविषयतात्मकेति = विरोधिव्याप्त्यादिः स्वपदार्थः, तद्विषयकप्रकृतहेतुविषयकञ्च यत् ज्ञानं तद्विषयता स्वरूपसम्बन्धेनेति तदर्थः । सम्बन्धविशेषस्य = स्वरूपसंयोगादेः । अयमर्थः । निरुक्तार्थकरणेऽपि पर्वतो वह्निमान् धूमात् पर्वतो वह्न्यभाववान् जलत्वादित्यादौ सत्प्रतिपक्षितसद्धेतुभूतधूमे जलत्वे च सत्प्रतिपक्षितत्वानुपपत्तिः, तत्रानुमितिप्रतिबन्धकतावच्छेदकविरोधिव्याप्यत्वस्य जलत्वे वह्न्यभावव्याप्यत्वस्य धूमेऽसत्त्वादिति चेन्नैतत्सारम् समूहालम्बनात्मकस्य वह्निव्याप्यधूमवान् पर्वतो वह्न्यभावव्याप्यजलत्ववानित्याकारकस्य विरोधिव्याप्त्यादिविषयकज्ञानस्य सम्भवतया तादृशज्ञानस्य धूमजलत्वरूपहेतुद्वयविषयकतया विरोधिव्याप्त्यादिविषयकहेतुविषयकसमूहालम्बनज्ञानीयविषयतारूपसम्बन्धेन विरोधिव्याप्त्यादिमत्त्वं धूमे जलत्वे च सत्त्वात् भवत्येव दुष्टताव्यवहार इति भावः ।

## दीधितिः

तदपि तुच्छम् साध्याभाववत्पक्षविषयकत्वेन साध्याभाववत्पक्षज्ञानप्रमात्वविषयकत्वेन वा ज्ञानस्य प्रतिबन्धकत्वं तस्य च साध्यवत्यपि पक्षे सम्भवादतिव्याप्तेः ।

## गादाधरी

तादृशसम्बन्धवत्तां प्रकृतहेतावुपपादयति तस्येति । विरोधिव्याप्त्यादिज्ञानस्येत्यर्थः । समूहालम्बनरूपतयेति । न चैवं क्रमिकपरामर्शद्वयस्थले सत्प्रतिपक्षानुपपत्तिरिति वाच्यम्, तत्रापि तादृशव्याप्त्यादिप्रकृतहेतुविषयकपरमेश्वरज्ञानादिकमादाय तद्वत्तोपपत्तेः । साध्याभाववत्पक्षविषयकत्वेन = साध्याभावप्रकारकपक्षावगाहित्वेन । साध्याभाववत्पक्षज्ञानेति = साध्याभावप्रकारकपक्षज्ञानांशे प्रमात्वविषयकत्वेनेत्यर्थः । मतभेदेन विकल्पः, तस्य = तादृशज्ञानस्य । साध्यवत्यपि पक्षे = पक्षे साध्यवत्यपि, पक्षस्य साध्यवत्त्वे सत्यपीति यावत् ।

पर्वतो वह्निमान् धूमादित्यादौ भ्रमात्मकबाधादिज्ञाननिष्ठप्रतिबन्धकतावच्छेदकविषयितानिरूपकवह्न्यभावादेः स्वविषयकज्ञानविषयत्वादिसम्बन्धेन वैशिष्ट्यस्य हेतोः सत्त्वादिति भावः।

## विमलप्रभा

तादृशसम्बन्धवत्तां = स्वविषयकज्ञानविषयतात्माकसम्बन्धवत्ताम् । प्रकृतहेतौ = सत्प्रतिपक्षितधूमादिहेतौ । शङ्कते न चैवमिति । न चेत्यस्य वाच्यमित्यनेनान्वयः । एवं = समूहालम्बनपरामर्शमादाय दुष्टत्वव्यवहारोपपत्तौ च । क्रमिकपरामर्शस्थले = यत्र प्रथमम् वह्निव्याप्यधूमवान् पर्वत इति परामर्शः, तदनन्तरं वह्न्यभावव्याप्यजलवान् पर्वत इति परामर्शस्तत्र स्थले । सत्प्रतिपक्षतानुपपत्तिः = हेतोर्दुष्टत्वानुपपत्तिः । तत्रापि = क्रमिकपरामर्शद्वयस्थलेऽपि । तादृशव्याप्त्यादीति, विरोधिव्याप्त्यादीत्यर्थः । तद्वत्त्वोपपत्तेः = सत्प्रतिपक्षितत्वोपपत्तेः । पक्षावगाहित्वेन = पक्षविशेष्यकत्वेन । मतभेदेन = पक्षधरमिश्रदीधितिकारयोः परस्परमतभेदेन । तादृशज्ञानस्य = पक्षधर्मिकसाध्याभावप्रकारकज्ञानस्य । भ्रमात्मकबाधज्ञानेति, पर्वतो वह्न्यभाववानित्याकारकज्ञानेति तदर्थः । स्वविषयकेति, स्वं—वह्न्यभावादिः । हेतौ = धूमादौ । अयमर्थः । यादृशस्थलविशेषे पर्वतो वह्निव्याप्यधूमवान् वह्न्यभावव्याप्यजलवांश्च पर्वत इति समूहालम्बनात्मकं ज्ञानं न जातम् किन्तु पृथक् पृथगेव ज्ञानं जातम् तत्र प्रकृतहेतुभूतधूमादिविषयकज्ञानविषयत्वादिसम्बन्धेनापि विरोधिव्याप्त्यादिमत्त्वस्य धूमादौ विरहान्न तादृशधूमादौ सत्प्रतिपक्षितत्वव्यवहार इति केनचिदुक्तम्—तन्न रमणीयम् । यतः क्रमिकपरामर्शद्वयस्थलेऽपि परमेश्वरस्य सर्वज्ञतानिर्वाहाय विरोधिव्याप्त्यादिविषयकप्रकृतहेतुविषयकसमूहालम्बनज्ञानसम्भवेन तादृशज्ञानमादायैवोक्तसंसर्गेण धूमे जलत्वे च सत्प्रतिपक्षितत्वव्यवहारोपपत्तिरिति भावः । अत्र यद्यपि पक्षधर्मिकसाध्याभावप्रकारकनिश्चयत्वेन प्रतिबन्धकतास्वीकारेऽपि पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभाववान् पर्वत इत्याकारकभ्रमात्मकबाधज्ञानीयवह्न्यभावविषयता भवति पर्वतो वह्निमानित्यनुमितिप्रतिबन्धकतावच्छेदि-

केति वह्न्यभावविषयकधूमविषयकसमूहालम्बनमादाय तद्विषयतारूपस्वविषयकज्ञान-विषयत्वसम्बन्धेन वह्न्यभाववत्त्वस्य धूमे सत्त्वात् भवति सद्धेतावतिव्याप्तिस्तेनेदं लक्षणम् निर्दुष्टमिति भावः ।

## गादाधरी

इदमुपलक्षणम् वह्निमान् धूमादित्यादौ विरोधिपरामर्शशून्यकालेऽपि तद्विषय-विरोधिव्याप्त्यादिकमादायापि हेतोर्दुष्टत्वप्रसङ्गो बोध्यः, तत्रापि पक्षांशे तद्विशिष्ट-विशेषणकसमूहालम्बनज्ञानसम्बन्धेन हेतौ वैशिष्ट्यसम्भवादिति ।

## विमलप्रभा

प्रोक्तलक्षणवादिमते सद्धेतौ वह्निमान् धूमादित्यादौ विरोधिपरामर्शशून्यका-लेऽतिव्याप्तिमाशङ्कते इदमुपलक्षणमित्यादिना । विरोधिपरामर्शशून्यकाले=वह्न्य भावव्याप्यजलवान् पर्वत इति परामर्शविरहदशायाम् । तद्विषयकेति, धूमादिविषय-केत्यर्थः । तत्रापि=धूमादिहेतावपि । पर्वताद्यंशे । तद्वैशिष्ट्यसम्भवात्=वि-रोधिव्याप्त्यादिमत्त्वसत्त्वात् । अयमर्थः । उक्तलक्षणकर्तृनये सद्धेतौ वह्निमान् धू-मादित्यादौ विरोधिपरामर्शविरहदशायां विरोधिव्याप्त्यादिविषयकं धूमादिविषयकञ्च यत् समूहालम्बनात्मकं ज्ञानं तादृशज्ञानविषयतासम्बन्धेन धूमादौ विरोधिव्याप्त्यादि-मत्त्वसत्वादतिप्रसङ्गः दुर्वार एवेति ।

## दीधितिः

**विशिष्टविषयकत्वेन प्रतिबन्धकत्वम्, विशिष्टञ्च तत्राऽप्रसिद्धमिति चेत्, तत्किं सर्वत्र सत्प्रतिपक्षे साध्याभावव्याप्यवान् पक्षः प्रसिद्धः । यथा कथञ्चित्सम्बन्धेन तद्वत्त्वञ्चातिप्रसक्तम्,**

धूमादेरपि ज्ञानरूपेण तदाश्रयत्वादिना वा सम्बन्धेन व्यभिचारादिमत्त्वात् ।

## गादाधरी

अनतिरिक्तवृत्तित्वरूपमेवावच्छेदकत्वं विवक्षणीयमित्यभिप्रायेण बाधभ्रमप्रतिबन्धकतामादायातिप्रसङ्गस्य उद्धारमाशङ्कते विशिष्टेति । साध्याभावविशिष्टसाध्याभावविशिष्टपक्षविषयकत्वमेव प्रतिबन्धकतानतिरिक्तवृत्ति न तु साध्याभावादिमात्रविषयकत्वमित्यर्थः । विशिष्टञ्च=साध्याभावविशिष्टञ्च, तत्र, बाधभ्रमस्थले सत्प्रतिपक्षस्थले सर्वत्र तादृशविशिष्टं प्रसिद्धमित्यभिमानः । भ्रमं निराकरोति तत्किमिति । पक्षावृत्तिसाध्यकसत्प्रतिपक्षे साध्याभावव्याप्यविशिष्टपक्षस्य प्रसिद्धत्वात् सर्वत्रेति । सत्प्रतिपक्षे=सत्प्रतिपक्षतया भवन्मतसिद्धे इत्यर्थः । प्रसिद्ध इति । तथा चानतिरिक्तवृत्तित्वरूपमवच्छेदकत्वं विवक्षितमशक्यमिति दर्शितातिव्याप्तिर्दुर्वारैवेति भावः । तद्वत्त्वघटकसम्बन्धं वितर्क्यापि दूषयति यथा कथञ्चिदिति । अतिप्रसक्तं=सद्धेतुसाधारणम्, तथा च पर्वतादौ वह्न्यादिमत्त्वे साध्ये धूमादौ दुष्टताव्यवहारापत्तिरिति भावः

तादृशसम्बन्धस्य धूमादिरूपसद्धेतुसाधारणत्वं स्फुटयति धूमादेरिति । ज्ञानरूपेण=स्वविषयकज्ञानविषयत्वेन । तदाश्रयत्वादिना,आदिना एककालीनत्वादिपरिग्रहः । व्यभिचारादिमत्त्वात्=वह्न्यभाववद्वृत्तित्वसत्त्वात् ।

## विमलप्रभा

सद्धेतुभूतधूमादावतिप्रसङ्गवारणायोपायमाह अनतिरिक्तेति । विवक्षणीयम्=यद्विषयकत्वेनेत्यत्र तृतीयाविभक्तेरिति शेषः । बाधभ्रमप्रतिबन्धकता=पर्वतो वह्न्यभाववानित्याकारकभ्रमात्मकबाधज्ञाननिष्ठप्रतिबन्धकता । अतिप्रसंगस्य=धू-

मादावतिव्याप्तिः । उद्धारम=वारणम् । आशङ्कते=दीधितिकार इति शेषः। तादृशविशिष्टम्=साध्याभावव्याप्यविशिष्टम् । पक्षावृत्तिसाध्यकसत्प्रतिपक्षे=जलावृत्तिवह्न्यादिसाध्यकसत्प्रतिपक्षे । साध्याभावव्याप्यविशिष्टपक्षस्य=वह्न्यभावव्याप्यजलत्वादिविशिष्टजलस्य । भवन्मतसिद्धे=दशाविशेषे सद्धेतोर्दुष्टतावादिमतसिद्धे। तथा च=तादृशसद्धेतौ दुष्टत्वानुपपत्तिभयेन च। दर्शितातिव्याप्तिः=बाधभ्रममादाय धूमादावतिव्याप्तिः । तथा च=यथा कथञ्चित् सम्बन्धेन तद्वत्त्वस्य सद्धेतुसाधारण्ये च। अयमर्थः। जलं वह्निमज्जलादित्यादौ जलावृत्तिवह्निसाध्यकसत्प्रतिपक्षे वह्न्यभावव्याप्यविशिष्टजलत्वावच्छिन्नजलस्य प्रसिद्धत्वेऽपि पर्वतो वह्निमान् धूमादित्यादौ सत्प्रतिपक्षितसद्धेतौ वह्न्यभावव्याप्यविशिष्टस्याऽप्रसिद्धया अतो नानतिरिक्तवृत्तित्वं तृतीयार्थः, न वा विशिष्टविषयकत्वेन प्रतिबन्धकत्वमिति, इत्थञ्च पर्वतो वह्न्यभाववानित्याकारकभ्रमज्ञानीयवह्न्यभावादिमत्त्वस्य धूमे सत्त्वात् तस्यापि सद्धेतौ दुष्टता स्यात्।

एवम् तद्वत्त्वघटकसम्बन्धोऽपि निर्वक्तुमशक्य एव यदि यथा कथञ्चित् सम्बन्धेन तद्वत्त्वमुच्यते तदा धूमो वह्निव्यभिचारीत्याकारकव्यभिचारज्ञानविषयत्वसम्बन्धेन धूमे वह्निव्यभिचारवत्त्वसत्त्वेन, एवम् वह्निव्यभिचाराधिकरणं यत् द्रव्यत्वं तद्वत्त्वस्याश्रयतासम्बन्धेन धूमे सत्त्वेन एककालीनत्वसम्बन्धेन वह्न्यभाववद्वृत्तित्वस्य वा धूमादौ सत्त्वेन भवन्मते तस्यापि दुष्टत्वं स्यादेवेति भावः।

## दीधिति

याद‍ृशसम्बन्धावगाहित्वेन ज्ञानस्य प्रतिबन्धकत्वं तेन तद्वत्त्वञ्च न सर्वत्र सत्प्रतिपक्षिते हेतावस्ति च क्वचित् सद्धेताविति कृतं पल्लवितेन।

## गादाधरी

ननु यादृशसम्बन्धावच्छिन्नयत्प्रकारतानिरूपितधर्मिविशेष्यताशालित्वेन ज्ञानस्य प्रतिबन्धकत्वं तेन सम्बन्धेन तद्वत्त्वमेव दुष्टत्वमिति वाच्यम्। एवञ्च स्वरूपसम्बन्धावच्छिन्नसाध्याभाववद्वृत्तित्वादिप्रकारतानिरूपितहेतुविशेष्यताशालित्वेनैव व्य-

भिचारादिज्ञानस्य प्रतिबन्धकतया तेन सम्बन्धेन तद्वत्त्वस्य च प्रकृतहेतावभावात् नातिव्याप्तिरित्याशङ्कां निराकुरुते सर्वत्र सत्प्रतिपक्षित इति। ह्रदो वह्निमान् धूमादित्यादिस्थले धूमादिरूपहेतौ व्याप्यताघटकसमवायादिसम्बन्धेन वह्न्यभाव-व्याप्यधूमादिमत्तायाः सत्त्वात् सर्वत्रेत्युक्तम्। क्वचित्सद्धेताविति। सद्धेतुता-दशायां क्वचिदित्यर्थः। पर्वतो वह्निमान् धूमादित्यादौ विरोधिपरामर्शासमवधान-दशायामपि प्रतिबन्धकतावच्छेदकप्रकारताश्रयवह्न्यभावतद्व्याप्यादेः तादृशप्रकारता-वच्छेदकस्वरूपादिसम्बन्धेन धूमादिवृत्तित्वादिति भावः।

## विमलप्रभा

नन्वित्यादिग्रन्थेन दीधितिमवतारयति। तेन सम्बन्धेन=निरुक्तप्रकारता-वच्छेदकस्वरूपसम्बन्धेन। तद्वत्त्वस्य=वह्न्यभाववद्वृत्तित्वादिरूपव्यभिचारादि-मत्त्वस्य। प्रकृतहेतौ=धूमादौ। असमवधानदशायाम्=असत्त्वकाले। तद्व्याप्यादेः =वह्न्यभावव्याप्यादेः। तादृशेति वह्न्यभावादिप्रकारतेत्यर्थकम्। अयमर्थः। पूर्वोक्ततादृशधूमे दुष्टत्वापत्तिवारणाय यद्रूपावच्छिन्नयादृशसम्बन्धावच्छिन्नप्रकारता-निरूपितविशेष्यताशालित्वेन ज्ञानस्य प्रतिबन्धकता तेन सम्बन्धेन तद्वत्त्वमेव दुष्टता-व्यवहारनियामकं वाच्यम्। तथा च प्रकृते स्वरूपसम्बन्धावच्छिन्नवह्न्यभाववद्वृत्ति-त्वत्वावच्छिन्नप्रकारतानिरूपितहेतुभूतजलत्वावच्छिन्ननिष्ठविशेष्यताशालित्वेन व्यभि-चारज्ञानस्य प्रतिबन्धकतया स्वरूपसम्बन्धेन वह्न्यभाववद्वृत्तित्वस्य धूमे विरहान्न धूमे दुष्टताव्यवहार इति। अथैवं रीत्या परिष्कारकरणे ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावव्याप्यधूमत्ववत्त्वस्य समवायेन धूमे सत्त्वात्तत्र दुष्टताव्यवहारसम्भवेऽपि पर्वतो द्रव्यं धूमादित्यादौ द्रव्यत्वाभावस्य समवायादिसम्बन्धेन धूमेऽसत्त्वादव्याप्ति-रित्याशयेन क्वचिदित्युक्तम्।

अत्रापि लक्षणे पर्वतो वह्निमान् धूमादित्यादौ विरोधिपरामर्शद्वयविरहदशायां तादृशानुमितिप्रतिबन्धकतावच्छेदकस्वरूपसम्बन्धेन वह्न्यभावस्य वह्न्यभावव्याप्य-धूमत्वस्य च समवायसम्बन्धेन धूमे सत्त्वात् अतिव्याप्तिदुर्वारैवेति भावः।

## गादाधरी

यत्तु ज्ञानसम्बन्धेन तद्वत्त्वमेव दुष्टत्वम्, ज्ञानञ्च विशिष्टव्यवहाराद्यनुरोधात् कदाचिदेव क्वचिदेव कस्यचित् सम्बन्धः, एवञ्च विरोधिव्याप्त्यादेर्ज्ञानं विरोधिपरामर्शदशायामेव प्रकृतहेतौ तत्सम्बन्धः, तदैव तत्र दुष्टताव्यवहारात्, साध्याभावादेर्ज्ञानन्तु तत्र न कदाचिदपि तथा, परमेश्वरादिसाधारणं साध्याभावविशिष्टपक्षादेर्ज्ञानन्तु तत्र सर्वदैव इति। तत्तु हास्यास्पदमेव, सकलाभियुक्तसाधारणस्य नियतव्यवहारस्यासिद्धत्वात् वासनाविशेषवतां तादृशव्यवहारस्य विपरीतस्यापि सम्भवात् नियतसम्बन्धत्वासाधकत्वादिति।

## विमलप्रभा

मिश्रानुयायिमतमुपन्यस्य निषेधयति यत्त्विति। अस्य हास्यास्पदमेवेत्यनेन सम्बन्धः। ज्ञानसम्बधेन = स्वविषयकज्ञानविषयत्वसम्बन्धेन। तद्वत्त्वमेव = विरोधिव्याप्त्यादिमत्त्वमेव। विशिष्टव्यवहाराद्यनुरोधात् = अत्रायं हेतुर्दुष्ट इत्यादिव्यवहारवलात्। एवञ्च = कदाचित् कस्यचित् क्वचित् स्वविषयकज्ञानविषयत्वस्य सम्बन्धकल्पने च। तत्सम्बन्धः = दुष्टताव्यवहारनियामकसम्बन्धः। तदैव = विरोधिपरामर्शदशायामेव। तत्र = प्रकृतहेतौ। तत्र = वाधस्थले। तथा = संसर्गः। सर्वदैव = कादाचित्कत्वाभावादिति शेषः। सकलाभियुक्तपुरुषसाधारणस्य = सकलपरीक्षकनिष्ठस्य। नियतव्यवहारस्य = ज्ञाननिष्ठसम्बन्धतासाधकव्यवहारस्य। वासनाविशेषवतां = मिथ्याज्ञानजन्यसंस्कारवतां पुरुषाणाम्। विपरीतस्यापि = दुष्टेऽप्यदुष्टत्वरूपस्य। ज्ञानस्य नियतसम्वन्धत्वासाधकत्वात् = ज्ञाननिष्ठसम्बन्धसाधकत्वाभावात्।

अयमर्थः। मिश्रमतावलम्बिनाम्मते स्वविषयकज्ञानविषयत्वसम्बन्धेन दोषवत्त्वमेव दुष्टताव्यवहारनियामकम्। अयमत्र हेतुर्दुष्ट इति विशिष्टव्यवहारदर्शनात् कदाचित् क्वचित् कस्यचित् ज्ञानस्य सम्बन्धत्वम् स्वीकरणीयम्। तथा च विरोधिपरामर्शविरहकाले स्वविषयकज्ञानविषयत्वस्य सम्बन्धत्वास्वीकारेण न सद्धेतावतिव्याप्तिः। सत्प्रतिपक्षिते च विरोधिव्याप्त्यादेर्ज्ञानविषयत्वरूपसम्बन्धमादाय लक्षणसङ्गतिः।

बाधस्य नित्यदोषतया तत्र सर्वदैव स्वविषयकज्ञानविषयत्वस्य सम्बन्धता। परमेश्वरसाधारणसाध्याभाववत्पक्षज्ञानन्तु सर्वदैवास्त्यतो स्वज्ञानस्य कादाचित्कत्वाभावान्न सम्बन्धत्वमतो नोक्तदोषः।

परन्तु निखिलाभियुक्तपुरुषसाधारणनियतव्यवहारविरहेण मिथ्याज्ञानजनितसंस्कारवशेनादुष्टे दुष्टत्वस्य दुष्टेऽदुष्टत्वस्य च विपरीतव्यवहारदर्शनेन च नियतसम्बन्धसाधकव्यवहारविरहान्न ज्ञानस्य सम्बन्धत्वमिति मिश्रानुयायिमतमनादरणीयमेव।

## चिन्तामणिः

यद्यपि बाधसत्प्रतिपक्षयोः प्रत्यक्षशाब्दज्ञानप्रतिबन्धकत्वान्न लिङ्गाभासत्वम्, तथापि ज्ञायमानस्याऽऽभासस्याऽत्र लक्षणम्।

## दीधितिः

यद्यपीति। स्थाणुत्वाभावस्य तद्व्याप्यकरादेश्च निश्चये स्थाणुत्वप्रत्यक्षशाब्दयोरनुदयात्।

## गादाधरी

यद्विषयकत्वेनेति। यथाश्रुतकल्पे कामिनीजिज्ञासाविषये अतिव्याप्तिरित्यसाधारणप्रतिबन्धकताघटितमेव लक्षणं करणीयम् तत्रैवाशङ्कते मूले यद्यपीति। ज्ञायमानं सदित्यादितृतीयलक्षणाभिप्रायेण "तथापी"त्यादिनेति बोध्यम्। बाधसत्प्रतिपक्षज्ञानयोः प्रत्यक्षशाब्दज्ञानप्रतिबन्धकत्वमभिधाय बाधसत्प्रतिपक्षयोरनुमितिमात्रवृत्तिधर्मावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकताश्रयाभावप्रतियोगिज्ञानविषयत्व - स्वरूपं लिङ्गासाधारणदोषत्वं न सम्भवतीत्याक्षिप्तं मणिकृता, तादृशप्रतिबन्धकतायाञ्च युक्तिर्नोक्तेति न्यूनतापरीहाराय तत्र युक्तिमाह दीधितौ स्थाणुत्वाभावस्येति। स्थाणुत्वप्रत्यक्षशाब्दयोरिति। समानधर्मितावच्छेदककस्य स्थाणुत्वप्रकारकस्य लौकिकसन्निकर्षाद्यजन्यशाब्दस्य चेत्यर्थः।

दीधितिः

न चैवं नरशिरःकपालं शुचि प्राण्यङ्गत्वादित्यादिनाप्यागमप्रतिरोधः स्यात्, तर्कानुकूलतर्काभावेन वलवत्तरागमविरोधेन च व्याप्तिनिश्चयस्यानुत्पत्तेरिति भावः।

गादाधरी

एवम्—शाब्दबुद्धौ वाधतदभावव्याप्यवत्ताज्ञानयोः प्रतिबन्धकत्वे। नरशिरःकपालमिति। नरशिरःकपालस्य शुचित्वानुमापकेन तद्धर्मिकप्राण्यङ्गत्वपरामर्शेन स्वतः फलद्वारा चागमजन्याशौचबोधविरोधः स्यादित्यर्थः। स चानुभवविरुद्धः, तत्र प्राण्यङ्गत्वज्ञानदशायामपि शाब्दाशौचज्ञानस्यानुभवसिद्धत्वादिति भावः।

विमलप्रभा

मूले यद्यपीति। यद्यपीत्यस्य तथापीत्यनेनान्वयः। न लिङ्गाभासत्वं=न लिङ्गासाधारणदोषत्वम्। ज्ञायमानस्याभासस्य=विशिष्टबुद्धित्वावच्छिन्नसामान्यप्रतिबन्धकज्ञानविषयस्य। यथाश्रुतकल्पे=यथोक्तलक्षणे। जिज्ञासाविषये=कामिनीजिज्ञासाविषयकामिन्यादौ। असाधारणप्रतिबन्धकताघटितमलक्षणम्=अनुमितिमात्रवृत्तिधर्मावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकताश्रयीभूताभावप्रतियोगिज्ञानविषयत्व-रूपलक्षणम्। तत्रैव=तादृशलक्षणे एव। तादृशप्रतिबन्धकतायां=प्रत्यक्षशाब्दसाधारणप्रतिबन्धकतायाम्। तत्र=तादृशप्रतिबन्धकत्वे। शाब्दस्य=शाब्दबोधस्य। शुचित्वानुमापकेन=कर्मानर्हत्वप्रयोजकीभूतस्पर्शाभावरूपशुचित्वानुमितिप्रयोजकत्वेन। तद्धर्मिकेति। तादृशकपालधर्मिकेति तदर्थः। स्वतः=निरुक्तपरामर्शद्वारा। फलद्वारा=निरुक्तपरामर्शजन्यत्वानुमितिद्वारा। स च=आगमजनिताऽशुचित्वबोधश्च। अयमर्थः। यद्विषयकत्वेत्यादिनिरुक्तलक्षणे कामिनीजिज्ञासानिष्ठप्रतिबन्धकतामादाय कामिन्यादावतिप्रसङ्गभङ्गाय अनुमितिमात्रवृत्तिधर्मावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकताश्रयीभूताभावप्रतियोगिज्ञानविषयत्वरूपलिङ्गासाधारणदोषत्वस्य

निर्वचनत्वे कामिनीजिज्ञासानिष्ठप्रतिबन्धकता च नासाधारणरूपेति न तत्रातिव्याप्तिसम्भावनेति। एवञ्च बाधसत्प्रतिपक्षयोः ज्ञानस्य लौकिकसन्निकर्षाद्यजन्यप्रत्यक्षं प्रति शाब्दबोधं प्रति च प्रतिबन्धकतया अनुमित्यसाधारणप्रतिबन्धकतापदेन बाधसत्प्रतिपक्षज्ञानीयप्रतिबन्धकतायाः धर्तुमशक्यतया बाधसत्प्रतिपक्षादावव्याप्तिरित्युक्तं चिन्तामणिकृता यद्यपीत्यादिना, परन्तु प्रत्यक्षशाब्दबोधम्प्रति बाधसत्प्रतिपक्षयोर्ज्ञानस्य प्रतिबन्धकत्वप्रयोजिका युक्तिर्न प्रतिपादितेति न्यूनता या संजाता तां परिहरति यद्यपीत्यादिग्रन्थेन दीधितिकारः। तथा च इदन्त्वावच्छिन्नविशेष्यकस्थाणुत्वाभावप्रकारकबाधनिश्चये स्थाणुत्वाभावव्याप्यकरादिमांश्चेत्याकारकसत्प्रतिपक्षनिश्चये च सति इदन्त्वावच्छिन्नविशेष्यकस्थाणुत्वप्रकारकलौकिकसन्निकर्षाद्यजन्याऽयं स्थाणुरित्याकारकसमानधर्मितावच्छेदककप्रत्यक्षशाब्दबोधयोरनुदयेन प्रत्यक्षशाब्दोभयप्रतिबन्धकता बाधसत्प्रतिपक्षे निराबाधैवास्तीति, एवञ्च बाधसत्प्रतिपक्षेऽव्याप्तिः बाधसत्प्रतिपक्षेऽनुमित्यसाधारणप्रतिबन्धकत्वाभावात्। तद्वारणाय ज्ञायमानस्यैवात्राऽभासस्य लक्षणमित्यभिप्रेत्य ज्ञायमानं सत् यदनुमितिप्रतिबन्धकं तत्त्वरूपतृतीयलक्षणमनुसृत्य विशिष्टबुद्धित्वावच्छिन्नसामान्यप्रतिबन्धकज्ञानविषयत्वरूपतृतीयलक्षणार्थं व्याख्याय बाधादावपि तादृशज्ञानविषयत्वसत्त्वादिति दीधितिकारः प्रतिपादयति। ननु यदि प्रत्यक्षशाब्दबोधं प्रति बाधसत्प्रतिपक्षयोः प्रतिबन्धकत्वं स्वीक्रियते तदा नरशिरःकपालपक्षकशुचित्वसाध्यकप्राण्यङ्गत्वहेतुकनरशिरःकपालं शुचि प्राण्यङ्गत्वात् शङ्खवदित्यत्र शुचित्वव्याप्यप्राण्यङ्गत्ववत् कपालमित्याकारकपरामर्शकाले एतादृशपरामर्शजन्यशुचित्वनिश्चयरूपानुमितिदशायां वा तादृशनिश्चयानन्तरक्षणे सर्वपरीक्षकानुभवसिद्धस्य "मलमूत्रपुरीषास्थिनिर्गतं ह्यशुचि स्मृतम्। नारं स्पृष्ट्वा तु सस्नेहं सचेलो जलमाविशेदित्याद्यागमजन्याऽशुचित्वबोधस्योत्पत्तिरेव न स्यात् तत्प्रतिबन्धकस्य पूर्वं सत्त्वात्"। न चेष्टापत्तिः नरशिरःकपाले प्राण्यङ्गत्वज्ञानकालेऽपि निरुक्तागमजन्याशौचानुभवस्य शाब्दस्यानुभवसिद्धत्वेन तादृशानुभवविरोधादिति।

## गादाधरी

समाधत्ते तत्रेति। तादृशाशौचज्ञानप्राक्काले इत्यर्थः। अनुकूलतर्काभा-

वेन व्याप्तिनिश्चयस्य बलवत्तरागमविरोधेनानुमितेरनुत्पत्तेरिति योजना। एवञ्च वास्तवव्याप्यधर्मस्य येन केनापि रूपेण ज्ञानमेव न विरोधि, अपि तु व्याप्यत्वरूपेण अत्र च प्राण्यङ्गत्वस्य ज्ञानेऽपि व्याप्तिग्राहकतर्कविरहेण व्यभिचारशङ्कया शौचव्याप्यत्वेन तज्ज्ञानं न सम्भवति, कारणान्तरविरहेण यत्र व्यभिचारशङ्काविरहस्तत्र कथञ्चित् व्याप्तिग्रहेऽपि गृहीतप्रामाण्यकागमतात्पर्यविषयविपरीतविषयकत्वेन तत्राप्रामाण्यं गृह्यते, तथा च तादृशप्राण्यङ्गत्वज्ञानं न शौचानुमितिजनने शाब्दाशौचज्ञानप्रतिबन्धे वा प्रभवतीति समुदितार्थः। आगमे प्रामाण्यग्रहश्च शिष्टपरिग्रहादिनैव भवति, यावच्च तादृशपरामर्शेनाप्रामाण्यं गृह्यते तावन्न भवत्येवागमप्रवृत्तिरिति भावः।

## विमलप्रभा

समाधत्ते तत्रेति गदाधरः। अनुकूलतर्काभावेन = व्याप्तिनिश्चयप्रयोजकीभूततर्काभावेन। व्याप्तिनिश्चयस्य = यत्र प्राण्यङ्गत्वं तत्र शुचित्वमित्याकारिकायाः व्याप्तेर्ज्ञानस्य। बलवत्तरागमविरोधेन = शौचानुमाने साध्यप्रसिद्धेरागममात्राधीनतया कारणताजातीयत्वेनागमस्य बलवत्त्वं तद्विरोधेन। अनुमितेः = शुचित्वानुमितेः। एवञ्च = व्याप्तिनिश्चयानुमित्याद्यनुत्पत्तौ च। येन केनापि रूपेण = हेतुतावच्छेदकधर्मेण। ज्ञानमेव = निश्चय एव। विरोधि = प्रतिबन्धकम्। तज्ज्ञानं = प्रामाण्यङ्गत्वज्ञानम्। कारणान्तरविरहेण = दोषादिघटितकारणाभावेन। यत्र = यादृशस्थले। तत्र = तादृशस्थले। कथञ्चित् व्याप्तिग्रहे = व्यभिचारज्ञानाभाववशतः व्याप्तिनिश्चये। गृहीतप्रामाण्यकेति। गृहीतं यदागमे प्रमाण्यं तत्र यत्तात्पर्यं तद्विषयीभूतो यः अशुचित्वबोधः, तद्विरोधी यः शुचित्वबोधस्तत्साधकेन। तत्र = शुचित्वसाधकव्याप्तिनिश्चये। अप्रामाण्यम् = अप्रमाणत्वम्। प्रमात्वविरह इति यावत्। तथा च = अप्रामाण्यग्रहे च। तादृशप्राण्यङ्गत्वज्ञानम् = गृहीताप्रामाण्यकप्राण्यङ्गत्वज्ञानम्। प्रभवति = समर्थो भवति। शिष्टपरिग्रहादिनैव = शिष्टपरिगृहीतत्वादिनैव। तादृशपरामर्शे = शुचित्वव्याप्यप्राण्यङ्गत्ववत्

कपालमिति परामर्शे। आगमप्रवृत्तिः=आगमजन्यशाब्दाशौचबोधः। अयमर्थः। आगमजन्याशुचित्वज्ञानात् प्राक् व्याप्तिनिश्चयप्रयोजकीभूतानुकूलतर्काभावेन तथोपजीव्यजातीयवेदविरोधेन च न तत्र व्याप्तिनिश्चयः न वा शुचित्वानुमितिः। प्राण्यङ्गत्वज्ञानन्तु कथञ्चिद्रूपेण न शाब्दाशौचज्ञानप्रतिबन्धकमपि तु शौचत्वव्याप्यत्वरूपेण प्राण्यङ्गत्वज्ञानमेव तथा, प्रकृते च व्याप्तिप्रयोजकानुकूलतर्कविरहेण व्यभिचारशङ्कोदयशङ्कया न शौचव्याप्यत्वेन प्राण्यङ्गत्वज्ञानं शक्यते भवितुमिति। यदि च यादृशस्थलेऽनुकूलतर्कविरहेऽपि कारणान्तराभावादेव न व्यभिचारशङ्कोदयस्तत्र कथञ्चित् व्याप्तिज्ञाने जाते जातेऽपि च शौचव्याप्यत्वेन प्राण्यङ्गत्वज्ञाने गृहीतप्रामाण्यको यो वेदस्तत्र यत् तात्पर्यं तद्विषयीभूतो य अशुचित्वबोधस्तद्विरुद्धशुचित्वादिविषयसाधकत्वेन तादृशप्राण्यङ्गत्वज्ञानेऽप्रामाण्यं गृह्यते तदा सुतरामेवाऽप्रामाण्यज्ञानास्कन्दितशौचव्याप्यप्राण्यङ्गत्वज्ञानात् न शौचानुमितिः तादृशानुमितिं प्रत्यप्रामाण्यज्ञानानास्कन्दितपरामर्शस्यैव कारणत्वात्। न वा निरुक्तागमजन्याशुचित्वबोधस्तादृशबोधम्प्रत्यपि अप्रामाण्यज्ञानानास्कन्दितज्ञानस्यैव प्रतिबन्धकत्वमतस्तादृशप्राण्यङ्गत्वज्ञाने शुचित्वानुमितिप्रयोजकतायाः शाब्दाशौचप्रतिबन्धकतायाश्च सुदूरनिरस्तत्वादिति भावः।

न चागमप्रामाण्यग्रहे सर्वमिदं समञ्जसं स्यात्तदभावे च कथं सामञ्जस्यमिति वाच्यम्। वेदप्रामाण्याभ्युपगन्तृत्वे सत्यभ्रान्तत्वरूपं यत् शिष्टत्वं तादृशशिष्टजनपरिग्रहादिनैवागमे प्रामाण्यग्रहो जायते, आगमः प्रमाणं महाजनपरिगृहीतत्वादित्यनुमानेन च वेदे प्रामाण्यग्रहो जायत इति तथा च तादृशप्राण्यङ्गत्वपरामर्शेऽप्रामाण्यज्ञाने जाते प्रकृतागमजन्यशाब्दाशुचित्वबोधजनने बाधकाभावः। अत एव नरशिरःकपालं शुचि प्राण्यङ्गत्वात् शङ्खवदित्यनुमानस्याभासबाधितविषयत्वं भामतीप्रस्थाने समर्थितम् श्रीमिश्रचरणैरिति भावः।

## चिन्तामणिः

यद्वा प्रत्यक्षादौ बाधेन न ज्ञानं प्रतिबध्यते, किन्तूत्पन्नज्ञानेऽप्रामाण्यं ज्ञाप्यतेऽनुमितौ तूत्पत्तिरेव प्रतिबध्यते।

## दीधितिः

यद्वेत्याद्यभ्युपगममात्रम् प्रत्यक्षं प्रत्यानुमानिकबाधादिनिश्चयस्याप्रतिबन्धकत्वेऽपि शाब्दं प्रति प्रतिबन्धकत्वात् ।

## गादाधरी

यद्वेत्यादिग्रन्थेन बाधादिज्ञानस्यानुमित्यतिरिक्तज्ञानाप्रतिबन्धकत्वं व्यवस्थाप्य बाधादेर्लिङ्गासाधारणदोषत्वमेवोपपादितम् मूलकृता, तन्न सङ्गच्छते, बाधितार्थस्य शाब्दबोधाभ्युपगमेऽनुमितेरप्यनपराधात्तत्राप्रामाण्यग्राहकतया बाधादिग्रहस्य प्रवृत्त्यादिविरोधितोपपत्तेरित्युक्तकल्पे ग्रन्थकृतोऽनिर्भरमाह यद्वेत्यादीति । नन्वानुमानिकबाधादिनिश्चयदशायामपि लौकिकसन्निकर्षादितः प्रत्यक्षनिश्चयोत्पत्त्या बाधानिश्चयसामान्यस्य प्रत्यक्षप्रतिबन्धकत्वं न सम्भवतीत्यनुमित्यसाधारणप्रतिबन्धकत्वं बाधनिश्चयत्वावच्छिन्नस्याक्षतमतो यद्विषयकनिश्चयत्वेनानुमित्यसाधारणप्रतिबन्धकत्वं तद्वत्त्वस्य लक्ष्यताप्रयोजकत्वाभिप्रायेण यद्वेत्यादिग्रन्थस्य बाधे लक्ष्यतोपपादकत्वं सुसङ्गच्छते इत्यत आह प्रत्यक्षं प्रतीति

समानेन्द्रियजन्यबाधनिश्चयसत्त्वे लौकिकप्रत्यक्षस्याप्युत्पत्तेरानुमानिकेति बाधनिश्चयविशेषणम् । शाब्दं प्रतीति ॥ तथा च तावतैव लिङ्गासाधारणदोषत्वव्याघात इति भावः ।

## विमलप्रभा

यद्वेत्यादिग्रन्थस्यावतरणिकामाह बाधादीति । नन्वागमनिरूपणप्रस्तावे प्रमाणसामान्यदोषाभिधानमनुचितमित्याशयेनाह मूले यद्वेति । बाधेन=परोक्षबाधादिना । बाधादीत्यत्रादिपदेन सत्प्रतिपक्षपरिग्रहः । अनुमित्यतिरिक्तज्ञानम्=-शाब्दादिज्ञानम् । तत्र संगच्छते=तदुपपादनं न समीचीनम् । तत्र=अनुमितौ । ग्रन्थकृतः=चिन्तामणिकारस्य । अतः=हेतोः । तथा च=शाब्दं प्रति बाधा-

र्देविरोधित्वे च । तावतैव = शाब्दं प्रति बाधादिज्ञानस्य विरोधित्वादेव । अयमर्थः । यद्वेत्यादिग्रन्थेन बाधसत्प्रतिपक्षयोरनुमितिमात्रं प्रति प्रतिबन्धकत्वं प्रत्यक्षशाब्दादिकं प्रति बाधादिनिश्चयकाले प्रत्यक्षशाब्दबोधोत्पादेऽपि तद्विषये न प्रवृत्तिः, तादृशप्रत्यक्षेऽप्रामाण्यज्ञानोत्पत्त्या प्रवृत्तिकारणीभूतप्रमाज्ञानाभावादिति बाधसत्प्रतिपक्षयोरसाधारणदोषत्वमुपपादितं चिन्तामणिकृता, तन्न समीचीनम्, उपनयसन्निकर्षजन्यप्रत्यक्षे शाब्दबोधे च बाधनिश्चयस्य विरोधित्वमिति स्वयं वक्ष्यमाणत्वादतो यद्वेत्यादिग्रन्थ अभ्युपगममात्रपरक एवेति दीधितिकारस्याशयः । ननु बाधनिश्चयसामान्ये यदि प्रत्यक्षादिप्रतिबन्धकता स्यात् स्याच्च तदाऽनुमित्यसाधारणप्रतिबन्धकत्वाभावात् बाधादावव्याप्तिः किन्तु अनुमानद्वारा बाधादिनिश्चयकालेऽपि सन्निकर्षवशेनप्रत्यक्षोत्पत्त्या तांप्रति तस्य प्रतिबन्धकताविरहेणानुमित्यसाधारणप्रतिबन्धकत्वम् बाधादिनिश्चयेऽक्षतमेवेति यद्वाकल्पद्वाराबाधदौ वुष्टत्वोपपादनं सुसङ्गतमेवेति तन्न समीचीनम् आनुमानिकबाधनिश्चये लौकिकप्रत्यक्षप्रतिबन्धकताविरहेऽपि शाब्दबोधप्रतिबन्धकतासत्त्वेनानुमित्यसाधारणप्रतिबन्धत्वाभावान्न तत्र लिङ्गासाधारणदोषत्वमिति ।

## चिन्तामणिः

ते च सव्यभिचारविरुद्धसत्प्रतिपक्षाऽसिद्धबाधिताः पञ्च ।

इति श्रीगङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ अनुमानखण्डे हेत्वाभाससामान्यनिरुक्तिः समाप्ता ।

## दीधितिः

योग्यताज्ञानेनान्यथासिद्धत्वात् तदभावो न तत्र हेतुरिति चेदेवमप्युपनीतभानविशेषं प्रति तत्त्वेन हेतुतायाः दुर्वारत्वात् ।

श्रीरघुनाथशिरोमणिभट्टाचार्यविरचिता हेत्वाभाससामान्यनिरुक्तिदीधितिः समाप्ता ।

गादाधरी

तत्रापि तदप्रतिबन्धकत्वमाशङ्कते योग्यतेति । अन्यथासिद्धत्वादिति । बाधादिनिश्चयदशायां योग्यताज्ञानरूपकारणविरहेणैव शाब्दबोधानुत्पादनिर्वाहादिति भावः । तदभावः=बाधादिनिश्चयाभावः, तत्र=शाब्दबुद्धौ । यद्यपि योग्यतावाधसंशयद्वितीयक्षणे स्मरणाद्यात्मकयोग्यतानिश्चये सति तद्द्वितीयक्षणे शाब्दज्ञानवारणाय तदभावस्य शाब्दबोधहेतुत्वस्यावश्यकत्वम् । तथापि बाधादिज्ञानस्य शाब्दाप्रतिबन्धकत्वेऽपि निर्विवादोपनीतभाने विशेषप्रतिबन्धकतयैव बाधादेर्लिङ्गासाधारणदोषत्वनिराकरणसम्भवात्तत्रैव तन्निराकरोति एवमपीति । उपनीतभानविशेषम्=दोषविशेषाजन्योपनीतभानविशेषम्, तत्त्वेन=बाधनिश्चयाद्यभावत्वेन । दुर्वारत्वादिति । बाधनिश्चयदशायामनुमितेरिव तादृशोपनीतभानानुत्पादस्य सर्वानुभवसिद्धत्वादिति भावः ।

इति महामहोपाध्यायश्रीगदाधरभट्टाचार्यविरचिता हेत्वाभाससामान्यनिरुक्तिदीधितिविवृतिः समाप्ता ।

विमलप्रभा

तत्रापि=शाब्दबुद्धावपि । तदप्रतिबन्धकत्वं=बाधनिश्चयस्याप्रतिबन्धकत्वम् । योग्यताज्ञानरूपकारणविरहेणैव=बाधनिश्चयस्य योग्यताज्ञानविरोधितया बाधनिश्चयसत्त्वे शाब्दबोधकारणीभूतयोग्यताज्ञानरूपकारणाभावेनैव । शाब्दबोधानुत्पादनिर्वाहात्=शाब्दबोधाभावात् । स्मरणाद्यात्मकेति, स्मरणादिस्वरूपेत्यर्थः । तद्द्वितीयक्षणे=स्मरणात्मकयोग्यतानिश्चयक्षणे । तदभावस्य=बाधनिश्चयाभावस्य । उपनीतभाने=ज्ञानलक्षणासन्निकर्षजनितज्ञानविशेषे । तादृशोपनीतभानानुत्पादस्य=दोषविशेषाजन्यज्ञानलक्षणासन्निकर्षजनितज्ञानोत्पत्त्यभावस्य । अयमर्थः । अवश्यक्लृप्तनियतपूर्ववर्त्तिनः योग्यताज्ञानस्य शाब्दबोधं प्रति कारणत्वकल्पनेनैव तद्भिन्नत्वेन बाधनिश्चयाभावोऽन्यथासिद्ध इति बाधनिश्चयदशायां योग्यताज्ञानविरहादेव शाब्दबोधानुदयेन शाब्दं प्रति बाधनिश्चयस्य प्रतिबन्धकतास्वी-

कारो व्यर्थ इत्यनुमित्यसाधारणप्रतिबन्धकत्वस्य बाधादौ वर्त्तमानतया लिङ्गाभासत्वं तत्रास्त्येवेति नोक्तानुपपत्तिः । यदि बाधबुद्धिविरहस्य शाब्दबोधं प्रति कारणता न स्वीक्रियते तदा यत्र प्रथमम् योग्यबाधसंशयस्ततः स्मरणाद्यात्मकयोग्यतानिश्चयस्तदनन्तरक्षणे शाब्दबोधापत्तिः तद्वारणाय बाधनिश्चयाभावे शाब्दबोधकारणत्वमावश्यकमेवेति बाधनिश्चये शाब्दबोधप्रतिबन्धकतासत्त्वेन लिङ्गासाधारणदोषत्वन्न बाधादेरिति, तदाऽपि यदि तस्य प्रतिबन्धकत्वं हठेन न स्वीक्रियते तदा बाधसत्प्रतिपक्षदशायामनुमितिवदुपनीतप्रत्यक्षस्याप्यनुदयेनोपनीतप्रत्यक्षप्रतिबन्धकतायाः बाधादौ वर्त्तमानतया निरुक्तानुमित्यसाधारणप्रतिबन्धकतायाः बाधादावभावान्न बाधादेर्लिङ्गासाधारणदोषत्वमिति विभावयन्तु तर्ककुशला इति ।

हेत्वाभासस्य सामान्यनिरुक्तेः प्रतिशब्दतः ।
छात्राणामुपकारार्थमन्वयार्थविबोधिनी ॥ १ ॥
नीलाम्बरतनूजेन रसनाथकनीयसा ।
कृता श्रीरूपनाथेन टीका सुविमलप्रभा ॥ २ ॥
जगतः पितरौ वन्दे गौरीरमणरूपिणौ ।
ययोः कृपाबलेनैव ग्रन्थः सम्पूर्णताङ्गतः ॥ ३ ॥

माघे सितेऽथवाणे तिथौ प्रशासति राधाकृष्णे धरामेताम् ।
ग्रन्थोऽयं द्विसहस्रे विंशत्यधिकेवर्षे [ संवत् २०२० ] समाप्तिमाप्नोत् । ४ ॥

मिथिलामण्डलान्तर्गतोजानग्रामनिवासिकरमहामैथिलश्रोत्रियसर्वतन्त्र स्वतन्त्रश्रीनीलाम्बरझामहोदयानामात्मजेन भूतपूर्वमुजफ्फरपुरस्थराजकीयसंस्कृतमहाविद्यालयदर्शनविभागाध्यक्षेण श्रीरूपनाथझाशमर्णा विरचिता सामान्यनिरुक्तिगादाधरीटीका विमलप्रभा सम्पूर्णा ॥

श्रीतारिणीचरणन्यस्त एषः प्रथम उद्यमः ॥

# अथ हेत्वाभासकारिका

त्वं रुष्टा मयि चेन्नमामि भवतीं नेयं त्वया नम्यतां
नम्यत्वं त्वयि भाति पार्थिवतया मन्ये महाराजवत् ।।
कुम्भादिष्वतिवर्तनात् त्वदुदितं साधारणं साधनम्
वाग्वादेष्विति निर्जितो दयितया रामः सुखं रातु वः ।।१।।

कृष्णः पुष्णातु सौख्यं सुमुखि सुमुखतां याहि याहि प्रियां ता—
मन्यासक्तं कुतो मां कलयसि दयिते केवलं त्वत्स्वभावात् ।।
यद्येवं मुग्धता ते करणमिदमसाधारणं पक्षमात्रे
वृत्तत्वादित्यकस्मात् प्रणयकलहितां राधिकां सान्त्वयन् वः ।।२।।

सर्वं वस्तु सुखावहं तव पुनः कौतस्कुतीयं व्यथा
कस्मादेवमुदीर्यते जगदिदं यत्तन्मयं भाषसे ।।
हेतुः सव्यभिचार एष विरहात् दृष्टान्तयोरित्ययम्
संल्लापः सह लक्ष्मणेन वियुजः सीतापतेः पातु वः ।।३।।

भीतोऽहं विरही तुषारकिरणात् सोऽयं समुज्जृम्भते
विज्ञातः कथमेष ते मम यतस्तापं करोत्युच्चकैः ।।
लिङ्गात् कोऽनुमिनोति साध्यविरहव्याप्तादियं मुग्धता
माभैषीरिति पातु वो रघुपतिः सौमित्रिणा सान्त्वितः ।।४।।

का भीतिस्तव चन्द्रतो रघुपते ? दोषाकरत्वादसा-
वासक्तः परपीडने पिशुनवन्नैवं कुतः कथ्यते ।।
हेतुः सत्प्रतिपक्ष एष यदयं सद्वृत्ततां गाहते ।
सोदर्येण निरस्तभीरिति सुखं पुष्णातु वो राघवः ।।५।।

मिथ्येयं विरहव्यथा तव मुदं धत्ते पुरोवर्तिनी
मायामैथिलकन्यका प्रियतमा भावेन सत्येव सा ॥
इत्युक्तः सहजेन सान्त्वनविधौ हेतोरमुष्याश्रया
सिद्धत्वं प्रतिपादयन्नवतु वः श्रीजानकीवल्लभः ॥६॥

चित्तं मे चित्तजन्मा विदलयति शरैः स्वाश्रयं नाशयेत्कः
स्थूलत्वाच्चेतसोऽसौ किमिव न कुरुते निर्विचारप्रवृत्तः ॥
आहुश्चेतोऽणुमानं कथमिह भवति स्थूलता तत्स्वरूपा
सिद्धोऽयं हेतुरेवं दशरथसुतयोः पातु संभाषितं वः ॥७॥

वध्येतां शुकसारणौ न हि तयोर्बध्यत्वमस्त्येव त–
द्रक्षस्त्वां दशकन्धरादिवदयं, हेतुः सहोपाधिकः ॥
सद्रोहत्वमुपाधिरत्र सुगमः शेषस्त्वया चिन्त्यता-
मित्यादित्यसुतोक्तिखण्डनकरः श्रीराघवः पातु वः ॥८॥

जय्यो राघव एष मानुषतया तद्भक्षिभिर्यातुभि-
र्नैवं बाधित एव हेतुरुदितः प्रत्यक्षमानेन हि ॥
क्व प्रत्यक्षमिदं खरादिनिहतावित्यग्रजस्याग्रतो
दिश्यान्तन्मतभिद्विभीषणसमुद्गीतः सुखं राघवः ॥९॥

अज्ञात्वा हृद्गतं ते कथमभिलषितं प्रार्थये भामिनि त्वां
न त्वेतस्मात्कटाक्षादनुमिनुत हृदये राग एवेति चेन्न ॥
हेतुः सोपाधिकोऽयं भवति गुरुतरो ह्रीभरोऽस्मिन्नुपाधिः
साध्यव्यापी प्रियादौ स खलु तृणमुखे साधनाव्यापकश्च ॥१०॥

॥ इति हेत्वाभासकारिका समाप्ता ॥

## परिशिष्टप्रकरणम्

ननु अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वं हेत्वाभासत्वमित्यत्राभावनिरूपितो यस्तद्वद्यथार्थज्ञानविषयत्वमेवोच्यतामलं प्रतियोगितापदोपादानेनेति चेन्न, अनुमितिकारणीभूताभावमध्ये बाधनिश्चयाभावस्तन्निरूपितसम्बन्धित्वं बाधाभावविषयकज्ञानेऽस्ति ताद्दशज्ञानविषयत्वं बाधाभावे सत्त्वादतिव्याप्तिरतस्तदुपात्तमिति भुवनमोहनसार्वभौमः ।

न च मूलनिष्ठन्यूनत्वस्य परिहारः कथं कृतः शिरोमणिना, तत्प्रसङ्गादित्यस्य शिरोमण्युक्ततया मूलशब्देनालाभादिति वाच्यम्, मूलस्याथशब्दस्यानन्तर्यमर्थः, व्याप्तिपक्षधर्मताविशिष्टहेतुनिरूपणानन्तरमिति यावत्, अत एव निरूप्येत्यन्तं प्रसङ्गनिर्वाहकस्य स्मृतत्वस्य लाभायेत्यस्याथशब्देन बोध्यत इति शिरोमणेरभिप्राय इत्युक्तं गदाधरेण । तथा च हेतुनिष्ठव्याप्तिपक्षधर्मतारूपप्रतियोगिज्ञानात् व्याप्तिपक्षधर्मत्वाभावस्य स्मृतत्व सिद्धम्, इत्यश्च अथ शब्देनैव मूलकारेण प्रसङ्गरूपसंगतिर्दर्शितेति शिरोमणेः तात्पर्यमतो न मूलनिष्ठन्यूनतेति भावः राखालदासन्यायरत्नः ।

न चानुमितिकारणसिषाधयिषाविरहविशिष्टसिद्धयभावमादायसिद्धिविषयेऽतिव्याप्तिरिति वाच्यम्, प्रकृतसाध्यप्रकारकानुमितावेव सिद्धेः प्रतिबन्धकत्वं न तु साध्यविधेयकानुमिताविति तथा च वह्निमान् पर्वतो घटवानित्यनुमितावप्रतिबन्धकत्वादित्याहुः । अथ वा ताद्दशभावभिन्नत्वमेव निवेश्यमित्यपि कश्चित् ।

सपरिकरं हेतुं निरूप्य इति दीधितिः, अत्र सपरिकरहेतुं निरूप्य इति स-

मस्तपदं कथं नोक्तमिति चेन्न, तदाभासनिरूपणमिति ग्रन्थस्थालग्नतापत्तेः, तत्पदस्य समस्तैकदेशपरामर्शत्वासम्भवादिति भावः।

भ्रमपदं निश्चयसामान्यपरम्, तेन सद्धेतुत्वादीत्यादिपदप्राप्तसाध्यशून्यपक्षकेत्यादि गादाधरी। अथात्र गदाधरेणादिपदलभ्यप्रमाविषयसाध्याभावमादायाप्यतिव्याप्तिर्दत्तेति। जगदीशस्य तदप्रदर्शनेन न्यूनता स्यात्, तन्मतेपि आदिपदसत्त्वेन प्रमाविषयसाध्याभावादौ अतिव्याप्तेरुचितत्वादिति चेन्न, गदाधरमते भ्रमविषयसाध्याभावादौ इत्येव पाठः, तन्मते भ्रमविषयश्चासौ साध्याभावश्चेति भ्रमविषयसाध्याभावस्तस्यादिः भ्रमविषयसाध्याभावादिः तस्मिन्नित्यर्थः। तत्रादिना यथा भ्रमविषयसाध्याभावेऽतिव्याप्तिस्तथा प्रमाविषयसाध्याभावेऽतिव्याप्तिः सूचितेति।

यद्विषयकत्वेनेत्यादिलक्षणे तृतीयाया अवच्छेदकत्वार्थकतया सुतरां तथेति भट्टाचार्येणोक्तम्, अत्र ह्रदत्वपुरस्कारेण घटाद्यवगाहिवह्न्यभाववान् ह्रद इति ज्ञानीयप्रतिबन्धकतावच्छेदकीभूतघटादिविषयतामादाय घटादावतिव्याप्तिवारणाय यद्रूपावच्छिन्नविषयत्वं प्रतिबन्धकतावच्छेदकं तद्रूपवत्त्वनिवेशस्यावश्यकतया सुतरामिति व्यर्थमिति चेन्न, यद्विषयकत्वस्यैतादृशार्थलाभायैव सुतरामित्युक्तमिति भावः।

ननु विषयतायाः प्रतिबन्धकतावच्छेदकत्वे दण्डाभाववान् दण्ड इति बुद्धिं प्रति रक्तदण्डवान् दण्डः पीतदण्डवान् दण्ड इत्यादिनानाविधनिश्चयसाधारणदण्डत्वनिरूपितावच्छेदकत्वावच्छिन्नप्रकारित्वावच्छिन्नदण्डत्वनिरूपितावच्छेदकत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेनैव भवन्मतेप्रतिबन्धकत्वम्, एवञ्च दण्डाभाववान् दण्ड इति बुद्धौ रक्तदण्डवान् पुरुष इति निश्चयस्य प्रतिबन्धकत्वापत्तिः, तथा हि रक्तत्वनिरूपितावच्छेदकत्वावच्छिन्नप्रकारित्वावच्छिन्ना या दण्डत्वनिरूपितावच्छेदकत्वावच्छिन्नविशेष्यित्वावच्छिन्ना या रक्तत्वदण्डत्वोभयधर्मनिरूपितावच्छेदकत्वावच्छिन्नप्रकारिता तदवच्छिन्नपुरुषत्वनिरूपितावच्छेदकत्वावच्छिन्नविशेष्यताशालिरक्तदण्डवान् पुरुष इति निश्चयीयोभयधर्मनिरूपितावच्छेदकत्वावच्छिन्नप्रकारितया रक्तत्वनिरूपिताया अव-

च्छेदकित्वावच्छिन्नप्रकारित्वावच्छिन्नदण्डत्वनिरूपितावच्छेदकित्वावच्छिन्नविशेष्यिता-याश्च परस्परावच्छेद्यावच्छेदकभावनियमेन दण्डत्वनिरूपितावच्छेदकित्वाव-च्छिन्नप्रकारितान्तर्गता या ताद्दशोऽभयधर्मनिरूपितावच्छेदकित्वावच्छिन्नप्रकारि-ता तदवच्छिन्नदण्डत्वनिरूपितावच्छेदकित्वावच्छिन्नविशेष्यताशालिनिश्चतत्वस्य त-त्रापि सत्वात् ।

न च रक्तत्वेतरनिरूपितरक्तनिरूपितावच्छेदकित्वानवच्छिन्नत्वं रक्त-त्वनिरूपितावच्छेदकित्वावच्छिन्नप्रकारितायां निवेशनीयमतोनोक्त दोष इति वाच्यं, रक्तत्ववान् दण्ड इत्यस्य प्रतिबन्धकत्वानुपपत्तिरिति चेन्न, दण्डाभाववान् दण्ड इति बुद्धिं प्रति स्वसंयोगिसंयोगेन दण्डवान् दण्ड इति निश्चयस्य प्रतिबन्धकत्वापत्तिवा-रणाय सांसर्गिकविषयतां मध्यवर्तिनीं कृत्वा प्रतिबध्यप्रतिबन्धकभावो वाच्यः, तथा च परम्परासम्बन्धस्थले प्रथमपदार्थनिरूपितत्वमेव भासत इति न दोषः ।

एवञ्च दण्डत्वनिरूपितावच्छेदकित्वावच्छिन्नप्रकारित्वावच्छिन्नसंयोग-त्वनिरूपितावच्छेदकित्वावच्छिन्नसंसर्गित्वावच्छिन्नदण्डत्वनिरूपितावच्छेदकित्वावच्छि-न्नविशेष्यताशालिनिश्चयत्वस्य प्रतिबन्धकतावच्छेदकत्वेन रक्तदण्डवान् पुरुष इति निश्चये तदसत्वान्नोक्तापत्तिरिति । यदि सम्बन्धसामान्येन दण्डावृत्तिर्दण्ड इति बुद्धिं प्रति सकलसम्बन्धावच्छिन्नप्रतियोगिताकदण्डाभाववान् दण्ड इति बुद्धि-त्वावच्छिन्नं प्रति संयोगिसंयोगेन समवायस्वरूपादिप्रत्येकसम्बन्धेन दण्डवान् दण्ड-प्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकत्वं न तु प्र-कारतायाः सम्बन्धावच्छिन्नत्वं निवेश्य इति तत्र दण्डत्वनिरूपितावच्छेदकित्वावच्छि-न्नप्रकारित्वावच्छिन्नताद्दशविशेष्यिताशालिनिश्चयत्वेन प्रतिबन्धकत्वे तु रक्तदण्ड-वान् पुरुष इत्यस्य प्रतिबन्धकत्वापत्तिरिति यदि विभाव्यते तदा विषयितायाः प्रति-बन्धकतावच्छेदकत्वं दुर्घटमेवेति ध्येयम् ।

अथ वह्न्यभाववान् ह्रद इति ज्ञाने वह्न्यभावप्रकारतानिरूपितप्रकारिता ह्रदत्वावच्छिन्नविशेष्यतानिरूपितविशेष्यिता एतद्वयमेवास्ति न तु वह्न्यभाववद्-

ह्रदत्वावच्छिन्नविषयितेति तथा च कथं तद्व्यापकत्वं प्रतिबन्धकतायामिति भवत्येवाव्याप्तिरिति, न च प्रकारावच्छिन्नत्वं विशेष्यतायां स्वीकर्तृमते-नेदं तथा च ह्रदत्वावच्छिन्नविशेष्यताख्यविषयताया वह्न्यभावावच्छिन्न-तया प्रतिबन्धकतासत्त्वादिति वाच्यम्, विशेष्यतायां प्रकारावच्छिन्नत्वे मानाभावा-दिति वाच्यम्। न च वह्न्यभाववत्त्वेन ह्रदमहं जानामीत्यनुव्यवसायानुरोध एव मानं, तत्र तृतीयार्थावच्छिन्नत्वस्य द्वितीयार्थविषयतायामन्वयः तथा च वह्न्यभा-वावच्छिन्नह्रदविषयताशालिज्ञानवानहमित्यनुव्यवसायस्तत्र बोध्यते, तत्र विषयता-सम्बन्धेन तादृशानुव्यवसायात्मकप्रत्यक्षं प्रति तादात्म्येन तादृशज्ञानस्य कारणत्वानु-रोधात्तत्स्वीकार इति वाच्यम्, वह्न्यभावप्रकारतानिरूपितह्रदत्वावच्छिन्नविशे-ष्यताशालिज्ञानत्वस्य वह्न्यभावह्रदत्ववद्द्रव्यमित्याकारकज्ञाने सत्त्वेन वह्न्यनुमि-तिप्रतिबन्धकत्वापत्तेः, द्रव्यत्वावच्छिन्नविशेष्यतायां वह्न्यभावप्रकारतानिरूपित-त्वह्रदत्वावच्छिन्नत्वयोः सत्त्वादिति। न च तथापि वह्न्यभाववान् ह्रद इति ज्ञा-नीयविषयतायां वह्न्यभावत्वावच्छिन्नविषयतात्वावच्छिन्ननिरूपकतानिरूप्यतावद्-ह्रदत्वावच्छिन्नविषयतात्वेनैव निरूप्यनिरूपकभावः, वह्न्यभावह्रदत्ववद्द्रव्यमिति ज्ञानीयविषयतायां वह्न्यभावह्रदत्वोभयावच्छिन्नविषयतात्वेन द्रव्यत्वावच्छिन्नवि-षयतात्वेन निरूप्यनिरूपकभावः, तथा च वह्न्यनुमितिं प्रति वह्न्यभावत्वावच्छिन्न-विषयतानिरूपितह्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वेन प्रतिबन्धकता, तथाचैता-दृशनिरूप्यनिरूपकभावापन्नविषयताशालिनिश्चयत्वस्य तादृशज्ञाने विरहेण प्रतिबन्ध-कत्वापत्त्यसम्भवादिति वाच्यम्। एतादृशनिरूप्यनिरूपकभावं स्वीकृत्य प्रतिब-ध्यप्रतिबन्धकभावकल्पने प्रकारावच्छिन्नत्वं विशेष्यतायां स्वीकारः न युक्तिसहः। न चोक्तानुव्यवसायस्य कथमुपपत्तिरिति वाच्यम्, तत्र तृतीयार्थः प्रकारित्वमेव तस्य द्वितीयार्थविषयितायामन्वयः, तथा च वह्न्यभावत्वावच्छिन्ननिरूपितप्रकारित्वाव-च्छेद्यह्रदत्वावच्छिन्ननिरूपितविशेष्यिताशालिज्ञानवानहमित्यनुव्यवसायः। तथा चाऽव्याप्तिः, वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताव्यापकत्वाभावात्।

न च प्रकारावच्छिन्नत्वं विशेष्यतायामस्तु परन्तु वह्न्यभाववान् ह्रद इति ज्ञाने वह्न्यभाववद्ध्रदत्वावच्छिन्ननिरूपकताकविषयिता अस्त्येव, अन्यथा वह्न्य-

भाववान् ह्रद इति ज्ञानानन्तरं जायमानवह्न्यभाववद्ध्रदमहं जानामीत्यनुव्यवसायस्य कथमुपपत्तिः, तत्र द्वितीयायाः विषयत्वार्थकतया वह्न्यभाववद्ध्रदविषयताशालिज्ञानवानहमित्यनुव्यवसायः, न तु वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिज्ञानवानहमित्याकारकः, तत्र प्रकारताबोधकपदाभावादिति ध्येयम्।

नन्वत्र प्रकृतानुमितिप्रतिबन्धकत्वाव्यापकप्रतिबन्धकताशून्ययद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापिका प्रकृतानुमितिप्रतिबन्धकता तद्रूपावच्छिन्नत्वम् हेत्वाभासत्वमिति विवक्षयैव सामञ्जस्ये विशिष्टद्वयाघटितत्वविशिष्टान्तराऽघटितत्वाऽव्यापकीभूतविषयताशून्यत्वादिनिवेशो व्यर्थः, वह्न्यभाववज्जलादिमद्वृत्तिजलाभाववान् इति ज्ञाननिरूपितप्रतिबन्धकताया अव्यापकतया तच्छून्यत्वस्य वह्न्यभाववज्जलादिमद्वृत्तिजलवान् ह्रद इति निश्चये विरहात्, जातिमान् वह्निमानिति ज्ञाननिरूपितप्रतिबन्धकतायाः, मेयत्वाभाववान् व्यभिचार इति ज्ञाननिरूपितप्रतिबन्धकतायाश्चाव्यापकतया तच्छून्यत्वस्य जातिमान् वह्न्यभाववानिति ज्ञाने, मेयत्वविशिष्टव्यभिचारविषयकज्ञाने विरहात् नाव्याप्त्यतिव्याप्ती सम्भवतः। न च सर्वासां प्रतिबन्धकतानां चालनीन्यायेनाव्यापकतया तच्छून्यत्वस्य बाधव्यभिचारादिविषयकज्ञाने विरहादसम्भवापत्तिरिति वाच्यम्। प्रकृतानुमितित्वव्यापकयत्किञ्चित्प्रतिबन्धकत्वाव्यापकत्वनिवेशे नाव्याप्तिः तथा हि यत्किञ्चित्प्रतिबन्धकतामध्ये पूर्वक्षणवृत्तित्वविशिष्टप्रतिबन्धकतातदव्यापकान्यप्रतिबन्धकताशून्यपूर्वक्षणवृतित्वविशिष्टनिश्चयमादाय न दोष इति चेन्न, वह्न्यभाववद्वह्न्यभाववज्जलादिमद्वृत्तिजलवद्वृत्तिवह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयकनिश्चयनिष्ठप्रकृतानुमितियत्किञ्चित्प्रतिबन्धकत्वाव्यापकत्वं वह्न्यभाववज्जलादिमद्वृत्तिजलवान् ह्रद इति निश्चयनिष्ठप्रतिबन्धकतायां नास्ति अस्ति चान्यप्रतिबन्धकतायामिति तादृशप्रतिबन्धकताशून्यतादृशनिश्चयमादाय वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिः।

एतेन प्रतिबन्धकताविशिष्टयद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकप्रकृतानुमितिप्रतिबन्धकतातद्रूपावच्छिन्नत्वमेव लक्षणार्थः, वैशिष्ट्यञ्च स्वव्यापकीभूतप्रतिबन्धकताशून्यत्वसम्बन्धेन, तथा च न कोपि दोष इत्यपि परास्तम्। तादृशप्रतिबन्धकताविशिष्टवह्न्यभाववज्जलादिमद्वृत्तिजलवदह्रदविषयकनिश्चयमादाय तत्रैवातिव्याप्तिरिति ॥

## चिन्तामणिः

- अथ हेत्वाभासास्तत्त्वनिर्णयविजयप्रयोकत्वान्निरूप्यन्ते । तत्रानुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम् ॥ १ ॥

यद्विषयकत्वेन लिङ्गज्ञानस्यानुमितिप्रतिबन्धकत्वं तत्त्वम् ॥ २ ॥

ज्ञायमानं सदनुमितिप्रतिबन्धकं यत्तत्त्वं हेत्वाभासत्वम् ॥ ३ ॥
दशाविशेषे हेत्वोरेवासाधारणसत्प्रतिपक्षयोराभासत्वात् तद्बुद्धेरप्यनुमितिप्रतिबन्धकत्वम् ।

यद्यपि बाधसत्प्रतिपक्षयोः प्रत्यक्षशाब्दज्ञानप्रतिबन्धकत्वान्न लिङ्गाभासत्वम्, तथापि ज्ञायमानस्याभासस्यात्र लक्षणम् । यद्वा प्रत्यक्षादौ बाधेन न ज्ञानं प्रतिबध्यते किन्तूत्पन्नज्ञानेऽप्रामाण्यं ज्ञाप्यतेऽनुमितौ तूत्पत्तिरेव प्रतिबध्यते । ते च सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च ।

इति महामहोपाध्यायश्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामणौ सामान्यनिरुक्तिप्रकरणम् ॥

## दीधितिः

एतावता प्रबन्धेन सपरिकरं हेतुन्निरूप्य तत्प्रसङ्गात् तत्त्वनिर्णयादिरूपतत्कार्यकारित्वाच्च तदाभासनिरूपणं प्रतिजानीते अथेति । यथाश्रुतमिदं हेतुदोषाणां लक्षणम्, तद्वत्त्वञ्च दुष्टहेतूनाम्, तदभिप्रायेणैव उपधेयसङ्करेऽपीत्यादि वक्ष्यति । तत्राऽनुमितिपदमनुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वेनाऽनुमितितत्कारणज्ञानपरम् । साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारकानुमितिपरं वा । तेन एकत्र हेतौ व्यभिचारादिग्रहेऽपि अन्यस्य परामर्शादनुमित्यनुत्पादेन व्यभिचाराद्व्याप्त्यादिज्ञानेनाऽन्यथासिद्धत्वाच्च व्यभिचारादिग्रहाभावस्याऽनुमित्यजनकत्वेऽपि न क्षतिरिति वदन्ति । पर्वतो निर्वह्निः धूमो वह्नेरभिधेयत्वं प्रमेयत्वव्यभिचारीत्यादिभ्रमादनुमितिप्रतिबन्धादाह यथार्थेति । ननु प्रतिबन्धकज्ञानविषयव्यभिचारादिघटकसाध्यादेर-

पि प्रत्येकं हेत्वाभासतापत्तिः ।

अथ विशिष्टविषयकं ज्ञानं प्रतिबन्धकम् तद्घटकश्च न विशिष्टमिति चेत्, तर्हि यथार्थेति व्यर्थम् भ्रमविषयविशिष्टस्याऽप्रसिद्धत्वादित्यनुशयेनाऽऽह यदिति ।

केचित्तु दुष्टानामेव हेतूनामेतानि लक्षणानि । तत्र तृतीयमिव प्रथममपि ज्ञायमानव्यभिचारादेः प्रतिबन्धकत्वमभ्युपेत्य तदर्थश्च तादृशभावप्रतियोगिनो ये व्यभिचारादयस्तत्प्रकारकयथार्थज्ञानविषत्वम् । अग्रे तत्त्वमित्यस्य तद्वत्त्वमित्यर्थः । आद्यस्यैव वा दुष्टहेतुलक्षणत्वमिति प्राहुः ।

लिङ्गमविवक्षितम् । यद्विषयकत्वेन—यादृशविशिष्टविषयकत्वेन । तेनानुमितिप्रतिबन्धकपक्षविशेष्यकभ्रमविषये साध्याभावादौ सद्धेत्वादिनिष्ठे नातिप्रसंगः । अवच्छेदकत्वञ्चेहाऽनतिरिक्तवृत्तित्वम् । तेन विशिष्टस्याऽसत्वेऽपि भ्रमात् प्रतिबन्धेऽपि न क्षतिः । विशेषणीयश्च तादृशविशिष्टान्तराघटितत्वेन तेन मेयत्वादिविशिष्टे व्यभिचारादौ नातिप्रसङ्गः। एवञ्च पक्षतावच्छेदकविरहविशिष्टपक्षः, पक्षनिष्ठस्तद्विरहो वा, साध्याभाववद्वृत्तिसाधनं, साधनवद्वृत्तिस्साध्याभावो वा हेतुदोषः । येन केनापि सम्बन्धेन तद्वांश्च प्रकृतहेतुर्दुष्टः । यादृशधर्मिणि यादृशधर्मवत्ताज्ञानमनुमितिप्रतिबन्धकं तस्य धर्मिणस्तादृशधर्मवत्त्वं हेतुदोष इत्यपि कश्चित् । अथ पर्वतत्वेन पक्षत्वे वह्नित्वेन साध्यत्वे विशिष्टधूमत्वे न च हेतुत्वे पर्वतादेः काञ्चनमयत्वविरहः, ह्रदस्य वह्निधूमशून्यत्वम्, पर्वतस्य महानसीयवह्निधूमविरहित्वम्, मेयत्वस्य केवलधूमस्य वावह्निव्यभिचारो, विशिष्टधूमस्य वा पर्वतीयवह्निव्यभिचारो न दोषः । न वा तत्सम्बन्धेन तत्र तस्य हेतोर्दुष्टत्वम्, अतस्तद्धर्मावच्छिन्नतत्पक्षकतद्धर्मावच्छिन्नतत्साध्यकतद्धर्मावच्छिन्नतद्धेतुकानुमितिप्रतिबन्धकत्वं वाच्यम् । तथा च निर्वह्निः पर्वतो वह्निमान् पर्वतावृत्तिवह्निमान् वा तदव्यभिचारिणः, पर्वतावृत्तेर्न्नो? धर्मादित्यादौ न कोऽपिहेत्वाभासः स्यात्, तादृशानुमितेरप्रसिद्धत्वात् ।

अत्र वदन्ति—यद्विषयकनिश्चयस्य विरोधिविषयिताप्रयुक्तस्तदुत्तरमनुमितावनाहार्यमानसज्ञाने वा पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्या–

वगाहित्वस्य साध्यतावच्छेदकविशिष्टसाध्यनिरूपितव्याप्तिविशिष्टहेतुमत्तावगाहित्वस्य च द्वयोर्व्यतिरेकस्तत्त्वं हेतुदोषत्वम् ।

पक्षतावच्छेदकवैशिष्ट्यादिकञ्च वैज्ञानिकं न तु वास्तविकं ग्राह्यम् । व्याप्तिश्चान्वयतो व्यतिरेकतश्च ग्राह्या । तादृशावगाहित्वप्रसिद्धिराहार्यज्ञान एवाभ्युपेतव्या, अनन्यगतिकत्वात् । एवञ्च वस्तुमात्रनिश्चयानन्तरं निर्वह्नित्वविशिष्टे वह्नेरग्रहेऽपि न क्षतिस्तस्य विरोध्यविषयकत्वात् ।

एवं साध्यनिश्चयोत्तरं तस्याननुमितावपि मानसज्ञानविरोधित्वात् ।

तादृशपक्षे तादृशसाध्यवैशिष्टचस्य तादृशसाध्यनिरूपितव्याप्तिविशिष्टतादृशहेतुवैशिष्ट्यस्य चावगाहिनो ज्ञानस्य यद्विषयकं ज्ञानं विरोधिविषयकं तत्त्वम्, तादृशज्ञानविरोधित्वं वा हेतुदोषत्वम् । ज्ञानविरोधित्वञ्च तद्विषयविषयकग्रहविरोधिग्रहविषयत्वम् । एवं विधैव रीतिरुत्तरत्र सर्वत्र सव्यभिचारलक्षणादावनुसर्त्तव्या इत्यपि कश्चित् । केचित्तु यादृशपक्षकयादृशसाध्यकयादृशहेतौ यावन्तो दोषाः सम्भवन्ति तावदन्यान्यत्वम्, एवं मात्रदोषस्थले च तत्त्वमेव हेत्वाभासत्वम् । स चातिरिक्त एवान्योन्याभाव इति न वैयर्थ्यम्, पञ्चविधभेदोक्तिस्तु तत्सम्भवस्थलाभिप्रायेण । व्यभिचारादेः साध्यादिभेदनियन्त्रितत्वात् शब्दाभेदमात्रस्य चाकिञ्चित्करत्वादिति प्राहुः । स्यादेतत्, शब्दोऽनित्यः शब्दत्वात्, इत्यत्राऽसाधारण्येऽव्याप्तिः सर्वसाध्यवद्व्यावृत्तेस्तत्रासत्त्वात्, एवं शब्दोऽनित्यः कृतकत्वादित्यस्य सत्प्रतिपक्षेनित्यत्वव्याप्याद्रव्यद्रव्यत्वादावपि पक्षस्य तद्वत्ताविरहादित्याशंकां तयोरलक्ष्यत्वेन निराकुरुते दशाविशेष इति ।

हेत्वोः=सद्धेत्वोः असाधारणः=पक्षमात्रवृत्तिः, सन् प्रतिपक्षो विरोधिपरामर्शो यस्य स तथा, तयोर्दशाविशेषे=हेतौ सर्वसाध्यवद्व्यावृत्तत्वस्य पक्षे साध्याभावव्याप्यवत्वस्य च भ्रमदशायाम्, आभासत्वात्=अनुमित्यजनकत्वाद्; तद्बुद्धेः=हेत्वादौ साध्यवद्व्यावृत्तत्वादिबुद्धेः प्रतिबन्धकत्वं परमायाति न तु तद्विषयस्य दोषत्वम्, असत्वात्, अन्यथा बाधभ्रमेणानुमित्यनुदयात् तस्यापि दोषत्वं स्यात्, को हि साध्याभावतद्व्याप्यवत्ताभ्रमयोरनुमितिविरोधित्वे विशेषः । निर्युक्तिकस्तु प्रवादो न श्रद्धे-

यः। यत्तु ज्ञानस्य यदनुमितिप्रतिबन्धकतावच्छेदकं तद्वत्त्वम्, तत्प्रकारकप्रमाविषयत्वञ्च लक्षणार्थः तच्च द्विविधं विषयरूपं साधारण्यादिबाधे च प्रमितसाध्याभाववान् पक्षः, तद्विषयकत्वेन ज्ञानस्यानुमितिप्रतिबन्धकत्वात्। अविषयरूपञ्च = विरोधिसामग्रीकालीनत्वादिकम् तद्वत्त्वञ्च ज्ञानस्येव तद्विषयस्य हेतोरपीति। तन्न, तद्वत्त्वं हि हेतोर्नाभेदेन, बाधे तदभावात्। अत एव नाश्रयतया, वह्निव्यभिचारिद्रव्यत्वादिमति धूमेऽतिप्रसङ्गाच्च, साध्याभाववत्पक्षस्येव साध्याभाववद्वृत्तिहेतोर्ज्ञानस्य प्रतिबन्धकत्वात्, साधारण्यादिविषयकत्वस्य ज्ञाननिष्ठस्यैव प्रतिबन्धकतावच्छेदकत्वात्। सत्तादिसाध्यके ज्ञानेऽतिप्रसङ्गाच्च, यथाकथञ्चित् तद्वत्त्वस्य चातिप्रसञ्जकत्वात्, विरोधिसामग्रीसमवहितोऽपि च लिङ्गपरामर्शो न स्वसाध्यकानुमितेः प्रतिबन्धको मणिसमवहितो वह्निरिव दाहस्य।

अथ यद्धर्मविशिष्टज्ञाने सत्यवश्यमनुमितिप्रतिबन्धः तदेवात्र प्रतिबन्धकतावच्छेदकमुक्तम्, भवति च प्रतिबन्धकीभूतविरोधिसामग्रीकालीनत्वादिविशिष्टपरामर्शे तथा इति चेत् न वा कालादिसाधारणकारणघटितासामग्री कापि प्रतिबन्धिका, विशेषतस्तत्र तत्सत्त्वे कार्योत्पादस्य दुर्वारत्वात्, किन्तु विरोधिपरामर्शस्तथा। यदि च तत्सत्वेऽपि तत्साध्ये बाधावतारे नानुमितिप्रतिबन्धः प्रामाणिकस्तदा अप्रामाण्यज्ञानाभावस्येव तदभावस्यापि वैशिष्ट्यन्तत्र निवेश्यताम्, यथा च भ्रमप्रमासाधारणविरोधिपरामर्शसत्वेनानुमितिस्तथा तथाविधबाधादिग्रहेऽपीत्यतिप्रसङ्गः।

नचातीतादौ लिङ्गे विरोधिपरामर्शकालीनत्वमपि। यदपि यद्विषयकत्वेन ज्ञानस्यानुमितिप्रतिबन्धकत्वम् तद्वत्त्वमेव दुष्टत्वं वाच्यम्, सत्प्रतिपक्षे च विरोधिव्याप्त्यादिकमेव तथा, तद्वत्त्वमपि हेतोस्तज्ज्ञानरूपसम्बन्धेन, तस्य समूहालम्बनरूपतया हेतुद्वयविषयकत्वात् तदपि तुच्छम्, साध्याभाववत्पक्षविषयकत्वेन साध्याभाववत्पक्षज्ञानप्रमात्वविषयकत्वेन वा ज्ञानस्य प्रतिबन्धकत्वं तस्य च साध्यवत्यपि पक्षे सम्भवादतिव्याप्तेः। विशिष्टविषयकत्वेन प्रतिबन्धकत्वम् विशिष्टञ्च तत्राप्रसिद्धमिति चेत्,—

तत्किं सर्वत्र सत्प्रतिपक्षे साध्याभावव्याप्यवान् पक्षः प्रसिद्धः। यथाकथञ्चित्सम्बन्धेन तद्वत्त्वञ्चातिप्रसक्तं, धूमादेरपि ज्ञानरूपेण तदाश्रयत्वादिना वा सम्बन्धेन व्यभिचारादिमत्त्वात्,

याद्दशसम्बन्धावगाहित्वेन ज्ञानस्य प्रतिबन्धकत्वं तेन तद्वत्त्वञ्च न सर्वत्र सत्प्रतिपक्षिते हेतावस्ति च क्वचित् सद्धेताविति कृतं पल्लवितेन ॥

यदप्यपीति । स्थाणुत्वाभावस्य तद्व्याप्यकरादेश्च निश्चये स्थाणुत्वप्रत्यक्षशाब्दयोरनुदयात् । न चैवं नरशिरःकपालं शुचि प्राण्यङ्गत्वादित्यादिनाप्यागमप्रतिरोधः स्यात्, तत्रानुकूलतर्काभावेन बलवत्तरागमविरोधेन च व्याप्तिनिश्चयस्यानुत्पत्तेरिति भावः ।

यद्वेत्याद्यभ्युपगममात्रं प्रत्यक्षं प्रत्यानुमानिकबाधादिनिश्चयस्याप्रतिबन्धकत्वेऽपि शाब्दं प्रति प्रतिबन्धकत्वात् । योग्यताज्ञानेनान्यथासिद्धत्वात् तदभावो न तत्र हेतुरिति चेदेवमप्युपनीतभानविशेषं प्रति तत्त्वेन हेतुताया दुर्वारत्वात् ॥

इति महामहोपाध्यायश्रीरघुनाथभट्टाचार्यविरचिताहेत्वाभाससामान्यनिरुक्तिदीधितिः समाप्ता ॥

# शुद्धिपत्रम्

## प्रथमलक्षणे

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| वहेतो | हवतो | १ | ९ |
| प्रतिय | प्रतिप | १ | १५ |
| वत्ति | वर्त्ति | १ | १८ |
| रिषद | रांषद | ३ | १७ |
| स्वंस्व | स्वस्व | ३ | २३ |
| र्गा | र्ग | ५ | १२ |
| हतुः | हेतुः | ५ | १९ |
| सभि | समभि | ५ | २६ |
| धान | धानं | ८ | ६ |
| स्व | स्वं | १० | ६ |
| वाह्नि | वह्नि | ११ | ३ |
| हण | हेण | १३ | १३ |
| पक्ष | पक्षः | १४ | ११ |
| विषया | विषयी | १४ | १४ |
| श्चनु | श्चानु | १४ | १४ |
| ज्ञान | ज्ञानं | १४ | १५ |
| मिति | मितिं | १५ | २ |
| कर्त्तं | कर्त्तुं | १६ | ४ |
| प्रतिपादयति | प्रतिपाद्य | १७ | १३ |
| लक्षणा | लक्षण | १७ | १६ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| प्रतिवन्धकतायां | प्रतिबन्धकता | १७ | २० |
| हतुदुष्ट | हेतुर्दुष्ट | १९ | २० |
| ह्रदो वह्निव्याप्य | ह्रदो वह्निमान् वह्निव्याप्य | २० | १० |
| धर्मो | धर्मी | २२ | १४ |
| विरुद्धे | विरुद्ध | २३ | १ |
| प्रतिज्ञा | अप्रतिज्ञा | २३ | ८ |
| मथः | मर्थः | २३ | ९ |
| त्रय | त्रयं | २३ | ९ |
| तथा चा विभाग | तथा च विभाग | २४ | ५ |
| दोषः विभाग | दोषः न वा विभाग | २४ | १० |
| संयोग सम्बन्धावच्छिन्न प्रकारता | संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारता | २५ | ७ |
| लक्षरण | लक्षरणा | २५ | १२ |
| दाह्र | ह्रदा | २६ | ६ |
| हतु | हेतु | २७ | १४ |
| वस्थ्य | वस्थ्यं | २७ | २० |
| अभाव | मा भव | २८ | २५ |
| परामर्श | परार्थ | ३० | १४ |
| साध्यकहेतुका | साध्यकजलहेतुका | ३३ | २४ |
| धार्मि | धर्मि | ३७ | १ |
| वच्छद्य | वच्छेद्यत्व | ३९ | १६ |
| वृत्यिा | वृत्त्या | ४० | २२ |
| द प्रति | प्रति | ४४ | १९ |
| कारणत्व ग्रह | कारणत्ववद्ग्रह | ४४ | २१ |
| तद्यप क | तद्व्यापक | ४५ | १३ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
| --- | --- | --- | --- |
| प्रतिवन्ध | प्रतिबध्य | ४७ | १५ |
| त् तत्र वह्न्यभावव-ह्रदेऽति प्रसङ्गः | त्वादिति | ४७ | २२ |
| वारणा | धारणा | ४८ | १६ |
| वैस्व | वै० स्व | ४८ | २१ |
| ह्रदश्चवह्निव्याप्य | ह्रदश्च वह्निमान् वह्निव्याप्य | ५१ | ५ |
| भूतल | भूतलं | ५२ | १९ |
| तात्मक | नात्मक | ५२ | २० |
| वच्छेदकतानिरूपितत्व | वच्छेदकतानिरूपितनिरूपितत्व | ५५ | १० |
| निरूपितावच्छेदकत्वनिष्ठ | निरूपितप्रतियोगित्व | ५५ | १२ |
| निरूपक | निरूपित | ५६ | ४ |
| वह्न्यभाववान् ह्रद | वह्न्यभाववान् वह्न्यभाव-वान् ह्रद | ५६ | १३ |
| वह्न्यभाववान् वह्न्यभाववान् | वह्न्यभाववान् वह्न्यभाववद् ह्रदवान् | ५६ | २१ |
| वाध्य | वाच्यं | ५६ | २३ |
| घटवान् | घटवान् वह्न्यभाववान् | ५६ | २५ |
| कूटेन | कूटेन | ५७ | २२ |
| सत्यप्रतिपक्ष | सकलसत्प्रतिपक्ष | ६१ | १३ |
| नि ज्ञान | निति ज्ञान | ६१ | १७ |
| करण्ये | करण्येन | ६१ | २२ |
| सत्यप्रतिपक्षे | सत्प्रतिपक्षे | ६४ | १५ |
| साध्य | साध्या | ६५ | २४ |
| इत्यंश | इत्यंश | ६६ | २३ |
| व्यमि | व्यभि | ६९ | १८ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| व्यमि | व्यभि | ७० | २ |
| व्यमि | व्यभि | ७० | ७ |
| व्यमि | व्यभि | ७० | ६ |
| नित्लु | नित्य | ७१ | ४ |
| व्याप्तिरेक | व्याप्तिव्यतिरेक | ७१ | १६ |
| वेश्य | वेश्यम् | ७१ | २२ |
| परस्य | परस्पर | ७४ | २७ |
| वारणा | धारणा | ७५ | १७ |
| वृत्तित्व | वृत्तित्वत्व | ७८ | १ |
| सिद्धाभावः | प्रतीतिसिद्धाभावः | ७८ | १९ |
| तनिनवेशः | तन्निवेशः | ७९ | १ |
| शिष्टा | शिष्ट | ७९ | ३ |
| व्यमि | व्यभि | ७९ | १७ |
| सप्तम्यो | सप्तम्यर्थो | ८० | १४ |
| चीन | चीनं | ८२ | ५ |
| एव | एवं | ८२ | ८ |
| ह्नदे | ह्लद | ८२ | १३ |
| सा यन्नि | यन्नि | ८३ | ८ |
| मावादेः | भावादेः | ८३ | १३ |
| समूल | समूहाल | ८४ | ८ |
| यस्य | स्य | ८४ | २० |
| द्वयापक | द्वचव्यापक | ८५ | ८ |
| वुद्धि | बुद्धि | ८५ | १९ |
| गामि | गाहि | ८६ | १० |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| हस्या | हाया | ८९ | १५ |
| यतरा | न्यतरा | ८९ | २४ |
| व्यमि | व्यभि | ९० | ५ |
| निष्ठा | निष्ठ | ९१ | ११ |
| तिष्ठ | निष्ठ | ९१ | १५ |
| व्यमि | व्यभि | ९२ | ६ |
| व्यमि | व्यभि | ९२ | ८ |
| व्यमि | व्यभि | ९३ | २ |
| व्यमि | व्यभि | ९३ | ५ |
| व्यमि | व्यभि | ९३ | ८ |
| मिति | मितिं | ९३ | ९ |
| व्यमि | व्यभि | ९३ | २१ |
| मिति | मितिं | ९३ | २२ |
| चार | चारा | ९३ | २२ |
| मिति | मितिं | ९४ | ६ |
| क्षए | क्षणे | ९४ | १२ |
| धार्मिक | धर्मिक | ९४ | १९ |
| न नय | नय | ९४ | २३ |
| न दोष | न दोषः | ९५ | १८ |
| माशि | माहशि | ९५ | १९ |
| साध्या | साध्य | ९५ | २४ |
| व्याप्या | व्याप्य | ९५ | २४ |
| मिति | मितिं | ९६ | २२ |
| ज्ञाना | ज्ञान | ९७ | १९ |
| साध्या | साध्य | ९८ | ३ |
| व्युत्या | व्युत्पा | ९८ | १७ |

